॥ श्रीः ॥

## नागेशभट्टकृतः

# परिभाषेन्दुशेखरः

---

## महामहोपाध्याय जयदेवमिश्ररचित-
## विजयाटीकापरिष्कृतः

पण्डितप्रवर श्रीउग्रानन्दझाकृतटिप्पणीभिरलङ्कृतः

पण्डित श्रीदुःखमोचनशर्मणा संशोधितः

---

टीकाकृतस्तनूजेन श्रीश्रीकृष्णमिश्रेण
प्रकाशितः ।

( तृतीयावृत्तिः )

मूल्य पञ्चरूप्यकम्

# प्राक्कथनम्

अयि भोः शब्दागमगहनारण्यपरिसरणनिपुणकेसरिणः !

सुविदितमेव भवद्भिः यदन्तरेण शब्दशास्त्रमसम्भवि ज्ञानं त्रय्यास्तदात्मकदर्शनागमानाममरवचनोपनिबद्धानां वा । अत एव वेदाङ्गेषु प्राथम्येन वरीवर्त्तीदमेवेत्युचितमेव, उक्तञ्च भगवता भाष्यकारेण—"षडङ्गेषु प्रधानं व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति" इति । विलसत्स्वप्यनेकेषु व्याकरणेषु पाणिनीयेऽस्मिन्नेव वर्त्तते पक्षपातः समेषां विदुषाम् ।

अत्रेयमाख्यायिका श्रूयते—नन्दराजशासनकाले उपवर्षपण्डितस्य कात्यायनापरपर्यायो वररुचिः, व्याडिः पाणिनिश्चेति त्रयो मुख्याश्छात्रा बभूवुः । तेषां पाणिनिरल्पबुद्धितया सतीर्थ्यैर्विवादेऽधरीकृतो निर्वेदमापन्नस्तपसा सन्तोष्याशुतोषं, तस्मात्समासादितसकलतन्त्रज्ञानो निर्माय च सूत्रपाठ-गणपाठ-धातुपाठ-लिङ्गानुशासनात्मकं व्याकरणागमम्, उपवर्षादिसमीपे प्राचीकटत् । अथ तद्ग्रन्थनैपुण्यमुपलभ्य कात्यायनस्तदवशिष्टांशपूरणाय वार्त्तिकयाञ्चकार । ततः सम्यगभ्युदिते पाणिनीये तत्कालप्रचलितमैन्द्रादिव्याकरणं कृशिमानमाकलयत्कथामात्रशेषतां ययौ ।

पाणिनिस्तु शालातुरग्रामाभिजनो दाक्षीगर्भसमुद्भूत इति च श्रूयते । कौशाम्बीनगरीवासिनः सोमदत्ताभिधानादवनीसुरात् वसुदत्तायामुत्पन्नो वररुचिः उपवर्षान्निखिलविद्यामधिगम्य बृहत्कथादीन् ग्रन्थान् प्रणीय नन्दराजस्य धीसाचिव्यमापेदे । तदनु भगवान् पतञ्जलिः

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥

इति लक्षणलक्षितं महाभाष्यं प्रणिनाय। स च महाभाष्यकारः पतञ्जलिर्गोनर्ददेशे कस्यचिदृषेः सन्ध्योपासनसमयेऽञ्जलौ पतित इत्यैतिह्यस्य "शकन्ध्वादिषु पररूपं वाच्यम्" इति वार्त्तिकव्याख्यानावसरे शब्देन्दुशेखरे भट्टनागेशेन कृत उल्लेखो लभ्यते। भाष्यकारो हि चन्द्रगुप्तराज्यकालात्पश्चात् भर्त्तृहरिकालात् पूर्वं प्रादुरासीदिति प्रतिभाति। "सभाराजामनुष्यपूर्वा"इतिसूत्रव्याख्यायां भाष्यकारः "चन्द्रगुप्तसभा" इति प्रत्युदाजहार, वाक्यपदीये च भाष्यकारोल्लेखाद् भर्त्तृहरिकालात्तस्य प्राचीनत्वस्यापि सिद्धिरुपलभ्यते।

भाष्यवार्त्तिकयोर्या उपनिबद्धाः परिभाषास्ता एवाधिकृत्य निर्मितो ग्रन्थो भट्टनागेशेन परिभाषेन्दुशेखरः। ग्रन्थप्रणेतुः कतमस्मिन् वैक्रमाब्दे जनिरासीदिति बहुयतमानैरपि नाद्यापि निश्चयितः समयः समुपलभ्यते। काव्यमालाग्रन्थेषु रसगङ्गाधरस्य भूमिकायां म० म० दुर्गाप्रसादेन १६८८ ईशवीयवत्सरतः १७२८ ईशवीयवर्षपर्यन्तं सवाईमहाराजजयसिंहो जयपुरमण्डलस्थ-

नागेशस्य पिता शिवभट्टः माता च सतीदेवी इति स्वग्रन्थे-ऽनेकधाऽभ्यधादिति विदितमेव । अत्रेयं जनश्रुतिः श्रूयते—नागेशो जन्मतः षोडशाब्दान् यावत् वाराणस्यामितस्ततो भ्रमन् कदाचित् विद्वत्सदसि गतोऽकस्मात्तत्रासनमध्युवासेत्यवलोक्य तत्रत्यैर्विद्वद्भिः कुत्सितो निष्कासितश्चेत्यवमाननापन्ननिर्वेदः "सर्वातिशायिनीं विद्यामादायाहमपि नातिचिरेण सर्वान् विजेष्ये" इत्युच्चैः प्रतिज्ञाय तपश्चरणाय विविक्तमाश्रयत् । तत्र विमुक्ताभ्यवहारव्यवहारो वागीश्वरीध्यानैकतानः कतिपयैरेवाहोभिर्वागीश्वरीप्रसादाल्लब्धनिखिलतन्त्रानियन्त्रितमतिगतिः ख्यातिमादत्त । एतस्य सन्ततिरेका कन्यकैवासीत् । तस्याश्च विवाहो मौन्युपनामकेन केनचिद्ब्राह्मणेन सहासीत् । नागेशेन स्वकन्यकायै यद्गृहं प्रदत्तं तत् काश्यां सिद्धेश्वरीक्षेत्रे साम्प्रतमप्यस्तीति श्रूयते । ग्रन्थस्यास्य भूतपूर्वा बह्व्यष्टीकास्तिष्ठन्ति । तासु कस्याश्चित् प्रक्रियामात्रप्रदर्शनपरतया, अपरस्याः स्वल्पाकारतया, अन्यस्याः 'सूर्यस्य टीका भानुः' इति लोकोक्तिं सार्थकयन्त्या नादरो न वा ताभिर्विदुषां छात्राणां वाऽविकलोपकारो जायते इत्यल्पतावोधितेन महामहोपाध्यायेन पण्डितवर्येण जयदेवशर्ममिश्रेण सकललोकोपकारप्रेरितेनेव परिभाषेन्दुशेखरस्य सपरिष्कृता विजयाभिधाना टीका कृता । एवं विश्वजनीनाचरणं मुनीनां भारतीयविदुषाञ्च चिरदृष्टमेव । सा चेयं विजया विजयायैव विजयाभिलालसानामित्यत्र न केषाञ्चिद् वैमत्यम् ।

सरलीकृतेऽपि ग्रन्थे व्याख्यागतपदार्थानां दुरूहतयाऽऽयासमनुभवतां छात्राणां श्रमापनोदनधिया सुधिया विजयाकारकनिष्ठतनयेन एम्० ए० इत्युपाधिभाजा श्रीकृष्णशर्ममिश्रेणानुनीतः विद्वद्धन्यः श्रीमदुग्रानन्दझा न्यायव्याकरण-तीर्थः टिप्पणीं प्रणिनाय । अनधिकारिणा बहुलायासेन कृतेऽपि संशोधने पदार्थानामपरिचयात् क्रमभङ्गपदार्थासन्निवेशादिदोषाच्चाचिरादेव विजया-

कारस्याबाधितप्रसरमपि यशो मलिनयेत् त्रुटिरियमिति भिया समुद्बोधितेनेव प्रकाशकेन मार्गयमाणेन लोकोपकारनवोत्साहमण्डितपण्डितविरलायामप्यचलायामधुनापि अघौघप्रक्षालनप्रवहद्देवस्रोतस्वत्यां वाराणस्यां सुरभारतीसेवननिरतेषु समासादित एको निष्कारणो बन्धुरन्वर्थनामधेयः श्रीदुःखमोचनशर्म्मा व्याकरणसाहित्याचार्यः यो हि शास्त्रचिन्तनैकतानोऽपि प्रकाशकस्नेहानुनयसन्दानितमानसोऽसुलभमपि समयं संशोधनेऽस्य व्यायिष्ट। एवं कृतेऽपि संशोधने मनुजसुलभेन भ्रमेणावशिष्टाशुद्धिरवलोक्येत चेत्तदपनोदनभारोऽपि वहनीय एव विजयाकारयशोरक्षणपक्षपातिभिर्विपश्चिदग्रेसरैः। यतः—

न कश्चिदपि वञ्चितो जगति दोषलेशैर्विधि-
विधेरपि नरैः कृते किमकलङ्कविध्येषणा ?
गुणैककलनादराः परिहरन्ति दोषान् परं
प्रकाशनपराः खलाः प्रकटयन्ति तानुत्सुकाः ॥

पारे कथनमेतावदेवावशिष्यते — यद्यपि सुरासुरसमरसमे प्रचलितेऽस्मिन् सम्पराये वस्तुमात्रमहार्घता प्रत्यहं प्रत्यक्षीक्रियते सर्वैरेव, तथापि प्रकाशको लाभलोभमुपेक्ष्य विजयाविशुद्धसंस्करणविशेषप्रचारकामतयैतस्य मूल्यं पूर्वतोऽपि न्यूनमेव निरधारयदित्यपि साहसोऽस्य स्तुत्य एव। आशासे सुरभारतीसोपानशब्दागमपारङ्गताः सादरमस्यापि विजयासंस्करणविशेषस्य प्रचारे प्रकाशकस्य साहाय्यमाचरिष्यन्तीति।

रसलपुर ( भागलपुर ),
विजयादशमी, सं० १९९९

विदुषामनुचरः
विजयाकारजामाता
श्रीलक्ष्मीनाथशर्म्ममिश्रः

# विजयाकर्त्तुर्जीवनवृत्तम्

महामहोपाध्याय डाक्टर सर गङ्गानाथ झा
(M. A., D. Lit., LL. D., F. B. A.) महोदयेन लिखितम् ।

अस्ति मिथिलायां गजहड़ा इति नाम्ना प्रसिद्धो ग्रामः । तत्रैव सुप्रतिष्ठिते सोदरपुरमैथिलब्राह्मणकुले प्रातःस्मरणीया महामहोपाध्यायाः श्री६ जयदेवशर्माणः रुद्ररत्नभूपरिमिते ( १९११ ) वैक्रमीये संवत्सरे कार्तिकशुक्लपूर्णिमायां जन्म लेभिरे । सम्पादितद्विजोचितसंस्काराश्च हरिनगरग्रामे सुप्रसिद्धविद्वद्वरहलधर ( प्रसिद्ध 'हल्लो' )—शर्मणः सकाशात् वर्षद्वयं यावत् व्याकरणशास्त्रस्याद्यमंशमधीत्य तत्र आर्थिकक्लेशं प्राप्य तत्स्थानमुज्झित्वा गन्धवारिनगरे लेखकस्य मातामह्या पुण्यशीलया श्री३ वसुमतीदेव्या संस्थापिते विद्यालये महामहोपाध्यायश्री६ रजेमिश्रशर्मभिरिदानीमपि मिथिलां [ अधुना तु दिवं ] मण्डयद्भिरधिष्ठिते तेभ्य एव शब्देन्दुशेखरादिग्रन्थान् स्वायत्तीचक्रुः, समाप्नुवंश्च तदानीमेव पण्डितमण्डलीषु प्रौढविद्वत्ताप्रतिष्ठाम् । गुणाग्नि-ग्रह-भू—( १९३३ )–मिते च वर्षे काशीमागत्य विश्वविख्यातानां श्रीमतां बालशास्त्रिणां सकाशे, तदनन्तरञ्च सकलतन्त्रापरतन्त्राणां म० म० श्री६ शिवकुमारशर्म्मणां सकाशे व्याकरणशास्त्रमधीतमपि परिमार्ज्य शास्त्रान्तराण्यपि समग्राण्यधिगतवन्तः । युवावस्थायामेव काशीस्थविद्वज्जनेषु लब्धवैदुष्यप्रतिष्ठा वस्वग्नि-रत्न-चन्द्र-( १९३८ )–मिते संवत्सरे मिथिलाधीशेन पवित्रकीर्त्तिना महाराजश्री५ लक्ष्मीश्वरसिंहमहोदयेन संस्थापितायां दरभङ्गापाठशालायां काशीस्थायां श्री शिवकुमारमिश्र—श्रीरामकृष्ण-( प्रसिद्ध 'तात्या' )-शास्त्रि—

श्रीसुधाकरद्विवेद—श्री दुःखभञ्जनकविभिः पण्डितरत्नैः सह व्याकरणाध्यापकासनं शोभयामासुः, समभूषयंश्च तदासनं वेदर्षिरत्नभू-( १९७४ )-मितवर्षपर्य्यन्तम्। तदनन्तरं हिन्दूविश्वविद्यालयाध्यक्षास्तान् प्राच्यविद्याविभागे प्रधानाध्यापकपदव्यां समावेशयन्। तदारभ्याजीवं तदेव स्थानं श्रीमद्भिरलङ्कृतमभूत। एवञ्च प्रायशः षट्चत्वारिंशद्वर्षाणि नानाशास्त्राण्यध्यापयतामेषां व्यतीतानि। समासादिताश्च पाण्डित्यपदवीं सहस्रशश्छात्राः। तेष्वेवैकोऽयं लेखकोऽपि स्वभाग्यवशादासीत्। पण्डितवर्य्याणां कीदृशं पाण्डित्यमासीदिति तेषां छात्रेण वर्णनमनुचितमेव प्रतिभाति। अस्त्वेतदेव पर्याप्तं यत् प्रायशो गणितशास्त्रवर्जं सर्वेष्वपि शास्त्रेषु तेषामधिकारः पूर्णतयाऽऽसीत्। शास्त्रविचारस्य तु सार एवैतेष्वेकत्रीकृत आसीत्। रत्नशशिरत्नभू-( १९१९ )-मिते च ईशवीये भारतसम्राट् पण्डितसम्राड्भ्य एभ्यो महामहोपाध्यायपदवीं वितीर्यास्याः पदव्याः प्रतिष्ठां वर्धयामास। महात्मनामेतेषां स्मारकास्तन्निर्मिता ग्रन्थाः—( १ ) परिभाषेन्दुशेखरस्य टीका विजया ( मुद्रिता ) ( २ ) शास्त्रार्थरत्नावली ( मुद्रिता ) ( ३ ) व्युत्पत्तिवादस्य टीका जया ( मुद्र्यमाणा ) [ अधुना मुद्रिता ] ( ४ ) शब्देन्दुशेखरस्य टीका ( अपूर्णा ) ( ५ ) महाविनायकस्थापनपद्धतिः ( ६ ) वास्तुपद्धतिः ( ७ ) शतचण्डीपद्धतिः ( ८ ) कुलदेवतास्थापनपद्धतिः ( ९ ) नीलवृषोत्सर्गपद्धतिः ( १० ) तुलादानपद्धतिश्चेति; पुत्रत्रयं कन्यकाद्वयं चेति च। पुत्रेषु ज्येष्ठः श्रीमान् उमेशमिश्रः काव्यतीर्थः एम. ए. [ सम्प्रति डी. लिट्. ] प्रयागविश्वविद्यालये संस्कृताध्यापकपदमलङ्करोति; मध्यमः श्रीरमेशो गृहकार्य्यं करोति; तृतीयः श्रीश्रीकृष्णः [ सम्प्रति एम. ए. ] सम्पादितसंस्कारोऽधुना बाल्यावस्थायामेव वर्त्तते। एवञ्चैहिकसमस्तसम्पदनुमापितप्राक्तनपुण्यराशयो नित्यसदनुष्ठा प्रत्य-

श्रीकृतब्राह्मण्याः पूज्यपादाः सर्वथा सनातनधर्मावलम्बिनामादर्शा इवासन् ।

अशेषविद्वज्जनदौर्भाग्येन वर्षेऽस्मिन कर्णाभ्यन्तरव्रणमूलकसन्निपातज्वरेणाक्रान्ताः । तत्रापि ज्वरप्रलापेषु शास्त्रीयाण्येव वाक्यान्युच्चेरुः । मरणात् प्राक् चत्वारि दिनानि मणिकर्णिकायां चक्रपुष्करणीतीर्थे गङ्गाप्रवाहयोर्मध्ये स्थित्वा—

"उत्क्षिप्य बाहू त्वसकृद् ब्रवीमि त्रयीमयेऽस्मिंस्त्रयमेव सारम् ।
विश्वेशलिङ्गं, मणिकर्णिकाम्बु, काशीपुरी, सत्यमिदं त्रिसत्यम् ॥"

इति पद्यमुच्चैर्घोषयन्तो मध्याह्नसमये मणिकर्णिकागङ्गाजले निमग्नार्धशरीराः १९८२ वैक्रमे फाल्गुनशुक्लसप्तम्यां विश्वेश्वरसायुज्यमगमन् ।

शून्यमधुना पण्डितमण्डलम्भारते, शास्त्रार्थचर्चास्त्वस्तप्रायैव । शोकसन्तप्तेनाधिकं वर्णयितुन्न पार्यते । समाश्वासनस्थानमेतावदेव यदधिकक्लेशं विनैव पठनपाठनादिकार्यं कुर्वाणा एव यथा सर्वत्र जीवने प्रौढा आसंस्तथैवामरणन्निरवाहयन् । ज्वराक्रान्तिदिनपर्य्यन्तं व्युत्पत्तिवादटीकारचनायां लग्ना आसन् । अतएवोक्तम्—

जयः कुले जयोऽभ्यासे जयः पण्डितमण्डले ।
जयो मृत्यौ जयो मोक्षे जयदेवः सदा जयः * ॥ १ ॥

श्री गङ्गानाथ शर्मा

---

* इद १९२६-तमेशवीयवर्षे "सुप्रभातम्" नामके संस्कृतपत्रे प्रकाशितमासीत् ।

# विषयानुक्रमणिका.

## अथ बाधबीजकथनप्रकरणम्

## अथ शेषार्थकथनप्रकरणम्

# अथ परिभाषेन्दुशेखरः

## विजयाऽलङ्कृतः

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः[1] ।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥

श्रीगणेशाय नमः ।

गौर्य्यङ्कात् स्वेन्दुमाक्रष्टुं हस्तमुत्क्षिपतोऽसकृत् ।
गजास्यस्यास्यमालोक्याहसते शम्भवे नमः ॥ १ ॥
दरभङ्गानरेशस्य काशीस्थे पाठसद्मनि ।
अध्यापकपदं प्राप्तो जयदेवाभिधः सुधीः ॥ २ ॥
विजयाख्यामिमां व्याख्यां परिभाषेन्दुशेखरीम् ।
परिष्कृतियुतां कुर्वे विद्वद्वृन्दमनोमुदे ॥ ३ ॥

---

उमानन्द सुधीरम्बां ध्यात्वा श्रीजगदम्बिकाम् ।
विजया टिप्पणीं काश्यां तनुते ननु कौतुकात् ॥

१ कुरुत इति—ननु सुखबोधरूपफलस्य परगामित्वेन परस्मैपद युक्तमिति चेत्—न, यशआदिफलस्य स्वस्मिन्नपि सम्भवात्, गन्धनावक्षेपणेत्यादिना प्रकथनार्थे आत्मनेपदविधानाच्च । न्यायचिन्तामणिकृतस्तु यत्र क्रियाफले कर्तुरभिप्राय इच्छा तत्रैवात्मनेपदमिति सूत्रार्थस्तेन याजकाश्चैर्दक्षिणालाभेच्छयैव यागादिकरणे 'यजन्ति याजकाः' इति परस्मैपदम् । परगतस्यापि यागादिफलस्येच्छया यागादिकरणे तु 'यजन्ते याजकाः' इत्यादिक साधुरेव प्रयोगः । अतएव 'पितृस्वर्गकामः पुष्करिण्यां यजेत' इत्यादावप्यात्मनेपदमित्याहुः ।

ग्रन्थसमाप्त्यादिप्रतिबन्धकदुरितप्रशमाय कृतं मङ्गलं शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति- नत्वेति । स्वनिष्ठापकृष्टत्वप्रकारकबोधानुकूलव्यापाररूपनमस्कारो नम्धात्वर्थः । स्वं नमस्कर्ता व्यापारश्च करशिरस्संयोगादिरूपो बोध्यः । ननु देवदत्तस्य स्वापेक्षयाऽपकृष्टत्वे 'देवदत्तं नमस्करोती'ति प्रयोगो न स्यात्, तादृशबोधस्य तत्रासम्भवात् । ननु तादृशबोधाभावेऽपि तदाश्रयत्वेनेच्छोद्देश्यत्वस्य तत्रापि सत्त्वान्न कर्मत्वानुपपत्तिर्न वा बोधानुपपत्तिर्बाधितस्यापि भ्रमात्मकबोधसम्भवादिति चेत्- न, अयं साम्प्रति हीनो विनीतश्च न मदीयव्यापारशतेनापि मामपकृष्टं ज्ञास्यति स्वापेक्षयेतिनिश्चयस-

---

१ व्याख्यातृश्रोतॄणामिति । श्रोतुर्विद्यायोनिसम्बन्धवाचित्वविरहान्नानङ्, पूर्वोत्तरपदयोर्विद्यायोनिसम्बन्धवाचित्वे सत्येव तत्प्रवृत्तेः ।

२ मङ्गलाय चेति । मङ्गलत्वं च समाप्तिकारणतावच्छेदकतया सिद्धा जातिरेव । न च करशिरःसंयोगात्मककायिक-नमःशब्दप्रयोगात्मकवाचिकमानसज्ञानविशेषाद्यात्मकमानसिकभेदेन मङ्गलस्य बहुविधतया संयोगत्व-शब्दत्व-ज्ञानत्वादिभिः साङ्कर्यान्मङ्गलत्वं न जातिरिति वाच्यम्, संयोगत्वादिव्याप्यस्य मङ्गलत्वस्य विभिन्नतया परस्परात्यन्ताभावसामानाधिकरण्यविरहात् । न च करशिरःसंयोगाद्यन्यतमत्वमेव मङ्गलत्वमस्त्विति वाच्यम्, तथा सति तृणारणिमणीनामप्यन्यतमत्वेन वह्निकारणत्वे जैमिनिनये कारणतावच्छेदकतया शक्तेः, न्यायनये कार्यतावच्छेदकतया वैजात्यस्य च कल्पनाया विलयप्रसङ्गात् । प्रारीप्सितसमाप्तिप्रतिबन्धकादृष्टविशेषनिवर्त्तकत्वमपि न तत्, तादृशनिवर्त्तकतावच्छेदकापरिचयेन निवर्त्तकत्वस्य दुर्वचत्वात्, तत्परिचये तस्यैव मङ्गलत्वस्वरूपत्वसम्भवात् । मान्यास्तु तृणारणिमणीनां फूत्कारनिर्मन्थनतरणिकिरणसंयोगरूपनियतसहकारिसहकृतानामन्यतमत्वेन कारणत्वे सहकारिनियमानुपपत्तिरिति प्राहुरित्यन्यत्र विस्तरः ।

द्भावेऽपि तादृशस्येष्टस्य प्रयोगस्यानुपपत्तेस्तत्र कर्तुस्तादृशेच्छाया अप्यसम्भवात् ।

अत्रोच्यते—स्वधर्म्मिकोऽपकृष्टत्वप्रकारकबोधाश्रयत्वप्रकारको यो बोधः 'अयं मदपेक्षयापकृष्टमात्मानञ्जानाती'त्याकारकस्तदनुकूलो व्यापारो नमस्कारः स च बोधो निरुक्तस्थलेऽपि सम्भवतीति नानुपपत्तिः । न च सन्निहितशूद्रादेरपि तादृशव्यापारेण तादृशबोधसम्भवात् ब्राह्मणन्नमति चैत्रे शूद्रन्नमतीति प्रयोगापत्तिः । न च दैवात्तादृशबोधाश्रयत्वेऽपि तदाश्रयत्वेनेच्छोद्देश्यत्वाभावान्न शूद्रस्य कर्म्मत्वापत्तिः, कर्त्तुरित्यस्य प्रवृत्त्यभावेऽपि तथायुक्तमित्यनेन तदापत्तेर्दुर्वारत्वादिति वाच्यम्; स्वावधित्वेन विवक्षितवृत्तित्व-स्वप्रकारकबोधाश्रयत्वप्रकारकत्वोभयसम्बन्धेन अपकृष्टत्वविशिष्टो यो बोधस्तदनुकूलव्यापारस्यैव नमस्कारपदार्थत्वात् । शूद्रवृत्तिबोधे द्वितीयसम्बन्धसत्त्वेऽपि प्रथमसम्बन्धस्याभावात् न हि शूद्रोऽपकृष्टत्वावधित्वेन विवक्षितोऽस्ति नमस्कर्त्तुः । विवक्षितत्वनिवेशाद्वस्तुतः स्वापेक्षयापकृष्टे उदासीने वाऽव्याप्त्यतिव्याप्त्योरभाव इति सर्वमवदातम्[1] ।

अम्बया सहितः साम्बः, अम्बा माता, सा चाविशेषाज्जग-

---

१ सर्वमवदातमिति । ननु अपकृष्टत्वविशिष्टबोधानुकूलव्यापारस्य नमस्कारपदार्थत्वे 'कलितसमाधिं योगिनं नमति' 'सुतं नमती'त्यादौ कर्मसंज्ञानुपपत्तिः, नमस्कार्यस्य तादृशबोधप्रकारत्वाश्रयत्वविरहात् इति चेत् — न, तादृशज्ञानस्य यदा कदाचिदवश्यम्भावात्, स्वावधिकोत्कर्षप्रकारकज्ञानानुकूलव्यापारस्यैव नमस्कारपदार्थत्वाच्च । नमस्कार्यस्य तादृशज्ञानविरहेऽपि अस्मादयमुत्कृष्ट इत्यन्यदीयस्य अन्ततो नमस्कर्तुरेव वा स्वावधिकोत्कर्षप्रकारकज्ञानस्य विशेष्यतासंसर्गेणाश्रयत्वे अविरोधात् । एतेन गुरुनमनसमये अस्मादयमुत्कृष्ट इत्युदासीनस्यापि ज्ञाने जाते कर्मसंज्ञापत्तौ गुरुं नमतीतिवत् उदासीनं नमतीति वारणाय ज्ञाने स्वावधिकोत्कर्षभानानभिप्रेत्य प्रवेश्यम्; स्वावधिकोत्कर्षस्यापि

ज्जननी माया गृह्यते । तत्सहितत्वेन परमेश्वरस्य शिवस्य वस्तुतो निर्द्धर्म्मकस्याकर्त्तुरसङ्गस्यापि सृष्टिकर्तृत्वमुक्तम्भवति । वृद्ध्यर्थकवृह्धातुनिष्पन्नब्रह्मशब्देन पालनकर्तृत्वं बोध्यते । शेते अस्मिन्नविशेषात्सर्वं जगदिति व्युत्पत्त्या प्रलयकर्तृत्वम् । ततश्च जगतः सृष्टिस्थितिप्रलयकर्त्तारं 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती'ति श्रुतिप्रतिपाद्यं परमेश्वरन्नत्वेत्यर्थः । यदि च सन्निधानान्नागेशाम्बैवाम्बापदेन गृह्यते, अम्बासाहचर्य्यान्नागेशपितैव शिवः शिवशब्देनोच्यते, तर्हि स्वजननीसहितं स्वपितरं शिवनामानन्नत्वेत्यर्थोऽपि युक्त एव । शिवस्यैव माता सान्निध्यादम्बापदेनोच्यते ततश्च स्वपितामहीसहितं पितरमित्यप्यर्थः । क्त्वाप्रत्ययस्य समानकर्तृकपूर्वकालिकक्रियावाचकधातोर्विधानात् कुरुत इत्येतत्प्रतिपाद्ये विशेष्यभूतव्यापारे स्वकर्तृकर्तृकत्वस्वोत्तरकालिकत्वोभयसम्बन्धेन नम्धात्वर्थव्यापारस्यान्वयः, तदर्थ एव फलभूते बोधेऽभेदेन साम्बब्रह्मपदार्थान्वितशिवपदार्थस्य समवेतत्वसम्बन्धेनान्वयः ।

बालानामित्यस्य साधारणबुद्धिमतामित्यर्थः, तस्य सुखबोधपदार्थे सुखसमानाधिकरणबोधे अन्वयः समवेतत्वेन । एतेन विशिष्टबुद्धीनां क्लेशेन मन्दबुद्धीनाञ्च महाभाष्यादितोऽपि परिभाषार्थबोधसम्भवान्निष्फलोऽयं ग्रन्थारम्भ इत्यपास्तम् । तस्य च तादर्थ्यचतुर्थ्यन्तार्थस्य प्रयोजकत्वसम्बन्धेन कृधात्वर्थव्यापारेऽन्वयः । शोभना सूक्ष्मपदार्थावगाहिनी धीर्बुद्धिर्यस्य स सुधीः

---

उदासीने सत्त्वे स्वावधिकोत्कर्षसमानाधिकरणज्ञानोद्देश्यकव्यापारो नमस्कार इति वाच्यम्; तथा चोदासीनपुरुषीयज्ञानोद्देश्यकत्वस्य व्यापारेऽभावान्नापत्तिरिति परास्तम्, अस्मादयमुत्कृष्ट इत्यन्यदीयज्ञानस्यापि विशेष्यतासम्बन्धेन गुरावेव सत्त्वात् उदासीनं नमतीति प्रयोगापत्त्यसम्भवादिति दिक् ।

तस्याभेदेन नागेशपदार्थेऽन्वयः। अनेन विशेषणेनात्मोत्कर्षबोधनद्वारा ग्रन्थोत्कर्षो बोधितः। नागेशस्य च कर्त्तर्यात्मनेपदार्थे अन्वयस्तस्मिन्नेव तदर्थसंख्यायाः समवायसम्बन्धेनान्वयः। कर्त्तुश्च वृत्तित्वसम्बन्धेन तदर्थवर्त्तमानकालस्य च परिच्छिन्नत्वसम्बन्धेन धात्वर्थव्यापारेऽन्वयः। तस्य च मुख्यविशेष्यतया भानं 'भावप्रधानमाख्यातमि'ति वचनात्।

इन्दुरिव परिभाषा परिभाषेन्दुः। व्याकरणसिद्धान्तप्रकाशकत्वेन भाष्यादितः परिभाषार्थज्ञाने जायमानक्लेशरूपसन्तापनिवर्त्तकत्वेन च चन्द्रसादृश्यं परिभाषायाः, स शेखरः शेखरसदृशोऽर्थात्प्रधानं यस्मिन् ग्रन्थेऽसौ परिभाषेन्दुशेखरस्तम्। तस्य च वृत्तित्वसम्बन्धेन धात्वर्थफले उत्पत्तावन्वयः। परितो भाष्यते पुरुषार्थसाधनत्वादिनोद्घोष्यत इति परिभाषः शिवः स चासाविन्दुशेखर इति व्युत्पत्त्या शिवेऽपि तन्त्रेण परिभाषेन्दुशेखरपदार्थस्यान्वयः। तथा च साम्बाभिन्नब्रह्माभिन्नशिवसमवेतापकृष्टत्वविशिष्टबोधानुकूलो यो व्यापारस्तद्विशिष्टो बालकसमवेतसुखसमानाधिकरणबोधप्रयोजकः सुध्यभिन्ननागेशाभिन्नैकत्वविशिष्टकर्तृवृत्तिः वर्त्तमानकालपरिच्छिन्नः परिभाषेन्दुशेखरवृत्त्युत्पत्त्यनुकूलो व्यापार इति बोधः।

अनेनाध्येतृप्रवृत्तिप्रयोजकत्वेनावश्यप्रदर्शनीयानुबन्धचतुष्टयमपि प्रदर्शितम्। अनुबन्धत्वञ्च प्रवृत्तिप्रयोजकज्ञानविषयत्वम्। तथा हि तद्विषयकप्रवृत्तिं प्रति तद्धर्मिकेष्टसाधनत्वप्रकारकज्ञानं कारणम्। तच्च प्रकृते परिभाषेन्दुशेखरो मदिष्टसाधनम् इत्याकारकं ज्ञानं, तद्विषयतेष्टत्वावच्छिन्ना सुखबोधनिष्ठा परिभाषेन्दुशेखरत्वावच्छिन्ना ग्रन्थनिष्ठाऽस्मदर्थत्वावच्छिन्ना बालकनिष्ठा साधनत्वत्वावच्छिन्ना प्रयोजकत्वनिष्ठेति सुखबोधपरिभाषेन्दुशेखरबालकप्रयोजकत्वानां प्रयोजनविषयाधिकारिसम्बन्धानामनुबन्धत्वमुपपन्नम्।

जननी माया गृह्यते । तत्सहितत्वेन परमेश्वरस्य शिवस्य वस्तुतो निर्द्धर्म्मकस्याकर्त्तुरसङ्गस्यापि सृष्टिकर्तृत्वमुक्तम्भवति । वृद्ध्यर्थ-कबृह्धातुनिष्पन्नब्रह्मशब्देन पालनकर्तृत्वं बोध्यते । शेते अस्मिन्न-विशेषात्सर्वं जगदिति व्युत्पत्त्या प्रलयकर्तृत्वम् । ततश्च जगतः सृष्टिस्थितिप्रलयकर्त्तारं 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती'ति श्रुतिप्रतिपाद्यं परमे-श्वरन्नत्वेत्यर्थः । यदि च सन्निधानान्नागेशाम्बैवाम्बापदेन गृह्यते, अम्बासाहचर्य्यान्नागेशपितैव शिवः शिवशब्देनोच्यते, तर्हि स्वजननीसहितं स्वपितरं शिवनामानन्नत्वेत्यर्थोऽपि युक्त एव । शिवस्यैव माता साान्निध्यादम्बापदेनोच्यते ततश्च स्वपितामही-सहितं पितरमित्यप्यर्थः । क्त्वाप्रत्ययस्य समानकर्तृकपूर्वकालिक-क्रियावाचकधातोर्विधानात् कुरुत इत्येतत्प्रतिपाद्ये विशेष्यभूत-व्यापारे स्वकर्तृकर्तृकत्वस्वोत्तरकालिकत्वोभयसम्बन्धेन नमूधात्व-र्थव्यापारस्यान्वयः, तदर्थे एव फलभूते बोधेऽभेदेन साम्बब्रह्म-पदार्थान्वितशिवपदार्थस्य समवेतत्वसम्बन्धेनान्वयः ।

बालानामित्यस्य साधारणबुद्धिमतामित्यर्थः, तस्य सुखबो-धपदार्थे मुखसमानाधिकरणबोधे अन्वयः समवेतत्वेन । एतेन विशिष्टबुद्धीनां क्लेशेन मन्दबुद्धीनाञ्च महाभाष्यादितोऽपि परि-भाषार्थबोधसम्भवान्निष्फलोऽयं ग्रन्थारम्भ इत्यपास्तम् । तस्य च तादर्थ्यचतुर्थ्यन्तार्थस्य प्रयोजकत्वसम्बन्धेन कृधात्वर्थव्यापारे-ऽन्वयः । शोभना सूक्ष्मपदार्थावगाहिनी धीर्बुद्धिर्यस्य स सुधीः

---

उदासीने सत्त्वे स्वावधिकोत्कर्षसमानाधिकरणज्ञानोद्देश्यकव्यापारो नमस्कार इति वाच्यम्; तथा चोदासीनपुरुषीयज्ञानोद्देश्यकत्वस्य व्यापारेऽभावान्नापत्तिरिति परास्तम्, अस्मादयमुत्कृष्ट इत्यस्मदीयज्ञानस्यापि विशेष्यतासम्बन्धेन गुरौ गमनात् उदासीनं नमतीति प्रयोगापत्त्यसम्भवादिति दिक् ।

तदभेदेन नागेशपदार्थेऽन्वयः । अनेन विशेषणेनात्मोत्कर्षबोध तद्द्वारा ग्रन्थोत्कर्षो बोधितः । नागेशस्य च कर्त्तर्यात्मनेपदार्थे अन्वयस्तस्मिन्नेव तदर्थसंख्यायाः समवायसम्बन्धेनान्वयः । कर्त्तुश्च वृत्तित्वसम्बन्धेन तदर्थवर्त्तमानकालस्य च परिच्छिन्नत्व-सम्बन्धेन धात्वर्थव्यापारेऽन्वयः । तस्य च मुख्यविशेष्यतया भानं 'भावप्रधानमाख्यातमि'ति वचनात् ।

इन्दुरिव परिभाषा परिभाषेन्दुः । व्याकरणसिद्धान्त-प्रकाशकत्वेन भाष्यादितः परिभाषार्थज्ञाने जायमानक्लेशरूप-सन्तापनिवर्त्तकत्वेन च चन्द्रसादृश्यं परिभाषायाः, स शेखरः शेखरसदृशोऽर्थात्प्रधानं यस्मिन् ग्रन्थेऽसौ परिभाषेन्दुशेख-रस्तम् । तस्य च वृत्तित्वसम्बन्धेन धात्वर्थफले उत्पत्ता-वन्वयः । परितो भाष्यते पुरुषार्थसाधनत्वादिनोद्घोष्यत इति परिभाषः शिवः स चासाविन्दुशेखर इति व्युत्पत्त्या शिवेऽपि तन्त्रेण परिभाषेन्दुशेखरपदार्थस्यान्वयः । तथा च साम्बाभिन्नब्रह्माभिन्नशिवसमवेतापकृष्टत्वविशिष्टबोधानुकूलो यो व्यापारस्तद्वि-शिष्टो बालकसमवेतसुखसमानाधिकरणबोधप्रयोजकः मुख्यभिन्न-नागेशाभिन्नैकत्वविशिष्टकर्तृवृत्तिः वर्त्तमानकालपरिच्छिन्नः परि-भाषेन्दुशेखरवृत्त्युत्पत्त्यनुकूलो व्यापार इति बोधः ।

अनेनाध्येतृप्रवृत्तिप्रयोजकत्वेनावश्यप्रदर्शनीयानुबन्धचतुष्टय-मपि प्रदर्शितम् । अनुबन्धत्वञ्च प्रवृत्तिप्रयोजकज्ञानविषय-त्वम् । तथा हि तद्विषयकप्रवृत्तिं प्रति तद्धर्म्मिकेष्टसाधनत्वप्र-कारकज्ञानं कारणम् । तच्च प्रकृते परिभाषेन्दुशेखरो मदिष्टसा-धनम् इत्याकारकं ज्ञानं, तद्विषयतेष्टत्वावच्छिन्ना सुखबोध-निष्ठा परिभाषेन्दुशेखरत्वावच्छिन्ना ग्रन्थनिष्ठाऽस्मदर्थत्वावच्छि-न्ना बालकनिष्ठा साधनत्वत्वावच्छिन्ना प्रयोजकत्वनिष्ठेति सुख-बोधपरिभाषेन्दुशेखरबालकप्रयोजकत्वानां प्रयोजनविषयाधिका-रिसम्बन्धानामनुबन्धत्वमुपपन्नम् ।

ननु 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥'

इति स्मृतेः नागेशेति स्वनामोच्चारणमसङ्गतमिति चेत्, उच्यते—अक्षरानभिज्ञेनापि यथादृष्टं ग्रन्थस्य लेखनादुच्चारणं विनापि लेखो भवतीति स्वीकर्त्तव्यतया प्रकृते तथैव सत्त्वेनादोषात् । लेखस्य भृत्यकर्त्तृकस्यापि सम्भवान्नागेशकर्त्तृकत्वस्यैवासिद्धेश्च । स्वकीयग्रन्थनिर्माणसामर्थ्यस्य पतञ्जलिप्रणीतमहाभाष्याध्ययनजन्यतया पतञ्जलिरेव कुरुते नत्वहम् अहन्तु लेखनीस्थानीय इति ग्रन्थकारस्याशयेन नागेशपदेन महाभाष्यकारस्यैव नागानामीश इति व्युत्पत्त्याऽभिधानाच्च । सङ्कल्पवाक्ये पत्रलेखादौ च स्वनामोच्चारणव्यवहारस्य प्रचुरतया परश्रवणोपयोगिनामोच्चारणनिषेधपरत्वस्यैव स्मृतेरभ्युपगमाच्च । पण्डितब्राह्मणादिशब्देन स्वस्यापि स्वेनाभिलापस्य शिष्टाचारगोचरतया 'एकादशे द्वादशे वाऽहनि पिता नाम कुर्यादि'ति श्रुतिविहितनामोच्चारणस्यैव निषेधविषयत्वेन नाग ईशः प्रवर्त्तको यस्य सः, नागस्य ईर्नागेः भाष्यकारस्य लक्ष्मीः महाभाष्यं तां श्यति तनूकरोतीति नागेश इतिव्युत्पत्तिकस्य नागेशनाम्नो निषेधविषयत्वाभावाच्च । यद्वा ईशते इतीशः प्रभवो नागानामीशो नागेशस्तान् नागेश इति द्वितीयान्तं नत्वेत्यनेनान्वितम् ।

'अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः ।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥'

इति श्रुत्या 'नामगोत्रं वे'ति वार्त्तिकाच्च स्वनामगोत्रोच्चारणपूर्वकस्यैवाभिवादनस्य लाभेन यथा 'मा हिंस्यात्सर्वा भूतानी'ति निषेधस्य 'अग्नीषोमीयं पशुमालभेते'त्यनेन बाधस्तथाभिवादने नामोच्चारणविशेषविधिना सामान्यनामोच्चारणनिषेधस्य बाधनाददोषाच्च । न च वाचस्पतिमिश्रेण सांख्यकारिकाव्याख्यानावसरेऽग्नीषोमीयपशुहिंसया बाधो नोक्त इति दृष्टान्तासिद्धिरिति

वाच्यम्, तावताऽपि 'स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्ष' इति वाक्येन तत्र पापसद्भावस्य प्रामाणिकत्वेन बाधाभावेऽपि प्रकृते बाधाभावे प्रमाणाभावात्। यत्तु कूपखननजन्यजलेन यथा खननहेतुककर्दमादिलेपस्य नाशो भवति पुण्योत्पत्तिश्च भवति तथैव नमस्कारजन्यादृष्टेन नामोच्चारणजन्यपापनाशः समाप्तिप्रतिबन्धकदुरितध्वंसश्च भविष्यतीति नात्मनामोच्चारणजन्यकलङ्कावतार इति-तन्न, तत्तत्पापनाशम्प्रति जातिविशेषरूपेण तत्तत्कर्मणो हेतुतायाः शास्त्रे प्रतिपादनेन यस्य कर्म्मणो यत्पापनाशकत्वमुक्तं शास्त्रकारेण तस्यैव तत्पापनाशकत्वस्य स्पष्टं द्योतिततया प्रकृते अभिवादनजन्यं पुण्यं नामोच्चारणजन्यपापनाशकमित्याकारकवाक्यस्याभावेनोक्तार्थे प्रमाणाभावात। कूपखननस्थले प्रत्यक्षप्रमाणेनैव तथार्थाकारादिरयास्ताम्।

ननु परिभाषाणां शास्त्रभेदेन भिन्नतया व्याकरणपरिभाषापदार्थः क इति चेत्, अत्रोच्यते—अप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधोपयोगिबोधजनकत्वं परिभाषात्वम् यथा 'तस्मिन्नि'ति परिभाषाव्यापारमन्तरेण इकोयणचीत्यादेरजुपश्लिष्टस्येको यण् साधुरित्याद्येव बोधः उपश्लिष्टत्वं पूर्वापरसाधारणमित्यप्रामाण्यज्ञानास्कन्दितः, अनास्कन्दितश्च अजव्यवहितपूर्वत्वविशिष्टस्येको यणित्याकारकस्तस्मिन्निति व्यापाराधीन इति 'तस्मिन्नि'तिपरिभाषाजन्यबोधोऽप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधोपयोगी, तज्जनकत्वञ्च तस्या इति तत्त्वमुपपन्नम्। न चैवं वृद्ध्यादिपदार्थज्ञानद्वारा वृद्धिरादैजित्यादिसंज्ञाशास्त्राणामपि वृद्धिरेचीत्यादिवाक्यार्थबोधोपयोगिबोधजनकत्वात्परिभाषात्वापत्तिरिति वाच्यं, चरमबोधे शक्यविषयकत्वस्य निवेशनीयत्वात्। नाप्यपवादशास्त्रेण स्वीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेनोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नं सङ्कोचादुत्सर्गशास्त्रीयाप्रामाण्यज्ञानानास्कन्दितो यः सङ्कुचितधर्म्मावच्छिन्नोद्देश्यताको बोधः तदुपयो-

प्राचीनवैयाकरणतन्त्रे वाचनिकानि अत्र पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि भाष्यवार्त्तिकयोरुपनिबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते ।

---

गिबोधजनके, अकस्सवर्णे दीर्घ इत्याद्यपवादशास्त्रे परिभाषात्वापत्तिः, साधुत्वाप्रकारकत्वेनापि चरमबोधस्य विशेषणात् । अधिकारशास्त्रस्य विधिनैकवाक्यतयैव बोधकत्वात्साधुत्वाप्रकारकनिरुक्तबोधजनकत्वाभावान्न तत्रातिव्याप्तिशङ्कापि । पूर्वत्रासिद्धमित्यस्याधिकारत्वेऽपि होढ इत्यादाविदं शास्त्रं तत्तच्छास्त्रदृष्ट्याऽसिद्धमित्याकारकपृथग्बोधजनकत्वेन तद्बोधस्य साधुत्वाप्रकारकत्वेऽपि निरुक्तबोधोपयोगित्वाभावेनादोषात् । अतिदेशशास्त्रस्य प्राधान्यात्कार्यातिदेशकत्वेन तत्रापि नातिव्याप्तिः । निषेधशास्त्राणां वार्त्तिकानाञ्च पृथक्साधुत्वाप्रकारकबोधाजनकत्वेन न परिभाषात्वापत्तिः । नन्वेवम् 'असिद्धम्बहिरङ्गमन्तरङ्गे' इत्यादिपरिभाषाबोधस्य निरुक्तबोधोपयोगित्वाभावेन तत्राव्याप्तिरिति चेत्—इदमत्रावधेयम्—विधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगिसाधुत्वाप्रकारकशब्दविषयकबोधजनकत्वे सत्यधिकारशास्त्रभिन्नत्वं तत्त्वम् । परिभाषया कस्यचिद्विधिशास्त्रस्य कुत्रचित्प्रवृत्तेर्निवृत्तेर्वाऽवश्यम्भावाल्लक्षणसमन्वयः । रूपातिदेशस्य तृज्वत्क्रोष्टुरित्यस्य विचारेण साधुत्वप्रकारकबोधजनकत्वस्यैव लाभेनादोष इति दिक् ।

निरुक्तलक्षणलक्षितानामपि तस्मिन्नित्यादिपरिभाषाणामव्याख्यानेन न्यूनत्वशङ्कावारणाय व्याख्येयानि परिभाषारूपाणि निर्दिशति प्राचीनवैयाकरणेत्यादिना । तस्मिन्नित्यादीनां स्वतःप्रामाण्येन ज्ञापकन्यायसिद्धत्वाभावेन व्युदासः । ननु स्वतस्सिद्धान्यपि 'यस्मिन्विधिस्तदादावल्ग्रहणे' 'उपपदविभक्तेः कारक-

ननु लण्-अइउण्सूत्रयोर्णकारस्यैवोपादानेनाणिण्ग्रहणेषु सन्देहादनिर्णयोऽत आह—

व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्॥ १॥

---

विभक्तिर्बलीयसी'त्यादीनि व्याख्यातानि। अतएव तत्र तत्र वाचनिकमिदमित्युक्तमिति प्रतिज्ञाभङ्ग इति चेत्, अत्र केचित्—प्राचीनवैयाकरणतन्त्र इत्यादि सप्तम्यन्तद्वयं न क्रमेणान्वय्यर्थप्रतिपादकं येन वाचनिकेषु पाणिनीयतन्त्रान्वयो न स्यादपि तु समुच्चयार्थक-चशब्दमुभयत्राप्यध्याहृत्य प्राचीनवैयाकरणतन्त्रे अत्र पाणिनीयतन्त्रे च वाचनिकानि ज्ञापकन्यायसिद्धानि चेति रीत्या समुदायत्वावच्छिन्नस्य समुदायत्वावच्छिन्नेऽन्वयाद्यथायोग्यमन्वयविश्रान्तेरापत्त्यभावात् इत्याहुः। अन्ये तु—ज्ञापकन्यायशब्दाभ्यामर्श आद्यचि ज्ञापकेत्यस्य ज्ञापकसिद्धं, न्यायेत्यस्य न्यायसिद्धं, सिद्धेत्यस्य स्वतःसिद्धमित्यर्थं कृत्वा वाचनिकमपि सगृह्णन्ति। पक्षद्वयेऽपि तस्मिन्नित्यादिव्यावृत्तये पाणिन्यनुच्चरितानीति शेषः। परे तु—ज्ञापकन्यायसिद्धत्वमेव सर्वासामिति तत्तत्परिभाषानिरूपणावसरे स्फुटीभविष्यति, तत्र तत्र वाचनिकत्वकथनन्तु भाष्ये ज्ञापकन्यायानुपन्यासप्रयुक्तमेव इत्याहुः।

ननु 'नाजानन्तर्ये' 'अकृतव्यूहे'त्यादीनां भाष्यवार्त्तिकयोरनुपनिबद्धानामपि व्याख्यानेन प्रतिज्ञाविरोध इति चेत्-न, भाष्यवार्त्तिकयोरुपनिबद्धानीति न परिभाषारूपे विशेषणम्, अपि तु स्वतन्त्रमेव, तथा च ज्ञापकन्यायसिद्धानि भाष्यवार्त्तिकयोरुपनिबद्धानि च यानीत्यर्थः। भाष्यवार्त्तिकयोरित्यस्य तयोरेवेत्यर्थः, तेनाष्टाध्यायीपठितानां तस्मिन्नित्यादीनां व्युदासः। 'नाजानन्तर्ये' इत्यादीनां 'यस्मिन्विधि'रित्यादीनाञ्च संग्रहः।

अस्मिन् ग्रन्थे त्रीणि प्रकरणानि सन्ति—शास्त्रत्वसम्पादकम्, बाधबीजकथनम्, शेषार्थकथनञ्च । 'एकदेशविकृतमनन्यवत्' इत्यन्तमाद्यम्, एतदनन्तरम् 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इत्यन्तं द्वितीयम्, तदनन्तरं तृतीयम् । तेषु प्राधान्यात्प्रथमं शास्त्रत्वसम्पादकमुपात्तम् । तत्रापि महेश्वरोच्चरितानुबन्धमूलकत्वेनाभ्यर्हितत्वादितरपरिभाषाप्रवृत्तिप्रयोजकतया चादौ 'व्याख्यानतो विशेषे'ति परिभाषामवतारयति—नन्विति । गृह्यन्त एभिरिति ग्रहणानि, अणिणां ग्रहणानि अणिणग्रहणानि, तेषु अणिणग्रहणेषु । सन्देहादिति—नन्वत्र क्व सन्देहः, न तावच्छक्तौ, अणुपदमकारादिपूर्वणकारान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिमत्, उत अकारादिपरणकारान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिमदित्याकारकः, 'आदिरन्त्येन सहेता' इत्यनेनाणुपदे अकारादिणकारान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तेर्बोधनेन शक्यतावच्छेदकाश्रययावद्व्यक्तिनिरूपितैव शक्तिरिति नियमेन निरुक्तसमुदायद्वयघटकसर्ववर्णानां निरुक्तशक्यतावच्छेदकाक्रान्तत्वेन तत्रत्यसकलवर्णनिरूपितशक्तिमत्त्वनिश्चयेन तस्य सन्देहप्रतिबन्धकत्वेन सन्देहासम्भवात् । नहि घटत्वावच्छिन्ननिरूपितशक्तिमत्त्वेन ज्ञाते घटपदे एतद्घटनिरूपिता शक्तिः, उत तद्घटनिरूपितेति सन्देहो भवति । न च बाधकाभावात्सर्वत्राणिणुपदेऽन्त्यणकारान्तसमुदायनिरूपितैकशक्तेरेव बोधने पूर्वणकारोच्चारणस्य वैयर्थ्यापत्त्याऽकारादिपूर्वणकारान्तसमुदायनिरूपिता परणकारान्तसमुदायनिरूपिता च भिन्नैव शक्तिर्बोध्यते शक्यतावच्छेदककोटौ पूर्वत्वपरत्वनिवेशेनेति कोटिद्वयोपपत्तेर्न सन्देहासम्भव इति वाच्यम्, तावतापि हर्यादिपदे नानाशक्तिदर्शनेन शक्तीनां विरोधाभावेन विरुद्धकोटिद्वयावगाहिज्ञानरूपसन्देहासम्भवस्य तादवस्थ्यात् । नापि

विशेषस्यान्यतराद्यर्थरूपस्य व्याख्यानाच्छिष्टकृतात् प्रतिपत्तिर्निश्चयः, हि यतः सन्देहाच्छास्त्रमलक्षणमननुष्ठापकं, लक्षणं तथा न, शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः ।

---

तात्पर्ये सन्देहः, प्रकृते निर्णायकाभावेनैतदणुपदमेतच्छक्तिज्ञानाधीनबोधजननेच्छयोच्चरितम् अपरशक्तिज्ञानाधीनबोधजननेच्छया वेत्याकारकः । मदीयः पुत्रो धनवान् भवतु पण्डितश्च भवत्वित्येकस्मिन्ननेकेच्छाविशेष्यत्वदर्शनेनाविरोधात्सन्देहस्य तत्राप्यसिद्धेः । अत्रोच्यते—यद्यप्येकस्मिन्नपि नानातात्पर्यसम्भवः, तथापि ऋषीणामिच्छाप्रतिघाताभावात्तदीयेच्छा फलवत्येव भवितुमर्हति, बोधद्वयश्च सकृदुच्चरिताणुपदान्न सम्भवति; सकृदुच्चरितन्यायात्, आवृत्तौ प्रमाणाभावाच्च । तस्मान्न पाणिनिसमवेतोभयविधतात्पर्य्यविषयतापन्नमिदमणुपदमिति निश्चयेनैकस्यैव सत्त्वेनेदन्तात्पर्य्यम्, उत अपरमिति सन्देह उपपद्यते । शाब्दबोधे च तात्पर्यनिश्चयस्यैव हेतुत्वेन तात्पर्य्यसन्देहादनिर्णयः शाब्दबोधाभाव इत्यर्थः । यदि तात्पर्यज्ञानत्वेनैव कारणता तर्हि तात्पर्यसन्देहे शाब्दबोधोऽपि सन्दिग्धप्रामाण्यक एवेत्यनिर्णय इत्यस्य निश्चितप्रामाण्यकशाब्दबोधाभाव इत्यर्थः ।

विशेषेत्यस्यार्थमाह—अन्यतराद्यर्थरूपस्येति । अन्यतमस्य आदिना ग्रहणम् । अलक्षणमित्यत्रानुष्ठापकशब्देन नञ्तत्पुरुषे लक्षणेन सह कर्मधारये शाकपार्थिवादित्वात्पूर्वसमासोत्तरपदस्य लोपे च कृतेऽलक्षणमित्यस्याप्रवर्त्तकलक्षणमित्यर्थः । सन्देहात्तथा नेत्यर्थः । असन्दिग्धानुष्ठानसिद्ध्यर्थत्वेन शास्त्रं सन्देहादलक्षणमप्रवर्तकलक्षणं भवितुमर्हति, परन्तु तथा प्राप्तमिति व्याख्यानात्सन्देहनिवृत्तिः कर्त्तव्येति बोध्यम् । लक्षणमित्यस्य शास्त्रमित्यर्थः ।

असन्दिग्धानुष्ठानसिद्ध्यर्थेऽत्र शास्त्रे सन्दिग्धोच्चारणरूपाचार्यव्यवहारेण सन्देहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत् । तेनाऽणुदित्सवर्णस्य इत्येतत्परिहाय

---

यदि तात्पर्यनिश्चयत्वेन शाब्दबोधं प्रति कारणता, यदि वा तात्पर्यज्ञानत्वेन कारणता, सर्वथा प्रवर्त्तकशास्त्रस्याभावः प्राप्त इति बोध्यम् । ज्ञापनप्रकारमाह—असन्दिग्धानुष्ठानसिद्ध्यर्थ इत्यादि । भावक्तान्तसन्दिग्धपदेनार्थाभावेऽव्ययीभावः । सन्देहस्याभावोऽसन्दिग्धं, तत्प्रयोज्यमनुष्ठानं प्रयोगोच्चारणे प्रवृत्तिरित्यर्थः । तद्धि पचकप्रवृत्तिं प्रति तद्धर्मिकेष्टसाधनत्वनिश्चयस्य हेतुत्वेनानुष्ठानं सन्देहाभावप्रयोज्यम्भवति । तदर्थत्वञ्च शास्त्रस्य, तद्विना लक्ष्ये पुण्यजनकत्वरूपस्येष्टसाधनत्वस्य निश्चयाभावेन प्रवृत्त्यभावात् ।

सन्दिग्धोच्चारणरूपाचार्यव्यवहारेणेति—भावक्तान्तस्य प्रयोजकत्वार्थकषष्ठ्यन्तस्य सन्दिग्धस्य समासः । उच्चारणेति—णकारोच्चारणेत्यर्थः । आचार्यपदेनात्र महेश्वरः, अनुबन्धस्य महेश्वरकृतत्वात् । सन्देहवारणोपायस्य सकाराद्यनुबन्धकरणस्य सत्यपि सम्भवे सन्देहाभावप्रयोज्यस्य प्रयोगोच्चारणस्य सिद्धीच्छया सन्देहप्रयोजकणकारोच्चारणं सर्वज्ञस्य महेश्वरस्यानुपपन्नं सत् सन्देहनिवृत्तिर्व्याख्यानाद्भविष्यतीत्येतादृशं स्वस्योपपादकं कल्पयित्वोपपन्नमित्यर्थापत्तिप्रमाणगम्यमेव सर्वत्र ज्ञाप्यं बोध्यम् । व्याख्यानात्सन्देहनिवृत्तिः स्यादिति बोधनायैव तथोच्चारणमिति नानुपपत्तिरिति यावत् । अतएव 'इको यणचि' इत्यादावचीति पञ्चमकारादिबोधकत्वेन तात्पर्यविषयम् अचप्रत्ययबोधकत्वेन नेति सन्देहस्योत्पत्तिमात्रेण नाप्रामाण्यम् । एतेन ज्ञापितायामपि

पूर्वेणाण्ग्रहणं परेणेण्ग्रहणमिति लण्सूत्रे भाष्ये स्पष्टम् ॥ १ ॥

---

कथं स्वांशे चारितार्थ्यमिति शंका न, अस्या हि ज्ञाप्यमस्तु ज्ञापकं मास्त्वित्याकारः, पूर्वणकाररूपज्ञापकाकरणे हि अइ उ माऽत्रनोधालापत्तिः। एकारावनुवन्धं कृत्वा तावन्मात्रबोधस्य अएइद्रसूपदेनोपपादने हि लाघवानवकाशः, तथा सति सन्देहाभाव इति चेत्, णकारकरणेऽप्युक्तज्ञाप्यात्सन्देहाभावसिद्धेः। किञ्चानुपपत्त्या उपपादकं कल्पितन्तेनानुपपत्तिशान्तिरिति किमितोऽधिक वक्तव्यम्। यत्र ज्ञापने जाते केनापि लघुभूतोपायेन लक्ष्यसिद्धौ गुरुभूतज्ञापककरणमनुपपन्नमेव तत्र ज्ञापिते कथं चारितार्थ्यमित्युच्यते, अन्यथा लक्ष्यासिद्धिरूपोपपादकस्य प्रदर्शनेनानुपपत्तिपरिहारे जातं चारितार्थ्यमित्युच्यते, न तथा प्रकृते, उपपादितत्वात्। एतेन ज्ञापितायामप्यस्या स्वांशे चारितार्थ्याभाव इत्यपास्तम्। सन्देहनिवृत्तेर्व्याख्यानापेक्षत्वं बोध्यते इत्येव सिद्धेः नञ्द्वयोपादानेन विरोधस्थले व्याख्यानादेव सन्देहनिवृत्तिः कर्त्तव्या, न पाणिनिन्यासादिनेति बोधनद्वारा 'यथोत्तर मुनीनां प्रामाण्यम्' इति बोधितम्। अतएव 'हृदयस्य हृल्लेख-यदण्लासेषु' इति सूत्रे लेखग्रहणेन लेखशब्दस्य न घञन्तलेख-शब्दबोधकत्वं ज्ञापितम्, अपि तु भाष्यकृद्व्याख्यानेन 'उत्तरपदाधिकारे प्रत्ययग्रहणे' इतिपरिभाषैव ज्ञापितेति बोध्यम। व्याख्यानञ्च तत्र तत्र ग्रन्थ एव स्पष्टम्। यथोत्तरमित्यत्र प्रमाणन्तु 'धिन्विकृण्व्योरच्च' इति सूत्रेण वलोपविधानेनैव 'न धातुलोपे' इत्यनेन गुणनिषेधात् धिनोतीत्यस्य सिद्धावकारविधानमेव। ज्ञापिते च भाष्यकारेण 'न धातुलोपे' इत्यस्य प्रत्याख्यानाद् गुणाभावाय चरितार्थम्। यत्तु स्वेन स्वस्याप्रामाण्यबोधनमनुचितमिति नैतज्ज्ञापकमिति, तन्न, यथार्थबोधने अनौचित्यविरहात् ॥ १ ॥

तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह—

यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥

कार्यकालं संज्ञापरिभाषम् ॥ ३ ॥

उद्देशमनतिक्रम्य यथोद्देशम् । उद्देश उपदेशदेशः, अधिकरणसाधनश्चायम् । यत्र देश उपदिश्यते तद्देश

---

तत्र संज्ञापरिभाषाविषये पक्षद्वयमिति—तत्रेत्यस्य शास्त्रे इत्यर्थः, तस्य च पक्षद्वयपदार्थेऽन्वयः। तेन पक्षद्वयत्वावच्छिन्नाधेयतानिरूपिताधिकरणता शास्त्रत्वावच्छिन्नेति लभ्यते। तत्रेत्यनुक्तौ तु संज्ञापरिभाषादेशत्वावच्छिन्नाया एव तस्या लाभेन प्रतिसंज्ञाविषयं प्रतिपरिभाषाविषयं पक्षद्वयमित्यनिष्टं सम्भाव्येत, तावन्मात्रोक्तौ तु विधिसूत्रेऽपि पक्षद्वयाधिकरणत्वापत्तिः। विषयशब्दो देशवाची, सप्तम्याश्चावच्छेदकत्वमर्थोऽधिकरणत्वान्वयि, तथाच संज्ञापरिभाषादेशावच्छेदेन शास्त्रे पक्षद्वयमित्यर्थः। यत्रदेश उपदिश्यत इति—छात्रो द्विविधः, एकः श्रद्धालुः 'गुरुभिर्यन्मामस्तुपदिश्यते तदवश्यमेव मदुपयोगी'ति निश्चयवान् यथाश्रुतग्राही। स वृद्धिरादैजित्यस्य वृद्धिपदमादैज्निरूपितशक्तिमदित्यर्थे तस्मिन्नित्यादिपरिभाषायाः सप्तमीनिर्देशेन विधीयमानं कार्यमव्यवहितपूर्वस्य भवतीत्याद्यर्थे च गुरुभिर्बोधिते सादरानुभवाज्जाततत्तदर्थविषयकसंस्कारो 'वृद्धिरेचि' 'इको यणचि' इत्यादौ वृद्धिपदोपश्लेषिकाधिकरणबोधकाचीतिपदेत्यादिरूपैकसम्बन्धिज्ञानेनोद्बुद्धतत्तत्संस्कारेणानुभूततत्तदर्थं स्मृत्वा लक्ष्यसंस्कारोपयोगिवाक्यार्थबोधवान् भवति, तदपेक्षया यथोद्देशपक्षः।

अपरश्च फलानुरोधेनैव गुर्वादिवाक्येऽपि श्रद्धावान्, स 'वृद्धिरादैच्' 'तस्मिन्नि'त्यादिवाक्यार्थे गुरुभिर्बोधितेऽपि शब्दसा-

एव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः। देशश्चोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते। [1]तत्तद्वाक्यार्थबोधे जाते भविष्यति किञ्चिदनेन प्रयोजनमिति ज्ञानमात्रेण सन्तुष्यद्यथाश्रुतग्राहिप्रतिपत्रपेक्षोऽयं पक्ष इतीदृत्सूत्रे कैयटः।

---

धुत्वज्ञानार्थं प्रवृत्तस्य मम नानेन साधुत्वम्बोधितमिति नैतन्मदुपयोगीति निश्चित्योपेक्षितवान्। तेन तत्तदर्थविषयकदृढसंस्काराजननाद् 'वृद्धिरेचि' इत्यादौ वृद्ध्यादिपदज्ञानेऽपि तत्तदर्थज्ञानाभावाद्वाक्यार्थबोधाप्रसक्तौ कोऽसौ वृद्धिपदार्थ इत्यादि जिज्ञासायां पुनर्गुरुभिरुच्यमानेन 'वृद्धिरादैच्' इत्यादिना सह एवं 'तस्मिन्' इत्यादिना च सह 'वृद्धिरेचि' इत्यादीनां पदैकवाक्यतयैवार्थो बुद्ध्यते, तदपेक्षः कार्यकालपक्षः। अनुभवेन संस्कारजनने अनुभवस्येवापेक्षाबुद्धेरपि हेतुत्वमिति भावः। तथाच यथोद्देशपक्षे परिभाषया संज्ञासूत्रेण च विधिशास्त्रस्य वाक्यैकवाक्यता। सा (चोपजीव्योपजीवकभावापन्नबोधजनकत्वरूपा) 'तस्मिन्नि'त्यादिपरिभाषाणां, 'वृद्धिरादैच्' इत्यादिसंज्ञासूत्राणाञ्च बोध उपजीव्यः, 'इको यणचि' ('वृद्धिरेचि'इत्यादिशास्त्रजन्योऽप्रामाण्यज्ञानानास्कन्दितो लक्ष्यधर्म्मिकसाधुत्वप्रकारको बोध उपजीवकः,) तादृ-

---

१ तत्तद्वाक्यार्थबोध इति—अन्तेवासिनामपेक्षाशालिनीं बुद्धिमादाय यथोद्देशपक्षः, उपेक्षाशालिनीं तामादाय कार्य्यकालपक्षः। तत्र यथोद्देशपक्षे संज्ञापरिभाषयोर्विधिशास्त्राणाञ्च स्वदेश एव वाक्यैकवाक्यतया बोधः। कार्यकालपक्षे तु विधिदेशं गतानां संज्ञापरिभाषाणां स्वभेदं परिकल्प्य स्थितानां विधिशास्त्रेण सह पदैकवाक्यतया बोध इति कैयटाशयः।

केचित्तु परिभाषाविषये 'तस्मिन्नि'त्यादिवाक्यार्थबोधे सप्तमीनिर्देशादिः क्वेति पर्यालोचनायां सकलतद्विध्युपस्थितौ सकलतत्संस्काराय गुणभेदं परिकल्प्यैकवाक्यतयैव नियमः।

शबोधस्य संज्ञापरिभाषाबोधाधीनत्वादिति लक्षणसमन्वयः। कार्यकालपक्षे च पदैकवाक्यता, सा च निरूप्यनिरूपकभावापन्न-विषयताप्रयोजकपदघटितत्वरूपा। तत्पक्षे च विधिशास्त्रेण सह संज्ञापरिभाषयोर्बोधजनकत्वात् परिभाषाघटकस्य पूर्वपदार्थस्य निर्दिष्टपदार्थस्य च सूत्रघटके इक्पदार्थे अच्पदार्थे चाभेदसम्बन्धेनान्वयात्, संज्ञासूत्रघटकादैच्पदार्थे सूत्रघटकवृद्धिपदस्याभेदेनान्वयाच्च, तत्रत्यप्रकारताविशेष्यतयोर्निरूप्यनिरूपकभावापन्नयोः प्रयोजकत्वं पूर्वादिपदानां, तद्घटितत्वञ्च परिभाषाविधिसूत्रयोः संज्ञासूत्रविधिसूत्रयोश्चेति लक्षणसमन्वयः। इदं प्राचीनमतम्।

स्वमतमुपन्यस्यति—केचित्त्विति, भाष्यतत्त्वविद इत्यर्थः। सकलतद्विध्युपस्थिताविति—परिभाषया स्वीयसप्तमीनिर्देशादि-लिङ्गचिह्नितस्वदृष्टसकलसापादिकशास्त्राणामाकर्षणमिति भावः। सकलतत्संस्कारायेति—तत्तद्विधिशास्त्रीयाप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधजननायेत्यर्थः। गुणस्य विधेयस्य निर्दिष्टे पूर्वस्येत्यादिरूपस्य भेदम् यावद्विधिसूत्रमावृत्तिम्, एकेन विधेय

१ केचित्त्विति—अस्यायमाशयः, नेयं व्यवस्था कैयटस्य समीचीना, यतः स्वघटकपदप्रयोज्यविषयतायाः तादृशविषयताप्रयोजकपदघटितवाक्यघटकपदप्रयोज्यैव विषयता संकोचिका, नान्यवाक्यघटकपदप्रयोज्येति यथोद्देशपक्षे पदैकवाक्यतां विना विधिशास्त्रीयविषयतासंकोचः कर्तुमशक्य इति तत्पक्षेऽपि तक्षाधिकरणन्यायेन परिभाषाणां स्वदेश एव विधिशास्त्राणि

कार्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः । एत-द्देवाभिप्रेत्याधिकारो नाम त्रिप्रकारः—कश्चिदेकदेशस्थः सर्वं

-बोधकपदेन सह सर्वविधिसूत्राणामन्वयासम्भवादिति भावः । सम्पूर्णपरिभाषाया विधिसूत्रेणानन्वयात्तदा वृत्तौ फलाभावाद् गुणभेदमित्युक्तम । एकवाक्यतयैव नियम इति—पदैकवाक्य-तयैव लक्ष्यसंस्कारको बोध इत्यर्थः, परिभाषया जन्यते इति शेषः । पदैकवाक्यता तु पूर्वमुक्ता । यत्र देशे परिभाषोपदिश्यते तद्देश एव विधिसूत्रेण सह पदैकवाक्यतया लक्ष्यसंस्कारको-पयोगिवाक्यार्थबोधः परिभाषया सम्पाद्यत इति निष्कर्षः । अय-मेव यथोद्देशपक्षः ।

त्रिपादीस्थशास्त्राणां परिभाषादृष्ट्या असिद्धत्वात्तेषामा-कर्षणाभावात् परिभाषया लक्ष्यसंस्कारकबोधजनकत्वं तेषां न स्यादित्यत आह—कार्यकालपक्षे त्विति । तुशब्देन यथोद्देशपक्षं व्यवच्छिनत्ति, न यथोद्देशपक्ष इति यावत् । त्रिपाद्यामपीति । अपिना यथोद्देशपक्षे सपादसप्ताध्याय्यामित्यस्य सङ्ग्रहः । अदृष्ट-पिशाचन्यायेन त्रिपादीस्थैर्विधिशास्त्रैरेव स्वसंस्काराय परि-भाषामाकृष्य पदैकवाक्यतया लक्ष्यसंस्कारको बोधः स्वदेशे जन्यत इति भावः । अयमेव कार्यकालपक्षः ।

पक्षद्वयेऽपि परिभाषाणां पदैकवाक्यतयैव बोधकमित्यर्थे मानमाह—एतद्देवेत्यादिना । त्रिप्रकार इति । एकः उत्तरोत्तरं सम्न-

सन्निधाप्य स्वनिधेयभेदस्यगुणभेदं परिकल्प्य पदैकवाक्यतयैवान्वेतुमर्हति । कार्यकालपक्षे तु अदृष्टपिशाचन्यायेन विधिसूत्राणि स्वकीयलक्ष्यसंस्कारकवा-क्यार्थबोधाय परिभाषामाकृष्य स्वदेशे तया पदैकवाक्यतामापन्न सत् वाक्या-र्थबोध जनयति । अतएव कार्यकालपक्षे त्रिपाद्यामप्युपस्थितिरिति यथोद्देश-

शास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयतीति 'षष्ठी स्थाने' इतिसूत्रे भाष्ये उक्तम् । अधि-

---

ध्यते यथा अङ्गस्येत्यादि, अपरो यश्चकारेणानुकृष्यते, अपरः परिभाषारूपः । अधिकारत्वञ्च विधिवाक्येन सह पदैकवाक्यतया

---

पक्षाद्विशेष इति ।

अत्रापि मते अरुचिबोधनाय केचिदित्युक्तम् । तथाहि यथोद्देशपक्षे तक्राधिकरणन्यायेन परिभाषाणामाकर्षणकर्तृत्वं, कार्यकालपक्षे अदृष्टपिशाचन्यायेन विधिसूत्राणामाकर्षणकर्तृत्वमिति कल्पनागौरवम् । किञ्च कल्पनायामपि न निस्तारः । तथाहि विधिसूत्रं कां परिभाषामाकर्षयेत् ? स्ववृत्तिलिङ्गचिन्हितामिति चेत्, तज्ज्ञानमेव दुर्लभम्; यत एषा विचारणा जायते—परिभाषाप्रवृत्तौ किं लिङ्गं—सप्तम्यन्तपदघटितं, सप्तम्यन्तपदघटितत्वेन ज्ञायमानशास्त्रं वा ? नाद्यः, यथोद्देशपक्षेऽपि त्रिपाद्यां प्रवृत्तिः स्यात् । नान्त्यः, कार्यकालपक्षेऽपि त्रिपाद्यां प्रवृत्ति र्न स्यात्, पूर्वत्रासिद्धमिति शास्त्रासिद्धत्वात् शास्त्रत्वेन ज्ञानाभावात् । तस्मात् द्विविधाः परिभाषाः—काश्चित् शास्त्रत्वसम्पादिकाः, काश्चित् शास्त्रत्वावच्छिन्नोद्देश्यताकाः । तत्र याः तत्सम्पादिकाः ता विना शास्त्रत्वस्यैवाभावेन शास्त्रासिद्धत्वप्रतिपादकपूर्वत्रासिद्धमित्यस्याःप्रवृत्तेः तत्सम्पादिकानां परिभाषाणां सर्वदैव त्रिपाद्यां प्रवृत्तिः । याश्च शास्त्रत्वावच्छिन्नोद्देश्यताकास्ताः कार्यकाले यथोद्देशे वा कदापि त्रिपाद्यां न प्रवर्तन्ते, त्रिपाद्या असिद्धत्वात् । अतएव वक्ष्यते—'कार्यकालपक्षेऽपि त्रिपाद्यामन्तरङ्गपरिभाषा न प्रवर्तत' इति । 'असिद्धं बहिरङ्गमन्तरङ्गे' 'विप्रतिषेधे परं कार्यम्' 'अनुदात्तं पदमेकवर्जम्' 'सन्निपाते'ति चतस्रः परिभाषाः शास्त्रत्वावच्छिन्नोद्देश्यताकाः, तद्भिन्नाः सर्वास्तत्सम्पादिका बोध्याः । अतएव 'तस्मिन्नि'ति शास्त्रं यथोद्देशपक्षे त्रिपाद्यां न प्रवर्तते इत्यादिकं न कुत्रापि प्रतिपादितं ग्रन्थकृद्भिः । एवञ्च 'यथोद्देशं संज्ञापरिभाषं' 'कार्यकालं संज्ञापरिभाषमि'ति परिभाषाद्वयं न कार्यमिति नागेशाशय इति श्रीमद्गुरुचरणचरणाः ।

कारशब्देन पारार्थ्यात्परिभाषाप्युच्यते । कश्चित्परिभाषारूप इति कैयटः । दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशकः एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम् । एतच्च पक्षद्वयसाधारणं भाष्यम्, पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः । तत्रैतावान्विशेषः—यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम् । तदुक्तं 'क्ङिति चे'ति सूत्रे कैयटे—यथोद्देशे प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जत इति, कार्यकाले

---

बोधजनकत्वम् । न चाधिकारविषयं भाष्यं परिभाषायां नोपयुज्यते इत्यत आह—कश्चित्परिभाषारूप इति कैयट इति । तथा च परिभाषाविषयमेव भाष्यमिति बोध्यम् । दीपो यथा स्वावयवप्रभासम्बद्धपदार्थप्रकाशकस्तथा परिभाषापि स्वावयवविधेयसम्बद्धमेव विधिशास्त्रमभिज्वलयतीत्यर्थ इति स्पष्टमेव दीपदृष्टान्तेन पदैकवाक्यता लभ्यते । वाक्यैकवाक्यतायान्तु अवयवसम्बन्धाभावाद् दृष्टान्तासङ्गतिः स्पष्टैवेति बोध्यम । एवं—दीपवत् । एतत्—परिभाषारूपम् । स्वबुद्धिजननद्वारेति—स्वविधेयोपस्थितिद्वारेत्यर्थः । नन्विदं भाष्यं कार्यकालपक्षाभिप्रायकमेव, तत्पक्षे पदैकवाक्यतायाः प्राचीनैरप्यङ्गीकारान्नैतद्भाष्यविरोधः प्राचामिति चेत्त, तत्राह—एतच्चेति, भाष्ये पक्षविशेषस्यानुपक्रमादिति भावः । प्रदेशैकेति—विध्येकेत्यर्थः, न तु विधिदेश एवेत्याग्रहः । ननु पक्षद्वये पदैकवाक्यतायां को विशेषस्तयोरित्यत आह—एतावानिति । परिकल्प्येति । अस्य स्थितानामिति शेषः । अतएव क्त्वाप्रत्ययोपपत्तिः । तैः—विधिसूत्रैस्सहेत्यर्थः । कार्यकाले तु तत्तद्विधिप्रदेश

तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यतेति । अत्रैकदेशस्थ इत्यनेन तत्र तत्र तत्तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति; यथा व्यवहर्तॄणां कार्यार्थमनेकदेशगमनेऽपि न तद्देशीयत्व-व्यवहारः, किन्त्वभिजनदेशीयत्वव्यवहार एव, तद्वत् । निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयै-वान्वय इति परिभाषासादृश्यात्परिभाषात्वेन व्यवहारः 'क्ङिति चे'त्यत्र भाष्ये । तत्रैकवाक्यता पर्युदासन्यायेन ।

---

इति । (तथा च यथोद्देशे परिभाषादेशे, कार्यकाले विधिदेशे, लक्ष्यसंस्कारको बोध इत्येतावन्मात्रं तयोर्भेद इति बोध्यम् ।) ननु विधिदेशे परिभाषाबुद्धौ परिभाषाया एकदेशस्थत्वानुपपत्तिरि-त्यत आह—एकदेशस्थ इत्यनेनेति । एकदेशस्थ इत्यस्य एकदेश उत्पन्न एवेत्यर्थः । तत्तद्देशस्थत्वमित्यस्य तत्तद्देशीयत्वमित्यर्थः । अतएव दृष्टान्ते न तु तद्देशीयत्वेत्येवोक्तम् । उत्पत्त्यधिकरणदे-शस्यैव परत्वादिव्यवहारप्रयोजकतया परिभाषाया विधिदेशस्थि-तिमात्रेण तत्त्वभावाच्च । कस्यचिद्व्याख्यानान्तरन्तु न युक्तम्, उक्तरीत्यैवोपपत्तौ क्लिष्टकल्पनाया अनौचित्यात्छक्रमर्यादयाऽ-लाभाच्चेत्यलम् ।

ननूक्तपक्षद्वयस्य संज्ञापरिभाषामात्रविषयकत्वेन 'क्ङिति चे'त्यत्र कार्यकालपक्षोपन्यासो भाष्यकृतां विरुध्येतेत्यत आह—निषेधवाक्यानामित्यादि । विध्युपकारकत्वमात्रेणारोपितं परिभा-षात्वं तत्राप्यस्तीति भावः । क्ङितीत्यौपश्लेषिकसप्तमीत्याद् भिन्न-मित्यादौ दकारेण व्यवधानेऽपि गुणनिषेधोपपत्तये भाष्यकृतोऽयं यत्नः । पर्युदासन्यायेनेति । 'क्ङिति चे'त्यत्रानुवृत्तस्य नञो भेदार्थ-कत्वेन क्ङितः स्वप्रतियोगिकत्वसम्बन्धेन भेदे तस्य च स्वरूप-

प्रसज्यप्रतिषेधेऽपि तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहारः। संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः किन्तु

---

सम्बन्धेन सार्वधातुकार्द्धधातुकपदार्थेऽन्वयः। क्ङित्प्रतियोगिकभेदविशिष्टसार्वधातुकार्द्धधातुकयोः परयोरित्यर्थ इति भावः। तथा च निरुक्तरेकवाक्यतोपपद्यते। पर्युदासन्यायेनेत्यस्य नञो भेदरूपपर्युदासार्थत्वमिति युक्त्येत्यर्थः।

ननु घटे न द्रव्ये इत्यादिवाक्याद् घटभिन्ने द्रव्य इत्यर्थाप्रतीतेरसमस्तनञा भेदबोधने प्रथमान्तप्रतियोग्यनुयोगिवाचकपदसमभिव्याहारस्य कारणताया वक्तव्यतया प्रकृते प्रतियोग्यनुयोगिवाचकपदयोस्सप्तम्यन्तत्वेन भेदबोधकत्वं नञो न सम्भवतीत्याह—प्रसज्यप्रतिषेधेऽपीति। क्ङिति परे इको गुणो न भवतीति पृथगेव वाक्यार्थबोधः। 'पुगन्तलघूपधस्य च' इत्यस्य समीपे प्रसज्यप्रतिषेधे यद्यपि वाक्यार्थद्वये गौरवं, तथापि पर्युदासस्योक्तयुक्त्याऽसम्भवदुक्तिकत्वेनागत्या गौरवं स्वीकार्यमिति भावः। न च भिन्नमित्यादौ दकारेण व्यवधानात् कथं निषेध इति वाच्यम्, कार्यकालपक्षे प्रतिनिषेध्यशास्त्रं 'क्ङिति च' इत्यस्य भिन्नतया 'पुगन्तलघूपधस्य च' इत्यत्रोपस्थितस्य तस्य सामर्थ्यादेकवर्णव्यवधानेऽपि प्रवृत्तिस्वीकारेणादोषात्। न त्वेकवाक्यता। एतदेवाभिप्रेत्याह—तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहार इति। वास्तविकैकवाक्यता नास्ति किन्तु तद्देशे वाक्यार्थबोधे नैकवाक्यत्वमारोपितमिति तद्भावः।

संज्ञाशास्त्रस्य तु कार्यकालपक्षेत्यादि। ननु इदन्तावदयुक्तं, पृथग्वाक्यार्थबोधाभावे तद्वाक्ये शक्तिग्राहकत्वस्याज्ञानाद्विधिशास्त्रेण तदाकर्षणासम्भवात्तद्देशेऽपि वाक्यार्थबोधासम्भवात्; न च वाक्यार्थबोध इत्यनेन लक्ष्यधर्मिकसाधुत्वप्रकारको बोधो गृह्यते

स न संज्ञाशास्त्रस्य कार्यकालपक्षे पृथगित्यर्थ इति वाच्यम्, तथा सति तत्पक्षे परिभाषाया अपि पृथक् तादृशबोधाजनकत्वेन संज्ञाशास्त्रस्येति विशिष्योक्तेरसङ्गत्यापत्तेः, यथोद्देशपक्षेऽपि संज्ञाशास्त्रस्य तादृशबोधाजनकत्वेन कार्यकालपक्षं प्रति विशिष्योक्तेरसंगत्यापत्तेश्चेति चेत्-मैवम्। वाक्यार्थबोध इत्यनेन लक्ष्यसंस्कारक एव वाक्यार्थबोधो गृह्यते; लक्ष्यसंस्कारकश्च साधुत्वप्रकारकः, साधुत्वप्रकारकबोधाधिकरणत्वे सति तदुपयोगी चेत्युभयविधः। संज्ञाशास्त्रस्य तु न पृथक् तादृशो वाक्यार्थबोधः। कदापीति शेषः। पृथगित्यस्य स्वदेश इत्यर्थः। कार्यकालपक्षे इत्यस्य प्रदेशवाक्येन सहैवेत्यत्रान्वयः। तथा च कार्यकालपक्षे प्रदेशवाक्येन सहैव प्रदेशदेश एव तादृशो वाक्यार्थबोध इत्यर्थः। तथा च परिभाषाया यथोद्देशे स्वदेशे तथा बोधात् संज्ञेति विशेषोक्तिरुपपन्ना। 'वृद्धिरादैजि'त्यादेर्भपदसंज्ञायाश्च कार्यकालपक्षे यथोद्देशपक्षे वा स्वदेशे शक्तिग्रहात्मकबोधेऽपि लक्ष्यसंस्कारको न सः। कार्यकालपक्षे प्रदेशदेशे तथा बोधेऽपि न स बोधः पृथग्बोध इति सर्वमवदातम्। अत्र बीजन्तु—यथा परिभाषाणां स्वोद्देश्यज्ञानाय विधिशास्त्रस्यापेक्षणात्ताभिस्तेषामाकर्षणं तथा संज्ञाशास्त्रस्य न; सङ्केतकाले सङ्केतितपदेन व्यवहर्त्तुरनपेक्षणात् न तेन तस्याकर्षणमिति तस्मिन् शक्तिग्रहे अपेक्षाबुद्धौ यथोद्देशः, उपेक्षाबुद्धौ कार्यकालमिति बोध्यम्। परत्वादिव्यवस्था चेत्थं त्रिविधं—तद्देशत्वप्रयोजकं पाणिन्युच्चारणाधिकरणत्वमेकं, लक्ष्यसंस्कारोपयोगिबोधाधिकरणत्वं द्वितीयं, पाणिन्युच्चारणाधिकरणत्वविशिष्टलक्ष्यसंस्कारकबोधाधिकरणत्वं तृतीयम्। तत्रोत्तरोत्तरं बलवत्। परिभाषायाः स्वदेशे तृतीयप्रयोजकस्य सत्त्वात्स एव देशः, वृद्ध्यादिसंज्ञाया विधिदेशे द्वितीयप्रयोजकस्य सत्त्वात् स एव देशः, भपदसंज्ञाया अग्रिमप्रयोजकस्य कुत्राप्यसम्भवात् स्वदेशे प्रथमप्रयोजकस्य सत्त्वात्स एव देश इति। 'अणोऽप्रगृह्यस्येत्येतदि'त्यादि 'अयादिभ्यः परेचे'त्यादि

'अष्टाध्यायीपाठकृते'त्यादि 'यथोद्देशपक्ष एवे'ति 'तत्रत्वपरत्वेनैवे'ति च सर्वं सुव्यवस्थितमिति परे।

तत्त्वविदस्तु—कार्यकालपक्षे संज्ञाशास्त्राणां स्वदेशे बोध एव न। संज्ञात्वग्रहस्तु 'वृद्धिरादैजि'त्यादौ प्रथमान्तपदद्वयसमभिव्याहारादनुमित्यात्मकः। अतएव वृद्धिसंज्ञासूत्रे भाष्ये संज्ञाधिकारप्रत्याख्यानावसरे समानविभक्तिकत्वेन संज्ञासंज्ञिभावज्ञानमुपपादितम्। तथा च यथाश्रुतार्थकमेव तत्। द्विविधमेव तद्देशत्वप्रयोजकम्—शाब्दबोधाधिकरणत्वविशिष्टोच्चारणाधिकरणत्वं, तदसम्भवे शाब्दबोधाधिकरणत्वम्। परिभाषाणां विशिष्टाधिकरणत्वं स्वदेशस्यैवेति तस्यैव तद्देशत्वम्। भपदसंज्ञानां स्वदेशस्यैव विशिष्टाधिकरणत्वेन तद्देशत्वम्। प्रगृह्यसंज्ञादीनाञ्च कार्यकालपक्षे स्वदेशे बोधाभावेन विधिदेशे बोधात्तद्देशत्वमेव, यथोद्देशे च स्वदेशत्वमित्याहुः।

शास्त्रिचरणास्तु—न कार्यकालपक्षो न वा यथोद्देशपक्षः, किन्तु परिभाषाणां संज्ञानाञ्चोच्चारणाधिकरणदेश एव परत्वादिनियामकः। परिभाषा द्विविधास्ति—कयाचित् शास्त्रत्वं क्रियते यथा 'तस्मिन्निती'त्यादि। तत्परिभाषाप्रवृत्तिं विना 'इको यणची'त्यादीनामनाहार्याप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधजनकस्वरूपशास्त्रत्वस्यैवासिद्धिरिति तादृशपरिभाषादृष्ट्या त्रिपादीशास्त्राणां नासिद्धत्वं, शास्त्रस्यैव 'पूर्वत्रासिद्धमि'त्यनेनासिद्धत्वविधानात्। कस्याश्चिदुद्देश्यतावच्छेदकं शास्त्रत्वं यथा 'असिद्धम्बहिरङ्गमन्तरङ्ग' इत्यस्याः। तत्प्रवृत्तेः प्रागेव शास्त्रत्वस्य सत्त्वात्तद्दृष्ट्या त्रिपाद्या असिद्धत्वेन न सा त्रिपाद्यां प्रवर्त्तते। संज्ञादृष्ट्या संज्ञाघटितशास्त्राणामसिद्धत्वेऽपि न क्षतिः; तत्र जातशक्तिग्रहेणैव व्यवहारसिद्धेः, तत्प्रवृत्तिं विना तेषां शास्त्रत्वाभावाच्च। 'अदसो मादि'त्येतत्प्रति न मुत्वस्यासिद्धत्वं, सूत्रस्यैव वैयर्थ्यापत्तेरित्यमू इत्यत्र नानुनासिकत्वमित्याहुः।

प्रदेशवाक्येन सहैव । अतएव 'अणोऽप्रगृह्यस्ये'त्येतदेकवाक्यतापन्नमदसो मादि'त्येतत्प्रति न मुत्वाद्यसिद्धम्; असिद्धत्वस्य कार्यार्थतया कार्यज्ञानोत्तरमेव प्रवृत्तिः, कार्यज्ञानं च प्रदेशदेश एवेति तद्देशस्थस्यासिद्धत्वात्पूर्वग्रहणेनाग्रहणात् । एवं तद्बोधोत्तरमेव विरोधप्रतिसन्धानं चेति तत्रत्यपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजम् । अतएव कार्यकालपक्षेऽयादिभ्यः परैव प्रगृह्यसंज्ञेति 'अदसो मादि'तिसूत्रे भाष्ये उक्तम् । आकडाराधिकारस्थभपदसंज्ञाविषये तु यथोद्देशपक्ष एवेति तत्रत्यपरत्वे-

---

अतएवेति—'अदसो मादि'त्यस्य प्रदेशदेशत्वादेवेत्यर्थः । तद्देशस्थस्येति—'अणोऽप्रगृह्यस्ये'त्येतद्देशस्थस्यादसो मादित्यस्येत्यर्थः । असिद्धत्वादिति—मुत्वशास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धमित्येतत्प्रति अणोऽप्रगृह्यस्येत्येकवाक्यतापन्नपूर्वत्रासिद्धमित्यनेनासिद्धत्वादित्यर्थः । पूर्वग्रहणेनेति—मुत्वशास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धमित्येतद्घटकपूर्वग्रहणेनेत्यर्थः । एवं तद्बोधोत्तरमेवेति—विधिदेशे संज्ञासूत्रबोधोत्तरमेवेत्यर्थः । परैवेति—प्रगृह्यसंज्ञायाः 'प्लुतः प्रगृह्या' इत्येतद्देशस्थत्वादिति भावः । भपदसंज्ञाविषयेत्विति । अतएव राज्ञः इत्यादौ नलोपो न । कार्यकालत्वे तु भसंज्ञाशास्त्रस्याल्लोपो न इत्येतद्देशस्थत्वेन नलोपैकवाक्यतापन्नपदसंज्ञायास्त्रिपादीस्थत्वेन भसंज्ञाद्यशास्त्रयाऽसिद्धत्वेन पूर्वं भसंज्ञायामल्लोपे कृते पदत्वे नलोपापत्तिः, तत्पक्षे आकडारीयत्वाभावेन निरवकाशेनापि भत्वेन कृत्यसंज्ञया कृत्संज्ञाया इव पदसंज्ञायाः समावेशसम्भवात् । दण्डिना गोभ्यंत्यादौ भविष्यति किञ्चिदनेन प्रयोजनमित्यभिसन्धिमात्रेण प्राप्तमत्वेन पदत्वस्य बाधेन नलोपप्रकृतिभावयोरप्रवृत्तिरपि यथोद्देशत्वे सिद्धा । कार्यकालत्वे तु

नैव बाध्यबाधकभावः। पदादिसंज्ञानां तत्र ज्ञातशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारः। अतएव 'पूर्वत्रासिद्धमि'ति सूत्रे परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमाशङ्क्य कार्यकालपक्षेण समाहितमित्याहुः। यथोद्देशपक्षः प्रगृह्यसंज्ञाप्रकरणे भाष्ये ॥२॥

कार्यकालमित्यस्य च कार्येण काल्यते स्वसन्निधि प्राप्यत इत्यर्थः। कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत्। अतएव 'पूर्वत्रासिद्धमि'तिसूत्रे

---

भत्वप्रयुक्तकार्याभावेन भत्वाप्राप्त्या पदत्वेन तयोरापत्तिर्दुर्वारा। न चैकदेशविकृतन्यायावतरणे पदसंज्ञायां कार्यकालत्वोक्त्या ततो विरोध इति वाच्यम्; भसंज्ञासाहचर्येण परनिमित्तकपदसंज्ञाया एवात्र विवक्षितत्वात्, यदा कार्यं तदा संज्ञा संज्ञाशास्त्रस्य विधिदेशे बोधजनकत्वञ्चेत्यंशद्वयात्मककार्यकालपक्षचरमांशस्यैव एवकारेण व्यावर्त्तनाच्च, प्राचीनमतेनावतरणस्य सत्त्वाच्च। 'कार्यकालं संज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति यचि भमिति' ष्यङः संप्रसारणमितिसूत्रस्थभाष्यविरोधस्तु न, तस्यैकदेश्युक्तत्वादिति स्पष्टं शब्देन्दुशेखरे। अतएवेति—संज्ञाशास्त्रजबोधे विधिशास्त्रज्ञानानपेक्षणेन स्वदेशस्थशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारादेवेत्यर्थः।

यथोद्देशपक्षः प्रगृह्यसंज्ञेति। आगच्छतमग्नी इत्यादौ प्लुतस्यासिद्धत्वात्प्रगृह्यत्वे कृते ततः प्लुतेजाते तस्यासिद्धत्वात् पुनः प्रगृह्यत्वेन नानुनासिकः। कार्यकालत्वे तु प्रगृह्यसंज्ञाया 'अणोऽप्रगृह्यस्ये'त्येतद्देशस्थत्वेन तद्दृष्ट्या प्लुतस्यासिद्धत्वाभावेनाप्रगृह्यत्वेनानुनासिकत्वापत्तिर्दुर्वारेति तत्प्रकरणस्थभाष्याशयः ॥२॥

आद्यपरिभाषां व्याख्याय द्वितीयां व्याचष्टे—कार्यकालमि-

भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिमाशङ्क्य यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धमित्युक्त्वा तावताप्यसिद्धिरित्यभिप्रायके कथमिति प्रश्ने 'कार्यकालं संज्ञापरिभाषं' यत्र कार्यं तत्रोपस्थितं द्रष्टव्यमित्युक्तम् । न च कार्यकालपक्षे 'ङमो ह्रस्वादि'त्यादौ 'तस्मादित्युत्तरस्य' 'तस्मिन्निति निर्दिष्टे' इति परिभाषाद्वयोपस्थितौ परत्वा'दुभयनिर्देशे पञ्चमीनिर्देशो बलीयानि'ति 'तस्मिन्नि'तिसूत्रस्थभाष्यासङ्गतिः, उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासङ्गत्यापत्तेः, स्पष्टं चेद'मिको गुणे'त्यत्र कैयट इति वाच्यम्; विप्रतिषेधसूत्रेऽष्टाध्यायीपाठकृतपरत्वस्याश्रयणेनादोषात् । न हि कार्यकालपक्ष इत्येतावता तदपैति, पक्षद्वयेऽपि प्रदेशेषु स्वबुद्धिजननेनाविशेषात् । न हि

---

त्यस्य चेति । अतएवेति—कार्यकालमित्यस्य निरुक्तार्थकत्वादेवेत्यर्थः । अप्रवृत्तिमाशङ्क्येति । परिभाषा स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नितं यदेव शास्त्रं पश्यति तस्यैवाकर्षणं करिष्यति, न तु त्रिपादीस्थं शास्त्रं, तस्यासिद्धत्वेनादर्शनादिति भावः । यद्यपीदं तत्रासिद्धमिति—इदं त्रिपादीशास्त्रं तत्र परिभाषादृष्ट्याऽसिद्धम् । तत्त्विह सिद्धमिति—तत्तु परिभाषाशास्त्रं तु इह विधिशास्त्रदृष्ट्या सिद्धमित्यर्थः । परिभाषया स्वदेशे त्रिपादीशास्त्रस्याकर्षणाभावेऽपि त्रिपादीशास्त्रेण स्वदेशे परिभाषाया आकर्षणं स्यादेवादृष्टपिशाचन्यायेनेति भावः । तावताप्यसिद्धिरिति—एतावत्कालपर्यन्तं कार्यकालपक्षस्याश्रयणाभावेन विधिशास्त्रस्याकर्षणसामर्थ्यावबोधनादिति भावः । तत्पक्षाश्रयणेन समाधीयते—कार्यकालमित्यादि । विप्रतिषेधसूत्रे अष्टाध्यायीपाठकृतेति । न च तद्बोधोत्तरमेव

तत्पक्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं सम्भवति, नाप्यस्मदादिबुद्धिजननेन स्वदेशत्यागो भवति, अतएव भाष्ये एकदेशस्थस्यैव सर्वशास्त्राभिज्वालकत्वमुक्तम्। अतएव 'तस्मिन्नि'ति सूत्रे कैयटः सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वमिति। 'इको गुणे'तिसूत्रस्थकैयटस्तु चिन्त्य एव। अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थत्वेन क्वापि परत्वं न स्यात्। किञ्च 'क्ङिति चे'ति सूत्रस्थकैयटरीत्या विधिसूत्राणां यथोद्देशपक्षे परिभाषादेशे सन्निधानेन तेषां परत्वं व्याहन्येत, एवं च वृक्षेभ्य इत्यत्र 'सुपि चे'त्यतः परत्वा-'द्बहुवचने झल्येदि'त्येत्वमित्याद्युच्छिद्येतेत्यलम् ॥ ३ ॥

---

विरोधप्रतिसन्धानञ्चेति तत्रत्यपरत्वमेवेति पूर्वग्रन्थविरोध इति वाच्यम्, संज्ञाविषये तथा स्वीकारेण प्रकृते विरोधाभावात्। प्रगृह्यसंज्ञाविषये विधिदेशस्थं परत्वं, परिभाषाविषये पाठकृतं परत्वं गृह्यते। अत्रत्यं तत्त्वं पूर्वमुक्तमिति तत्रैव द्रष्टव्यम्।

नन्वियं शङ्कैव नोपपद्यते, एकदेशस्थ इत्यनेन तत्र तत्र तत्तद्बुद्धावपि तद्देशस्थत्वं वारयतीति पूर्वमुक्तत्वादिति चेत्—न, कैयटमते तत्सत्त्वात्, अतएव कैयट इत्युक्तमिति दिक् ॥ ३ ॥

पूर्वपरिभाषया 'अनेकान्ता अनुबन्धा' इत्यस्याः स्मृतिविषयत्वे सत्युपेक्षानर्हत्वरूपसङ्गतेर्बोधनाय परिभाषाया अनुमितिप्रयोजकवाक्यात्मकत्वेनानुमितिकारिणीभूतपक्षतावच्छेदकज्ञानाय प्रयुज्यमान 'इत्सञ्ज्ञका अनुबन्धा' इतिवाक्ये विवरणपदस्यापीत्संज्ञका इत्यस्य पूर्वप्रयोगः। तथा सति उभयोः परिभाषयोः संज्ञोद्देश्यकत्वेन सादृश्यात्पूर्वपरिभाषानन्तरमुत्तरस्याः स्मरणम्। एतेन

इत्संज्ञका अनुबन्धाः तेष्ववयवानवयवत्वसन्देहे आह—

अनेकान्ता अनुबन्धा इति ॥ ४ ॥

---

विधिप्रमाणस्योद्देश्यत्वेनोद्देश्यस्य च 'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्' इत्यभियुक्तोक्त्या विवरणापेक्षया पूर्वप्रयोगस्यैवोचितत्वेन अनुबन्धा इत्यस्यैव प्रथमम्प्रयोग उचित इत्यपास्तम् ।

नन्वत्र घटः कलश इत्यत्रेव शब्दभेदेऽपि प्रवृत्तिनिमित्ताभेदादभेदबोधस्य उभयोः समानविभक्तिकनामत्वेन भेदान्वयबोधस्य चासम्भव इति चेत्-न, प्रकृतेऽनुबन्धपदस्यार्थपरत्वासम्भवेन शब्दपरत्वेन प्रवृत्तिनिमित्तभेदात् । न च तर्हि बाधादभेदबोधासम्भवः; शब्दार्थयोस्तादात्म्याङ्गीकारात, अनुबन्दपदस्यानुबन्धपदवाच्ये लक्षणाया अभ्युपगमाद्वा ।

प्राचीनमते साध्यसन्देहरूपपक्षताया अनुमितौ कारणत्वेन तान्दर्शयति—अवयवानवयवत्वसन्देह इति,सन्घटको नकारोऽवयवत्ववानवयवत्वाभाववान् वेति सन्देह इत्यर्थः। न चैकस्मिन्नपि निरूपकभेदेन अवयवत्वानवयवत्वयोर्दर्शनादविरोधेन तयोर्विरुद्धकोटिद्वयावगाहिज्ञानरूपसन्देहासम्भवः; न च बोधकैकनिरूपितयोस्तयोः सन्देहः, बोधकभेदेन तावताप्यविरोधात् ; स्वघटितघटकबोधकेति कथनेऽपि न निस्तारः, स्वं साध्यत्वेन विवक्षितो 'गुप्तिज्किद्भ्यस्सन्नि'त्यत्र नकारः, तद्धटिताष्टाध्यायी, तद्घटकयत्किञ्चिद्बोधकानवयवत्वस्य, गुप्तिजितिसूत्ररू-

---

१ अनुबन्धपदस्यानुबन्धपदवाच्ये लक्षणाया इति—एवं 'श्यालाः स्युः भ्रातरः पत्न्याः' इत्यमरकोशेऽपि श्यालपदस्य श्यालपदवाच्ये लक्षणादरः, तथा च पत्न्या भ्रातरः श्यालपदवाच्या इति बोधः ।

पबोधकावयवत्वस्य च नकारे सत्त्वेनाविरोधतादवस्थ्यात्; न वा स्वघटितपदघटकबोधकावयवत्वसन्देह इति नाष्टाध्यायीमादायाविरोधः तस्या अपदत्वादिति युक्तम्, तथापि 'द्वयसच्-दघ्नच्-मात्रच्' इत्यत्र दकारे स्वघटितं पदं समुदायरूपं, तद्धटकमात्रबोधकानवयवत्वस्य ताद्दशद्वयसबोधकावयवत्वस्य च दर्शनेनाविरोध एव; न वा समुदायरूपपदमादायाविरोधस्याभावाय पदे पदाघटितत्वमपि दीयते समुदायस्य पदत्वेऽपि पदाघटितत्वविरहादिति सम्यक्, सन्यत इत्यत्र सकारे स्वघटितं पदाघटितं पदं सनीति तद्धटकेकाररूपबोधकानवयवत्वस्य ताद्दशबोधकावयवत्वस्य च सत्त्वेन तावतापि विरोधानुपपादनात् इति वाच्यम्, स्वघटितपदाघटितविभक्त्यघटितपदघटकबोधकावयवत्व-तदनवयवत्वयोर्विरुद्धयोः सन्देहस्य विवक्षितत्वात् । न च नकारादावनुबन्धे निरुक्तसन्देहप्रयोजकस्य साधारणस्यासाधारणस्य वा धर्मस्याभाव इति वाच्यम्,सनिरूपकपदार्थसन्देहस्य निरूपकसन्देहाधीनतया बोधकसन्देहस्यैव प्रकृते प्रयोजकत्वात् । स च न सनशब्दो बोधकः स शब्दो वेत्याकारकः, सन्देहस्यैकधर्मिकत्वनियमात्; अपि तु बोधकता सपर्याप्ता सन्पर्याप्ता वेत्याकारकः । अत्रापि प्रयोजकजिज्ञासायां श्रूयताम्—बोधकतायां स्वनिरूपितबोध्यतापर्याप्त्यधिकरणपर्याप्तानुपूर्वीमत्पर्याप्तत्वं भवति, यथा जरोनिष्ठायां तस्यां स्वं बोधकता, तन्निरूपितबोध्यतापर्याप्त्यधिकरणं लक्ष्यस्थं जरसिति, तत्पर्याप्तानुपूर्वी

१ साधारणस्यासाधारणस्य वा धर्मस्याभाव इति—वस्तुतस्तु यथा वह्निसमानाधिकरणद्रव्यभावसमानाधिकरणधूमवान् पर्वत इति भ्रमात्मकनिश्चयस्य सन्देहजनकत्वं तथावयवत्वावयवत्वाभावसमानाधिकरणविधेयवृत्तिकादाचित्कदर्शनाभाववान् अनुबन्ध इति ज्ञानस्य सन्देहजनकत्वसम्भवात् शिष्यबुद्धिवैशद्यार्थमेव वक्ष्यमाणप्रक्रियेति भावः ।

जरस्त्वरूपा, तद्वान् सूत्रे जरस्, तत्पर्याप्तत्वमस्ति बोधकतायां, तथा प्रकृते चेत् सपर्याप्ता स्यात्; स्वाश्रयप्रकृतिकविभक्तिप्रकृतित्वपर्याप्त्यधिकरणपर्याप्तत्वमपि दृष्टं, यथा तत्रैव जरोनिष्ठबोधकतायां, तथा प्रकृते चेत् सन्पर्याप्ता स्यादिति सन्देह उपपद्यते। तद्दर्शनश्च बोधकावयवत्वसन्देहः स्पष्ट एव, विधेयेऽदर्शनाद्धेतोरनवयवत्वस्य विभक्तिप्रकृतिघटकत्वादवयवत्वस्य च। 'हलन्त्यमि'त्यत्रत्यावयवबोधकान्त्यपदेन ग्रहणादवयवत्वस्य, उपदेशग्रहणाभावे 'अभ्र आँ अटित' इत्यत्र सामीप्यमूलकमारोपितमवयवत्वमादाय आदित्वप्रयुक्तादितश्चेतीड्निषेधापत्तिकथनपरभाष्यादनवयवत्वस्य च कोटेरुदयेन सन्देहोपपत्तेश्च।

नन्वेकधर्मिकविरुद्धकोटिद्वयावगाहिज्ञानस्यैव सन्देहपदार्थत्वेन तन्महिम्नैवैककोट्युपादानेऽपि कोट्यन्तरस्याक्षेपादेव लाभेनावयवानवयवत्वयोरुभयोरुपादानं व्यर्थमिति चेत्, अत्रोच्यते—स्पष्टार्थमेवोभयोपादानम्। न ह्यस्याक्षेपेण लब्धुं योग्यस्य स्पष्टतया बोधनाय शब्दो न प्रयुज्यत इति नियमः, द्वारमित्येतावदुक्त्वाक्षेपयोग्यस्यापि पिधेहीत्यस्य स्पष्टतया बोधनाय कदाचित् द्वारम्पिधेहीत्यस्यापि प्रयोगदर्शनात्। किञ्चानवयवत्वावयवत्वोभयकोटिसाध्यकानुमितिद्वयस्य वक्ष्यमाणत्वेनैकैकानुमितिसाध्यमात्रस्यैवोपादानम्; साध्याभावस्यात्राप्याक्षेपेणैव लाभः। सन्देहपदं सन्देहत्वजात्यवच्छिन्नपरम्; तथा चानुमितिद्वयस्यावयवत्वसन्देहानवयवत्वसन्देहरूपपक्षताद्वयमुपन्यस्तमिति बोध्यम्।

ननु एकस्यैव साध्यस्योक्तायप्यनुमितिद्वयस्य पक्षतासम्भवः; तथाहि अवयवत्वसन्देह इत्येतावन्मात्रोक्तौ तद्विरोध्यनवयवत्वकोटेराक्षेपेणावयवत्वानवयवत्वयोः सन्देह इत्युक्तं भवति, तत्रावयवत्वस्य साध्यत्वे साध्याभावत्वमनवयवत्वस्य, अनवयवत्वस्य साध्यत्वे साध्याभावत्वमवयवत्वस्य, अनवयवत्वाभावस्यावयवत्वरूपत्वात साध्यप्रकारकत्वे सति साध्याभा-

वप्रकारकसन्देहस्यैव पक्षतात्वात् इति चेत्-न, अवयवत्वस्य अवयवत्वाभावाभावरूपत्वेऽप्यवयवत्वत्वस्यानवयवत्वाभावत्वतो भिन्नतया अवयवत्वत्वावच्छिन्नप्रकारतायाः साध्याभावत्वाव-च्छिन्नत्वाभावेन साध्यतावच्छेदकधर्मावच्छिन्नप्रकारताकत्वे सति साध्याभावत्वावच्छिन्नप्रकारताकसन्देहस्यैव पक्षतात्वाभ्युपगमेन निरुक्तसन्देहस्यानवयवत्वसाध्यकानुमितिम्प्रति अपक्षतात्वात् ।

अनेकान्ताः—स्वघटितं यत्पदाघटितं विभक्त्यघटितं पदं तद्घटकबोधकानवयवा इत्यर्थः । सन्नित्यादौ नकारस्यानवयव-त्वमात्रसाधने यस्य कस्यचिदनवयवत्वस्य सिद्धत्वेन सिद्धसाध-नम् । अतएव बोधकानवयवत्वमपि न साध्यम्, यं कञ्चन बोध-

---

१ साध्यत्वेत्यादि—न चैवं साध्यादिविशेष्यकस्य पक्षे साध्यं न वेति सन्देहस्य पक्षतात्वानुपपत्तिरिति वाच्यं, प्रकारतास्थाने विषयतायाः प्रक्षेपात् ; विषयता च प्रकारविशेष्यसाधारणीति न दोषः । न च तथापि साध्य पक्षनिष्ठा-भावप्रतियोगि न वेति सन्देहस्य पक्षतात्वानुपपत्तिः साध्यपक्षविषयतयोः साक्षा-न्निरूप्यनिरूपकभावविरहात् इति वाच्यं, पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरू-पितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्च-यत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतात्वसन्देहस्य पक्षतात्वाभ्युपगमात् । न चैवम् अवयवानवयवत्वयोः कोट्योरुपादानं व्यर्थमेवेति वाच्यम्, पर्वते वह्निव्याप्यसाधने वह्निमान्न वेति संशयेऽतिव्याप्तिवारणाय उक्तलक्षणघटकप्रति-बध्यताया साध्याभावत्वावच्छिन्नप्रकारित्व-साध्यविशेष्यकत्वान्यतरावच्छिन्नत्वस्य प्रवेशावश्यकत्वेन कोटिद्वयोपादानस्यावश्यकत्वात् ।

केचित् अवयवत्वसन्देह इत्युक्तौ अवयवत्ववान् अवयवत्वाभावव्याप्यवान् वा इत्यपि सन्देहं प्रतीयात्, एकधर्मिकविरुद्धकोटिद्वयावगाहिज्ञानस्यैव सन्देहपदार्थत्वात्, तथा चानुमितिद्वयकारणपक्षतालाभो न भवेदित्याहुः; तदसत्, विरुद्धभावाभावप्रकारकज्ञानस्यैव सन्देहत्वात् । तथाचोक्तं विश्वनाथ पञ्चाननेन 'स संशयो मतिर्या स्यादेकत्राभावभावयोः' इति ।

कप्रत्ययानवयवत्वस्यापि सिद्धत्वात्। नापि स्वघटितघटकबोधकानवयवत्वं तथा, स्वघटिताष्टाध्यायीघटकगुप्तिजित्यादिसूत्ररूपबोधकावयवत्वसत्त्वेन बाधात्। तदर्थं स्वघटितपदघटकबोधकानवयवत्वसाधनेऽपि 'द्वयसच्-दघ्नच्-मात्रच्' इति समुदायरूपं स्वघटितं पदम्, तद्घटकं बोधकं व्यपदेशिवद्भावेन तदेव, तदवयवत्वस्यैव सत्त्वेन चकाररूपे अनुबन्धे बाधस्य तादवस्थ्यात्। पदे पदाघटितत्वस्य निवेशेन प्रकृते समुदायस्य पदघटितत्वेन बाधपरिहारेऽपि 'सन्यत' इत्यादौ नकारे स्वघटितम्पदाघटितं पदं सनोति तद्घटकबोधक इकारस्तदनवयवत्वस्य सत्त्वेन सिद्धसाधनम्। व्यपदेशिवद्भावेन तद्घटकं बोधकं सनोति तदवयवत्वस्यैव सत्त्वेन बाधश्च। अतएव विभक्त्यघटितत्वेनापि पदं विशेषयितव्यमिति सर्वमुपपन्नम्।

ननु 'आद्गुण' इत्यादौ गुणघटकगकारादौ व्यभिचारः, तत्र बोध्यावयवत्वेनोपलब्धिविषयत्वाभावरूपहेतोः सत्त्वेन प्रकृतसाध्यस्याभावात्, स्व साध्यत्वेन विवक्षितो गकारस्तद्घटितं पदाघटितं विभक्त्यघटितं पदं गुण इति तद्घटको बोधको गुणशब्दस्तदवयवत्वस्यैव सत्त्वात् साध्याभाववद्वृत्तित्वरूपव्याप्यत्वस्याभावादनुमित्यनापत्तिः; न च स्वघटितपदाघटितविभक्त्यघटितपदघटकवृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकपदानवयवत्वस्यैव साध्यत्वेन विवक्षितत्वात् प्रकृते तादृशं पदं गुण इति तद्घटकवृत्तिरानुपूर्वी गुणत्वरूपा तदवच्छिन्नविषयताप्रयोजकत्वस्य गुणशब्देऽभावेन तादृशप्रयोजकपदानवयवत्वरूपसाध्यस्य सत्त्वेन न व्यभिचार इति वाच्यम्, अणादिपदेऽत्वावच्छिन्नविषयताप्रयोजकत्वस्यैव सत्त्वेन तादृशानुपूर्व्यवच्छिन्नविषयताप्रयोजकानवयवत्वस्य साधनेऽपि अत्वावच्छिन्नविषयताप्रयोजकपदाघटकानवयवत्वसन्देहस्य णकारे वानुमित्या अन्यतरकोटिनिश्चयाभावेन तादृशव्याप्यानुपूर्वीं विहाय आयणप्रत्ययविषयतावच्छेदकासंस्यैव

प्रवेशनीयतया तादृशपदघटकगुणवृत्तिश्रावणप्रत्यक्षविषयताव-च्छेदकधर्मोऽत्वं तदवच्छिन्नविषयताप्रयोजको गुणशब्दः तदवय-वत्वस्यैव सत्वात्; इति चेत्—

अत्रोच्यते । इदन्तावद्व्यभिचारवादी प्रष्टव्यः—गुणशब्दश-क्यतावच्छेदकं किं? न तावदत्वादि, शक्यतावच्छेदकभेदे शक्ति-भेदस्य हर्यादिपद इवात्राप्यापत्त्या सकृदुच्चरितन्यायेनादृगुण इत्यादौ त्रयाणां बोधानापत्तेः । नापि अन्यतमत्वन्तथा; प्रकृते-ऽन्यतमत्वस्याकारप्रतियोगिकभेदविशिष्टेकारप्रतियोगिकभेदविशि-ष्टोकारप्रतियोगिकभेदविशिष्टभिन्नत्वरूपतया विनिगमनाविरहेण रूपान्तरस्यापि सम्भवेन गुर्वनेकधर्मावच्छिन्ने नानाशक्त्यापत्ते-र्दुर्वारत्वात्, प्रातिपदिकपदेऽन्यतमत्वस्यासर्वज्ञदुर्बोधतया शक्ति-ग्रहस्यैवाभावापत्तेश्च । नापि पाणिनिसङ्केतसम्बन्धेन गुणपदत्वं तत्, गुणादिपदे पाणिनिसंङ्केतभिन्नशक्तेरभावेन कीदृशशक्तिवि-षयतारूपशक्यतावच्छेदकतावच्छेदकः पाणिनिसङ्केतः स्यात् ? अथ लाघवानुरोधेनातिरिक्तशक्तिकल्पनमिति चेत्—तथापि गुण-पदावच्छिन्नविशेष्यतायाः परम्परया गुणपदनिष्ठावच्छेदकतायाः साक्षादवच्छेदिका गुणत्वरूपानुपूर्वी, तदवच्छिन्नविषयताप्रयोज-कपदावयवत्वस्यैव सत्त्वेन व्यभिचारो दुर्वार इति चेत्—न, स्वावच्छिन्नत्व-स्वावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वाभाव-वत्त्वैतदुभयसम्बन्धेन तादृशश्रावणप्रत्यक्षविषयतावच्छेदकधर्म-विशिष्टमुख्यविशेष्यताप्रयोजकानवयवत्वस्यैव साध्यतया व्यभि-चाराभावात् । मुख्यत्वनिवेशादवच्छेदकतारव्यविषयतामादाय द्वितीयसम्बन्धनिवेशादाद्यसम्बन्धमादाय वा न दोषः ।

नन्वेवमपि 'स्याम्नोऽकार' इत्यत्र तादृशश्रावणप्रत्यक्षविषय-तावच्छेदकमत्व, तदवच्छिन्नविषयताप्रयोजकमकार इति पद, तदवयवत्वस्यैव फकारे सत्त्वेन साध्याभावसहितहेतोः सत्त्वेन तत्र फकारे व्यभिचार एवेति चेत्—सत्यम्; स्वघटितप-

दाघटितविभक्त्यघटितपदघटकयावद्वर्णघटितसमुदायपर्याप्तत्वेन धर्मस्य विशेषणात्। तादृशश्चाकारत्वन्नत्वत्वं, तदवच्छिन्नविषयताप्रयोजकन्नाकारपदमिति तादृशप्रयोजकानवयवत्वस्य सत्त्वेनादोषात्। ननु सन् इत्यत्र स्वं नकारः, तद्घटितं पदाघटितं विभक्त्यघटितं पदं सन्निति, तद्घटकयावद्वर्णघटितसमुदायः सन्निति, तत्पर्याप्तं श्रावणप्रत्यक्षविषयतावच्छेदकं सन्त्वं, तदवच्छिन्नविषयताप्रयोजकं न सन्पदमपि तु सत्वावच्छिन्नविषयताप्रयोजकम् इति सन्त्वावच्छिन्नविषयताप्रयोजकपदानवयवत्वस्यानुमित्या निर्णयेऽपि सत्त्वावच्छिन्नविषयताप्रयोजकावयवो न वेतिसन्देहस्यानुच्छेदप्रसङ्ग इति चेत्—न; साध्यघटकसमुदायस्यानुबन्धाघटितस्यैव विवक्षितत्वेन तादृशसमुदायः सेति, तत्पर्याप्तसत्वावच्छिन्नविषयताप्रयोजकानवयवत्वस्य साधनात् सन्देहप्रसङ्गाभावात्। अथ 'स्वं रूप'सूत्रविषये बोधकत्वेन विवक्षितवृत्तिधर्मावच्छिन्नस्यैव तेन संज्ञित्वबोधनात्, बोधकस्य संदेहे बोध्यतावच्छेदकस्याप्यनिर्णयेन तादृशसत्वरूपधर्मावच्छिन्नविषयताप्रयोजकपदाप्रसिद्धया साध्याप्रसिद्धिरिति चेत्-न, तथाविधसमुदायपर्याप्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्माश्रयनिष्ठविषयताप्रयोजकानवयवत्वस्यैव साध्यशरीरत्वात्, तस्य च प्रसिद्धत्वादित्यास्ताम्।

केचित्तु गुणादौ व्यभिचारवारणाय साध्यघटकपदे संज्ञातिरिक्तत्वं निवेशनीयं, विभक्तिस्थाने प्रत्ययस्य निवेशादकारघटककाराद्यावपि न व्यभिचार इति वदन्ति।

ननु बोध्यावयवत्वेनोपलब्धिविषयत्वाभावस्य हेतोः पक्षेऽसिद्धिः सन्नित्यादेः शब्देत्यादिबोधकबोध्यतया तदवयवत्वेनोपलब्धिविषयत्वस्यैव नकारे सत्त्वादिति चेत्—न, स्वघटितपदघटकबोधकबोध्यत्वस्यैव हेतुघटकत्वात्। ननूपस्थितेन, सर्वभेदे स्वघटकसकारे साध्याभाववति हेतोस्सद्भावेन व्यभिचारः; अभेदे

'गुप्तिजि'तिसूत्रे सन्शब्दोऽस्तीत्येतद्वाक्यघटकसन्शब्दस्यापि सूत्रघटकसन्शब्दघटकनकारघटितत्वेन तद्घटकः स एव सन्शब्दः, तद्बोध्यः सूत्रघटकः सन्, तदवयवत्वस्यैव पक्षे सत्त्वेनासिद्धिः; मनिन्घटकानुबन्धनकारे बोध्यावयवत्वोपलम्भेन भागासिद्धिश्च; इति चेत्—मैवम्। उच्चारणभेदेन वर्णभेद एव, हेतुश्च स्वघटितघटकबोध्यतावच्छेदकधर्माभाव एव, ततश्च बोध्यतावच्छेदकसकारत्वस्य सन्घटकसकारे सत्त्वेन साध्यस्य हेतोश्चासत्त्वान्न व्यभिचारः। सूत्रघटकनकाराद्भिन्नत्वस्यैव सन्शब्दोऽस्तीत्येतद्वाक्यघटकसनघटकनकारस्येति तादृशसन्शब्दस्य स्वघटितत्वाभावान्नासिद्धिशङ्कापि।

मनिन्घटकनकारे भागासिद्धिरवशिष्यते। तत्रापि विचार्य्यताम्। स्वघटितघटकबोध्यतावच्छेदकतापर्याप्त्यधिकरणधर्माभावो हेतुः, स च धर्मो मन्त्वरूपः, तदभावोऽस्त्येव नकारे, इति न साऽपि। न च, पर्याप्तिनिवेशे सन्घटकसकारे साध्याभाववति हेतोर्बोध्यतावच्छेदकतापर्याप्त्यधिकरणसत्त्वाभावस्य सत्वेन व्यभिचारो दुर्वार इति वाच्यम्, विनिगमनाविरहेण सकारोत्तरत्वे सत्यत्नम अकाराव्यवहितपूर्वत्नविशिष्टसकारत्वम् इत्युभयरूपताया एव सत्वस्य वक्तव्यतयाऽकाराव्यवहितपूर्वसकारत्नरूपसत्वस्यैव सकारे सत्त्वेन व्यभिचाराभावात्, मन्त्वस्य चैकविधस्यापीकारोत्तरनकारेऽभावेन भागासिध्यभावाच्च। न चैवमपि कुग्घटककुकाररूपानुबन्धे बोध्यतावच्छेदककत्वस्यैव सत्वेन भागासिद्धिर्दुर्वारेति वाच्यम्, अन्यादृशहेतोरेव कल्पनीयत्वात्। तथाहि—स्वघटितघटकबोध्यतावच्छेदकधर्मवत्त्वं, स्वघटितघटकबोधकावयवत्वेन निश्चितोत्तरत्नविशिष्ट बोधकावयवत्वेनानिश्चितं यत्तदनुत्तरत्नम्, इत्युभयसम्बन्धावच्छिन्नप्रतियोगिताकस्नाभावो हेतुः। सनि स्वं नकारः, तद्घटितं सन्निति तद्घटकबोध्यतावच्छेदक सत्वं, तस्य स्वघटितघटकबोधकावय-

अनेकान्ता अनवयवा इत्यर्थः । यो ह्यवयवः स कदा-

---

वत्वेन निश्चितः स इति, तदुत्तरं बोधकावयवत्वेनानिश्चितो नकारः, तदनुत्तरत्वस्य च सशब्दे सत्त्वान्नोभयाभावरूपो हेतुः। तत्र नकारे चोत्तरसम्बन्धसत्त्वेऽप्याद्यसम्बन्धाभावेनोभयाभावः। मनिनो नकारे चोभयाभावप्रयुक्तोऽभावः । क्वचित् चोत्तरसम्बन्धाभावप्रयुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावः । मनिनः प्रथमनकारे व्यभिचारापत्त्या स्वघटितघटकानुत्तरत्वमात्रं न द्वितीयस्सम्बन्धः । न वा तद्वारको घटके बोधकावयवत्वेनानिश्चितत्वमात्रनिवेशो युक्तः। डुपचष्पाक इत्यत्र स्वघटितघटकबोधकावयवत्वेनानिश्चितो डुरूपानुबन्धः,तदुत्तरत्वेन पकारे तदनुत्तरत्वाभावप्रयुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावसत्त्वेन प्रसक्तव्यभिचारवारणायानिश्चितेऽप्युक्तनिवेश आवश्यकः । यदि चेदानीमुक्तरीत्या बोध्यतावच्छेदकस्यानिर्णय इत्युच्यते, तर्हि बोध्यपर्याप्तधर्मवत्त्वरूपस्सम्बन्धो बोध्य इति सर्वमुपपन्नम् ।

केचित्तु—भागासिद्धिवारणाय पक्षे कुक्ककारभिन्नत्वं देयम्, अयं ककारः स्वघटितघटकबोधकानवयवः, स्वघटितघटकबोधकानवयवत्वेन निश्चितोत्तरत्वात्, यन्नैवं तन्नैवम् इत्यनुमानान्तरेण ककारे सन्देहाभाव इति वदन्ति ।

स्वार्थपरार्थभेदेनानुमानं द्विविधम् । आद्ये न वाक्यापेक्षा, द्वितीयं तु वाक्यसापेक्षं, तस्य पञ्चावयवान् प्रतिज्ञाहेतूदाहरणोपनयनिगमाख्यान् केचिद्वदन्ति । प्रतिज्ञाहेतूदाहरणाख्यान् उदाहरणोपनयनिगमाख्यान् वा त्रीन् बहवः । अवशिष्टयोस्तेष्वेवान्तर्भाव इति तेषामाशयः ।

द्वितीयपक्षमवलम्ब्योच्यते—अनेकान्ता इत्यादि । अनुबन्धा अनेकान्ता इति प्रतिज्ञा । यो ह्यवयव इत्याद्युदाहरणम् ।

चित्त्रोपलभ्यत एव; अयं तु न तथा, तदर्थभूते विधेये कदा-प्यदर्शनात् । 'शिरिकदि'त्यादौ समीपेऽवयवत्वारोपेण समासो बोध्यः । 'वुञ्छणकठे'त्यादौ णित्त्वप्रयुक्तं कार्यं पूर्वस्यैवेत्यादि

---

तदर्थभूतात्यादि हेतुः । हेतुसाध्ययोः स्वरूपमुक्तम् । नन्वनुबन्ध-घटितघटकबोधकानवयवत्वमेव साध्यमस्तु; गुणादिशब्दघटकग-कारादौ व्यभिचारशङ्काया अपि तथा सति अप्रसङ्गात्, अन्वय-व्याप्तिलाभाच्चेति चेत्—न; अनुबन्धाघटितघटकत्वस्योपाधे-स्सत्त्वेन व्याप्तेर्विघातात, डमुड्घटकमकारे व्यभिचारस्य दुर्वा-रत्वात्, अनुबन्धत्वस्याप्रयोजकत्वाच्च । तस्मात् यत् स्वघटित-घटकबोधकानवयवत्वाभाववत् तत् स्वघटितघटकबोध्यानव-यवत्वाभाववदिति व्यतिरेकव्याप्तिरेव ग्रन्थकृतां तात्पर्यविषयी-भूता । नन्ववयवोपन्यासे हेत्वनन्तरमेवोदाहरणोपन्यासस्य दर्शनादुचितत्वाच्च प्रकृते हेतोः पूर्वमुदाहरणोपन्यसनमयुक्तमिति चेत्—मैवम्, प्रतिज्ञानन्तरं बोधकावयवत्वेनानुपलब्धेरित्यस्य प्रयोक्तुमभिमतत्वेऽपि प्रसिद्धत्वादप्रयोग इति कल्पनात् ।

तदुत्तरं व्यतिरेकव्याप्तिप्रदर्शनं—यो ह्यवयव इत्यादि । अन-वयवत्वाद्यभावस्यावयवत्वादिरूपत्वादवयवत्वोपन्यासः । अनु-मितेः प्रागवयवत्वेनानुपलब्धेर्हेतोरसिद्धत्वादनुमित्यन्तरेण तत्सि-द्धिमाह—अयन्तु न तथेति । अयमनुबन्धः । न तथा—बोध-कावयवत्वेनोपलब्धिविषयो नेति यावत् । अत्र हेतुमाह—तदर्थभूतेत्यादिना । अयं प्रथमसाध्यस्यापि हेतुस्सम्भवति व्या-प्यव्याप्यस्य सुतरां व्याप्यत्वादिति नानुपपन्नं किमपि । नन्वनु-बन्धशकारादीनामवयवत्वाभावे शिदित्यादि पदे समासानुप-पत्तिः, सामीप्यस्य षष्ठ्यर्थत्वाभावात्, अत आह—शित्किदित्या-

इत्येव न्याय्यम् शास्त्रे, तत्रोपलम्भादन्यत्रानुपलम्भाच्च ।

परिभाषात्रयाकरणलाघवेनेत्पदप्रयोज्यविषयतामात्रोपयोग्यवय-
वत्वमारोप्यत इत्युच्यते तदा लक्षणैव सम्यक् ।

ननु शक्यार्थबाधे लक्षणादरेणानवयवत्वे लक्षणा, अनवयव-
त्वञ्च बोध्यतावच्छेदकधर्माभावरूपहेतुनिर्णये, हेतुनिर्णयश्चे-
त्संज्ञालोपोत्तरम्, इत्संज्ञा च हल्पदबोध्यनिर्णये, तन्निर्णयश्चान-
वयवत्वे, इति चक्रकापत्तिरिति चेत्—सत्यम्, एतद्दूषणेनैवा-
वयवत्वपक्षस्यैव सिद्धान्तत्वाभ्युपगमात् ।

ननु उक्तयुक्त्या स्वघटितघटकबोध्यपर्याप्तश्रावणप्रत्यक्षविष-
यतावच्छेदकधर्माभावस्यैव हेतोरुक्तयावयवत्वानवयवत्वनिर्ण-
यात्प्राक् बोध्यतावच्छेदकस्यानिर्णयेऽपि बोध्यस्य पिपठिषतीत्या-
दिलक्ष्यदर्शनमात्रेण निर्णीतत्वेन तत्पर्याप्तधर्माभावस्य पक्षे नकारे
निर्णीतत्वेन न चक्रकापत्तिः; न चेत्संज्ञायाः प्रागनुबन्धत्वाभावेन
पक्षतावच्छेदकज्ञानाभावाच्चक्रकमिति वाच्यम्, अनुबन्धत्वयोग्य-
स्यापि पक्षत्वसम्भवात्; इति चेत्—सत्यम्, आनङ्बोध्ये नकारस्य
गुणबोध्येऽकारस्य सर्वत्र लोपात् कदाप्यदर्शनेन बोध्यपर्याप्तश्रावण-
प्रत्यक्षविषयतावच्छेदकाऽऽत्वगुणत्वादेर्बोधकावयवे नकारे अकारे
चाभावेन व्यभिचारादेव पक्षान्तरस्यादरणात् । तदाह—वस्तुत
एकान्ता इत्येव न्याय्यम् ।

शास्त्र इत्यादि । शास्त्र इति बोधक इत्यर्थः, तथा च
बोधकेऽवयवा इत्यर्थः, न तु बोध्य इति भावः । पूर्वकल्पे व्याव-
र्त्यालाभाद्बोधक इति नोक्तम् । तत्रेत्यस्य बोधक इत्यर्थः, तथाचा-
नुबन्धाः स्वघटितघटकबोधकावयवा बोधके उपलम्भादन्यत्रानु-
पलम्भाच्चेति फलति । ननु बोधकनिर्णयं विना कथं तत्रोपलम्भ-
निर्णय इति चेत्—न, साध्यनिर्णयं विनापि स्वघटितपदघटकत्व-

सम्बन्धेन बोधके उपलम्भनिर्णयसम्भवात्, सन्घटकस्य कस्यचिद्बोधकत्वमस्तीति निर्णयस्यानुमितिं विनापि सत्त्वात् ।

केनचित् नकारे पक्षे हेतोस्समन्वयप्रदर्शनायोक्तम्—नकारस्य समवायसम्बन्धेन सनि उपलब्धस्यान्यत्र तेन सम्बन्धेनानुपलभ्यमानत्वादिति; तदत्यन्तमसमञ्जसम्; बोधके उपलम्भस्यैव हेतुत्वेन सनि उपलम्भप्रदर्शनस्यानुपयोगात्, सनोऽवयवत्वस्य नकारे निर्णीतत्वाच्च । किञ्च नकारस्य समवायसम्बन्धेन आकाशे उपलम्भो न सन्शब्दे, अवयविन एव अवयवे समवायस्य सर्वसम्मतत्वात् । अतएव 'अभिपूर्व' इत्यत्राभीति सप्तमी साधिता आधारत्वारोपेण शेखरकृता ।

यदप्यग्रे तेनैव सन्शब्दे प्रकृतहेतुना बोधकत्वं प्रसाध्य बोधक उपलम्भमुपपाद्य तेन हेतुना बोधकावयवत्वं साधितं—तदपि तुच्छम, प्रथमानुमानेनैवाभिमतसाध्यसिद्ध्या द्वितीयानुमानस्यानुपयोगात् । यदपि शशशृङ्गे व्यभिचारवारणाय हेतावाद्यदलमित्युक्तं तेन, तदपि हेयम, असत्त्वादेव तत्र व्यभिचाराप्रसक्तेः । केचित्तु अन्यत्रेति हेत्वन्तरमित्याहुः । आकाशे व्यभिचारवारणायाद्यदलमित्यपरे ।

यो य एकजातीयसम्बन्धेन यत्रोपलब्धः सन् अन्यत्र नोपलभ्यते स तस्यावयव इति सामान्यव्याप्त्या प्रकृतेऽनुमितिर्न विशेषव्याप्त्येति बोध्यम् । ननु चक्र उत्पन्नो नष्टो घटश्चक्रादन्यत्रानुपलभ्यमन् संयोगेन चक्र उपलब्धोऽपि न चक्रावयव इति व्यभिचार इति चेन्—न, हेतौ योग्यत्वनिवेशेनादोषात् अन्यत्रोपलब्धियोग्यतायास्तत्रापि सत्त्वात् । न वा कपाले समवायेनोपलब्धस्य घटस्यान्यत्र समवायेनोपलब्धियोग्यताया असत्त्वाद्व्यभिचारशङ्का युक्ता, कपालान्तरे उपलम्भात् । जातिगुणक्रियाणामव्याश्रयव्ययस्यन्तर्गतत्वेन तत्रापि व्यभिचारशङ्का न कार्या, अवयवत्वस्येष्टत्वात् ।

अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषूपलभ्यते। नैवमयम्। एवं हि बहुव्रीहिरपि न्यायत एवोपपन्नः। अन्त्यशब्दे लक्षणा च न। किञ्चानवयवत्वे ण-श-क-प्रत्ययादौ णादेरित्संज्ञानापत्तिः, प्रत्ययादित्वाभावात्, दन्तचस्त्रकारस्य वैयर्थ्यापत्तेश्च। इदं च 'तस्य लोप' इत्यत्र भाष्ये स्पष्टम्। तत्र ह्युक्तम्—'एकान्ता अनुबन्धा' इत्येव न्याय्यमिति दिक्॥ ५॥

---

व्यतिरेकव्याप्तिमाह—अनवयवो हीत्यादि। अत्रेदं बोध्यं—बोधकत्वेन निर्णीतवृत्तिधर्मावच्छिन्नस्यैव 'स्वंरूप'सूत्रबलेन शास्त्रघटकपदशक्यतया सानुबन्धकस्थले 'तस्य लोप'सूत्रसहकृतेन तेन सन्त्वादिना अनुबन्धरहितो बोध्यते एकान्तपक्षे, लक्ष्ये चोपदेशिकसन्त्वादिकं भूतपूर्वगत्या आदाय सन्परत्वादिकमुपपादनीयम्। अनेकान्तपक्षे च नकारेत्संज्ञकसत्त्वाद्यवच्छिन्ने उद्देश्यताप्रयोजकसनादिपदघटकानुबन्धरहितस्य लक्षणा। विधेयताप्रयोजकसनादिपदे तु 'न विधौ परः शब्दार्थ' इति सिद्धान्तात् लक्षणाया अभावेन सत्वावच्छिन्नोऽनुबन्धरहित एव विधेयः, नकारेत्संज्ञकत्वादेर्भूतपूर्वगत्या, सत्वादेश्च प्रत्यक्षेण लक्ष्ये नकारेत्संज्ञकसत्वादिकमुपपादनीयम्। इत्थञ्च सानुबन्धकस्योद्देश्यत्वस्थले सर्वत्र लक्षणाश्रयणे गौरवं, समीपेऽवयवत्वारोपश्चेति द्वयमनेकान्तत्वतिरस्कारप्रयोजकम्।

ननु आरोपस्य लक्षणायाश्चानाश्रयणेऽप्यग्रिमपरिभाषात्रयकरणेनैकान्तपक्षेऽतिगौरवमिति चेत्—न, एकान्तपक्षस्य व्यभिचारपराहतत्वेनैव तिरस्कारात्, परिभाषात्रयस्थाने एकस्यैव कल्पनीयस्य वक्ष्यमाणत्वाच्चेति दिक्। न्याय्यमिति—आरोपं विनैवेत्यर्थः॥ ५॥

नन्वेकान्तत्वेऽनेकाल्त्वादेव औशादीनां सर्वादेशत्वसि-

---

नन्वेकान्तत्व इति । नन्वेकान्तत्वकल्पेऽपि बोध्यानवयव-त्वस्यैवानुबन्धानां स्वसिद्धान्ततया आदिश्यत इत्यादेश इति व्युत्पत्त्या बोध्यस्यैवादेशत्वेन तस्य चानेकाल्त्वाभावेनानेकाल् आदेशस्सर्वस्येत्यर्थकानेकाल् सर्वस्येति सूत्रस्यौशादेशस्थलेऽप्रवृत्त्या कथं शिद्ग्रहणं व्यर्थमिति चेत्—

अत्र केचित्—अनेकाल्बोधकबोध्यस्सर्वस्येत्यर्थेन सर्वादेश-ताप्राप्तिः; न च लोपादेशोऽप्येवं सर्वादेशः स्यात् बोधकस्य लोपश-ब्दस्यानेकाल्त्वादिति वाच्यम्, शास्त्रीयसङ्केतानाश्रयत्वस्य बोधक-विशेषणत्वाभ्युपगमात्; जरसादेशस्थलेऽपि स्वरूपशास्त्रसङ्केतस्य सत्त्वेन सर्वादेशत्वानापत्तिरिति नाशङ्कनीयम्, स्वरूपशास्त्राति-रिक्तशास्त्रस्यैव तत्र शास्त्रपदेन ग्रहणात्; इत्याहुः—तन्न; अनुस्वा-रविसर्जनीयादेरपि सर्वादेशत्वापत्तेः, शब्दमर्यादां विहाय स्वेच्छ-यार्थकरणेन सौत्राक्षरखण्डने अतिप्रसङ्गाच्च ।

अन्ये तु—औशादौ शकारोच्चारणसामर्थ्यात् भूतपूर्वानेकाल्-त्वमादाय सर्वादेशत्वसिद्ध्या शिद्ग्रहणं व्यर्थमित्याहुः—तदपि न; 'शि सर्वनामस्थानं' 'विभाषा ङिश्यो'रित्यादौ विशेषणार्थत्वेन 'जश्शसोः शिः' 'जसः शी'त्यादौ शकारस्य वैयर्थ्याभावात् भूत-पूर्वानेकाल्त्वाश्रयणे प्रमाणाभावेन सर्वादेशत्वानापत्तेः, 'अर्वणस्त्र-सावनञ' इत्यत्रोगित्त्वार्थमृकारस्य चारितार्थ्येन भूतपूर्वानेकाल्-त्वस्यानाश्रयणेन सर्वादेशत्वाप्राप्त्या परिभाषाफलत्वेन तदुपन्यास-स्यासङ्गत्यापत्तेश्च, अनुबन्धविनिर्मुक्तस्यैवोक्तव्युक्त्यादेशत्वेन तस्य कदाप्यनेकाल्त्वाभावेन भूतपूर्वानेकाल्त्वाश्रयणेऽपि सर्वादेश-त्वाप्राप्तेश्च ।

यदि च बोधकगतानेकाल्त्वमादायापि प्रवृत्तिरित्येव भूतपूर्व-

द्वयानेकाल्सूत्रे शिद्ग्रहणं व्यर्थमत आह—

नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

गत्याश्रयणमित्यस्याशय इत्युच्यते, तर्हि लोपविसर्जनीयादेरपि सर्वादेशत्वापत्ति ।

यत्तु—बोधकवृत्तिधर्माणां बोध्य आरोप इति भिन्न इत्यादौ गुणनिषेधाय तत्तच्छास्त्रप्रामाण्यात् कल्पनीयम्, ततश्चानेकाल्त्वस्याप्यारोपेण सर्वादेशत्वसिद्धया शिद्ग्रहण व्यर्थमित्याशय, बोधकश्चानुबन्धघटितो ग्राह्यस्तेन लोपादौ न दोष इति—तन्न, तेनैव ज्ञापकेन धर्मिग्राहकमानादित्पदघटितधर्मोणा बोध्य आरोप इत्येतत्कल्पनयैव शिद्ग्रहणस्य चारितार्थ्यसम्भवे परिभाषाज्ञापनस्यैवाभावापत्ते, किञ्चाद्यानयनस्यैतत्परिभाषाफलत्वेनैव स्थानिवत्सूत्रे शेखरकृता प्रतिपादितत्वाच्च ।

तस्मादिदमत्रावधेयम्—स्वरूपबोधकस्थले स एवायमिति तत्त्वमस्यभिज्ञया बोध्यबोधकयोरभेद इत्युपेयते । तथा च स एवायमौकाराद्यादेशो यो बोधके औशित्याद्याकारक आसीदिति प्रतीत्याऽनेकाल्त्वमप्यस्यैव धर्म इत्यस्यावश्यमेव मन्तव्यतया भवत्यनेकाल्त्वधर्मवानादेश इति स्यात्सर्वादेश, आदेशावस्थाया योऽनेकाल् इत्यवस्थाविशेषाश्रयणे प्रमाणाभावात् । एतदभिप्राये णैव शब्दे-दुशेखरे विधौ निर्दिष्टो योऽनेकाल् इत्युक्तमिति ।

शिद्ग्रहणं व्यर्थमिति । ज्ञापितायाञ्चास्यामनुबन्धस्यानेकाल्घटकाल्पदेनाग्रहणाद्बोधकावस्थायामप्यनेकाल्त्वस्यौशादेशस्थलेऽभावेन शिद्ग्रहण चरितार्थम् । तथा चाल्विशिष्टत्वमनेकाल्त्वमिति फलति । अल् चानुबन्धभिन्नो गृह्यते । वैशिष्ट्यञ्च स्वघटितत्व, स्वेतरो योऽनुबन्धभिन्नोऽल् तद्घटितत्वमित्युभयसम्बन्धेन । ननु ज्ञापितायामप्यस्या शिद्ग्रहणन्न कर्त्तव्यम, औङित्यादौ शका-

रोच्चारणसामर्थ्यात्परिभाषाया अप्रवृत्त्या सर्वादेशत्वम्भविष्यति; अनेकाल्शित्यत्रालपदेनोऽशित्येतद्घटकशकारातिरिक्तानुबन्धभिन्नोऽल् गृह्यते इति यावदिति चेत्—न, विशेषणार्थचरितार्थशकारके श्यादेशस्थले शिद्ग्रहणस्यावश्यकत्वात् ।

ननु किमेतस्या ज्ञापने फलम्? परिभाषापि मास्तु, शिद्ग्रहणमपि त्यज्यताम् । अनेकाल्त्वादेव सर्वादेशत्वं भविष्यति । न चार्वन्तावित्यादौ आदेशस्य, 'ससजुषो रु'रिति विहितर्वादेशस्य च सर्वादेशतापत्तिरिति वाच्यम्, उभयत्र ङित्करणेनापि सर्वादेशताया वारणसम्भवात् । न वा 'दिव उद्'ति विहितोकारादेशोऽपि सर्वादेशः स्यात् । स्वमते तूच्चारणार्थानामपीत्संज्ञाया आवश्यकतया परिभाषयानेकाल्त्वाभावान्न दोष इति फलं युक्तम्; तपरसूत्रे वर्णस्यैव संज्ञात्वस्य शेखरकृतोक्तत्वेन बोध्यबोधकयोः कुत्राप्यनेकाल्त्वस्याभावेन परिभाषाया अनावश्यकत्वात्, उच्चारणे मुखसुखसम्पादनमात्रप्रयोजकतया तकारस्य कार्यान्तराप्रयोजकतया तकारमादाय सर्वादेशतायाः प्रसक्त्यभावाच्च ।

केचित्तु—सत्येव तकारे परिभाषायाः प्रयोजनं स्यात्तकारो न क्रियताम्, 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाती'ति परिभाषया सवर्णग्राहकत्वेऽपि यकारस्यैव स्थानित्वेनान्तरतमपरिभाषयैव दीर्घादिव्यावृत्तेः; न च दिवुधातोः क्विपि ऊठि अक्षद्यूशब्दाद्भ्यामि स्थानिवत्त्वेन दिवत्वादान्तरतम्याद्दीर्घो मा भूदित्यर्थं तपरकरणमावश्यकमिति वाच्यम्, निरनुबन्धकपरिभाषया तत्रैतत्सूत्राप्रवृत्तेः; नापि इच्छाक्यजन्ताद्दिवशब्दात् क्विपि ऊठि भ्यामि द्युभ्यामित्यत्र ह्रस्वविधानार्थं तपरकरणमिति वाच्यम्, क्वचिन्नान्तमेव पदमिति नियमेनाल्लोपस्य स्थानिवद्भावेन च तत्रैतत्सूत्राप्रवृत्त्या दीर्घस्यैवेष्टत्वाच्च; इति न फलं परिभाषाया इत्याहुः ।

परे—तु शिद्ग्रहणेनानुबन्धानामलुग्रहणयोग्यत्वाभावो ज्ञाप्यत इति स्थानिवत्सूत्रे शेखरे प्रतिपादितम्; एतद्भ्यसैवानुबन्धकार्यं

अनल्विधाविति निषेधो न प्रवर्त्तत इति । तथासत्येकान्तपक्षेऽपि क्त्वाककारस्य स्थान्यल्पदेनाग्रहणेन तन्निष्ठकत्वघटितकित्वस्य स्थानिसम्बन्ध्यल्वृत्त्यल्त्वव्याप्यधर्मघटितधर्मत्वाभावेन निषेधाप्रवृत्त्या नल्यपीत्यस्य चारितार्थ्यम् । प्रदायेत्यादौ स्थानिवत्त्वेन कित्त्वादिप्रयुक्तप्राप्तेस्थवारणाय| अनुभूयेत्यादौ गुणनिषेधादिकमतएव स्थानिवद्भावेन सिद्धम । अनुबन्धस्याल्पदेनाग्रहणाद्बोधकेऽप्यनेकाल्त्वस्याभावेन न सर्वादेशत्वसिद्धिशङ्कापि । भाष्ये दृश्यमानं 'नानुबन्धकृतमनेकालत्वमि'ति त्वनुबन्धस्याल्पदबोध्यत्वाभावबोधनलभ्यमेवेति न विरोधः । 'नानुबन्धकृतमनेजन्तत्व' मित्यप्येतज्ज्ञापनलभ्यमेव, नापूर्वम् । एजन्तत्वं एज्विशिष्टत्वम् । वैशिष्ट्यञ्च स्वघटितस्य स्वध्वंसाधिकरणक्षणवृत्त्यल्घटितत्वोभयसम्बन्धेन । अनुबन्धस्याल्पदबोध्यत्वाभावेन देवित्याद्यनुबन्धविशिष्टस्यैजन्तत्वमुपपद्यते । 'नानुबन्धकृतमसारूप्य'मित्यपि नापूर्वम, एतल्लभ्यत्वात । सारूप्यमित्यस्य हि समानाल्त्वमर्थः । अनुबन्धस्याल्पदबोध्यत्वाभावेन काणोस्समानाल्त्वस्यैव सत्वादिति बहूनि फलान्येतस्या इति विज्ञेयम । नन्वेवं घञन्तरामशब्दगतहल्न्तत्वमानुमानिकस्थान्यादेशकल्पनयातिदेशेनादन्तरामशब्द आदाय राम इत्यादौ 'हल्ङ्याब्भ्य' इति सुलोपापत्तिः, ञकारस्यानुबन्धत्वेनानल्विधाविति निषेधाप्राप्तेः ; अथैवं सति रमागौरीत्यादावपि टाप्ङीपोः पकारादिहल्त्वमादाय सुलोपे सिद्धे ङ्याब्ग्रहणं व्यर्थं सदनुबन्धगतहल्त्वमादाय सुलोपश्चेत् ङ्याब्भ्यामेवेति नियमेन राम इत्यादौ न दोष इति चेत्— एवमपि ओव्रश्चु इति धातोर्ल्युटि निष्पन्नव्रश्चनशब्देन सह कुशब्दस्य समासे उत्तरपदस्य स्थानिवद्भावेनाजादित्वमादाय 'कोः कत्तत्पुरुष' इति कदादेशापत्तिरिति चेत्—न, अल्बोधकपदबोध्यत्वाभावस्यैव ज्ञाप्यत्वेनाजादिपदेनाप्यनुबन्धस्याग्रहणात् । यत्तु एवं सति हल्पदेनाप्यनुबन्धस्याग्रहणे हलन्त्यमित्यनेनेत्संज्ञा

शिद्ग्रहणमेवैतज्ज्ञापकम् । तेन 'अवर्णस्तृ' इत्यादेर्न सर्वादेशत्वम् । डादिविषये तु सर्वादेशत्वं विनानुबन्धत्वस्यै- वाभावेनानुपूर्व्यात्सिद्धम् ॥ ६ ॥

---

न स्यात्, एवं किदादिपदघटककाकारादिपदेनाप्यनुबन्धककारादी- नामग्रहणे ज्ञापनोत्तरमपि कित्वाद्यनुपपत्तिरिति—तन्न, इत्पदप्र- योज्यविषयतानिरूपितविषयत्वाप्रयोजकत्वस्य ज्ञाप्यशरीरघटका- ल्बोधकपदे विवक्षितत्वात्। हलन्त्यमितिसूत्रघटकहल्पदस्य किदा- दिपदघटककाकारादेश्च इत्पदप्रयोज्यविषयतानिरूपितविषयता- प्रयोजकत्वस्यैव सत्त्वेन ज्ञाप्याविषयत्वात् । नन्वेवमपि 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्येतद्घटकाल्पदस्य तथाविधत्वेन तत्पद- बोध्यत्वस्य शयादिघटकशकाररूपानुबन्धे अभावबोधनेन तादृश- शकारबोधकस्य शितीतिपदस्य परिभाषाघटकाल्ग्रहणपदेनाग्रह- णापत्तौ तदादिविध्यभावेनेत्संज्ञकशकारादावित्यर्थानापत्तिरिति चेत ; अत्रोच्यते—स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजक- त्वस्वनिष्ठविषयतानिरूपितविषयताप्रयोजकत्वैतदन्यतरसम्बन्धेन इत्पदविशिष्टभिन्नं यदल्बोधकं पदं तद्बोध्यत्वाभावस्यैव ज्ञाप्य- त्वात् । हलन्त्यघटकहल्पदे किदादिघटककितिपदे चाद्यसम्बन्धेन अल्ग्रहणघटकाल्पदे चान्त्यसम्बन्धेनेत्पदविशिष्टत्वस्यैव सत्त्वे- नादोषात् । अल्ग्रहण इत्यस्य ह्यल्बोधक इत्यर्थः । अल् शयघट- कशकारः, तद्बोधकं शितीतिपदमिति ग्रहणपदप्रयोज्या विषयता शित्पदे, अपर्याप्त्या च तद्घटकेत्पदे वर्त्तते, तन्निरूपिता विषय- ताल्त्वाद्यवच्छिन्ना, तत्प्रयोजकत्वस्यैवाल्पदे सत्त्वादिति दिक् ।

नन्वेवं डाणलादावनेकाल्त्वाभावात् सर्वादेशत्वं न स्यादि- त्यत आह—डादिविषये तु सर्वादेशत्वमित्यादि । प्रत्ययादित्वा- भावादिति भावः । एवञ्च नैतत्परिभाषाप्रवृत्तिरिति बोध्यम् ।

नन्वेवं सर्वादिगणोक्तशेखररीत्या परिभाषायामनुबन्धपदेनानुबन्धत्वयोग्यस्यैव ग्रहीतुमुचितत्वेन यदि सर्वादेशः स्यात्तर्हि स्थानिवद्भावेन प्रत्ययत्वादिसंज्ञा स्यादिति सम्भावनायाः सत्त्वेन परिभाषाप्रवृत्तेस्सूपपादत्वेनेदमयुक्तमिति चेत्—न, प्राचीनमताभिप्रायेणैतद्ग्रन्थस्य सत्त्वात्। स्वमते डा इत्यस्य डा आ इत्याकारकतामभ्युपगम्य सर्वादेशत्वमुपपाद्यम्। अथवा सर्वादेशत्वमित्यस्य सिद्धमित्यनेनान्वयः। अभावेनेत्यस्य विनेत्यनेनान्वयः। एवशब्दोऽप्यर्थः, तस्य विनोत्तरमपकर्षः, तथाचानुबन्धत्वस्याभावेन विनाऽपि अर्थादनुबन्धत्वेऽप्यनुबन्धत्वयोग्यतया परिभाषाघटकानुबन्धपदेन ग्रहणेऽपि परिभाषाप्रवृत्तावपीति यावत्। आ आ इत्यानुपूर्व्याः सर्वादेशत्वं सिद्धमित्याकारद्वयं निस्सार्य्य स्वमतेऽपि फक्किका योजनीया।

अथवा सिद्धमित्यत्र हेतुद्वयम्। प्राचीनमते सर्वादेशत्वं विनानुबन्धत्वस्यैवाभावेनेति हेतुः, स्वमते आ आ आनुपूर्व्यादिति हेतुरिति मतद्वयमनुसृत्यापि योजयितुं शक्यते। अथवा यदि सर्वादेशत्वं स्यात्तदा स्थानिवत्त्वेन प्रत्ययादित्वादनुबन्धत्वं स्यादिति सम्भवानाविषयीभूतानुबन्धत्वमादायैव परिभाषा प्रवर्त्तनीयेति परिभाषाप्रवृत्तौ सर्वादेशत्वसम्भावनापि निमित्तम्। परिभाषाप्रवर्त्तने च निमित्तभूतसर्वादेशत्वसम्भावनाया विघातः स्यादित्युपजीव्यविरोधान्न परिभाषाप्रवृत्तिरित्याकारप्रश्लेषमन्तरेणैव ग्रन्थः स्वमतेन योजनीयः। सर्वादेशत्वं विनेत्यस्य सर्वादेशत्वसम्भावनां विनेत्यर्थः। अनुबन्धत्वस्यैवाभावेनेत्यस्यानुबन्धत्वसम्भावनाया अभावेनेत्यर्थः। अभावेनेत्यन्तग्रन्थेन सर्वादेशत्वसम्भावनायाः परिभाषोपजीव्यत्वं प्रदर्शितम्। सर्व इत्यादौ तु नानया रीत्योपजीव्यविरोध उपपादयितुं शक्यते, परिभाषाप्रवृत्तावपि शित्वात्सर्वादेशत्वात्ततेरिति दिक्॥ ६॥

न चैवमप्यवदातं मुखमित्यत्र पलोपोत्तरमात्वे कृतेऽदाप् इति घुसंज्ञाप्रतिषेधो न स्यादेपः पकारसत्त्वेऽनेजन्तत्वादात्वाप्राप्त्या पलोपोत्तरं पकाराभावेनास्य दाप्त्वाभावादत आह—

---

अवदातम्मुखमित्यादाविति। दैप्धातोः पलोपे क्तप्रत्यये आत्वे दातमिति सिद्ध्यति। अदाविति घुसंज्ञाप्रतिषेधेन 'अच उपसर्गात्त'—इति तत्वन्न। अत्रोच्यते—अदाविति निषेधः कथम्? अदावित्यस्य हि दापो घुसंज्ञा नेत्यर्थः। अत्र च बोधके पकारसत्त्वेऽपि दाशब्दो नास्ति तत्रैजन्तत्वाभावेनात्वाभावात्; बोध्ये आत्वे,कृते दाशब्दसत्त्वेऽपि पकाराभावात् दकारोत्तराकारोत्तरपकाररूपत्वस्यैव दाप्स्वरूपत्वादेतदेवाह—पलोपोत्तरमित्यादिना। दाप्त्वाभावात् अदाविति घुसंज्ञाप्रतिषेधो न स्यादित्यन्वयः। कदाचित पकाराभावात् दाप्त्वाभावः। कदाचित् दारूपत्वाभावात्तत्त्वाभावः। कदा कस्मादित्याकाङ्क्षायामाह—पलोपोत्तरं पकाराभावेन दाप्त्वाभावः, न दारूपत्वाभावेनेति भावः। तत्रैव हेतुरुच्यते—पलोपोत्तरमात्वे कृते इति। अस्य दारूपत्वेऽपीति शेषः। पकारसत्त्वे अनेजन्तत्वादात्वाप्राप्त्या दाप्त्वाभावः। अप्राप्त्या इत्यस्य दारूपत्वाभावेनेति शेषः। एतेन पलोपोत्तरमिति पुनरुक्तमित्यपास्तम्। एकस्मिन्नेव अनेकवारमेकस्य विशेषणत्वे एव पुनरुक्तदोषात्। अत्र तु आत्वे दाप्त्वाभावे चान्वयान्न सः।

अत्र केचित्—पकारेत्संज्ञकत्वे सति दात्वमेव दाप्त्वं, तच्च पकारेत्संज्ञकत्वस्य स्थानिवत्त्वेन आत्वे कृते स्वतो दात्वस्य च सत्त्वात्सुलभमेव पलोपोत्तरं दाशब्द इति नेदमवतरणं युक्तमित्याहुः।

अन्ये केचित् पकारेत्संज्ञकदाप्शब्दबोध्यस्यैव दाप्रूपत्वमिति युक्तमेवेत्याहुः। अत्रेदं चिन्त्यते—अदाप्शब्दघटकदा-

पूशब्दस्य शक्यतावच्छेदकं दापूत्वमानुपूर्वीरूपम्, तच्च पकारेत्संज्ञकदापूशब्दबोध्य एव गमिष्यति, न प्रकृते, पकारेत्संज्ञकदापूशब्दबोध्यस्य कस्याप्यभावादिति निषेधाप्रवृत्त्यावतरणं सङ्गतमित्याशयो वा, पकारेत्संज्ञकदापूशब्दबोध्यत्वमेव दापूशब्दबोध्यतावच्छेदकन्तन्नास्तीति निषेधाप्रवृत्त्यावतरणं सङ्गतमेवेत्याशयो वा? नाद्यः, दाप् लवन इत्यत्र दापूशब्दे दापयतीत्यादौ पुगन्तदापूशब्दे च दाप्स्वरूपानूर्व्याः सत्त्वात्। नान्त्यः, बोधकत्वेन तात्पर्यविषयीभूतशब्दनिष्ठानुपूर्व्यवच्छिन्ने शब्दशक्यतायाः 'स्वंरूप' सूत्रेण बोधनात् पकारेत्संज्ञकदापूशब्दबोध्यत्वस्य दापूशब्दबोध्यतानवच्छेदकत्वात्। न च तद्रूपावच्छिन्ने लक्षणा, शक्यार्थेनैवोपपत्तौ लक्षणायां मानाभावात्। तस्मान्नेदं युक्तम्। यदपि तैरेव देशब्दे स्थानिवद्भावेनोपदिश्यमानत्वमानीतं तदपि न युक्तम्, तस्याशास्त्रीयत्वात, तस्य बोध्यत्वरूपत्वेनानुबन्धरहिते देशब्दे स्वतस्सिद्धत्वाच्च। यदप्यट्धातौ स्थानिवद्भावेनोपदिश्यमानत्वमादाय टकारस्येत्संज्ञामाशङ्क्य समाहितन्तदप्यसमञ्जसमेव, इत्संज्ञाविधावुपदिश्यमानत्वस्यानिमित्तत्वात् करणसाधनस्यैवोपदेशशब्दस्य सिद्धान्तितत्वात्।

परे तु—दाप्त्वमानुपूर्वीरूपमेव, तदेव दाप्पदशक्यतावच्छेदकं; स्वंरूपसूत्रेण तस्यैव शक्यतावच्छेदकत्वबोधनात्, पकारेत्संज्ञकत्वे सति दात्वरूपस्य दाप्त्वस्य लक्षणां विना बोध्यतानवच्छेदकत्वात्, लक्षणायां च प्रमाणाभावात्। अतएव प्रणिदापयतीत्यादावदाविति प्रतिषेधमाशङ्क्य दाविति धान्त एव प्रतिषिध्यते; दैप्दापावपि धान्तावेवेत्युक्तं भाष्ये; पकारेत्संज्ञकत्वस्य दाप्पदशक्यतावच्छेदककोटौ प्रवेशे शङ्कासमाधानयोरसङ्गत्यापत्तेः। किञ्चैवं रीत्या टकारेत्संज्ञकेत्वस्य डकारेत्संज्ञकेत्वस्य च टड्डेपदशक्यतावच्छेदकतया वक्तव्यतया अमहीद् रामायेत्यादावनल्विधावितिनिषेधापत्तिः, अण्त्वणत्वयोः साङ्कर्यापत्तिः,

## नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥

'उदीचां माङ' इति निर्देशोऽस्या ज्ञापकः । 'आदेच उपदेश'इतिसूत्रेणोपदिश्यमानस्यैजन्तस्यात्वं क्रियते, ङकार-

---

पूर्वत्वपरत्वयोः प्रवेशेन तत्परिहारे गौरवञ्च । अत्रैवास्तु तथा, अन्यत्रानुपूर्वीरूपत्वमेव सर्वेषामस्तु इति चेत्—न, वैषम्ये बीजाभावात्, लाघवस्य सर्वत्र तुल्यत्वाच्च । न च तवापि अत्रैव 'हशि चे'त्यादौ रुत्वस्याप्यानुपूर्वीरूपत्वेन देवरुहीत्यादावुत्वापत्तिः। एवम् 'उञि च पद' इत्यत्रोञ्त्वस्यानुपूर्वीरूपत्वेन तन्त्रयुत-मित्यादिप्रत्युदाहरणपरभाष्यासङ्गत्यापत्तिः, मम तु उकारेत्सञ्ज्ञ-कत्वस्य रुधातावसत्त्वेन, बोधकगतञकारेत्सञ्ज्ञकत्वस्यातिदेशेन, उत्वस्य च स्वतः सत्त्वेन न दोष इति वाच्यम्; 'अतो रोरि'त्या-दावनुनासिकस्योकारस्यैवोच्चारणरूपयत्नसत्त्वेनानुनासिकत्वस्य विवक्षितत्वेन, सिद्धान्ते पदग्रहणस्योत्तरार्थत्वेनानेकान्तपक्षाभि-प्रायेणैव तन्त्रयुतमिति प्रत्युदाहरणपरभाष्यस्य सत्त्वेन चादो-पात् । ननु ज्ञापितायामप्यस्यां बोधके बोध्ये वाऽऽत्वप्रवृत्तिः; न तावद्बोधके, दैप्शोधने धेट् पाने इत्यादावात्वश्रवणापत्तेः; नापि बोध्ये, अनुबन्धरहितस्यैव बोध्यत्वेन तावतापि दाप्त्वा-भावेन निषेधाप्रवृत्त्यापत्तेः; इति चेत्—न; बोधक एवात्वं प्रवृत्तं बोधकत्वेन तात्पर्यविषयीभूतमैकारादिघटितमेवौपदेशिकमिति बोधयितुमात्वघटितं नोच्चारितम्; बोध्यं तु दै धे इत्याद्येव, बोधकत्वेन विवक्षितस्वरूपस्यैव 'स्वंरूप' सूत्रेण शक्यत्वबोधनात्; बोध्येऽपि शित्परत्वाभावे आत्वम्; बोधकगतदाप्त्वस्य बोध्ये बोध्यबोधकयोरभेदेन सत्त्वान्निषेधोपपत्तिश्चेति दिक् ।

नानुबन्धकृतमनुपादिश्यमानत्वमिति पाठ एव युक्तः । दैप्-इत्येतद्घटकदैमात्रस्यैजन्तत्वं स्वतसिद्धम् । परिभाषयोपदिश्य-

सत्त्व एजन्तत्वाभावादात्वाप्राप्तेस्तस्यासङ्गतिः । न चास्यामवस्थायां तस्य धातुत्वाभावात्कथमात्वम्, तत्र धातोरित्यस्य निवृत्तेरित्यन्यत्र विस्तरः। स्पष्टं चेदं 'दाधाघ्वदा'विति सूत्रे भाष्ये ॥७॥

नन्वेवमपि 'वाऽसरूप'सूत्रेण क्विविषयेऽणोऽप्यापत्तिरत आह—

---

मानत्वबोधनादात्वसिद्धिः, अनेजन्तत्वपाठे तु पान्तस्यैव परिभाषयैजन्तत्वेनालोऽन्त्यपरिभाषया पकारस्यैवात्वापत्तेरिति केचित्—तन्न, निर्दिश्यमानपरिभाषयैकारस्यैवात्वेन यथाश्रुतपक्षेऽपि दोषाभावात्, भाष्यानुग्रहस्योत्रैव सत्त्वाच्च ॥ ७ ॥

क्विविषयेऽणोप्यापत्तिरिति—एकान्तपक्षेऽनुबन्धघटितस्यैव बोधकत्वेन तस्यासरूपत्वेन 'वाऽसरूप'सूत्रप्रवृत्तेरिति भावः । ननु बोधकावस्थायामसरूपत्वविवक्षणे व्यावर्त्यालाभेनासरूपग्रहणस्य वैयर्थ्यापत्त्या परिभाषाऽकरणलाघवेन च प्रायोगिकासरूपत्वस्यैव ग्रहणेन न दोषः, प्रयोगे काणोरनुबन्धविनिर्मुक्तयोरेवोपस्थित्या सरूपत्वात् इति चेत्—न, वाक्यार्थबोधकाले लक्षणैकचक्षुषां प्रायोगिकरूपज्ञानाभावेनौपदेशिकरूपग्रहणस्यैवौचित्यात् । न च वैयर्थ्यं, 'हनश्च वध' इति सूत्रविहितस्य वधादेशसन्नियोगशिष्टस्यापः प्रत्ययस्य 'मूर्त्तौ घन' इतिसूत्रविहितेन घनादेशसन्नियोगशिष्टेनाप्प्रत्ययेनापवादभूतेन वैकल्पिकबाधाभावाय सार्थक्यात्, तत्र बोधकावस्थायामुभयोस्सरूपत्वात्; वैकल्पिकबाधे तु मूर्त्तावपि पक्षे वधादेशापत्तेः । यदि च घनादेशमात्रं मूर्त्तौ विधीयते प्रत्ययश्च पूर्वसूत्रेणैव किञ्च तावन्मात्रप्रयोजनकत्वे पदलाघवाद्धनश्च वधोऽमूर्त्ताविति न्यासेनापि बाध्यबाधकभावाभावेन न दोष इत्युच्यते, तथापि इगुपधलक्षण-

## नानुबन्धकृतमसारूप्यम् ॥ ८ ॥

'ददाति दधात्योर्विभाषे'ति णबाधकशस्य विकल्पविधायकमस्या ज्ञापकम् । तेन गोद इत्यादौ नाण्णिति 'वाऽसरूपसूत्रे' भाष्ये स्पष्टम् ॥ ८ ॥

---

कप्रत्ययस्य 'तुन्दशोकयोः परिमृजापनुदो'रितिविहितकप्रत्ययेन वैकल्पिकबाधाभावाय तत्सार्थक्यमवेहि । वैकल्पिकबाधे हि उत्सर्गकप्रत्यये शोकस्यापनुदः शोकापनुद इति समासविकल्पापत्तिः, इष्यते तु 'उपपदमतिङि'तिनित्यसमास एवेति बोध्यम् ।

ननु किमिदमसरूपत्वं ? न तावत् समानरूपवत्त्वं तत्, सर्वेषां रूपाणां स्वापेक्षया समानत्वेनाव्यभिचारात् । नापि स्ववृत्तिरूपवत्त्वसम्बन्धेन स्वविशिष्टत्वं स्वसरूपत्वं, तव्यतः कप्रत्ययसरूपत्वापत्तेः नीलघटशब्दस्यापि घटशब्दसरूपत्वापत्तेश्च स्ववृत्तितत्त्वादेस्तव्यदादौ सत्त्वात् ।

अत्रोच्यते—स्वपर्याप्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्मपर्याप्त्यधिकरणत्वसम्बन्धेन स्वविशिष्टत्वमेव स्वसरूपत्वम् । परिभाषासहकारेण तु स्वघटकानुबन्धेतरयावद्वर्णघटितपर्याप्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्मपर्याप्त्यधिकरणत्वन्तत्त्वम् । परन्त्वत्र यावत्त्वं दुर्वचम्, तस्मात् स्वविशिष्टत्वं स्वसरूपत्वम् । वैशिष्ट्यं स्वघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवद्घटितत्व - स्वघटकावृत्तितादृशधर्मवद्घटितत्वोभयसम्बन्धेन । न च सरशब्दरसशब्दयोः परस्परवैशिष्ट्यसत्त्वात् सरूपत्वापत्तिरिति वाच्यम्; स्वं सरशब्दः, तद्घटकावृत्तितादृशो धर्मो रशब्दोत्तरत्वविशिष्टसत्वं तद्वान् रस इति, तद्घटितत्वस्यैव रसशब्दे सत्त्वात्, एवं रसशब्दघटकावृत्तितादृशो धर्मः सशब्दोत्तररत्वं तद्घटितत्वस्यैव सर-

ननु सङ्ख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात्प्रकरणस्याभिधानियामकत्वसिद्धात् 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय' इति न्यायात्; अस्ति च प्रकृते बह्वादीनां सङ्ख्या संज्ञा कृतेति ज्ञानरूपं प्रकरणम्, न तु लोकप्रसिद्धैकद्व्यादीनामित्यत आह—

उभयगतिरिह भवति ॥ ९ ॥

इह शास्त्रे। 'सङ्ख्याया अतिशदन्तायाः' इति निषेधोऽस्या

---

शब्दे सत्त्वेनादोषात्। परिभाषाबलात्तु धर्मेऽनुबन्धावृत्तिस्त्वन्देयमित्यलम् ॥ ८ ॥

प्रकरणस्याभिधानियामकत्वसिद्धादिति। अत्राभिधापदेन तात्पर्यमुच्यते न तु शक्तिः, तस्याः शक्यशक्ततावच्छेदकमात्रनियम्यत्वात्। अयं भावः—यस्मिन् शब्देऽनेका शक्तिस्तत्र श्रोतुः कीदृशशक्तिज्ञानाधीनबोधनेच्छया वक्त्रोच्चारितमिदमितिनिश्चयाभावात्, शाब्दबोधे च समानविषयकतात्पर्यनिश्चयस्य कारणत्वात् शाब्दबोधानुपपत्तौ प्राप्तायां प्रकरणादिना तात्पर्यनिर्णयोत्तरं बोधो भवति। एवञ्च शास्त्रे संख्यादिपदे एकत्वादिनिरूपिता लौकिकी, बहुगणादिनिरूपिता शास्त्रीया च शक्तिरस्तीति कीदृशार्थबोधनेच्छयोच्चरितमिदमिति जिज्ञासायां स्वयमेव शास्त्रकारेण बह्वादिनिरूपितशक्तिं बोधयित्वा कथमन्यार्थबोधनेच्छयोच्चारितं स्यादिति ज्ञानरूपप्रकरणेन बहुगणादावेव तात्पर्यनिर्णयेन तद्विषयकबोधस्यैव शास्त्रे सम्भवेन लौकिकार्थबोधाप्रसक्तिरित्येतत्फलितमेव 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय' इति न्याय इति। 'उभयगतिरिह' इतिपरिभाषया च लौकिकालौकिकोभयार्थ-

ज्ञापकः । न हि कृत्रिमा सङ्ख्या त्यन्ता शदन्ता चास्ति । तेन 'कर्त्तरि कर्मव्यतिहारे', 'कण्वमेघेभ्यः करणे,' 'विप्रतिषिद्धं चानधिकरणे' इत्यादौ लौकिकक्रियाद्रव्याद्यवगतिः । तत्र क्वोभयगतिः क्वाकृत्रिमस्यैव क्व कृत्रिमस्यैवेत्यत्र लक्ष्यानुसारिव्याख्यानमेव शरणम् । अतएवाम्रेडितशब्देन कृत्रिमस्यैव ग्रहणं, न तु द्विस्त्रिर्घुष्टमात्रस्य । स्पष्टं चेदं सङ्ख्यासंज्ञासूत्रे भाष्ये ।

यत्तु संज्ञाशास्त्राणां मच्छास्त्रे अनेन शब्देनैतएवेति नियः-

---

तात्पर्यं शास्त्रेऽस्तीति बोध्यत इति भावः । तथा चोभयबोधस्थल आवृत्तिराश्रयणीयेति भावः । तज्ज्ञापकत्वमुपपादयति—न हि कृत्रिमा संख्या त्यन्ता शदन्ता चास्तीति ।

ननु कतीति कृत्रिमापि संख्या त्यन्तास्तीति तद्व्यावृत्त्यर्थं त्यन्तग्रहणमिति चेत्—न, तिशब्दे विशिष्टरूपोपादानसत्त्वेनार्थवद्ग्रहणपरिभाषयार्थवत्त्यन्तस्यैव तिपदेन ग्रहणेन कतीत्यादावकारसहितस्यैवार्थवत्त्वेन तद्व्यावृत्त्यर्थत्वाभावात् । न च परिभाषाज्ञापनोत्तरमपि द्विदशशब्दात्तिप्रत्यये द्विदशशब्दस्य विंशादेशेन, शतिप्रत्यये त्रिन्नादेशेन च विंशतिशब्दस्य साधनादर्थवतस्तेरसत्त्वासत्त्वाभ्यां प्रसक्तस्य फलभेदस्य वारणायार्थवद्ग्रहणपरिभाषायाः प्रकृतेऽनुपस्थित्या कृत्रिमस्यैव ग्रहणेऽपि कतीत्येतद्व्यावृत्त्यर्थत्वसम्भवेन नैतज्ज्ञापकमिति चेत्—सत्यम्, इत एवारुचेः शदन्तग्रहणस्य ज्ञापकत्वमुक्तमिति दिक् ॥

यत्तु संज्ञाशास्त्राणामित्यादि । अयम्भावः—सर्वशब्दात् केषांचित् शक्तिभ्रमात् केषांचित् लक्षणया सर्वार्थविषयकबोधोत्पत्त्या सर्वार्थबोधकत्वं सर्वेषां सिद्धम् । वैयाकरणमते च बोधकतैव शक्तिरिति सर्वार्थनिरूपितशक्तिमत्त्वं सर्वेषां शब्दानां सिद्धमेव ।

मार्थत्वं कृत्रिमाकृत्रिमन्यायबीजमिति—तन्न, तेषामगृहीतश-
क्तिग्राहकत्वेन विधित्वे सम्भवति नियमत्वायोगात् । 'सर्वे सर्वा-
र्थवाचकाः' इत्यभ्युपगमोऽपि योगिदृष्ट्या न त्वस्मद्दृष्ट्या.
विशिष्य सर्वशब्दार्थज्ञानस्याशक्यत्वात् । सामान्यज्ञानं तु न

ननु शक्तिभ्रमाद्बोध लक्षणया बोध इति व्यवहारानुपपत्ति,
तव मते सर्वत्र शक्तेस्सत्त्वादिति चेत्—न, परमताभिप्रायेण तद्-
व्यवहारस्य सत्त्वात। अतएव सर्वे सर्वार्थवाचका इत्यभियुक्ताना
व्यवहारः । एवञ्च वृद्धिसत्याल्पिपदेपु आदैजादिबहुगणादिनि-
रूपितशक्तेरपि सत्त्वेन तत्तत्पदेन तत्तदर्थप्रतीतेर्लौकिकशक्त्यैव
सिद्धौ 'वृद्धिरादैजि'त्यादिसञ्ज्ञासूत्राणा वैयर्थ्यात अस्मच्छास्त्रे
वृद्ध्यादिशब्देन आदैजादीनामेव बोध इति नियमात 'कृत्रिमा-
कृत्रिम' इति न्यायो लभ्यत इति ।

अगृहीतशक्तिग्राहकत्वेनेति । अयम्भाव —उक्तरीत्या वृद्ध्या-
दिपदे आदैजादिनिरूपितशक्तेस्सत्त्वेऽपि लोके तत्पदेन तेषा
बोधाभावेन व्यवहारादिना शक्तिग्रहासम्भवेन अज्ञातशक्त्या
बोधाभावेन च शक्तिज्ञानजननाय सञ्ज्ञासूत्राणा विधायकत्वे सम्भ
वति नियामकत्वायोग इति नानेन प्रकारेणोक्तन्यायसिद्धिरिति ।

नन्वेव सर्वे सर्वार्थवाचका इत्यस्य का गतिरित्यत आह—
सर्वे सर्वार्थवाचका इति । योगिदृष्ट्येति—योगिनां विशिष्य सर्वेषा
तत्तद्धर्माणा ज्ञानसम्भवादिति भाव । ननु घटपदमर्थवाचक
पदत्वादित्यनुमानेन सामान्यलक्षणासहकृतेन अर्थत्वावच्छिन्न
सकलार्थनिरूपितशक्तिज्ञानमस्मदादीनामपि सुलभमिति चेत्—
न, अनुभवोपस्थितिशाब्दबोधाना समानप्रकारेणैव हेतुहेतुमद्भा
वेन अर्थत्वप्रकारकशक्तिग्रहेण घटत्वादिविशेषधर्मप्रकारेणोप
स्थितिशाब्दबोधयोर्जननासम्भवात् इत्याह—सामान्यज्ञानन्तु न

बोधोपयोगीत्यन्यत्र निरूपितम् ॥ ९ ॥

नन्वध्येता शयितेत्यादाविङ्शीङोर्ङित्त्वाद् 'क्ङिति चे'ति गुणनिषेधः स्यादत आह—

**कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते ॥ १० ॥**

---

बोधोपयोगीति, आत्वादिविशेषरूपेण न बोधोपयोगीत्यर्थः ॥ ९ ॥

नन्वध्येता शयितेत्यादाविति । ननु निमित्तपदेन सप्तम्यन्तपञ्चम्यन्तपदप्रयोज्यविषयताश्रयस्यैव शास्त्रे व्यवहृतत्वेन प्रकृते निषेधाप्रवृत्तेरवतरणमसङ्गतमिति चेत्—न, निमित्तपदेन कारणमात्रस्याभिधानात् । परिभाषायां सत्यां तथाभूतस्यैव ग्रहणं निमित्तपदेनेत्यन्यदेतत् । अतएव तद्विषये ऊर्णुनविषतीत्यादौ 'सन्यङो'रित्येतच्छास्त्रघटकषष्ठ्यन्तसन्पदप्रयोज्यविषयताश्रयस्यापीमकारस्य निमित्तत्वमाश्रित्य 'द्विर्वचनेऽची'त्यस्य प्रवृत्तिः । ननु 'क्ङिति चे'त्यत्र गित्साहचर्येण प्रत्ययस्यैव ङितो ग्रहणात्प्रकृते न दोषः; न च जहातीत्यादौ 'दीर्घोऽकित' इत्यस्य प्रवृत्तये हाधातोर्गित्वस्यैव वक्तव्यत्वेन गित्त्वस्य प्रत्ययमात्रवृत्तित्वाभावात्साहचर्याभाव इति वाच्यम्, 'क्ङिति चे'तिप्रवृत्तिप्रयोजकस्य प्रत्ययस्यैव गितः सम्भवेन साहचर्यपरिभाषाप्रवृत्तौ बाधकाभावात्, 'दीर्घोऽकित' इत्यत्र न कित् यस्मिन्निति बहुव्रीहिगर्भबहुव्रीहिणा दीर्घसाहचर्येण च कित्पदेन यङ्यङ्लुङ्निमित्तकनुगादेरेव ग्रहणं नोदागित्यादौ कित्त्वेऽपि दोषाभावाच्च; न च सुनोतीत्यादौ ङितः प्रत्ययस्यैव सत्त्वेन तत्र निषेधाभावाय परिभाषावतार इति युक्तम्, नुप्रत्ययस्य ङित्त्वेऽपि तत्पर्याप्तायाः कस्या अपि विषयताया असत्त्वेन ङित्त्वपर्याप्तनिमित्तताकत्वस्य गुणेऽसत्त्वेन निषेधाप्रवृत्तेः इति चेत्—न, अस्य स्त्री ई मेवाचरतीत्यर्थेऽयतीत्यादौ ङित्प्र-

त्ययस्य गुणनिषेधाभावाय परिभाषाया आवश्यकत्वात्। न च धातुविहितप्रत्ययत्वेन साहचर्याश्रयणान्न दोष इति वाच्यम्, आङ्पूर्वकात् धाधातोः क्विप्प्रत्यये तदन्तादाचारक्विपि आधयतीत्याद्यर्थं परिभाषाया आवश्यकत्वात्।

यत्तु—आचारक्विप्प्रकृतिगतमनुबन्धमादाय ङिद्वन्ते कार्यन्न भवति, अतएव 'केदाराद्यञ् चे'तिसूत्राद्यञोऽनुवृत्त्या सिद्धे 'ब्राह्मणमाडववाडवाद्यन्' इति सूत्रे यनो ग्रहणात्क्वचिदन्यत्रापि भवति, तेन 'पृष्ठादुपसंख्यानमि'त्यस्य सिद्ध्या पृष्ठ्यमिति सिद्ध्यति, अन्यथा ब्राह्मणादिशब्दाद्यन्नन्तादाचारक्विबन्ताङ्डिति परस्मैपदस्य यञोऽनुवृत्तौ कर्तृगामिनि क्रियाफले यञन्तप्रकृतिकाचारक्विबन्तादात्मनेपदस्य चोत्पत्त्या फलभेदादुक्तज्ञापकपरभाष्यासङ्गतिरिति—तन्न, तद्भाष्यप्रामाण्याद्यञन्तान्नाचारक्विबित्यस्यैव लाघवेन कल्पनीयत्वात्।

यदि च ग्स्नुपर्यासनिमित्ततायाः प्रत्ययत्वव्याप्यधर्मावच्छिन्नाया एव जिष्णुरित्यत्र सम्भवेन तत्साहचर्यात् किन्ङिन्निष्ठाया अपि प्रत्ययत्वव्याप्यधर्मावच्छिन्नाया एव ग्रहणेन न प्रकृते दोष इत्युच्यते—तदा तदपि न फलम्, अध्येतेत्यादौ चार्द्धधातुकनिमित्तकगुणस्य प्रकृतिमात्रनिमित्तकनिषेधापेक्षया बहिरङ्गासिद्धत्वेन निषेध्याभावान्निषेधाप्रवृत्त्यापि मूलोक्तावतरणासङ्गतिः। भवितेत्यादौ गुणस्य बहिरङ्गत्वेऽपि 'दीधीवेवीटामि'त्यत्रेड्ग्रहणसामर्थ्येन तद्दृष्ट्याऽसिद्धत्वन्नेत्येव कल्पना। निषेधापेक्षयाऽसिद्धत्वन्नेति सामान्यकल्पना तु न युक्ता, प्रेद्ध इत्यत्र गुणस्य निषेधापेक्षया बहिरङ्गासिद्धत्वप्रतिपादनपरभाष्यासङ्गतेः, रेरवीतीत्यत्र निमित्तग्रहणाभावे बहिरङ्गपरिभाषया निषेधाप्रवृत्तिप्रतिपादनपरभाष्यासङ्गतेश्च। अरिरिषतीत्याद्यर्थन्तु परिभाषाश्रयणमवेहि। तथाहि—ऋधातोः सनि 'स्मिपूङ्रञ्ज्वशां सनी'ति सन इटि 'ऋ इस' इति स्थिते परिभाषायाः सत्त्वे इसो द्वित्वनिमित्तत्व-

भावेन 'द्विर्वचनेऽची'त्यस्याप्रवृत्त्या परत्वाद्गुणे रिसित्यस्य द्वित्वे अरिरिषतीति सिद्धयति, अन्यथा 'द्विर्वचनेऽचो'ति निषेधप्रवृत्त्या गुणात्पूर्वं द्वित्वे अनिष्टापत्तिः।

वस्तुतस्तु—अरिरिषतीत्यादावपि परिभाषाया नोपयोगः, द्वित्वनिमित्ततापर्याप्त्यधिकरणाज्निमित्तककार्यस्यैव तेन निषेधात् प्रकृते इकारस्य द्वित्वनिमित्ततापर्याप्त्यनधिकरणत्वेन निषेधाप्रवृत्त्येष्टसिद्धेः। चक्रतुरित्यादावकारस्य द्वित्वनिमित्ततापर्याप्त्यनधिकरणत्वेन निषेधाप्रवृत्त्या परत्वाद्यणि द्वित्वासिद्धयापत्तिरिति चेत्, तथापि द्वित्वनिमित्तताश्रयाच्पर्याप्तनिमित्तताककार्यस्यैव निषेधस्वीकारेणोभयत्र सामञ्जस्यात्। न च जग्मतुरित्यादावुपधालोपीयनिमित्तताऽतुसि पर्याप्ता नाकार इति निषेधाप्रवृत्त्या प्रथममुपधालोपे रूपासिद्धिरिति वाच्यम्, अजादौ क्ङिति लोप इत्यर्थेनाच्त्वावच्छिन्ननिमित्ततायाः अच्पर्याप्तत्वात् निषेधप्रवृत्तेः सुलभत्वात्।

यत्तु—ऊर्णुनविषतीत्यादौ गुणशास्त्रीयनिमित्तताया इकारपर्याप्त्यभावान्निषेधाप्राप्त्या परत्वाद्गुणेऽवादेशे नवशब्दस्य द्वित्वेऽभ्यास उकारश्रवणानापत्तिरिति—तन्न, उक्तरीत्या गुणस्यानिषेधेऽप्यवादेशस्य निषेधेनोकारविशिष्टस्य द्वित्वे ह्रस्वे दोषाभावादवादेशीयनिमित्ततायाः अच्पर्याप्तत्वात्।

अत्रोच्यते—दिव्धातोः सनि 'सनीवन्तर्द्धे'तीटो वैकल्पिकत्वेन 'हलन्ताच्चे'ति सनः कित्वेन परत्वात्प्रथमं वकारस्योठि दि ऊस इति स्थिते 'सन्यङो'रिति द्वित्वे यणि च प्राप्ते परत्वादन्तरङ्गत्वाच्च यणि द्यूशब्दस्य द्वित्वे दुद्यूषतीति सिद्धयति—तन्न सिद्धयेत् परिभाषां विना, सन्नन्तत्वावच्छिन्नाया द्वित्वीयनिमित्ततायाः दिऊसपर्याप्ताया अपर्याप्त्योकारेऽपि सत्त्वेन तत्पर्याप्तत्वस्य यणशास्त्रीयाच्पदप्रयोज्यनिमित्ततायाः सत्त्वेन 'द्विर्वचनेऽची'त्यनेन पूर्वं यणोऽभावाद् दिशब्दस्यैव द्वित्वेनाभ्यास उकारश्रवणानापत्तेरिकाश्रवणापत्तेश्च। न च परिभाषयापि न दोषनिस्तारः,

ऊकारस्य कार्यानुभवकर्तृत्वविशिष्टकार्यित्वाभावेन निमित्ततायाः वारयितुमशक्यतया 'द्विर्वचनेऽची'त्यस्य प्रवृत्तेरनिवारणादिति वाच्यम् ; यद्यपि कार्यानुभवकर्तृत्वं दिशब्दस्यैव, तथापि कार्यानुभवकर्तृकार्यिघटितस्याप्यवयवद्वारा कार्यानुभवकर्तृत्वविशिष्टकार्यित्वं वक्तव्यम् , अन्यथा शयितेत्यादाविकारस्य कार्यानुभवकर्तृत्वविशिष्टकार्यित्वेन निमित्ततयाऽनाश्रयणेऽपि शीशब्दस्य तत्त्वाभावेन निमित्ततयाऽऽश्रयणे बाधकाभावेन गुणनिषेधस्याशक्यवारणत्वेन ज्ञापकत्वस्यैवोच्छेदापत्तेः । मम त्ववयवद्वारा शीशब्दस्यापि तत्वेन न दोषः । एवञ्च प्रकृते दिऊसेति समुदायस्य विशिष्टकार्यिदिशब्दघटितत्वेन निमित्ततयाऽनाश्रयणेन समुदायान्निमित्ततायाः निरसनादवयवे अपर्याप्त्यापि तस्याः स्थितेर्वक्तुमशक्यत्वात् समुदायपर्याप्ता ह्यवयवेऽपर्याप्त्या तिष्ठति स्वतन्त्रायाश्च कस्या अपि निमित्ततायास्तत्रासत्त्वेन परिभाषासद्भावे दोषाभावः । अरिरिषतीत्याद्यर्थं द्वित्वनिमित्ततापर्याप्त्यधिकरणघटकाऽच्पर्याप्तनिमित्ताकार्यस्यैव 'द्विर्वचनेऽची'त्यनेन निषेध इत्यर्थस्वीकारेण प्रकृते परिभाषाबलात् द्वित्वीयनिमित्ततायाः ऊकारघटिते कुत्राप्यभावेनोकारपर्याप्तयणीयनिमित्ततायाः द्वित्वनिमित्तापर्याप्त्यधिकरणघटकाच्पर्याप्तत्वाभावेन निषेधाप्राप्तेश्च ।

'कार्यमनुभवन्नि'तिपरिभाषा 'द्विर्वचनेचो'त्यस्य प्रवृत्तिवारकत्वेनापवादभूता, तस्याः प्राप्तिसम्भावनया 'द्विर्वचनेऽची'त्यस्याप्रवृत्तिः 'उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधत' इति न्यायात् ; यदि पूर्वं 'द्विर्वचनेऽची'ति न प्रवर्त्तेत तर्हि यण्गृकारविशिष्टस्य दुशब्दस्य द्वित्वेनोकारस्योक्तकार्यित्वेन परिभाषा प्रवर्त्तेतेति सम्भावनायाः प्रकृते सत्त्वादित्यपि कश्चित् ।

ननु दुद्यूषतीत्यादौ 'द्विर्वचनेऽची'त्यस्या प्रवृत्तये प्रत्ययघटकाऽच्पर्याप्तनिमित्ताकादेशो नेत्यर्थः, प्रकृते चोकारस्य प्रत्ययघटकत्वाभावात्सूत्राप्राप्त्यालं परिभाषया, अतएव 'प्रत्यय इति

वक्ष्यामी'त्येव प्रकृतदोषोद्धाराय भाष्य उक्तमिति चेत् , अत्राहुः- दुद्यूषतीत्येतदर्थम्प्रत्यय इति कथनेऽपि भवनमिच्छति भवनीयति भवनीयितुमिच्छति विभवनीयिषतीत्यादावचः प्रत्ययघटकस्यैव सत्त्वेन निषेधशास्त्रप्रवृत्त्या पूर्वं गुणाऽवादेशयोरभाव उकारविशिष्टस्यैव द्वित्वेनाभ्यास इकारश्रवणानापत्तिमाशङ्क्य द्वित्वनिमित्तस्यैवाऽचो ग्रहणमित्युक्तं, विभवनीयिषतीत्यत्राऽनस्य द्वित्वनिमित्तत्वाभावेनाचोऽपि तत्त्वाभाव इति भाष्याशयः। एवञ्च दुद्यूषतीत्यादावप्युकारस्य द्वित्वनिमित्तत्वाभावेनैव सूत्राप्राप्त्या प्रत्ययग्रहणस्याकर्तव्यताया एव भाष्यतो लाभः। न च परिभाषाऽभावे सन्नन्ततदादित्वावच्छिन्नाया अपि विषयताया निमित्ततारूपत्वेन समुदाये वर्त्तमानायास्तस्या एवापर्याप्त्या दुद्यूषतीत्यादावुकारे विभवनीयिषतीत्यत्राऽकारे च सत्त्वेनोभयत्र दोष एव। अचि प्रत्ययघटकत्वस्य निवेशेनाद्यदोषवारणेऽप्यन्तदोषतादवस्थ्यमेव, अकारस्य प्रत्ययघटकत्वात्। परिभाषायास्सत्त्वे नुक्तरीत्यावयवद्वारा सन्नन्तस्य विशिष्टकार्यित्वेन निमित्ततया समुदायस्यानाश्रयणेनापर्याप्त्याप्यवयवे निमित्तताया असम्भव एवेत्युक्तमिति न सूत्रप्रवृत्तिरिति विभवनीयिषतीत्येव परिभाषाफलमिति केचित्।

यदि च द्वित्वनिमित्तत्वम्प्रत्ययघटकत्वञ्चेत्युभयं निवेश्य द्वित्वनिमित्ततापर्याप्त्यधिकरणप्रत्ययघटकाच्पर्याप्तनिमित्तताका देशो नेत्यर्थ इति मन्यते, द्विर्वचन इति प्रत्ययविशेषणमिति भाष्यात्, तदा न फलं परिभाषाया[1] इति विभावनीयम्। अधि-

१ न फलं परिभाषाया इति। इण्धातोरचि निष्पन्नादयशब्दादाचारक्विपि धातुसंज्ञायां णिचि लुङि आयचन इत्यत्राकार एकाच्घटकस्तदवच्छिन्नद्वित्वनिमित्ततायाः पर्याप्तिः, व्यपदेशिवद्भावेन प्रत्ययघटकत्वं चास्तीति तत्पर्याप्तनिमित्तताकाच्यादेशो न स्यात्, यदि परिभाषा नाद्रियेरन्; परिभाषा-

पूर्वकादीङ्धातोर्णिजन्ताल्लुङि चङि 'णौ च संश्चङो'रित्यनेन पूर्वं गाङादेशे ततो द्वित्वे अध्यजीगपदिति भवति, तत्र द्वित्वनिमित्ततापर्याप्त्यधिकरणीभूतप्रत्ययश्चङ्, तद्घटकोऽच् तस्यैवाऽकारः, तत्पर्याप्तनिमित्तताकं गाङादेशरूपं कार्यं, तन्न स्यादिति तु नाशङ्कनीयं; द्वित्वनिमित्ततापर्याप्त्यधिकरणप्रत्ययघटकाऽज्विशिष्टं कार्यं नेत्यर्थाङ्गीकारात्। वैशिष्ट्यञ्च स्वपर्याप्तनिमित्ताकत्व-स्वाव्यवहितपूर्वपर्याप्तनिमित्तत्वानिरूपकत्वोभयसम्बन्धेन। प्रकृते द्वित्वनिमित्ततापर्याप्त्यधिकरणप्रत्ययघटकोऽच् चङोऽकारः, तद्विशिष्टत्वन्न गाङादेशस्य, स्वपर्याप्तनिमित्तताकत्वेऽपि स्वाव्यवहितपूर्वणिज्निष्ठनिमित्तताकत्वादिति न तस्य निषेध इत्यलम्।

पुनरप्यवतरणे प्रकारान्तरेण विचार आरभ्यते। यत्र इग्लक्षणे गुणवृद्धी विधीयेते तत्र क्ङिति नेत्युपतिष्ठते, इत्यर्थकम्परिभाषारूपमेव 'क्ङिति चे'त्यस्तु; ततश्च 'पुगन्तलघूपधस्य चे'त्यत्रोपस्थितस्य क्ङिति नेत्यस्य सामर्थ्यात् 'येन नाव्यवधानमि'ति न्यायेनैकवर्णव्यवधानेऽपि भिन्नो भिन्नवानित्यादौ प्रवृत्त्या गुणनिषेधसिद्धेः, क्ङित्यत्रौपश्लेषिकाधिकरणबोधकसप्तम्याश्रयणेन क्ङिद्व्यवहितपूर्वस्य गुणो नेत्यर्थकस्य सार्वधातुकार्द्धधातुकयोरित्यत्रोपस्थितस्य 'क्ङिति चे'त्यस्याध्येता शयितेत्यादावप्रवृत्त्यावतरणमस्तु इतम्; परिभाषारूपत्वाभावेऽपि निषेधशास्त्रस्य निषेध्यापेक्षायां यावन्ति निषेध्यशास्त्राणि तावन्ति 'क्ङिति चे'ति शास्त्राणि जातानि, ततश्चेग्लक्षणत्वेन 'पुगन्ते'तिगुणस्यापि निषेध्यत्वेन तदर्थोपप्लुतस्य क्ङिति चे'त्यस्यान्यत्राचारितार्थ्यात्सामर्थ्यादेकवर्णव्यवधानेऽपि प्रवृत्त्या भिन्नमित्यादौ दोषाभावेन परसप्तम्याश्रयणात् अवतर-

---

मत्वं तु कार्यानुभवकर्त्तृनिमित्तकार्यित्वं यद्यपि पर्याप्त्या यकारे तथाप्यपर्याप्त्या योत्तराकारेऽप्यस्ति, तस्य निमित्तत्वेनानाश्रयणे 'द्विर्वचनेऽची'त्यस्याप्रवृत्त्या गुणे अयादेशे यशब्दस्य द्वित्वे आययदिति केचित्-तच्चिन्त्यम्।

णासङ्गतिरेव; अथवा 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति सूत्रे क्नोः कित्त्वसामर्थ्यादुपधालक्षणस्यापि गुणस्य क्ङिद्व्यवहितपूर्वस्थानिकत्वाभावेऽपि निषेधो भवतीत्यर्थज्ञापनेन भिन्नमित्यादौ दोषाभावः, तावतापि निमित्तग्रहणस्य परिभाषायाश्चाश्रयणापेक्षया लाघवात्। न च धर्मिग्राहकमानेनोपधालक्षणस्य गुणस्यैव निषेधज्ञापनेन मृष्टो मृष्टवानित्यादौ वृद्ध्यापत्तिरिति वाच्यम्; उपधालक्षणस्य निषेध इत्यस्यैव लाघवाज्ज्ञापनेनोभयोर्निषेधसिद्धेः, उपधालक्षणस्येत्यस्योपधास्थानिकस्येत्यर्थः। 'क्ङित्यजादौ वेष्यत' इत्यत्र क्ङित्यचीत्येको योगः, वेत्यपरः, तत्राजादौ क्ङिति वृद्धिर्भवतीति पूर्वस्यार्थः, सा च वेत्यपरस्यार्थः, 'मृजेर्वृद्धि'रित्यनेन सिद्धे क्ङिति चेदजादावेवेति नियमेन मृष्टइत्यादौ दोषाभावाच्च।

केचित्तु—कित्वसामर्थ्यादेकवर्णव्यवधानेऽपि निषेधस्य प्रवृत्तिरिति ज्ञाप्यते इत्याहुः—तन्न, भिन्नमित्यादेरसिद्धावपि भवत इत्यादौ गुणनिषेधापत्तेः। न च ज्ञापकसाजात्याद्धल्वर्णव्यवधानस्यैव सहनमिति वाच्यम, तावतापि अचैष्टामित्यादौ सिचस्सकारव्यवधानेऽपि ताद्रूप्यडितमादाय निषेधापत्तेः। सूत्र त्वक्षैषीदित्यादौ चरितार्थम्। धातुघटकस्यैव व्यवधायकस्य ज्ञापकसाजात्येन सहने तु प्रकृते दोषाभावेऽपि गुतेत्यादौ धात्वघटकतकारव्यवधानेन डारूपडितमादाय निषेधाप्रवृत्तिः। तकाररूपडिदव्यवहितपूर्वत्वमादाय तकारनिमित्तकस्य 'सार्वधातुकार्द्धधातुकयो'रितिविहितगुणस्य निषेधेऽपि डानिमित्तकलघूपधगुणस्य तु न निषेधः, तकारनिमित्तकनिषेधापेक्षया तस्य बहिरङ्गत्वेनासिद्धत्वात्। अत एव प्रेद्ध इत्यत्र गुणस्य बहिरङ्गत्वेन निषेधाप्रवृत्तिरित्युक्तं भाष्ये।

अन्ये तु—धर्मिग्राहकमानेन गुणनिषेधांशे व्यवधानसहनेऽपि वृद्धिनिषेधांशेऽव्यवहितस्यैव निषेधेनाचैष्टामित्यादौ सकारव्यवधानेन दोषाभावः; मृष्ट इत्यादौ तु न वृद्धिप्रसङ्गः, क्ङिति चेदजादावेवेति नियमेन वारणस्योक्तत्वात्; सामान्यतो हल्वर्णव्यवधान-

सहनेन गुतेत्यादौ तकारव्यवधानेऽपि निषेधप्रवृत्तिरित्याहुः।

अथैवं सति अगुपीदित्यादावचैष्टामित्यत्रैव सिचस्सकारव्यवधानात्तिप्निमित्तकनिषेधाप्रवृत्त्या सिचं निमित्तीकृत्य निषेधे कर्त्तव्ये सिच्तिबुभयनिमित्तकवृद्धेर्बहिरङ्गतयाऽसिद्धत्वेन तस्याप्यप्रवृत्त्या वृद्ध्यापत्तिः, तद्वारणाय वृद्ध्यंशेऽपि वर्णव्यवधानस्य सहनीयतयाऽचैष्टामित्यादौ निषेधापत्तिः, तदर्थं धातुघटकत्वस्य व्यवधायके निवेशेऽगुपीद् गुतेत्यादेरसिद्ध्यापत्तिः। न च निमित्तग्रहणेऽपि एकनिमित्तकनिषेधापेक्षयोभयनिमित्तकवृद्धेर्बहिरङ्गत्वेनासिद्धतया निषेधाप्रवृत्त्याऽगुपीदिति भाष्यप्रयोगासङ्गत्या बहिरङ्गपरिभाषाया अनित्यत्वादप्रवृत्तिर्वाच्या, ममाप्यनित्यत्वादप्रवृत्त्या सिचस्सकाररूपनिमित्तमादायैव निषेधसिद्धिरिति गुणांश एव सामान्यहल्वर्णव्यवधानसहनेनाऽक्षैष्टामित्यादौ दोषाभावः, गुतेत्यादावपि तकारव्यवधानेऽपि निषेधप्रवृत्तिरिति वाच्यं; निमित्तग्रहणपक्षमादायावतरणस्य सत्त्वात्। अस्तु वोभयांशे धातुघटकवर्णव्यवधानसहनम्, अक्षैष्टामित्यादौ धात्वघटकसकारव्यवधानान्निषेधाप्रवृत्तिः, अगुपीद्गुतेत्यादौ सिचतकारनिमित्तक एव निषेधः। तद्दृष्ट्या निषेध्यवृद्धिगुणयोर्बहिरङ्गासिद्धत्वं तु न नाजानन्तर्यनिषेधादिति न वाच्यमेव, कविरिवाचरति कवयतीत्यादौ क्विपमादाय निषेधापत्त्या रोरवीतीत्यत्र बहिरङ्गपरिभाषया निषेधाप्रवृत्तिपरभाष्यप्रामाण्याच्च नाजानन्तर्य इत्यस्याप्रवृत्तिस्वीकारात्। अथ सार्वधातुकार्द्धधातुकोपदेशकालिकलघूपधस्यैव क्ङ्गोः क्त्वसामर्थ्याद् भेत्तेत्यादिलक्ष्यानुरोधाच्च ग्रहणेन नागुपीद् गुतेत्यादौ दोषः, सिच्तासिप्रत्ययोत्तरं तत्र लघूपधत्वेऽपि सार्वधातुकतिबुपदेशकाले तस्याभावात्। रियति पियत्यसुश्रवदित्यादौ तादृशलघूपधत्वाभावेन गुणाप्राप्तावन्तरङ्गत्वादियङित्यादिसमाधानपरभाष्यासङ्गतिस्तु न, उपायस्योपायान्तरादूषकत्वात्। न च 'धातोः कार्यमुच्यमानमि'तिपरिभाषयेन्दति भिन्धीत्यादौ तिप्-

प्रत्यये परे नुमो विधानेन तदुपदेशकाले लघूपधत्वात्तदादाय नुमुत्तरमपि गुणापत्तिरिति वाच्यं; 'धातो'रितिपरिभाषाया 'न भूसुधियो'रितिज्ञापकेनानित्यत्वादित्संज्ञोत्तरमेव नुमो विधानेनादोषात्, नित्यत्वे वा लावस्थायामेव नुमः प्रवृत्तौ सार्वधातुकोपदेशकाले लघूपधत्वाभावस्य सत्त्वाच्च। तोतोर्त्तीत्यादौ तुर्वीधातोर्यङ्लुकि 'राल्लोप' इतिप्रवृत्त्युत्तरमेव लघूपधत्वेन गुणो न स्यादिति तु न, यङ्लुकश्छान्दसत्वेन तत्र दृष्टानुविधानस्यैव सत्त्वेनापत्त्यभावात्। नन्वेवमपि सीदादेशात्पूर्वं सद्धातौ प्रत्ययोपदेशकालिकलघूपधत्वस्य सत्त्वेन तदादायादेशोत्तरं गुणापत्तिदुर्वारेति चेत्—न, प्रत्ययोपदेशकाले यो लघुस्तस्योपधाभूतस्य गुणो भवतीत्यर्थेनापत्त्यभावात्। यत्तु—भीधातोर्घञर्थे के भियः तस्मादाचारक्विबन्ताद्वनिपि अल्लोपयलोपयोरल्लोपस्य स्थानिवद्भावेन लघूपधत्वमादाय गुणे भेवेति सिध्यति, प्रत्ययोपदेशकालिकलघूपधत्वाश्रयणे तु न स्यात्; न च 'न धातुलोप' इति निषेधान्नेष्यते तत्र गुणः, तस्य प्रत्याख्यानात्; न च तत्रैवारम्भप्रत्याख्यानयोः फलभेदवारणाय तस्यानभिधानमेवेति वाच्यम्, आचारक्विबन्तप्रकृतिककर्तृक्यबन्तप्रकृतिकाचारक्विबन्ताद्वनिपि कर्तृक्विब्निमित्तकयोरेवाल्लोपयलोपयोः सत्त्वेन वनिपो धात्वंशलोपनिमित्तत्वाभावेन तत्र फलभेदाभावात्; तस्मात् क्नोः कित्त्वेन गुणनिमित्तभूतप्रत्ययावयववर्णनिमित्तकसंयोगनिमित्तकगुरुसंज्ञापूर्वकालिकलघूपधत्वमादायापि गुणप्रवृत्तिरित्यस्यैव ज्ञापनेन गुतेत्यादौ दोषतादवस्थ्यमिति—तन्न, पुगन्तसाहचर्येण धातोरेव लघूपधस्य ग्रहणात्। 'दीधीवेवीटामि'त्यत्रेड्ग्रहणस्यापि तत्रैव तात्पर्यकल्पनात्।

केचित्तु—उक्तज्ञापकान्निषेधशास्त्रे स्वघटकसप्तम्यन्तपदप्रयोज्यविषयत्वाभावविशिष्टं यन्निषेध्यशास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयत्वं तदभाववान् यो वर्णस्तद्व्यवधानमेव सह्यत इत्यक्षैष्टामित्यादौ

'स्थण्डिलाच्छयितरि व्रते' इति निर्देशश्चास्या ज्ञापकः ।

---

निषेधो न, अगुपीत् गुतेत्यादौ च निषेध इत्याहुः । न च रोरवीतीत्यादौ प्रत्ययलक्षणेन यङो ङित्त्वमादाय गुणनिषेधः स्यादिति वाच्यम्; बहिरङ्गत्वेन निषेध्यस्यासिद्धत्वान्निषेधाप्रवृत्तेः, न लुमतेतिप्रत्ययलक्षणनिषेधात् , छान्दसत्वाच्च । नापि कविरिवाचरति कवयतीत्यादौ क्विपमादाय निषेधापत्तिः ; ङित्साहचर्येण धातुविहितकित एव ग्रहणात् , निषेध्यस्य बहिरङ्गत्वाच्च ।

केचित्सामान्यबुद्धयः—निमित्तग्रहणाभावे भिन्न इत्यादौ गुणस्य वारणमित्थं कुर्वन्ति, तथाहि—निषेधनिषेध्यशास्त्रयोः पृथग्वाक्यार्थबोधकत्वे एकस्मिन्नेव विषये एकेन विधेरपरेण निषेधस्य बोधने शास्त्रद्वयप्रामाण्याद्विकल्पापत्तिः, तदर्थं 'प्रकल्प्य चापवादविषयम्' इति न्यायेन निषेधविषयम्परित्यज्यान्यत्र विधातव्यं; ततश्च निषेधविषय एव व्यभिचारेण विधेये उद्देश्यतावच्छेदकव्यापकत्वविषयकस्य शास्त्रतात्पर्यस्य कल्पयितुमशक्यतया उद्देश्यतावच्छेदकसामानाधिकरण्यस्यैव तात्पर्यविषयत्वकल्पनेन निषेधस्थलातिरिक्तस्थलेऽपि क्वचिद्विधेयाभावे शास्त्राज्ञोल्लंघनाभावेन विभेदेत्यादौ गुणाभावेऽप्यसाधुत्वं न स्यादिति निषेधशास्त्रस्य विधिशास्त्रीयोद्देश्यतावच्छेदकसङ्कोचमात्रतात्पर्यकत्वं वाच्यम्; ततश्च 'पुगन्तलघूपधस्य चे'ति शास्त्रीयोद्देश्यतावच्छेदके सार्वधातुक आर्द्धधातुके च यद्यपि 'क्ङिति चे'ति शास्त्रघटकपदेन नञ्सहितेन शब्दमर्यादया क्ङिद्भेदस्य बोधनमशक्यम् प्रथमान्तप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतस्यैवासमस्तस्य नञो भेदबोधकत्वात्, तथाप्युक्तहेतोरेव सार्वधातुकार्द्धधातुकपदयोः क्ङिद्भिन्नसार्वधातुकार्द्धधातुकयोर्लक्षणाया एव ग्राहकत्वस्य 'क्ङिति चे'तिशास्त्रस्य वक्तव्यत्वेन ङित्किद्भिन्नसार्वधातुकार्द्धधातुकाव्यवहितपूर्वत्वविशिष्टस्य पुगन्तलघूपधयोरवयवस्येको गुणो भवतीत्यर्थः पर्यव-

सितः, येन नाव्यवधानन्यायेनैकवर्णव्यवधानेऽपि प्रवृत्तिः ; उद्देश्यतावच्छेदेन च विधेयान्वयः, इत्थं चौपश्लेषिकसप्तम्यामपि भिन्न इत्यादौ न दोष इत्यवतरणासङ्गतिरेवेत्याहुः—तन्न, उक्तैकवाक्यत्वेऽपि सैवैकवाक्यता प्रामाणिकी स्यात् यया पृथग्वाक्यार्थबोधे यादृशं लक्ष्यं भवति तादृशमेव लक्ष्यं स्यात्, अन्यादृश्यां प्रमाणाभावादतिप्रसङ्गाच्च । ततश्चाधिकरणसप्तम्यां पृथग्बोधे क्ङिदव्यवहितपूर्वत्वविशिष्टस्येको गुणवृद्धी नेत्यर्थेन भिन्न इत्यादौ गुणस्यैव लाभेनैकवाक्यत्वेऽपि तत्र गुणस्यैव सम्पादनीयत्वेन क्ङिदव्यवहितपूर्वत्वविशिष्टेग्भिन्नस्य सार्वधातुकार्द्धधातुकाव्यवहितपूर्वत्वविशिष्टस्य लघूपधावयवस्येको गुण इत्येवैकवाक्यतयार्थः स्यात् । स्वेच्छयैवैकवाक्यत्वे क्ङिदव्यवहितपूर्वत्वविशिष्टभिन्नसार्वधातुकाव्यवहितस्येको गुणः, क्ङिदघटिताङ्गावयवस्य सार्वधातुकार्द्धधातुकाव्यवहितपूर्वस्य लघूपधावयवस्येको गुण इत्याद्याकाराणामेकवाक्यतानामशक्यवारणापत्तिः । लक्ष्यानुरोधेनैकवाक्यताकरणन्तु लक्षणैकचक्षुषामशक्यमिति सुधियो विभावयन्तु । निमित्तग्रहणेऽप्युक्तप्रकारेण निषेध्यविध्येकवाक्यतया क्ङिद्भिन्नसार्वधातुकार्द्धधातुकयोर्गुण इत्यर्थेनाध्येतेत्यादौ न दोष इत्याशङ्काया अप्युक्तप्रकारेणैव समाधानम्बोध्यम् ।

कुङ्धातोः प्रकृतिगतङित्त्वमादाय ङित्त्वप्रयुक्तकार्यसिद्धौ कुटादौ पाठात्, दीधीङ्वेवीङ्धातोर्धातुगतङित्त्वमादाय गुणवृद्ध्योरभावसिद्धौ 'दीधीवेवीटामि'त्यनेन तयोर्गुणवृद्धिनिषेधात्, शीङो ङित्त्वमादाय शयित इत्यादौ गुणनिषेधापत्तेर्दुरुद्धरत्वेन तत्प्रकृतिकसेट्निष्ठाया निष्ठाशीङित्यादिना कित्त्वाभावविधानस्य वैयर्थ्याच्च सार्वधातुकार्द्धधातुकप्रकृतिगतङित्त्वमादाय गुणनिषेधाप्राप्तिकल्पनयाऽध्येताशयितेत्यादौ दोषाभावोपपादने तु स्मरणार्थकस्यैकोधातोरध्येतीत्यस्योपलक्षणमवेहि नागेशावतरणम् ।

उक्तज्ञापकादिना प्रकृतिभिन्नस्यैव ङितो ग्रहणेन तत्साह-

ऊर्णुनविपतीत्यादिसिद्धये 'कार्यमनुभवन्नि'ति । अत्र हि द्विर्वचनेऽची'ति नुशब्दस्य द्वित्वम् । अन्यथा 'सन्यङो'रित्यस्य षष्ठ्यन्तत्वात्सन्नन्तस्य कार्यित्वेन इसो द्वित्वनिमित्तत्वाभावा-त्तत्प्रवृत्तिर्न स्यात् ।

वस्तुतः समवायिकरणनिमित्तकारणयोर्भेदस्य सकललोकतन्त्रप्रसिद्धतया तस्य सूत्रेनाश्रयणाभावेन नैषा ज्ञापकसाध्या । अतएव हिः प्रयुक्तः । स हिस्तत्त्वेनानाश्रयणे हेतोः

---

चर्येण च कितो गितश्च तथाभूतस्यैव ग्रहणे स्वध्येतीत्यपि नावतरणमिति बोध्यम् ।

यद्यपि परिभाषाया उक्तरीत्या फलं नास्ति तथापि नागेशानुसारेण व्याख्यायते—'कार्यमनुभवन्नि'त्यस्य कार्यीयसाक्षादुद्देश्यताश्रय इत्यर्थः । कार्यीत्यस्योद्देश्यदलप्रविष्टषष्ठ्यन्तपदप्रयोज्यविषयताश्रय इत्यर्थः, तथा च स्वविशिष्टः स्वस्य निमित्तं नेत्यर्थः । स्वं कार्यम्, वैशिष्ट्यञ्च स्वीयसाक्षादुद्देश्यताविशिष्टस्वसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्वाश्रयत्व-स्वाश्रयघटितत्वान्यतरसम्बन्धेन । अन्यतरघटकाद्यसम्बन्धस्य फलमध्येता, द्वितीयस्य तु शयितेति बोध्यम् ।

ननु शयितरीतिनिर्देशात् 'असति बाधके प्रमाणानां सामान्ये पक्षपात' इति न्यायेन लाघवानुगृहीतेन सहकृतात्कार्यी निमित्तं नेत्येव ज्ञाप्यतामित्यत आह—ऊर्णुनविपतीत्यादिसिद्धये कार्यमनुभवन्नितीति । एतद्रूपसिद्धये विशिष्टं ज्ञापनीयमिति भावः ।

वस्तुतः समवायिकारणेत्यादि । ननु न्यायभिन्नतन्त्रे समवायानभ्युपगमेन समवायिकारणस्याप्रसिद्धिः प्लावत इत्यादौ दीर्घसमवायिनः परस्य निमित्तत्वाभावे दीर्घस्य

प्रसिद्धत्वं द्योतयतीति तत्त्वम्। 'द्विर्वचनेऽची'त्यत्र भाष्ये ध्वनितैषा ॥ १० ॥

परनिमित्तकत्वाभावेन स्थानिवद्भावाभावेन लत्वानापत्त्या, आयसावित्यादौ नुमो वारणाय भाष्ये कृतस्य वृद्धिरूपैकादेशस्थानिवद्भावस्य वृद्धेः परनिमित्तकत्वाभावेऽसङ्गत्यापत्त्या च व्याकरणे समवायिनोऽपि निमित्तत्वाभ्युपगमेन, कार्यस्य शब्दात्मकतया तत्समवायिकारणत्वस्याकाश एव सत्त्वेन चेदमत्यन्तमसङ्गतमिति चेत्, अत्रोच्यते—नैयायिकवासनया समवायिकारणमित्युक्तम्। यन्नैयायिकेन समवायिकारणमुच्यते तस्य निमित्ताद्भेदः सकललोकतन्त्रप्रसिद्ध इत्यर्थः, कार्यस्थानिनो निमित्ताद्भेदः सकललोकतन्त्रप्रसिद्ध इति यावत्। 'अचः परस्मिन्नि'त्यत्र परनिमित्तो योऽजादेश इत्यस्य न परं निमित्तकारणं यस्येत्यर्थः, अपि तु परं नियमेन पूर्वकालिकम् यस्मादित्यर्थ इति न 'कार्यमनुभवन्' व्याकरणे निमित्तम्। अतएव शब्दस्य नित्यत्वात्तम्प्रति समवायिकारणत्वमसम्भवीत्यपास्तम्, तात्पर्यान्तरस्य प्रदर्शितत्वात्।

द्विर्वचनेऽचीत्यत्र भाष्ये ध्वनितैषेति। तत्र हि—आंच किं? जेघ्रीयते देध्मीयते इत्युक्तम्। 'द्विर्वचनेऽची'तिसूत्रेऽज्ग्रहणाभावे द्वित्वनिमित्तनिमित्तकोऽजादेशः 'ई घ्राध्मोरि'तिविहित ईकारः तस्य निषेधे प्रथमं घ्राशब्दस्यैव द्वित्वेऽभ्यास एकारश्रवणानापत्तिः; अज्ग्रहणे तु द्वित्वनिमित्तस्य यङोऽच्त्वाभावाद् 'द्विर्वचनेऽची'त्यस्याप्रवृत्तावीत्वे कृते द्वित्वे रूपं सिद्ध्यतीति तद्भावः।

अत्र कथमेतस्या ध्वननमिति विचार्यताम्। येन विना यदनुपपन्नं तेन तस्य कल्पनमेव तेन तस्य ध्वननमित्युच्यते। न प्रकृते 'कार्यमनुभवन्नि'ति परिभाषां विना भाष्ये काप्यनुपपत्ति-

रस्ति यया सा कल्प्येत इति न ध्वननम् ।

केचित्—अध्वनितेति छेदं कुर्वन्ति, तत्त्वत्यन्तमसमञ्जसम् । अध्वनितेत्यस्य हि अस्या ध्वननाभाव इत्यर्थः, ध्वननाभावस्त्वत्रैव 'इकोयणची'त्यादावपि समान इति 'द्विर्वचनेऽची'ति-विशेषोपादानासङ्गतिः ।

अन्ये तु—'नटभार्यावद्व्यञ्जनानि भवन्ती'तिन्यायाद् 'एकाज्द्विर्वचन'न्यायाच्च द्वितीयाच्पूर्वव्यञ्जनसहितस्यैव प्रथमैकाचो ध्रायित्यस्य द्वित्वेन शयितेत्यत्रेकारद्वारा शीधातोरिव अवयवद्वारा यशब्दस्य कार्यानुभवकर्तृत्वविशिष्टकार्यित्वेन द्वित्वनिमित्तत्वाभावेनाऽज्ग्रहणाभावेऽपि द्विर्वचन इत्यस्याप्रवृत्तौ पूर्वमीत्वे पश्चाद्द्वित्वे रूपसिद्धावज्ग्रहणप्रयोजनकथनासङ्गत्यापत्त्याऽस्या अभाव एव ध्वनित इत्याहुः—तन्न, तावतापि ध्वनितैषेतिग्रन्थासङ्गतिः । नहि ध्वनितेत्यस्य अस्या अभावो ध्वनित इत्यर्थः शब्दमर्यादया लभ्यते । शयितरीतिज्ञापकसाजात्यादपि तत्रैवावयवद्वारककार्यानुभवकर्तृत्वस्वीकारो यत्रावयवे पर्याप्त्या कार्यानुभवकर्तृत्वम्, न तथा प्रकृते; यकारमात्रपर्याप्तत्वाभावात्, 'स्वरान्तरे व्यञ्जनान्युत्तरस्ये'ति मतेऽपर्याप्त्यापि यकारस्य कार्यानुभवकर्तृत्वाभावाच्च । अत्रोच्यते—'शयितरी'तिनिर्देशस्य कार्यी निमित्ततया नाश्रीयत इत्येतावन्मात्रकल्पनेनाप्युपपत्तौ कार्यमनुभवन् कार्यीति विशिष्टकल्पनायामसामर्थ्यादप्रामाणिकीयमित्याह—ध्वनितैषेति, विशेषणविशिष्टैषात्र ध्वनितेत्यर्थः । कार्यी निमित्ततया नाश्रीयत इत्येतावन्मात्रे 'शयितरी'त्यादिनिर्देशाज्ज्ञापिते तु यङः 'स्वरान्तरे व्यञ्जनान्युत्तरस्ये'तिन्यायेन द्वित्वरूपकार्यानुभवकर्तृत्वाभावेऽपि 'सन्यङो'रित्यस्य षष्ठ्यन्तत्वाद्धुद्देश्यदलप्रविष्टषष्ठ्यन्तपदप्रयोज्यविषयतारूपकार्यितया ऊर्णुनविषतीत्यत्र नन इव नत्वेन द्वित्वनिमित्तत्वाभावेऽज्ग्रहणाभावेऽपि दोषाभावेन तत्र तत्फलदानपरभाष्येण 'शयितरी'तिनिर्देशेन

च विशेषणविशिष्टा ज्ञाप्यत इति ध्वन्यते, न तु कार्यी निमित्ततया नाश्रीयत इत्येतावन्मात्रं ज्ञाप्यते इत्याशय इति । न च द्वित्वनिमित्ततायाः ईत्त्वनिमित्ततायाश्च यङोऽकारे सत्त्वेनाज्ग्रहणेऽपि द्वित्वनिमित्ताश्रयोऽजकारः तन्निमित्तकमीत्त्वं नैव भविष्यतीति भाष्यमसङ्गतमेवेति वाच्यं, द्वित्वनिमित्ताश्रयीभूताऽच्पर्याप्तनिमित्तताकादेशो नेत्यर्थावश्यकत्वस्योपपादितत्वात् ।

गुरवस्तु—परिभाषा अस्माद्भाष्याद्ध्वनिता, परिभाषाया अभावेऽज्ग्रहणेऽप्यत्र दोषसत्त्वेनाऽज्ग्रहणप्रयोजनकथनासङ्गत्या परिभाषायास्सत्त्वं प्रतीयते; तथाहि—परिभाषाया अभावे उद्देश्यदलप्रविष्टविषयतामात्रस्य निमित्ततापदेन ग्रहणात् यङन्ततदादित्वावच्छिन्नविषयतारूपनिमित्तताया घ्राथपर्याप्ताया घ्राऽऽकारे सत्त्वम्, 'ईघ्राध्मो'रित्यत्र 'अलोऽन्त्यस्ये'त्युपस्थित्या अन्त्याल्त्वावच्छिन्नविषयतायाश्च पर्याप्त्यैवाकारे सत्त्वमिति द्वित्वनिमित्ताश्रयोऽच् आकारः, तत्पर्याप्ताल्त्वावच्छिन्ना निमित्तता, तादृशनिमित्ततानिरूपकमीत्वं न स्यादिति नाऽज्ग्रहणस्य फलमिति भाष्यासङ्गतिः, सत्यान्त्वस्यां घ्राशब्दस्य कार्यानुभवकर्तृत्वविशिष्टकार्यितया निमित्तत्वाभावेनाकारेऽपर्याप्त्यापि द्वित्वनिमित्तताया अभावादज्ग्रहणे न दोष इत्याहुः । न च 'द्विर्वचनेऽची'त्यत्राधिकरणसप्तम्या द्वित्वनिमित्ताश्रयीभूतो योऽच् तदव्यवहितपूर्वस्याच आदेशो नेत्यर्थेन द्वित्वनिमित्ताश्रय आकारः तत्पूर्वस्य कार्याभावेन परिभाषाऽभावे नाज्ग्रहणेऽपि दोष इति गुरुमतेऽप्यनिस्तार इति वाच्यम्, अधिजगे जग्ल इत्यादौ द्वित्वनिमित्ताश्रय एकारः तदव्यवहितपूर्वस्याचो गाङादेशस्याऽत्वादेशस्य वाऽभावापत्तौ रूपासिद्ध्या निमित्तसप्तम्या एवाश्रयणीयत्वाद् गाङादेशस्य लावस्थायामेव प्रवृत्त्या आत्वस्य चानिमित्तकत्वेनाज्निमित्तकत्वाभावेन तथा सति दोषाभावात् । न चाधिजग इत्यत्र लावस्थायामेव गाङादेशस्य प्रवृत्त्या तदा द्वित्व-

ननु प्रणिदापयतीत्यादौ दारूपस्य विधीयमाना घुसंज्ञा

निमित्ताचः पूर्वत्वस्येडोऽभावः, एवं जग्ल इत्यादावप्यात्वस्यानैमित्तिकत्वेनैशादेशात्प्रागेवोपदेशकाले प्रवृत्त्या स्थानिन एकारस्य द्वित्वनिमित्ताचः पूर्वत्वाभाव इति द्वित्वनिमित्तताश्रयीभूताजव्यवहितपूर्वो योऽच् तस्यादेशो नेत्यर्थकं 'द्विर्वचनेऽची'त्यस्य परसप्तम्यामप्यप्रवृत्त्या न दोष इति वाच्यम्; अत्रास्ति पक्षद्वयं निषेधपक्षः स्थानिवद्भावपक्षश्च, आद्ये दोषाभावेऽप्यन्त्ये दोषोद्धारस्य निमित्तसप्तमीं विना अशक्यत्वात्, द्वित्वनिमित्तताश्रयीभूतो योऽच् तदव्यवहितपूर्वो योऽजादेशः स स्थानिवदिति हि तत्पक्षे परसप्तम्याश्रयणेऽर्थः स्यात्, आदेशस्य च द्वित्वनिमित्ताच्पूर्वत्वस्य सत्त्वात्; जग्मतुरित्यादौ मकारव्यवधानेन लोपरूपादेशस्थानिभूतस्याचो द्वित्वनिमित्तताश्रयाजव्यवहितपूर्वत्वाभावेन लोपस्य निषेधाभावात्पूर्वं लोपे द्वित्वानापत्तेश्च, चक्रतुरित्यादावव्यवहिते प्रवृत्तिसम्भवेनैकवर्णव्यवधानसहने मानाभावादित्यलम्।

यदि च द्वित्वनिमित्तताश्रयीभूतोऽच्प्रत्ययघटक एव गृह्यते प्रत्यय इति वक्तव्यमिति 'द्विर्वचनेऽची'तिसूत्रस्थभाष्यादिति मन्यते तदा धाऽऽकारस्य प्रत्ययघटकत्वाभावाद्विशेषणांशध्वननपक्ष एव श्रेयानिति लभ्यते। एतत्परिभाषालभ्यमेव प्रत्ययग्रहणमिति केचित्।

ननु नुनावयिषतीत्यादौ नु इ इस इति स्थिते अपर्याप्त्या द्वित्वनिमित्तताया णिच इकारेऽपि सत्त्वेन तत्पर्याप्तनिमित्तताकवृद्ध्यावादेशयोः पूर्वमप्रवृत्तौ नुशब्दस्यैव द्वित्वेन रूपसिद्धौ 'णिच्यच आदेशो ने'ति ज्ञापनं निष्फलमिति चेत्—न, नुइइस इति समुदायस्यापि नुशब्दद्वारा कार्यानुभवकर्तृत्वविशिष्टकार्यित्वेन निमित्ततयाऽनाश्रयणादिकारे निमित्तताया अपर्याप्त्याप्यभावात्। परिभाषाऽभावे तु ज्ञापनं व्यर्थमेवातएव ज्ञापकपरभाष्यादेषा ध्वनितेति बोध्यम्॥ १०॥

दापेर्न स्यादत आह—

दापेर्न स्यादिति—दाप्धातोर्न स्यादित्यर्थः, दारूपत्वाभावादिति भावः। ननु दाप्घटकदाशब्दस्य दारूपत्वेन तस्यैव घुत्वेन णत्वमस्त्विति चेत्—न, सूत्रे दाधेतिविशिष्टरूपोपादानसत्त्वेनार्थवत्परिभाषोपस्थित्यार्थवतोरेव दाधोर्ग्रहणेन दाप्घटकदारूपस्य घुत्वाप्राप्तेः, 'आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वमि'त्यनेन दाप्शब्दस्यैवार्थवत्त्वात्।

नन्वत्र प्रमाणाभाव इति चेत्, अत्र केचित्—शब्दानित्यत्ववारणाय पुग्विधायकस्य अर्थबोधनायादन्तस्योच्चारणप्रसङ्गे पान्तस्योच्चारणं कर्तव्यमित्यर्थस्यैव वक्तव्यतयाऽर्थबोधनेच्छयोच्चरितत्वस्यैव चार्थवत्त्वरूपतया दाप्शब्दस्यैवार्थवत्त्वं न दाशब्दस्य, अर्थबोधनेच्छया तदनुच्चारणादित्येतत्फलितोऽयं न्याय इत्याहुः—तन्न, अर्थबोधनाय रामेत्यस्योच्चारणप्रसङ्गे रामसित्यस्योच्चारणं कर्त्तव्यमित्यस्यापि स्वादिसूत्रेण बोधनात् राम इत्यादावपि प्रकृतिभागस्यानर्थक्यापत्तेः। तस्माच्छास्त्रेण साधुत्वमात्रमुच्यते; अर्थबोधकता तु अन्वयव्यतिरेकाभ्यामेवावगम्यते, तयोश्च दाशब्देऽपि सत्त्वात्।

परे तु—दाप्शब्दघटको दाशब्दो[1]ऽनर्थकः, दाशब्दावयवत्वे

१ दाप्शब्दघटको दाशब्द इत्यादि। ननु दाशब्दावयवाघटितत्वादित्यस्य दाशब्दावयवघटितत्वप्रतियोगिकाभावोऽर्थः, दाशब्दावयवघटितत्वसामान्याभावो वा? आद्ये उभयाभावमादाय दाप्शब्दे व्यभिचारः। न च तत्र दाशब्दावयवत्वविरह इति वाच्यम्, दाशब्दे स्वावयवत्वस्य व्यपदेशिवद्भावेन पकारे आद्यन्ताविति शास्त्रेण गत्त्वे दाप्शब्दे दाशब्दावयवत्वस्यार्थसमाजसिद्धत्वात्, अन्यथा दाशब्दावयवाघटितत्वदलस्यैव वैयर्थ्यात्। द्वितीये स्वरूपासिद्धिरिति चेत्—न, दाशब्दघटकतावच्छेदकधर्मावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकधर्म-

सांत दाशब्दावयवाघटितत्वात्, दाशब्दावयवदकारवदित्यनुमानलब्धोऽयं न्याय इत्याहुः।

'प्रणिदापयति प्रणिधापयतीत्यत्रापि नैतौ दाधावर्थवन्तौ किन्तर्हि दाप्धापावि'तिभाष्येणापि लभ्यते उक्तार्थ इति भाष्यतत्त्वविदः।

बोधकता स्वाश्रयावयवाघटितापर्याप्ता, बोधकतात्वात्, रामशब्दनिष्ठबोधकतावदित्यनुमानमप्यागमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वं बोधयति।

किञ्च 'स्यसिच्सीयुडि'ति सूत्रे भावकर्मवाचिनि प्रत्यये परे ये स्यादय इत्यर्थे स्यसिच्तासयो विशेषिताः सीयुड्विशेषितः इति भाष्य उक्तं तदप्यागमसमभिव्याहारे आगमिनोऽर्थवत्त्वाभावे

वत्त्वस्य तदर्थत्वात्। अत्र घटकत्वं व्यपदेशिवद्भावानतिदिष्टं ग्राह्यम्, तेन दाशब्दघटकतावच्छेदको धर्मः दत्वम् आत्वम्, न तु दात्वम्, तदवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकदात्वस्य पक्षे सत्त्वान्नासिद्धिः। दाप्शब्दे व्यभिचारवारणाय च दाशब्दघटकतावच्छेदकधर्मविशिष्टधर्मवत्त्वं विवक्षणीयम्, वैशिष्ट्यञ्च स्वावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्व-स्वसामानाधिकरण्योभयसंबन्धेन। दाप्पदत्वे च धर्मे स्वसमानाधिकरण्यविरहान्न व्यभिचारः। दाशब्दावयवपकाराघटितत्वादिति पाठे तु न कोऽपि कोलाहल इत्यलम्।

१ बोधकता स्वाश्रयेत्यादि। न चात्र पक्षतावच्छेदकहेत्वोरैक्ये व्याप्तिग्रहदशायाम् पक्षतावच्छेदकीभूतहेतौ साध्यसामानाधिकरण्यसिद्ध्या सिद्धसाधनं दोष इति वाच्यम्, हेतुः साध्यसमानाधिकरण इति व्याप्तिग्रहस्य पक्षः साध्यवानित्यनुमितितो भिन्नाकारत्वात्, समानाकारकसिद्धेरेवानुमितिप्रतिबन्धकत्वात्। न च प्राचीननये हेतुमान् पक्ष इत्याकारकत्वाश्रयस्यैवोपनयत्वेन प्रकृते उद्देश्यतावच्छेदकविधेययोरैक्येन शाब्दबोधानुपपत्तिरिति वाच्यम्, नवीनमते विधेयांशेऽधिकावगाहिनः शाब्दबोधस्योपगमेन पक्षतावच्छेदकहेत्वोरैक्येऽपि साध्यव्याप्यहेतुमान् पक्ष इत्याकारकोपनयजन्यशाब्दबोधस्य नानुपपत्तिरित्याशयात्।

एव सङ्गच्छते, भाविपीष्टेत्यत्र हि सीयुट्समभिव्याहारे लिङोऽनर्थकत्वेन भावकर्मवाचित्वाभावेन सीयुटो भावकर्मवाचिप्रत्ययपरत्वासम्भवात्। अर्थवत्त्वे तु सीयुटस्तादृशप्रत्ययपरत्वसत्त्वेनाविशेषितोक्तिरसङ्गता स्यात्। न चैतज्ज्ञाप्यात् प्रत्ययत्वस्यैव सीयुट्समभिव्याहारे लिङि अभावः कल्प्यतामिति वाच्यं, प्रत्यय इति महासंज्ञया अर्थबोधकत्वे सति प्रत्ययपदवत्त्वस्यैव प्रत्ययत्वरूपतया तदपेक्षयार्थवत्त्वस्य लघुत्वेन कल्पनागौरवात्, प्रत्ययत्वार्धधातुकत्वादेर्विशिष्ट एव सत्त्वकल्पने तु प्रत्ययार्धधातुकसंज्ञाविधायकशास्त्रस्य साक्षाद्बाधापत्तेश्च। अवयवः स्वनिरूपकपूर्वत्वाभाववान्, अवयवत्वात्, रामाद्यवयवरेफवत् इत्यनुमानेनाविशेषितोक्तिः सङ्गतेति चेत्—न, 'नद्यै कुमार्यै' इत्यादावाटः एपूर्वत्वाभावापत्तौ वृद्ध्यनापत्तेः,तदनुमानस्यानतिदिष्टावयवविषयत्वात्।

किञ्च 'उरयपदान्तादि'तिसूत्रस्थमपि भाष्यम् उक्तार्थे प्रमाणम्। तत्र हि—अपदान्तादिति किं? का उस्रा कोस्रा; अपदान्तादिति शक्यमकर्तुम्, कस्मान्न भवति का उस्रा कोस्रा? अर्थवद्ग्रहणेनानर्थकस्येति; नैषा परिभाषेह शक्या विज्ञातुम्, इह हि दोषः स्याद्भिन्द्युरित्युक्तम्। यासुडागमसमभिव्याहृतस्योसोऽनर्थकत्वादेव हि दोषः स्यादिति सिद्धोऽयं न्यायः।

न चास्य न्यायस्याश्रयणे फलाभावः, भूयादित्यत्र तकारस्याप्यन्यथा अर्थवत्त्वेन प्रत्ययत्वाद्धल्ङ्यादिलोपापत्तेः। न च हलः परत्वाभावः, संयोगादिलोपस्यासिद्धत्वेन तस्यापि सत्त्वात्। यदि च ङ्याप्साहचर्यात् तिङन्वयव एव हल् गृह्यते, तस्मादेव प्रत्ययविधायकशास्त्रघटकपदप्रयोज्याव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रकारताश्रयान्त एव वा गृह्यते इति न दोष इत्युच्यते, तर्ह्यधिपीध्वमित्यत्रेड्विशिष्टस्येणन्ताङ्गत्वेन ततः परस्य षीध्वमो धकारस्य 'इणः षीध्वमि'त्यनेन मूर्धन्यापत्तिर्दोषः। स्वीकृते च तस्मिन् षीध्वमोऽनर्थकत्वान्न दोषः। न च 'विभाषेटः' इत्यत्रेडभि-

भस्यैवेणस्सम्भवेनार्थाधिकारादत्रापि तस्यैव ग्रहणमिति न दोषः, अतएवेड्भिन्न एवेणिह गृह्यत इति मते स्थिति वक्ष्यते इति वाच्यम्; अर्थाधिकारस्य हि लाघवादेवानुरोधः, उत्तरत्रावश्याश्रयितव्यार्थापेक्षयान्यार्थस्य पूर्वत्राश्रयणे उभयार्थोपस्थित्योरुभयविधतात्पर्यज्ञानयोः शाब्दबोधकारणतायां गौरवात्, प्रकृते चेण्पदेनेण्पदवत्त्वेनैवेट इकारस्यापि ग्रहणेन भिन्नोपस्थित्यादेरभावेन गौरवाभावेनार्थाधिकारानुरोधे बीजाभावात्। यदि च लुङ्लिटोर्धकारस्य मूर्धन्यादेशे इड्भिन्नस्यैवेणस्सम्भवेन तत्साहचर्यात् षीध्वंविषयेऽपीड्भिन्नस्यैवेणो ग्रहणेनादोषो विभाव्यते, तदा रामाणामित्युदाहर्त्तव्यम्। अत्र उक्तन्यायाभावे आममान्नस्यापि प्रत्ययत्वेन ततः पूर्वस्य रामन्नित्यस्यान्नन्ताङ्गत्वेन परनिमित्तकत्वेन बहिरङ्गतया नामीत्यस्यासिद्धत्वेनाल्लोपो न इत्यल्लोपापत्तिः। तत्सत्त्वे तु नुड्रहितस्यार्थवत्त्वाभावेनाप्रत्ययत्वेन ततः पूर्वस्य भत्वाभावान्न दोषः। अकारमादाय जातो नुड् अकारविनाश प्रत्यनिमित्तं स्यादिति नाशङ्कनीयम्, तथा सति 'नामी'ति दीर्घस्याप्यभावापत्तौ 'नामी'त्यस्य वैयर्थ्यापत्त्या तत्सामर्थ्यात् नुट्शास्त्रीयाभ्यनुज्ञावाक्ये सन्निपातपरिभाषाप्रयुक्तसङ्कोचाभावस्य कल्पनीयत्वात्। अभ्यनुज्ञावाक्यविचारश्च वक्ष्यते। 'नामी'त्येतत्सूत्रप्रयुक्त एव निमित्तविघातस्तत्सामर्थ्यात् सह्यत इत्युच्यते चेत्-नेदमपि फलम्। न च पूतक्रतुशब्दादाचारक्विबन्तात्कर्तरि क्विपि तुकि पूतक्रतुदित्यत्रागमरहितस्याप्यर्थवत्त्वप्रातिपदिकत्वादेस्सत्त्वेन 'पूतक्रतोरै चे'त्यस्य प्राप्तस्याभाव एव फलं, न्यायस्वीकारे पूतक्रतुमात्रस्यानर्थक्यात् पूतक्रतुदित्यस्यानिर्दिश्यमानत्वान्न दोष इति वाच्यम्; विचारासहत्वात्। तथाहि—स्वीकृतेऽपि न्यायेऽत्र 'सूत्रप्रवृत्तिर्दुर्वारा पूतक्रतुशब्दादुपस्थितार्थस्य पूतक्रतुशब्दे एव विशेषणत्वेन अर्थवत्पूतक्रतुशब्दावयवनिर्दिश्यमानस्यैकारादेशः पूतक्रतुशब्दात् ङीपित्यर्थस्यैव न्याय्य-

तयार्थवत्पूतक्रतुशब्दो यदागमन्यायेन पूतक्रतुदिति, तदवयव-निर्दिश्यमानः पूतक्रतुशब्दस्तस्यादेशप्राप्तेः, तकारान्तान्ङीपश्च प्राप्तेः। अत्र केचित्—सिद्धान्ते लक्ष्यानुरोधादत्र निर्दिश्यमान एवार्थवतोऽन्वयेन प्रकृते तस्य तत्त्वाभावादादेशस्य, तत्सन्नियोग-शिष्टत्वेन ङीपश्चाप्राप्तेः न्यायानाश्रयणे तथान्वयेऽपि सूत्रप्राप्ते-र्दुर्वारत्वेन फलं सम्यगेवेत्याहुः—तन्न। न हि परिभाषान्तरेणेवा-नयार्थवदुपस्थाप्यते येन तस्य यथेष्टमन्वयः स्यात्, अपि तु शब्दार्थयोः शब्दशक्यतयोपस्थितार्थस्य त्यागाभावमूलिकया तया पूतक्रतुशब्दादुपस्थितार्थस्य तदुपस्थाप्यपूतक्रतुशब्द एवान्वयः स्यात्; समानपदश्रुतेः, तथैव सर्वत्रान्वयाच्च; न तु निर्दिश्यमाने। किन्तु ङीपैकारादेशयोः सन्नियोगशिष्टतया साहित्यविशिष्टयोरेव तयोर्विधानम्। समानदेशत्वविशिष्टसमानकालत्वमेव च साहि-त्यम्। तच्चाव्यवहितपूर्वापरीभावेनैव तयोरवस्थाने उपपद्येत। प्रकृते च तद्बाधेन सूत्राप्रवृत्तिः सिद्धान्ते। आदेशो हि निर्दिश्य-मानस्य, प्रत्ययश्च प्रातिपदिकत्वनिमित्तकः पूतक्रतुच्छब्दादिति साहित्यबाधः स्पष्टः। न्यायाभावे तु निर्दिश्यमानस्यापि प्राति-पदिकत्वसत्त्वेन तत्रैवोभयोस्समावेशसम्भवेन सूत्रप्रवृत्तेः फल सम्यगिति तत्त्वम्।

परे तु—विग्रहार्थनिष्ठविशेष्यतानिरूपितपूतक्रतुनिष्ठप्रकार-ताप्रयोजकत्वरूपोपसर्जनत्वान्नात्र ङीपः प्रसक्तिः, अनुपसर्जना-धिकारीयत्वात्सूत्रस्येति नेदं फलम्।

ननु किमिदमुपसर्जनत्वं? न इतरार्थनिष्ठविशेष्यतानिरूपि-तप्रकारताप्रयोजकत्वं तत्, घटत्वादेरपि घटांशे प्रकारतया तत्प्र-योजकघटादिपदानामपि तत्त्वापत्तेः। नापि इतरत् यत्पदं तदर्थ-निष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वं तत् घटस्येतरपदार्थ-त्वाभावेन लोपाभावादिति सम्यक्, क्रियान्तरस्थलेऽपि क्रियापद-योपहारेण 'यःशिष्यते' इति न्यायेन प्रकृतेरेव विशिष्टार्थकत्वेन

तत्रोपसर्जनत्वानापत्तेः । नापि इतरत्वमर्थान्वय्येव, प्रकारता चोपस्थितीयविशेष्यतासमानाधिकरणा गृह्यत इति घटादावति-व्याप्तेरनवकाशः, विशेष्यता चोपस्थितीया गृह्यत इति न घटोऽस्ती-त्यत्र अस्त्यर्थनिष्ठशाब्दबोधीयविशेष्यतामादायापि दुर्जनसन्तो-पसम्भवः; चरमविशेष्यता चोपसर्जनत्वेन विवक्षितपदप्रयोज्यैव गृह्यत इति नोदासीनविशेष्यतामादायापि वादिना विजेतव्यम् । नन्वेवमपि राजपुरुषतात्पर्यकतच्छब्दस्योपसर्जनत्वापत्तिर्वज्रलेपा-यते, पुरुषत्वावच्छिन्नोपस्थितीयविशेष्यतानिरूपितराजनिष्ठप्रका-रताया राजत्वनिष्ठोपस्थितीयप्रकारतानिरूपितविशेष्यतासमाना-धिकरणायाः प्रयोजकत्वस्य तच्छब्दे सत्त्वादिति चेत्, अत्र वदामः-शक्तिविशिष्टत्वमुपसर्जनत्वम् । वैशिष्ट्यञ्च स्वजन्योपस्थिति-जन्यशाब्दबोधजनकत्वेन तात्पर्यविषयत्व स्वविशिष्टविशेष्यता-प्रयोजकत्वोभयसम्बन्धेन । तत्र वैशिष्ट्यम् स्वजन्योपस्थितिनि-रूपितत्व-स्वविशिष्टशक्तिज्ञानाधीनोपस्थितीयविशेष्यतानिरूपित-प्रकारतासामानाधिकरण्योभयसम्बन्धेन । पुनर्वैशिष्ट्यं स्वभि-न्नत्व स्वसमानाधिकरणत्वोभयसम्बन्धेन । घटशब्दस्थले उप-स्थितीयविशेष्यतायास्तादृशप्रकारतासामानाधिकरण्यविरहान्नाति-व्याप्तिः । आचारक्विवन्तादिस्थले प्रथमशक्तिज्ञानाधीनोपस्थिति-विशेष्यताया द्वितीयशक्तिमादाय तादृशप्रकारतासामानाधिकर-ण्योपपादनान्नाव्याप्तिः । न वा तादृशतच्छब्दे अतिव्याप्तिः, तत्र राजनिष्ठविशेष्यतानिरूपकोपस्थितिजनकशक्ते राजनिष्ठप्रकारता-निरूपकोपस्थितिजनकशक्तेश्चैक्यात् । अथ परस्मैपदं परस्मैभा-षेत्यत्र 'वैयाकरणाख्यायां चतुर्थ्याः' इत्यस्योदाहरणभूते परशब्द-स्योपसर्जनत्वापत्तिः, परत्वावच्छिन्ननिरूपितशक्तिज्ञानाधीनोप-स्थितीयविशेष्यतायां सामासिकशक्तिज्ञानाधीनोपस्थितीयविशे-ष्यतानिरूपितप्रकारतासामानाधिकरण्यात्, तादृशविशेष्यताप्र-योजकत्वस्य च परशब्दे सत्त्वादिति चेत्—मैवं, शक्तिवैशिष्ट्य-

नियामकस्य स्वसमानाधिकरणत्वस्य स्थाने स्वपर्याप्त्यधिकरण-निष्ठचरमावयवतानिरूपकसमुदायपर्याप्तत्वस्य निवेशनीयत्वात्; प्रकृते सामासिकशक्तेः प्रथमशक्त्याश्रयपरशब्दचरमावयवकसमुदायपर्याप्तत्वाभावात्। न चैवं 'द्वाविच्छति द्वीयति द्वीयतेरप्रत्यये द्व इति प्राप्नोति स्वश्चेष्यते' इति 'तदोस्स' इतिसूत्रस्थभाष्यमसङ्गतं स्यात्, त्वदुक्तोपसर्जनत्वस्यैव सत्त्वेनात्वसत्वाप्रवृत्तेरिति वाच्यं, तस्यैकदेश्युक्तत्वस्य शब्देन्दुशेखरे प्रतिपादितत्वात्। नन्वेतद्भाष्यप्रामाण्यात् स्वेतरत्व-स्वान्तसमुदायघटकत्वोभयसम्बन्धेन स्वविशिष्टपदप्रयोज्यविशेष्यतानिरूपितप्रकारतासमानाधिकरणविशेष्यताप्रयोजकत्वमेवोपसर्जनत्वं भाष्यसम्मतम्, अत एवानुपसर्जनाधिकारस्य स्त्रीप्रत्यये तदन्तविधिज्ञापकतापरभाष्यं सङ्गच्छते, अन्यथा गौरादिशब्दादाचारक्विबन्तात् कर्त्तरि क्विपि ङीप्वारणाय चारितार्थ्यसम्भवे ज्ञापकत्वोक्तिरसङ्गता स्यात्; तादृशानामनभिधानं शेखरकारोक्तं तु न युक्तं, मदुक्तोपसर्जनत्वे पूर्वभाष्यसम्मते दोषाभावात्, निरुक्तभाष्यस्यैकदेश्युक्तत्वे प्रमाणाभावाच्चेति चेत्-इष्टत्वात्। शेखरकारेण तु इतरविशेषणतयोपस्थितस्योपसर्जनत्वव्यवहारदर्शनेन महासंज्ञया लौकिकार्थमाधारण्येन तथोक्तमिति दिक्। ततश्च शेखरमते पूतक्रतुदित्यस्योपसर्जनत्वेनैव ङीपो वारणसम्भवान्नागमसभिव्याहारे आगमविशिष्टस्यैवार्थवत्वमित्यस्य फलम्भवितुमर्हतीति चेत्, अत्रोच्यते—भूयास्तामित्यादौ न्यायाभावे तामित्यस्यापि प्रत्ययत्वेनेडापत्तिः, न्याये च तावन्मात्रस्यार्थवत्त्वाभावेनार्थवत्त्वे सति प्रत्ययपदवत्स्वरूपप्रत्ययत्वाभावान्न दोष इति, तदपि न सम्यक्, आर्द्धधातुकस्य प्रत्ययत्वेन तदाद्युपस्थित्या तदन्तविधावार्द्धधातुकान्तसदादिर्यो वलादिस्तस्येडागम इत्यर्थापत्त्या भूयास्तामित्यत्र धातोः पूर्वमिडापत्तिवारणाय धातोः परस्यार्द्धधातुकस्येत्यर्थो वाच्यः; तथा सति 'प्रत्ययग्रहणे चापञ्चम्ये'तिनिषेधान्न दोषः,

यासुटा व्यवहितत्वेन तांमात्रस्येडागमाप्रसङ्गात् ।

अथ आतोदित्यादावीकारान्तस्य गुणापत्तिस्तकारमात्रस्य कमत्यये परे, स्वीकृते च न्याये आगमरहितस्य तकारमात्रस्योक्त रीत्या प्रत्ययत्वाभावान्न दोष इति फलं युक्तम्; ईकारविधानसामर्थ्याद् गुणप्राप्तिस्तु न, अगुपीदित्यादौ श्रवणार्थन्तस्यावश्यकत्वात्तत्र कुटादित्वात्तिपो ङित्त्वेन गुणाप्राप्तेः; न च गुणे एकादेशाप्राप्त्या सिज्लोप एकादेशे सिद्धो वाच्य इत्यस्य वैयर्थ्यान्न गुण इति सम्यक्,तेनागमविशिष्टस्यैवार्थवत्त्वमिति कल्पनस्यैवौचित्यात्, अकुटीदित्यादौ ङित्त्वेन गुणाप्राप्त्या चारितार्थ्याच्चेति चेत्—न, आर्द्धधातुकाव्यवहितपूर्वमङ्ग सार्वधातुकार्द्धधातुकान्यतरावयवत्वाभावविशिष्टेगन्तमेवास्ति, तत्साहचर्यात् सार्वधातुकाव्यवहितपूर्वमप्यङ्गं तथाभूतेगन्तमेव गृह्यते, प्रकृते चेकारस्य तथाभूतत्वाभावेन दोषाभावात्; पूर्वान्तवद्भावेनेट्त्वा'द्दीधीवेवीटामि'ति निषेधाच्च, तत्र दीर्घेकाररूपागमस्यापि प्रश्लेषेणेटोऽपि निषेधाङ्गीकाराच्च, एतेन सिज्लोपात्पूर्वमेव गुणापत्तिर्दुर्वारेति परास्तम् ।

दण्डिन् उ अत्रेतिस्थिते निपातस्य नुटि उमात्रस्यानर्थकत्वेन प्रगृह्यत्वाभावः फलमिति केचित्—तदपि न, बहिरङ्गत्वेन नुटोऽसिद्धत्वादर्थवत एव निपातस्य सत्त्वेन प्रगृह्यत्वस्य सिद्धान्तेऽपीष्टत्वात् । न च 'नाजानन्तर्य्ये' इतिनिषेधात् संज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वेनोभयोस्साम्याच्च न बहिरङ्गासिद्धत्वमिति वाच्यं, तावतापि पूर्वत्रासिद्धत्वस्य दुर्वारत्वात् ।

उनिपातस्य नञा समासे अनु, तत्र न्याये नकारागमविशिष्टनुशब्दस्यैवार्थवत्त्वेनोकारमात्रस्यार्थवत्त्वाभावेनार्थवन्निपातत्वाभावेन 'निपात एकाजनाङि'त्यस्याप्रवृत्त्याऽचि परे यणि अन्वत्रेति सिद्ध्यति; न्यायानङ्गीकारे उमात्रस्याप्यर्थवन्निपातत्वेन प्रगृह्यत्वापत्तेरन्वत्रेत्यस्यासिद्ध्यापत्तेरिति मूर्द्धाभिषिक्तं केन चिन्मन्यमानमपि फलं निपातयोस्समासस्य कुत्रापि प्रामाणिकप्रयोगे·

ऽदर्शनात् उभयोरपि द्योतकयोः परस्परासामर्थ्येन तदसम्भवाच्च न विदुषामामोदावहमिति बोध्यम् ।

समासात् समासान्तप्रत्ययोत्पत्तौ बहुकुमारीशब्दात् समस्यमानात् कपि आगमसमभिव्याहारन्यायेन कपःप्राग्वर्त्तिनोऽर्थवत्त्वाभावेन प्रातिपदिकत्वाभावेऽपि कप्समकालमेव पूर्वभागस्य प्रातिपदिकत्वापत्तौ ह्रस्वत्वापत्तिः स्यादतः समासालौकिकविग्रहवाक्ये बहु अस् कुमारी असित्यत्र समाससमकालमेव कपि तत्काले समासस्थित्यभावेन तदुत्तरकालेऽनर्थकत्वेनाप्रातिपदिकत्वाध्रस्वाभाव इति भाष्ये 'समासान्ता' इतिसूत्रे शेखरे चोक्तम् । स एव ह्रस्वाभावो न्यायस्य फलमवेहि । न चात्रापि 'न कपी'तिनिषेधान्न फलमिति वाच्यम्, 'केण' इतिसूत्रविहितस्यैव तेन निषेधात् । कथमन्यथा समासालौकिकविग्रहवाक्ये कपः प्रवृत्तावत्र ह्रस्वाभावः फलत्वेन भाष्योक्तस्सङ्गच्छतामिति वक्तव्यम् । अत्रापि 'न कपी'तिनिषेधावलम्बिदुराग्रह तु फलाभावेऽप्यनुमितिसिद्धोऽर्थः कथं प्रत्याख्यातुं शक्यमितिसन्तोष्टव्यमित्यलम् ।

ननूक्तन्यायादागमसमभिव्याहारे आगमिनोऽर्थवत्त्वाभावो निश्चित इति तद्व्यावृत्तमर्थवत्त्वं वक्तव्यम्; न चार्थबोधजनकत्वन्तत्, उक्तन्यायादागमविशिष्टस्यैव बोधजनकत्वन्नागमरहितस्येति वाच्यं, फलोपधायकतारूपजनकताया ग्रहणे कामिनीजिज्ञासादिप्रतिबन्धकवशाद्बोधाजनने प्रणिदातेत्यादावपि धुत्वानापत्तेः, स्वरूपयोग्यतायाश्च तस्या जनकतावच्छेदकरूपतया शक्त्यरूपबोधजनकतावच्छेदकस्य प्रकृतेऽपि सत्त्वात्; नापि बोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वन्तत्, अयं मदुच्चरितदाशब्दोऽर्थबोधको भवत्वितीच्छाया अनिवार्यतयार्थवत्त्वस्याप्यशक्यनिराकरणत्वात्; अत्रोच्यते—उक्तन्यायेन न तत्रार्थवत्त्वं निराक्रियते, अपि तु अर्थवत्त्वप्रयुक्तं कार्यन्न तत्समभिव्याहारे तद्विशिष्टस्यैव बोध्यते इत्यर्थवत्त्वस्य सत्त्वेऽपि नागमिनस्तत्प्रयुक्तं कार्यं-

मिति न दोषः।

अथवा स्वनिष्ठविधेयतानिरूपितोद्देश्यतावत्त्वसम्बन्धेनागमविशिष्टभिन्नत्वे सति अर्थबोधजनकत्वप्रकारकतात्पर्यीयविशेष्यताश्रयत्वमेवोक्तन्यायादर्थवत्त्वमिति नोक्तदोषः। न च तादृशार्थवत्त्वस्य दापि सत्त्वेनापऽर्याप्त्या तत्रत्यदाशब्देऽपि सत्वात् तुल्यं निर्बाधमिति वाच्यं, पर्याप्त्याऽर्थवत्त्वस्य विवक्षितत्वात्। ननु 'न ह्यवयवापर्याप्तस्य समुदाये पर्याप्तिरस्ती'ति न्यायेन दाशब्देऽपि पर्याप्तिरस्त्येवेति चेत्—मैवम्; न ह्यवयवापर्याप्तन्यायेन तात्पर्यीयविशेष्यताया आगमरहिते सत्त्वेऽप्यागमविशिष्टभिन्नत्वांशस्याभावात, अन्यथा भेत्तेत्यस्य धातुभिन्नत्वसत्त्वेन भूमात्रस्यापि धातुभिन्नत्वापत्तेः।

किञ्चार्थबोधेच्छयोच्चरितत्वमेवार्थवत्त्वम्, अर्थबोधनाय णिजव्यवहितपूर्वत्वविशिष्टदाशब्दस्योच्चारणप्रसङ्गे दाप्शब्दोच्चारणस्यैव शास्त्रेण बोधिततया अर्थबोधनेच्छयोच्चरितत्वं दाप्शब्दे एव, न दाशब्दे, तस्य नान्तरीयकतयोच्चारणेऽप्यर्थबोधनेच्छयोच्चरितत्वाभावादिति न दोषः। न च चरमप्रवृत्तशास्त्रेण दापयतीत्येतदुच्चारणस्यैवार्थबोधनाय बोधितत्वेन तस्यैव निरुक्तार्थवत्त्वं न दाप्शब्दस्येति तस्याप्यर्थवत्त्वानापत्तिः, पूर्वप्रवृत्तशास्त्रेण दाप्शब्दोच्चारणस्यापि बोधितत्वेन न दोष इति चेत् दाशब्देऽपि 'डुदाञ् दान' इतिशास्त्रबोधितत्वाद्दोषो दुर्वार एवेति वाच्यम्;

१ न ह्यवयवा पर्याप्तस्येति। इदं तार्किकमतेन। शाब्दिकैस्तु अवयवेऽपर्याप्तस्यापि समुदाये पर्याप्तिरभ्युपगम्यते, अतएव महाभाष्ये समासग्रहणस्य नियमार्थत्वमाभाषि, इतरथा 'राजन् ङस् पुरुषसु'इतिसमुदायावयवे प्रत्ययान्तत्वादित्वस्य सत्त्वे समुदाये पर्याप्त्या तदभावविरहेण अर्थवत्सूत्रेण प्रातिपदिकत्वासिद्धौ भाष्यासङ्गतिः स्पष्टैव। अतएव सिद्धान्तकौमुद्यां सुसखिसमुदाये सखिभिन्नत्वमादाय सुसखिनेत्यस्य सिद्धिः प्रतिपादितेति।

ऽदर्शनात् उभयोरपि द्योतकयोः परस्परासामर्थ्येन तदसम्भवाच्च न विदुषामामोदावहमिति बोध्यम् ।

समासात् समासान्तप्रत्ययोत्पत्तौ बहुकुमारीशब्दात् समस्यमानात् कपि आगमसमभिव्याहारन्यायेन कपःप्राग्वर्त्तिनोऽर्थवत्त्वाभावेन प्रातिपदिकत्वाभावेऽपि कप्समकालमेव पूर्वभागस्य प्रातिपादिकत्वापत्तौ ह्रस्वत्वापत्तिः स्यादतः समासालौकिकविग्रहवाक्ये बहु अस् कुमारी असित्यत्र समाससमकालमेव कपि तत्काले समासस्थित्यभावेन तदुत्तरकालेऽनर्थकत्वेनाप्रातिपदिकत्वाद्ध्रस्वाभाव इति भाष्ये 'समासान्ता' इतिसूत्रे शेखरे चोक्तम् । स एव ह्रस्वाभावो न्यायस्य फलमवेहि । न चात्रापि 'न कपी'तिनिषेधान्न फलमिति वाच्यम्, 'केण' इतिसूत्रविहितस्यैव तेन निषेधात । कथमन्यथा समासालौकिकविग्रहवाक्ये कपः प्रवृत्तावत्र ह्रस्वाभावः फलत्वेन भाष्योक्तस्सङ्गच्छतामिति वक्तव्यम् । अत्रापि 'न कपी'तिनिषेधावलम्बिदुराग्रहे तु फलाभावेऽप्यनुमितिसिद्धोऽर्थः कथं प्रत्याख्यातुं शक्यमितिसन्तोष्टव्यमित्यलम् ।

ननूक्तन्यायादागमसमभिव्याहारे आगमिनोऽर्थवत्त्वाभावो निश्चित इति तद्व्यावृत्तमर्थवत्त्वं वक्तव्यम्; न चार्थबोधजनकत्वन्तत्, उक्तन्यायादागमविशिष्टस्यैव बोधजनकत्वन्नागमरहितस्येति वाच्यं, फलोपधायकतारूपजनकताया ग्रहणे कामिनीजिज्ञासादिप्रतिबन्धकवशाद्बोधाजनने प्रणिदातेत्यादावपि णुत्वानापत्तेः, स्वरूपयोग्यतायाश्च तस्या जनकतावच्छेदकरूपतया दात्वरूपबोधजनकतावच्छेदकस्य प्रकृतेऽपि सत्त्वात; नापि बोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वन्तत्, अयं मदुच्चरितदाशब्दोऽर्थबोधको भवत्वितीच्छाया अनिवार्यतयार्थवत्त्वस्याप्यशक्यनिराकरणत्वात; अत्रोच्यते—उक्तन्यायेन न तत्रार्थवत्त्वं निराक्रियते, अपि तु अर्थवत्त्वप्रयुक्तं कार्य्यंत्र तत्समभिव्याहारे तद्रहितस्येत्येव बोध्यते इत्यर्थवत्त्वस्य सत्त्वेऽपि नागमिनस्तत्प्रयुक्तं कार्य्य-

मिति न दोषः।

अथवा स्वनिष्ठविधेयतानिरूपितोद्देश्यतावत्त्वसम्बन्धेनागमविशिष्टभिन्नत्वे सति अर्थबोधजनकत्वप्रकारकतात्पर्यीयविशेष्यताश्रयत्वमेवोक्तन्यायादर्थवत्त्वमिति नोक्तदोषः। न च तादृशार्थवत्त्वस्य दापि सत्त्वेनापऽर्याप्त्या तत्रत्यदाशब्देऽपि सत्त्वात् घुत्वं निर्बाधमिति वाच्यं, पर्याप्त्याऽर्थवत्त्वस्य विवक्षितत्वात्। ननु 'न ह्यवयवापर्याप्तस्य समुदाये पर्याप्तिरस्ती'ति न्यायेन दाशब्देऽपि पर्याप्तिरस्त्येवेति चेत्—मैवम्; न ह्यवयवापर्याप्तन्यायेन तात्पर्यीयविशेष्यताया आगमरहिते सत्त्वेऽप्यागमविशिष्टभिन्नत्वांशस्याभावात, अन्यथा भेत्तेत्यस्य धातुभिन्नत्वसत्त्वेन भूमात्रस्यापि धातुभिन्नत्वापत्तेः।

किञ्चार्थबोधेच्छयोच्चरितत्वमेवार्थवत्त्वम्, अर्थबोधनाय णिजव्यवहितपूर्वत्वविशिष्टदाशब्दस्योच्चारणप्रसङ्गे दापशब्दोच्चारणस्यैव शास्त्रेण बोधिततया अर्थबोधनेच्छयोच्चरितत्वं दापशब्दे एव, न दाशब्दे, तस्य नान्तरीयकतयोच्चारणेऽप्यर्थबोधनेच्छयोच्चरितत्वाभावादिति न दोषः। न च चरमप्रवृत्तशास्त्रेण दापयतीत्येतदुच्चारणस्यैवार्थबोधनाय बोधितत्वेन तस्यैव निरुक्तार्थवत्त्वं न दापशब्दस्येति तस्याप्यर्थवत्त्वानापत्तिः, पूर्वप्रवृत्तशास्त्रेण दापशब्दोच्चारणस्यापि बोधितत्वेन न दोष इति चेत्-दाशब्देऽपि 'डुदाञ् दाने' इतिशास्त्रबोधितत्वाद्दोषो दुर्वार एवेति वाच्यम्;

१ न ह्यवयवा पर्याप्तस्येति। इदं तार्किकमतेन। शाब्दिकैस्तु अवयवेऽपर्याप्तस्यापि समुदाये पर्याप्तिरभ्युपगम्यते, अतएव महाभाष्ये समासग्रहणस्य नियमार्थत्वमाभाषि, इतरथा 'राजन् ङस् पुरुष सु' इतिसमुदायावयवे प्रत्ययान्ततदादित्वस्य सत्त्वे समुदाये पर्याप्त्या तदभावविरहेण अर्थवत्सूत्रेण प्रातिपदिकत्वसिद्धौ भाष्यासङ्गतिः स्पष्टैव। अतएव सिद्धान्तकौमुद्यां सुमखिसमुदाये सखिभिन्नत्वमादाय सुमखिनेत्यस्य सिद्धिः प्रतिपादितेति।

अर्थवद्दाशब्दस्य घुसंज्ञेत्यस्यार्थवत्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगितानिरूपकपर्याप्तिप्रतियोगिदात्वाश्रयस्य घुसंज्ञेत्यर्थस्योत्सर्गतो लाभेन दोषाभावात्। अर्थवत्त्वप्रतियोगिकपर्याप्तेर्दाशब्दे सत्त्वेऽपि तदनुयोगितावच्छेदकत्वस्य दापूशब्दगतत्रित्वे एवान्यूनानतिप्रसक्ते सत्त्वेन दात्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वस्य च दागतद्वित्वे सत्त्वेन प्रकृतार्थसमन्वयस्यासम्भवान्न घुसंज्ञा दाशब्दस्येति बोध्यम्। नन्वेवमपि दातेत्यादावर्थवत्त्वपर्याप्त्यनुयोगितावच्छेदकत्वस्य दात्वपर्याप्त्यनुयोगितावच्छेदकत्वस्य च द्वित्वे सत्त्वेन तादृशदात्वस्य च दापूघटकदाशब्देऽपि सत्त्वेन दोषतादवस्थ्यमिति चेत्—न, शुद्धदात्वस्य दाशब्दे सत्त्वेऽपि विशिष्टदात्वत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयस्यैव घुसंज्ञेत्यर्थेन दापूघटकदाशब्दे तदभावेनावतरणसङ्गतेः, दात्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं यदर्थवत्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं तदाश्रयस्य घुसंज्ञेत्यर्थेन दातेत्यादौ तादृशं दागतं द्वित्वं तदाश्रयत्वस्य तत्रैव सत्त्वेन दापूघटकदाशब्दस्य तदाश्रयत्वाभावेन घुत्वाप्राप्तेश्च।

ननु मैत्रादावपि विद्यमानस्य ब्राह्मणत्वादेश्चैत्रवृत्तित्वेन चैत्र एवाधिकरणत्वमितिवत् दापूपर्याप्तस्याप्यर्थवत्त्वस्य दावृत्तित्वेन दाशब्दे एव पर्याप्तेस्सत्त्वेन तदनुयोगितावच्छेदकत्वस्य दाशब्दगतद्वित्वे एव सत्त्वेन दोषतादवस्थ्यम्; पर्याप्तिप्रतियोगिभूतार्थवत्त्वे दावृत्तित्वस्यापि विशेषणतया प्रतियोगितायां दावृत्तित्वार्थवत्त्वत्वोभयपर्याप्तावच्छेदकतानिरूपितावच्छेद्यतावत्त्वेऽप्यर्थवत्त्वत्वपर्याप्तावच्छेदकतानिरूपितावच्छेद्यतावत्प्रतियोगितानिरूपकपर्याप्तेरेव प्रवेशेन तादृशपर्याप्त्यनुयोगितावच्छेदकत्वस्य दापूगतत्रित्व एव सत्त्वेनापत्तिविरह इति तु न युक्तम्, 'न ह्यवयवापर्याप्तमि'ति न्यायेन दावृत्तित्वार्थवत्त्वत्वोभयपर्याप्ताया अवच्छेदकताया अप्यर्थवत्त्वत्वपर्याप्तत्वात्; नापि स्वावच्छेद-

कतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनार्थवत्त्वत्वगतैकत्ववृत्तिप्रतियोगिताया एव विवक्षणमिति कथनेऽपि निस्तारः, पूर्ववत् उभयपर्याप्तावच्छेदकताया अप्यर्थवत्त्वत्ववृत्तित्वेन रूपेणार्थवत्त्वत्व एव पर्याप्तत्वात् तद्दोषतादवस्थ्यात्, तत्रापि किञ्चिन्निवेश्य वारणे[1] पूर्वोक्तरीत्या पुनरपि दोषसद्भावेनानवस्थाप्रसङ्गात्—

अत्रोच्यते — दावृत्तित्वविशिष्टार्थवत्त्वप्रतियोगिकपर्याप्तिरस्तु

---

१ किञ्चिन्निवेश्य वारण इति। स्वावच्छेदकतात्वावच्छिन्नेत्यादिसम्बन्धेन अर्थवत्त्वत्वगतैकत्ववृत्तिप्रतियोगितानिवेशेऽपि दावृत्तित्वविशिष्टार्थवत्त्वनिष्ठप्रतियोगिता ग्रहीतुं शक्यत एव। तथाहि—स्व दावृत्तित्वविशिष्टार्थवत्त्वनिष्ठा प्रतियोगिता तन्निरूपितावच्छेदकता अर्थवत्त्वत्ववृत्तित्वविशिष्टावच्छेदकता तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वमर्थवत्त्वत्वगतैकत्वे अस्तीति प्रागुक्तदोषस्तदवस्थ एव, तस्मात् निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपिकानिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिका अवच्छेदकतात्वनिष्ठावच्छेदकतानिरूपिका या प्रतियोगिता तादृशप्रतियोगितानिरूपकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वृत्तित्वं निवेश्यम्। एवञ्च दावृत्तित्वविशिष्टार्थवत्त्वनिष्ठप्रतियोगितानिरूपितावच्छेदकता अर्थवत्त्वत्ववृत्तित्वविशिष्टावच्छेदकता न ग्रहीतुं शक्यते, विशिष्टावच्छेदकतानिष्ठप्रतियोगितायाः निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नार्थवत्त्वत्ववृत्तित्ववैशिष्ट्यनिष्ठावच्छेदकताया निरूपकत्वेन अनिरूपकत्वविरहात्। न च तदनिरूपकत्वं तन्निरूपकत्वनिष्ठप्रतियोगिताकाभावः, स चार्थवत्त्वत्ववृत्तित्ववैशिष्ट्यनिष्ठावच्छेदकतानिरूपकत्वघटोभयाभावमादायाक्षत एवेति वाच्यम्; तदनिरूपकत्वस्य तन्निरूपकत्वत्वगतैकत्ववृत्तिप्रतियोगिताकाभावरूपत्वात्। वृत्तिता च प्रागुक्तसम्बन्धेनेति। इत्थं चानवस्थादौस्थ्यं दुर्वारमिति भावः।

दाशब्दे एव, तदनुयोगितावच्छेदकञ्चास्तु दागतद्वित्वमेव, तथापि पर्याप्तिसम्बन्धावच्छिन्नाधेयता दावृत्तित्वविशिष्टार्थवत्त्वनिष्ठा, तदवच्छेदकता दावृत्तित्वार्थवत्त्वत्वोभयनिष्ठा न मन्यते, अपि तु दावृत्तित्वनिष्ठैव, लाघवात्, पर्याप्तिसम्बन्धेन दावृत्तिमदित्येतत्प्रतीतिविषयीभूताधेयतावच्छेदकतायास्तत्र क्लृप्तत्वात्[1]; सैवाधेयता दावृत्तित्वविशिष्टार्थवत्त्ववान् दाशब्दइतिप्रतीतावपि विषयीभूता, न त्वर्थवत्त्वत्वावच्छिन्ना, मानाभावात्; ततश्चार्थवत्त्वावच्छिन्ना या पर्याप्तिसम्बन्धावच्छिन्नाधेयता तादृशाधेयतानिरूपिताधिकरणतावच्छेदकधर्मावच्छिन्नानुयोगितेत्याद्यर्थः, तादृशाधिकरणतावच्छेदकञ्च त्रित्वमेवेति न दोषः। न च दावृत्तिमान् दाशब्दः, दावृत्त्यर्थवत्त्ववान् दाशब्द इत्युभयत्र प्रतीतावेकरूपाधेयताया एव विषयत्वे प्रतीत्योर्वैलक्षण्यानुपपत्तिरिति वाच्यं,

---

१ क्लृप्तत्वादिति। ननु यथा दावृत्तिमदित्येतत्प्रतीतिविषयीभूताधेयतावच्छेदकता दावृत्तित्वे क्लृप्ता, तथा अर्थवत्त्ववान् इतिप्रतीतिविषयीभूताधेयतावच्छेदकता अर्थवत्त्वत्वे क्लृप्तेति चेत्—मैवम्, अर्थवत्त्वत्वावच्छिन्नाधेयता क्वापि नास्तीति नाभिमतं ग्रन्थकर्तुः, किन्तु दावृत्तिमान् दाशब्द इतिप्रतीत्या दावृत्तित्वे आधेयतावच्छेदकतायाः क्लृप्तत्वे तन्मात्रावच्छेदकत्वेनैव दावृत्त्यर्थवत्त्ववानितिप्रतीतेरप्युपपत्तौ दावृत्तित्वार्थवत्त्वत्वोभयधर्मावच्छिन्नाधेयतायां मानाभाव इत्याशयः। विनिगमकत्वेकल्पात् अर्थवत्त्वत्वमात्रे तु नाधेयतावच्छेदकता, दावृत्त्यर्थवत्त्ववान् धाशब्द इतिप्रतीत्यापत्तेः। एवमेव अयं ब्राह्मण एतद्ब्राह्मणवृत्तित्वविशिष्टब्राह्मणत्ववान् एतद्ब्राह्मणवृत्तित्वविशिष्टपदार्थत्ववान् एतद्ब्राह्मणवृत्तित्वविशिष्टद्रव्यत्ववान् इत्याद्यनन्तप्रतीतिविषयीभूताधेयता एतद्ब्राह्मणवृत्तित्वावच्छिन्नैकैव, नैतद्ब्राह्मणवृत्तित्वब्राह्मणत्वत्वाद्युभयधर्मावच्छिन्ना, अनन्ताधेयताकल्पने गौरवात्, एतद्ब्राह्मणवृत्तिमानयं ब्राह्मण इति प्रतीतौ एतद्ब्राह्मणवृत्तित्वावच्छिन्नाधेयतायाः क्लृप्तत्वात्, प्रतीतिवैलक्षण्यं तु ब्राह्मणत्वाद्यवच्छेदकभिन्नप्रकारताभेदादिति दिक्।

प्रकारतावच्छेदकभेदेन वैलक्षण्योपपत्तेः। किञ्च दावृत्तित्वविशिष्टार्थवत्त्वस्येव दावृत्तित्वविशिष्टस्य दापगतत्रित्वस्यापि दाशब्दे एव सत्त्वस्याभ्युपगन्तव्यतया तस्यापि दागतद्वित्वस्येवानतिप्रसक्ततया दावृत्तित्वविशिष्टार्थवत्त्वत्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वमपि तादृशत्रित्वस्यैव क्लृप्तत्वान्न दागतद्वित्वस्येति न दोष इति दिक्।

नन्वेवमप्यनैमित्तिकत्वेनान्तरङ्गभूतघुसंज्ञया बहिरङ्गपुकोऽसिद्धत्वेनार्थवतो दाशब्दस्यैव दर्शनेन प्रवर्त्तितव्यमेवेति नावतरणसङ्गतिः; किञ्च यथोद्देशपक्षे पूर्वप्रवृत्तघुत्वमादायैव णत्वोपपत्त्यावतरणासङ्गतिः, किञ्चानुभूयत आनन्दश्चैत्रेणेत्यादौ कर्म्मणि लकारसिद्धये अवश्याश्रयणीयेन पूर्वं धातुरुपसर्गेण युज्यत इति सिद्धान्तेन पूर्वमुपसर्गयोगे णत्वे पश्चाण्णिचि पुकि रूपसिद्धिः; किञ्च 'अर्त्तिह्री'तिसूत्रेणार्त्त्यादिभ्यः परस्य णेः पुटो विधानेन दाधातोरर्थवत्त्वात्तद्घुत्वसिद्धौ णत्वसिद्धिरिति चेत्—न; संज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वेन घुसंज्ञाया अपि णत्वनिमित्तनिमित्तकत्वेन बहिरङ्गतरत्वात्। अतएव 'हस' इति भाष्योदाहरणं सङ्गच्छते, अन्यथा 'त्यदादीनाम' इत्यस्य विभक्तिनिमित्तकत्वेन बहिरङ्गतयाऽसिद्धत्वेन गुणसंज्ञानापत्तौ पररूपानापत्तिः; विधिनिमित्तनिमित्तकत्वे तु गुणसंज्ञाया अपि पररूपनिमित्तनिमित्तकत्वेन न दोषः; न च तावतापि संज्ञापेक्षया प्रकृतिप्रत्ययोभयापेक्षस्य 'त्यदादीनाम' इत्यस्य तत्त्वमेवेति वाच्यम्, 'नाजानन्तर्य्य'इतिनिषेधात्; किञ्च 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञे'तिवचनेन योगग्रहणलब्धेन यदर्थक्रियाया योगस्तद्धातुं प्रत्येवोपसर्गसंज्ञेत्यस्य लाभेनोपसर्गप्रदेशे प्रत्यासत्त्या घुसंज्ञकादिनिरूपितोपसर्गत्वविशिष्टस्यैव ग्रहणेन प्रकृते दाशब्दे पूर्वजातघुत्वस्य सत्त्वेऽपि तस्यानर्थकत्वेन तदर्थक्रियायोगाभावेन तं प्रत्युपसर्गत्वस्याभावात्। तदर्थक्रिया-

योगस्तु तज्जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वमेव, तथा च जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राद्यन्यतमत्वमुपसर्गत्वम् । जन्यतायाश्च निरूपकांशे नित्यसाकांक्षतया प्रदेशे तत्तदुपात्तधातुनिरूपिताया एव प्रत्यासत्त्या ग्रहणम् । एतेन सङ्केतसम्बन्धेनोपसर्गपदवत्त्वस्यैवोपसर्गपदार्थतया घटत्वादिवत्सम्बन्धिकत्वाभावेन घुनिरूपितस्यैव ग्रहणमित्याद्यसङ्गतमित्यपास्तम् । किञ्च 'पूर्वं धातुः साधनेन युज्यते' इत्येव युक्तम्, अतएव प्रत्यय इत्यस्य सिद्धिः, अन्यथा पूर्वमुपसर्गयोगे सवर्णदीर्घे पश्चाद्गुणे प्रतय इति स्यात्, अनुभूयत इत्यत्र तु भूधातोरेवानुभवार्थकत्वं, श्रोतृबोधाय तु प्रकृतार्थतात्पर्यग्राहकस्यानोर्योग इति न दोषः । नापि णेः पुटो विधानं युक्तम् । अदिद्रपदित्यादौ 'णौ चङ्युपधाया ह्रस्व'इत्यनेन ह्रस्वत्वानापत्तेः, पकारसहितस्य णित्त्वेन पकारात्पूर्वाकारस्याङ्गनिरूपितोपधात्वाभावात्; क्नोपयतीत्यादाविडागमापत्तेश्च । केचित्तु प्रणिदापक इत्यादौ पकारसहितस्य णित्त्वेन लोपापत्तिरित्याहुः—तन्न, निर्दिश्यमानपरिभाषयाऽदोषात् । नापि धात्वधिकारे अर्त्तीत्यादेः पाठेन धातुशब्दमुच्चार्य्य णौ परे पप्रत्ययविधानेन प्रणिदापयतीत्यस्य सिद्धिः, एवं च पप्रत्ययस्यार्धधातुकत्वेन 'सार्वधातुकार्धधातुकयो'रित्यनेन गुणोपपत्तौ 'पुगन्तलघूपधस्ये'ति सूत्रे पुगन्तग्रहणमपि न कर्तव्यमिति सम्यक्; जिह्रेतीति ह्रीस्तस्माद्धात्वर्थे णिचि पुकि ह्रेपयतीति भवति, इदानीम् पप्रत्यये गुणापत्तेः क्नोपयति दमापयतीत्यादौ पप्रत्ययस्येडापत्तेश्च । पप्रकरणे 'सार्वधातुकमपित्'इतिङित्त्वेनार्पयतीत्यादौ गुणानापत्तिः, तदर्थं पान्तलघूपधस्य चेतिकरणे सार्वधातुकादिमात्रत्वेण प्रत्ययस्यैव पस्य ग्रहणे च गौरवापत्तिः । ङित्त्ववारणाय पप्रकरणे शकारस्येत्त्वानापत्तिः; शपप्रकरणे चेत्संज्ञकशकारादित्येन ग्रापयतीत्यादौ जिघ्रादेशापत्तिः, ह्रीपयतीत्युक्तदोषापत्तिश्च ।

न च पप्रत्ययो विधीयताम्, आर्धधातुकत्वं सार्वधातुकत्वं वा मास्तु, पुगन्तेत्यत्र लघूपधस्येत्येको योगस्तस्य चोक्त एवार्थः, पिचेति द्वितीयस्तत्र 'सार्वधातुकार्धधातुकयो'रित्यनुवर्त्तते, ततश्च सार्वधातुकाद्यव्यवहितपूर्वत्वविशिष्टे पप्रत्यये परे इको गुण इत्यर्थेन सर्वेष्टसिद्धिरिति वाच्यम्; यतः क इवाचर क, अ इवाचर अ, क अ इति सततं यस्यां क्रियायामभिधीयते सा का क्रिया, काशब्दाचाचारक्विबन्ताद्धेतुमति णौ पुकि ण्यन्तात्कर्त्तरि क्विपि णिलोपे काप् भवतीत्यादौ यदागमन्यायेन काप्शब्दस्य तिङन्तत्वेन ततः परस्य भवतीत्यस्य 'तिङ्ङतिङ' इति निघातो न भवति; इदानीन्तु पप्रत्ययान्तस्य तिङन्तत्वाभावेन निघातापत्तिः। पञ्चमीसमासमाश्रित्य णिलोपस्य स्थानिवत्त्वेन निघातः सिद्धान्तेऽपि न भवत्येवेति तु न सम्यक्, स्वरविधौ तन्निषेधात्। एवञ्चावतरणं सत्यगेवेति दिक्।

---

१ दिक् इति। ननु 'आद्यन्तौ टकितौ'वित्यत्र टकित्पदे कर्मधारयं कृत्वा टित् आदिसंज्ञकम्, कित् अन्तसंज्ञकं भवतीति सूत्रार्थः, एवञ्चार्त्तिह्रीतिशास्त्रस्य णिजव्यवहितपूर्वादन्तस्थाने पुग्भवति, अर्थात् पुः क् अन्तो यस्यैतादृशो भवतीत्यर्थः, तथा च प्रणिदापयतीत्यादौ णिच्परकदास्थाने दावादेशस्य स्थानिवद्भावेनैव दात्वसिद्ध्या अवतरणमयुक्तम्; न चैवम् 'लुङ् लट्' इति सूत्रेऽपि अ. ट् आदिर्यस्य समुदायस्येति बहुव्रीहिणा अट्पदेन समुदायग्रहणापत्तौ समुदायस्यैवोदात्तत्वापत्तिरिति वाच्यम्, 'अडुदात्त' इत्यत्र त्रिपदबहुव्रीह्याश्रयणेनाकारस्यैवोदात्तत्वात्; न च 'आडजादीनाम्' इत्यत्रैकदेशस्य कथञ्चिदनुवृत्तावपि समुदायस्योदात्तत्वापत्तिर्दुर्वारेति वाच्यम्, अटैव सिद्धिं कृत्वा 'आडजादीनाम्'इत्यस्य प्रत्याख्यानात्, ऐन्दादित्यादिसिद्ध्यै 'आटश्चे'त्यत्र अटश्चेतिन्यासात्; न चैवम् अस्वपोऽहमदित्यत्र 'अतोरोरि'ति उत्वे अच्परत्वात् 'अङ्गार्ग्यगालवयो'रित्यडागमस्य अटश्च इति वृद्ध्यापत्तिरिति वाच्यम्, 'उपसर्गादृति धातौ' इत्यतो धातावित्यपकृष्य आदित्य-

यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥११॥

यमुद्दिश्यागमो विहितः स तद्गुणीभूतः, शास्त्रेण तद-

---

केचित्तु—गामादाग्रहणेष्वविशेष इति परिभाषयाऽनर्थकस्यापि दाशब्दस्य घुसंज्ञासिद्धयावतरणमसङ्गतमेवेत्याहुः—तदपि न, 'लक्षणप्रतिपदोक्त'-'लुग्विकरण'इतिपरिभाषयोरेव तया बाधात्; कथमन्यथा प्रनिदारयतीत्यादौ घुत्वाभावः। 'अनपायोपजनविकारिभि'रितिभाष्ये आगमार्थकोपजनशब्दस्य विकारात् पृथगुपादानेनागमस्य विकारत्वाभावबोधनेनैकदेशविकृतन्यायेनापि सिद्धिर्नोपादनीया।

यस्यागमा यदागमाः, आगमत्वमवयवत्वावच्छिन्नविधेयताश्रयत्वं, न तु टिदाद्यन्यतमत्वं, गौरवात्; एवञ्चागमपदेनैव विहितांशस्यापि लाभेनागमो विहित इत्यत्र विहितपदमधिक-

---

तुवत्यं अजादौ धातौ अकाररूपादटो वृद्धिरितिव्याख्यानात्; एतेन 'अस्नपोऽस्तीत्यादौ ओकारस्यान्तवद्भावेनाट्त्वात् अजादिधातुपरकत्वाच्च वृद्धयापत्ति'रिति निरस्तम्, अकाररूपस्याटोऽभावात्; न चैवमपि आतदित्यादि न सिद्धयति, परत्वात् 'अतो गुण'इत्यस्य प्रवृत्तेः, 'आटश्चे'त्यस्य ऐन्ददित्यादौ सावकाशत्वादिति वाच्यम्, चकारस्य पुनर्वृद्धिविधानार्थत्वेन अन्तरङ्गत्वेन चाटश्चेत्यस्यैव प्रवृत्तेः; आस्नामासन्नित्यादौ तु न दोषः, अन्तरङ्गत्वात्प्रागेवाडागमे वृद्धौ च 'श्नसोरल्लोप'इत्यस्याप्रसक्तेः, 'वार्णादाङ्गमि'ति तु नेह प्रवर्तते, समानाश्रयत्वविरहात्, अनित्यत्वाच्च; छन्दसि आनट्, आव इत्याद्यर्थमाट्सूत्रमित्यपि न युक्तम्, छन्दसि दृष्टानुविधित्वात्, आङ्पूर्वकत्वेन सिद्धत्वाच्चेति चेत्; उच्यते—'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्यत्र 'यासुडुदात्तः परस्मै पदेषु'-इतिन्यासेन त्रिपदबहुव्रीहिकरणेन समुदायस्योदात्तत्ववारणेऽपि अपिबदित्यादौ स्थानिवद्भावेन अपेतिसमुदायस्य पिबादेशापत्तिः स्यादिति दिक्।

वयवत्वेन बोधितः, अतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते बोध्यत इत्यर्थः। तत्र तद्गुणीभूता इत्यंशो

ऽमिति गुरुचरणाः। स्वसमभिव्याहृतपदार्थो यदर्थे साकांक्षस्तस्यैव षष्ठीवाच्यत्वनियमेनोद्देश्यत्वमेव यत्पदोत्तरषष्ठ्या अर्थ इति यन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रय इति यदागमपदस्यार्थः। तस्य गुणास्तद्गुणाः अतद्गुणास्तद्गुणास्संपन्नास्तद्गुणीभूताः, गुणशब्दार्थोऽवयवत्वम्, आहार्य्यज्ञानं च्युप्रत्ययार्थः, भूधात्वर्थो विवक्षितः, विषयताश्रयः क्तप्रत्ययार्थः, तन्निरूपितावयवत्वप्रकारकाहार्य्यज्ञाननिरूपितविषयताश्रयः समुदायार्थः। गृह्यते अनेनेति ग्रहणं तस्य ग्रहणं तद्ग्रहणं तेन तद्ग्रहणेन, ग्रह्धात्वर्थो बोधः, जनकत्वं ल्युडर्थः, बोधान्वयि विषयित्वं तत्पदोत्तरषष्ठ्यर्थः, जन्यत्वं गृह्यन्त इत्यत्रत्यग्रह्धात्वर्थबोधान्वयि तृतीयार्थः, बोधस्य च विषयताश्रयत्वडर्थैकदेशविषयतायामन्वयो निरूपितत्वसम्बन्धेन। तथा च तन्निरूपितविषयितावद्बोधनिष्ठजन्यतानिरूपितजनकतावन्निरूपितजन्यत्वविशिष्टबोधनिरूपितविषयताश्रयाः तद्ग्रहणेन गृह्यन्त इति समुदायस्यार्थः। यदागमा इति तद्गुणीभूता इत्यत्र हेतुः, तद्गुणीभूता इति तद्ग्रहणेन गृह्यन्त इत्यत्र हेतुः, तद्गुणीभूता इत्यस्य तद्विशिष्टा इति शेषः, यत इति अत इति च पदमुभयत्राध्याहृत्य बोधः कर्त्तव्यः। तथा च यतो यन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रया अतस्तन्निरूपितावयवत्वप्रकारकाहार्य्यज्ञाननिरूपितविषयताश्रया, यतस्तथाभूता अतस्तद्विशिष्टाः तन्निरूपितविषयितावद्बोधजनकपदजन्यबोधनिरूपितविषयताश्रया इति परिभाषार्थः पर्यवस्यति। अध्याहृतपदार्थघटकवैशिष्ट्यञ्च स्वघटितत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व-स्वविशिष्टाघटितत्वैतत्नि-

तयसम्बन्धेन । तत्रापि वैशिष्ट्यं स्वेतरत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयावयवाघटितत्वैतदुभयसम्बन्धेन । समन्वयो यथा—प्रणिदापयतीत्यादौ पकारो यतो दानिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयः अतो दानिरूपितावयवत्वप्रकारकाहार्यज्ञाननिरूपितविषयताश्रयः, यत एवंभूतः अतस्तत्प्रकारविशिष्टो दापूशब्दः ; दानिरूपितविषयितावद्बोधनिष्ठजन्यतानिरूपितजनकतावत् पदं 'दाधाघ्वदापि'तिसूत्रघटकं दापदं, तन्निरूपितजन्यत्वविशिष्टो बोधो दापदजन्यः, तन्निरूपितविषयताश्रय इति भवति दापूशब्दस्य घुत्वम् । पकारवैशिष्ट्यं दापूशब्दे कथमिति चेदेवम्—स्वं पकारस्तद्घटितत्वं दापूशब्दे; पुनः स्वं पकारस्तन्निष्ठविधेयतानिरूपितोद्देश्यताश्रयो दाशब्दस्तद्घटितत्वमपि दापूशब्दे; पुनः स्वं पकारस्तद्विशिष्टो दाघटकभिन्नः, यतः स्वेतरत्वं पकारे नास्ति, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयावयवाघटितत्वं दकारे अकारे दाशब्दे आपूशब्दे वा नास्ति, आद्ययोर्व्यपदेशिवद्भावेन अपरयोः स्वत एव तादृशावयवघटितत्वात्, अपि तु न उभयमुदासीनस्यैव तदघटितत्वं दापूशब्दस्येति तस्य घुत्वसिद्धिः।

यद्यपि यदागमपरिभाषया आगमविशिष्टस्यागमिवाचकपदग्राह्यत्वं बोध्यते तथापि शक्तिलक्षणाभ्यामुपस्थितस्यैव शाब्दबोधविषयतया दाशब्दादौ आगमविशिष्टदाबादिशब्दनिरूपितशक्तिलक्षणयोरभावेन कथं तस्य तेन बोध इति चेन्, अत्रोच्यते—अग्राह्यस्याभ्यनुज्ञाने महिना ग्राह्यत्वं न सम्भवति तदप्यभ्यनुज्ञातमेव. ततश्च यदागमन्यायेन स्वघटितत्व-स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयघटितत्व-स्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन स्वविशिष्टे समुदाये स्ववृत्तिधर्मारोप इति बोध्यते; वर्णान्तरघटकवैशिष्ट्यञ्च स्वेतरत्व-स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वोभयसम्बन्धेन, समन्वयः पूर्ववत्; ततश्च दापूशब्दोऽपि दारूपावच्छिन्न इति तस्य दापदेन बोध इत्यतः ।

बीजकथनम्। लोकेऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं दृश्यते। यमुद्दिश्य विहित इत्युक्तेः प्रनिदारयतीत्यादौ न दारित्यस्य घुत्वम्।

---

यद्वा आगमिबोधकदाशब्दादीनां स्वशक्यविशिष्टे लक्षणा बोध्यते अनेन न्यायेन। वैशिष्ट्यञ्च स्वघटितत्व-स्वविशिष्टाघटितत्वोभयसम्बन्धेन, तत्र वैशिष्ट्यं स्वेतरत्व-स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयेतरत्वोभयसम्बधेन, ततश्च दाशब्दस्य दाप्शब्दस्य च लक्षणयैव बोधः, उभयोरुक्तलक्ष्यतावच्छेदकाक्रान्तत्वात्।

ग्रहणपदे ल्युटः कर्तृबोधकतां बोधयितुमाह—ग्राहकेणेति। ग्रह्धातोरुपादानार्थकताभ्रमवारणाय बोधकेनेत्याह। यमुद्दिश्य विहित इत्युक्तेरिति। अयं भावः—यथा षष्ठीसमभिव्याहृतागमपदार्थो विधेयत्वं साकाङ्क्षमुद्देश्यत्वे, तथावयवत्वमवयवित्वे साकाङ्क्षमित्यविशेषादवयवित्वमेव षष्ठ्यर्थमङ्गीकृत्य यन्निष्ठावयवितानिरूपितावयवत्वावच्छिन्नविधेयताश्रय इत्येवार्थो यदागमपदस्य कुतो न कृतः, तावतापि प्रणिदापयतीत्यादौ दोषाभावात्। उद्देश्यत्वार्थकत्वे किं फलमिति—प्रनिदारयतीति। रेफनिष्ठावयवत्वावच्छिन्नविधेयतानिरूपितोद्देश्यताया 'उरणरपर' इत्येतद्घटकाण्पदप्रयोज्याया दार्घटकाऽऽकारे सत्त्वेऽपि दाशब्देऽभावेन सिद्धान्ते दाग्रहणेन न दारितिसमुदायस्य ग्रहणम्, इदानीन्तु आनिरूपितावयवत्वस्य रेफे सत्त्वेन दानिरूपितावयवत्वस्य चाकारे सत्त्वेन 'अवयवावयवः समुदायावयव' इतिन्यायेन दानिरूपितावयवत्वस्यापि रेफे सत्त्वेन यदागमन्यायेन दाग्रहणेन दारित्यस्य ग्रहणापत्तिः। न चोक्तन्यायस्य शास्त्रे आश्रयणे फलाभाव इति वाच्यम्, शेरत इत्यादौ 'आत्मने-

पदेष्वनत' इत्यनेन झघटकझकारस्यादादेशे तस्य च 'शीङो रुडि'त्यनेन रुडागमे आनुमानिकस्थान्यादेशभावे झशब्दस्य अत इत्यादेशेनातशब्दस्य स्थानिवद्भावेन सार्वधातुकत्वेऽपि रुटस्तदुद्देश्यकत्वाभावेन तन्निष्ठसार्वधातुकत्वस्य यदागमन्यायेन रतशब्दे आनेतुमशक्यतया 'शीङस्सार्वधातुके गुण' इत्येतत्प्रवृत्तये तदाश्रयणस्यावश्यकत्वात् । आश्रयणे तु अतशब्दावयवस्यातोऽवयवो रेफोऽतशब्दावयवस्तद्विशिष्टस्य रतशब्दस्य सार्वधातुकत्वेन गुणसिद्धिः । न च तेन न्यायेन समुदायावयवत्वेऽपि सिद्धान्ते यदागमन्यायाप्रवृत्त्यावयवावयवन्यायेनैव समुदायग्रहणग्राह्यत्वस्यापि वक्तव्यतया तथैव तेन न्यायेन प्रनिदारयतीत्यादावपि समुदायग्रहणग्राह्यत्वापत्तौ यमुद्दिश्य इत्युक्तेऽपि दोषतादवस्थ्यमिति वाच्यम्; स्वावयवत्वविशिष्टावयवित्वनिरूपितावयवत्वविशिष्टः स्वावयवो भवति, स्वग्रहणग्राह्यश्च भवतीत्यस्यैव न्यायार्थत्वात्, वैशिष्ट्यं स्वसामानाधिकरण्यस्वोत्तरकालिकत्वोभयसम्बन्धेन, प्रनिदारयतीत्यादौ चाऽऽनिष्ठे रेफनिरूपितावयवित्वे दानिरूपितावयवत्वोत्तरकालिकत्वाभावेन तत्र न्यायाप्रवृत्तेः । अतएव ट्युट्युलोष्टित्वं चरितार्थम्, अन्यथा तुटष्टित्वादेव सायन्तनीत्यादावुक्तन्यायेन ङीपि सिद्धे तस्य वैयर्थ्यापत्तेः, उक्तार्थे तु तकारनिष्ठे टकारावयवित्वे युनिरूपितावयवत्वोत्तरकालिकत्वायोगेन न्यायाप्रवृत्तेर्ङीबर्थं तस्यावश्यकत्वात् ।

ननु न्यायाप्रवृत्तौ यन्निरूपितावयवत्वेत्याद्यर्थेऽपि दोषाभावेन ग्रन्थासङ्गतिः; किञ्च न्यायस्य न फलम्, तथाहि—शेरत इत्यस्य शीङो रुडिति न्यासेन यथास्थितन्यासेन वा सिद्धिः, अदादेशोत्तरं हि 'शीङो रुडि'त्यस्य प्रवृत्त्याऽदादेशसमकाले च विरोधाभावाद् गुणस्य प्रवृत्त्या रूपसिद्धेः; यद्यपि गुणापेक्षया रुटः प्रतिपदोक्तत्वं तथापि समकालप्राप्तावेव तस्य बलवत्त्वप्रयोजकतया न पूर्वं तेन रुटः प्रवृत्त्याशा; यत्तु धातोरेव रुडागमे रविशिष्टस्य यदागमन्या-

येन शीङ्त्वात्सार्वधातुकाव्यवहितपूर्वत्वाच्च गुणे रूपसिद्धिरिति- तन्न, निर्दिश्यमानस्य रेफेण व्यवधानात्; यदपि प्रत्ययावयवे प्रत्ययत्वव्यवहार इत्यनेनादेशोऽपि सार्वधातुकत्वाद्यदागमन्यायेन सागमे सार्वधातुकत्वात् गुणसिद्धिरिति—तदपि न, प्रत्ययत्वातिदेशेऽपि तद्व्याप्यस्यानतिदेशात्; अतएव राममित्यादौ मकारे 'सुप्त्वातिदेशेन दीर्घो न; नापि 'दधि च्छादयती'त्यादौ ह्रस्वस्य छकारे परे तुकि तद्विशिष्टस्योक्तन्यायेन पदत्वा'त्तिङ्तिङि'ति निघातसिद्धिरिति फलम्, तस्मिन्निति परिभाषया पूर्वस्येत्यस्योपस्थितौ तद्विशेषणेन तदन्तविधौ ह्रस्वान्तस्य च्छकारात् पूर्वस्य तुगित्यर्थेन विशिष्टस्यैव तुकि यदागमन्यायेनैव सिद्धेः; न च 'परमन्दधि च्छादयती'त्यादावुक्तरीत्या वृक्षप्रचलनन्यायेन वाक्यस्य तुकि यदागमन्यायेनापि पदत्वाभावान्निघाताभावापत्त्या न्यायावश्यकत्वमिति वाच्यम्, पदत्रयसापेक्षतुको बहिरङ्गत्वेनासिद्धत्वात्तदुपपत्तेः; न च सन्शम्भुरितिस्थिते नकारस्य तुकि तद्विशिष्टस्योक्तन्यायेन पदत्वाच्छत्वसिद्धिः फलमिति वाच्यम्, नान्तस्य पदस्यैव तुकि यदागमन्यायेनैव सिद्धेः; यदपि एधिपीष्टेत्यत्र तकारावयवस्य सकारस्यानेन न्यायेन प्रत्ययावयवत्वात् षत्वमिति फलम्—तदपि न, प्रत्ययावयवे तकारे प्रत्ययत्वव्यवहारेण तदवयवत्वात् सकारस्य प्रत्ययावयवत्वोपपत्तेः—

अत्रोच्यते—दीव्यमान इत्यत्र श्यनोऽकारस्य ङित्त्वान्मुगागमे 'तास्यनुदात्तेदि'ति स्वरो न स्यात्, मान्ते उपदिश्यमानाकारान्तत्वस्योपदिश्यमानाकारत्वस्य वा अभावात् यशब्दस्यागमित्वाभावादकारस्योपदिश्यमानत्वाभावाच्च यदागमन्यायेन तस्यानयनासम्भवात्। अवयवावयवन्यायसत्त्वे तु यशब्दावयवस्याकारस्यावयवो मकारो यशब्दावयवस्तद्ग्रहणग्राह्यश्चेति यम्शब्दस्याकारान्तोपदिश्यमानत्वेन स्वरोपपत्तिरिति स्फुटतरमिदं फलमवयवावयवन्यायस्य। तथापि प्रनिदारयतीति ग्रन्था-

'आने मुक्' इति मुग्विधानसामर्थ्यादेषाऽनित्या, अन्यथा

सङ्गतिरस्त्येवेति चेत्, श्रूयताम्—यमुद्दिश्य विहित इत्युक्तेरित्यस्य यत्पर्याप्तोद्देश्यतानिरूपितविधेयताश्रयइत्याद्यर्थोक्तेरित्यर्थः। प्रनिदारयतीत्यादावाकारवृत्त्युद्देश्यताया अपर्याप्त्या दावृत्तित्वेऽपि दापर्याप्तत्वाभावान्न तामादाय दोष इति ग्रन्थाशय इति।

वस्तुतस्तु—अवयवावयवन्यायस्य न फलम्, नापि तत्तदर्थमनेकविधा कल्पना। स्वविशिष्टोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयः स्वग्रहणेन गृह्यत इत्येव परिभाषाया अर्थः। वैशिष्ट्यञ्च स्वपर्याप्तत्व-स्वावयवत्वविशिष्टत्वान्यतरसम्बन्धेन, द्वितीयवैशिष्ट्यं स्वसामानाधिकरण्य-स्वोत्तरकालिकत्वोभयसम्बन्धेन। एवञ्चानयैव परिभाषया शेरते दीव्यमान इत्यादीनामपि सिद्धिः। तथाहि—शेरत इत्यत्र स्वम् अतशब्दः तद्विशिष्टोद्देश्यता श्रन्निष्ठा रुडागमनिरूपिता, यतस्तत्र अतशब्दावयवत्वमच्छब्दे वर्त्तते तत्सामानाधिकरण्यमस्ति तदुत्तरकालिकत्वमप्यस्ति, तन्निरूपितावयवत्वावच्छिन्नविधेयताश्रयो रुडिति, तद्विशिष्टे सार्वधातुकत्वमुपपन्नम्। एवं दीव्यमान इत्यादावप्यूह्यम्। उत्तरकालिकत्वरूपद्वितीयसम्बन्धदानात् प्रनिदारयतीत्यादौ न दोषः, तत्राकारनिष्ठरेफीयोद्देश्यताया दावयवत्वोत्तरकालिकत्वविरहात् दारूपसम्पत्तेः प्रागेवाकाररूपस्याणः प्रसङ्गावस्थायामेव रपरत्वविधानात्। अतएव व्युटच्युलोष्टित्वं चरितार्थम्। एवञ्च यमुद्दिश्यविहित इत्युक्तेरित्यस्य यद्विशिष्टोद्देश्यताघटितोक्तार्थस्वीकारादित्यर्थः।

ननु दात्वं दकारोत्तरत्वविशिष्टमात्वमेव, आर्शब्दे च यदागमन्यायेनात्वं दकारोत्तरत्वञ्चास्त्येवेति दार्शब्दे दात्वसिद्धौ घुत्वं दुर्वारमित्यत आह—आने मुगित्यादि। तथा चानित्यत्वान्नारशब्दे आत्वमिति भावः। मुग्विधानसामर्थ्यादिति। ननु सूत्रसत्त्वे 'वार्ण'परिभाषया दीर्घं बाधित्वा प्राप्तम् 'आतो ङित' इति-

शास्त्रं तकन्यायेन बाधित्वा मुकि यदागमन्यायेन दीर्घे पचान इति, सूत्राभावे 'आतो ङित' इत्यस्य प्रवृत्त्या पचेन इति स्यादिति फलभेदात् कथं व्यर्थमिति चेत्-न, इयादेशबाधनमात्रस्य फलत्वे 'आतो ङितो नानस्ये'तिन्यासकरणेनैवेयादेशाप्रवृत्त्या मुग्विधानस्य वैयर्थ्यापत्तेः। अतएव मुग्विधानसामर्थ्यादित्येवोक्तम्, न तु सूत्रारम्भसामर्थ्यादित्युक्तमिति बोध्यम्। निरवकाशत्वाल्लुको बाधकेऽपि तद्वैयर्थ्याद्यथा न लुक् ज्ञानमित्यादौ तथा दीर्घो न भविष्यति मुकि कृते इति नाशङ्क्यम्, मुको वैयर्थ्येन दीर्घबाधकल्पनापेक्षया परिभाषाऽनित्यत्वकल्पनस्यैवौचित्यात्। ननु मुग्विशिष्टे यदागमन्यायेनाक्त्वेऽपि तत्सवर्णत्वमाकारे नास्ति, अम्जनकस्थानस्यैवाभावेन तुल्यस्थानत्वाभावात्, अवयवद्वारककण्ठस्थानजन्यत्वमादाय तुल्यस्थानत्वोपपादने ओष्ठस्थानजन्यत्वस्यापि सत्त्वेन यावत्स्थानसाम्याभावादिति चेत्-न, अक्त्ववत् कण्ठमात्रस्थानजन्यत्वविवृतत्वमात्रप्रयत्नजन्यत्वयोश्चाप्यतिदेशेनोपपत्तेः। न च निर्दिश्यमानस्यैवादेशेनामो निर्दिश्यमानत्वाभावान्नात्र दीर्घ इति वाच्यम्, अक इत्यस्य पञ्चम्यन्तत्वेन षष्ठ्यभावान्निर्दिश्यमानपरिभाषाया अप्रवृत्तेः। न च पूर्वपरयोरित्यस्य स्थानषष्ठ्यन्तत्वात् तत्पदीयनिर्दिश्यमानस्यैव ग्रहणेन दीर्घाभाव इति युक्तम्, शास्त्रान्तरासहकारेणैव पूर्वपरपदजन्योपस्थितिविषयत्वेन अम्आ-इतिसमुदायस्य निर्दिश्यमानत्वाक्षतेः, प्रकृते अचः पूर्वत्वेन बुद्धिस्थो यः अकः परत्वेन बुद्धिस्थो यस्तदुभयमात्रारब्धसमुदायस्य पूर्वपरपदेन शास्त्रान्तरासहकारेणैवोपस्थितत्वात्।

यत्तु केनचिदुक्तमेकादेशविषये निर्दिश्यमानपरिभाषा न प्रवर्त्तते, एकादेशशास्त्राणां वैयर्थ्यमन्यथा स्यात्, यतो निर्दिश्यमानाद्यवयवेतरस्य नादेशा इति निर्दिश्यमानपरिभाषायाः पर्यवसिते अर्थे एकादेशपूर्वस्थानिनः तत्परस्थानिरूपानिर्दिश्यमाना-

वयवेतरत्वम् एवं पूर्वस्थानिरूपनिर्दिश्यमानावयवेतरत्वं परस्येत्युभयोरादेशाभावे तद्वैयर्थ्यं स्पष्टमेवेति—तदविचारितरमणीयमेव, पूर्वपरयोरित्येकपदनिर्दिश्यमानत्वस्यैव समुदाये सत्त्वेन निर्दिश्यमानावयवेतरत्वाभावात् । उदासीनपदमादायेतरत्वोपपादने तु परिभाषाया निर्विषयत्वापात इति सुधीभिर्विभावनीयम् ।

ननु मुकि 'अकस्सवर्ण'इत्यनेन सानुनासिक आकारो निरनुनासिकश्चाकारः, सानुनासिकौकारो निरनुनासिकश्चौकारः, औकार[1] इत्येते प्राप्ताः, तेषां प्राप्यमाणानां मध्ये स्थानिनान्तरतमः सानुनासिक ओकार एव, आदेशान्तरावृत्तित्वस्य कण्ठोष्ठस्थानिकत्वविशिष्टसानुनासिकत्वे एव सत्त्वेन तेन रूपेण तस्यैवान्तरतमत्वात्; मुकोऽभावे आकार इति वैषम्याच्च ज्ञापकमिति; न चोदानस्येत्येव तदर्थमस्तु, 'आदेः परस्ये'त्यनेनाकारस्योत्वे गुणे पचोन इति सिद्धौ मुको वैयर्थ्यमिति, तावताप्यनुनासिकत्वालाभात; अनुनासिकोकारविधानेन पररूपेण तदपि भविष्यतीति प्रत्याशा न कार्या, इत्संज्ञालोपयोरापत्तेः; न च लोप एव कर्त्तव्ये उकारोच्चारणसामर्थ्यान्न ताविति वाच्यम्, उगित्त्वेन ङीपः प्रवृत्त्या उच्चारणस्यावैयर्थ्यात; न च टित्वादेव तत्सिद्धिः, लाश्रयमनुबन्धकार्यन्नादेशानामित्यस्य स्त्रीप्रत्ययप्रकरणे शेखरकृता खण्डितत्वादिति वाच्यम्, लादेशानात्मके शानिनि यजमान इत्यत्र स्त्रीलिङ्गे ङीपः फलस्य सम्भवात; तस्मान्न ज्ञापकमिति चेत् न, मुक आन्तरतम्यमात्रफलकत्वे पादमात्रिकमकारविधानेनापि तदुपपत्तावर्धमात्रिकमकारोच्चारणस्य ज्ञापकत्वसम्भवात् । सिद्धान्ते तु पादमात्रिकस्य तस्य श्रवणायोग्यत्वान्न

१ औकार इति । न चौकारस्यापि अनुनासिकभेदेन भेदः कुतो नेति वाच्यम्, यमोऽनुनासिकानह्वाविति शिक्षायां नह्वावित्यस्यैजादीनामप्युपलक्षणपरत्वेन व्याख्यानात् ।

पचमान इत्यादावकारस्य मुकि अनया परिभाषया विशिष्टस्य सवर्णदीर्घे कृते तद्वैयर्थ्यं स्पष्टमेव; तेन दिदीये इत्यादौ यणादिर्न, जहारेत्यादौ 'आत औ णल' इति च न । न

---

तत् कृतमित्यलम् । अत: पञ्चानामितिनिर्देशोऽप्यतएवोपपद्यते, अन्यथा उक्तन्यायेन नामि अजादित्वातिदेशे पञ्चन्नित्यस्य भत्वे नलोपानापत्तिः ।

यत्तु 'न पदान्ताट्टोरनामि'ति सूत्रे अनामितिपर्युदासो ज्ञापकः, अन्यथा षण्णामित्यादावुक्तरीत्या पदत्वाभावेन निषेधाप्रवृत्त्या तद्वैयर्थ्यं स्पष्टमेवेति—तन्न, नम्धातोः क्विप्यनुनासिकस्य दीर्घे षट्नामिति स्थिते ष्टुत्वनिषेधाभावाय तत्सार्थक्यसम्भवात् ।

तेन दिदीये इत्यादाविति—युडागमविशिष्टे ये शब्दे अजादित्वमुक्तन्यायेनादाय 'एरनेकाच'इति यणादिकन्नेत्यर्थः । न च यणोऽप्राप्तियोग्येऽचारितार्थ्येन कृते तस्मिन् चारितार्थ्येन च तकन्यायेन युटो बाधकत्वात् सर्वेषामित्यत्र नुडिव न यणिति वाच्यम्, दीङ्धातोर्घञर्थे के दिय इत्यादौ यणोऽप्राप्तिविषये युटश्चारितार्थ्यात् । न च तत्रापीयङ्प्राप्त्याऽचरितार्थेन दीर्घेण यणगुणयोरिवेयङ्यणोर्बाधेन ग्रन्थासङ्गतिरेवेति वाच्यम्; इयङस्सकललक्ष्यप्राप्तत्वेन 'कुप्वोᳲकᳲपौ चे'त्यनेन 'विसर्जनीयस्य स' इत्यस्येवात्रापीयङ एव बाधेन यणापत्तेस्सम्भवात्, दीयते इति दीः शत्रोः दीः शत्रुदीः शत्रुदीमेति शत्रुदीत् तमाचष्टे णिचि क्विपि टिलोपणिलोपयोः शत्रुत् तत आचारक्विबन्ताद् घञर्थे के युटि शत्रुय इत्यादावुभयोरप्राप्तियोग्ये चारितार्थ्याच्च । न च 'वुग्युटावुवङ्यणो'रितिवार्तिकारम्भसामर्थ्यान्न यणिति वाच्यं, शास्त्रबाधापेक्षया परिभाषाऽनित्यत्वज्ञापनस्यैवौचित्यात् ।

जहारेति । आरित्यस्योक्तन्यायेनाऽऽत्वेनादन्तत्वात्ततः परस्य

चाकारादेर्वर्णस्य वर्णान्तरमवयवः कथमिति वाच्यम्, वचनेनावयवत्वबोधनात्। तस्य चावयवसादृश्ये पर्यवसानं बोध्यम्। न चोक्तज्ञापकाद्वर्णग्रहणेऽस्या अप्रवृत्तिरिति वाच्यम्, 'आने मुगि'तिसूत्रे भाष्येऽकारस्याङ्गावयवस्य मुगित्यर्थे पचमान

णल औकारः स्यात्, अनित्यत्वेन तन्नेति भावः। न च सन्निपातपरिभाषया णलव्यवहितपूर्वत्वन्निमित्तीकृत्य जायमाना वृद्धिर्णल्विनाशिका न स्यादिति वाच्यम्, 'आत औ णल' इत्येतद्विषये सन्निपातपरिभाषाया अप्रवृत्तेः। अतएव ममावित्यादावेज्विषयत्वनिमित्तकमात्वं निमित्तीकृत्य 'आत औ णल' इति भवति। अत एव च भवेयुः भिन्द्युरित्यादावागमसमभिव्याहारेऽप्यागमरहितस्यैवोसो ग्रहणसिद्धिः, पञ्चानामित्यादौ च नलोपसिद्धिः। अनित्यत्वाभावे नामि यदागमन्यायेनाजादित्वेन भत्वात् नलोपो न स्यात्, एतीतीत् तेनेतेत्यादाविण्धातोः क्विपि टाविभक्तौ घित्वाभावान्नादेशाभावश्च सिद्धः। एवमय्धातोः क्विपि यलोपे तुकि भिसि अद्भिरित्यत्रैस् न।

न चाकारादेरित्यादि—विषयितासम्बन्धावच्छिन्नव्यापकताश्रयत्वे सति विषयितासम्बन्धावच्छिन्नव्याप्यत्वाभाववत्त्वस्यैवावयवत्वरूपतया वर्णान्तरनिरूपितस्य तस्याभावादिति भावः। वचनेनेति—'आद्यन्तौ टकिता'वित्यादिनेत्यर्थः। न च तावताप्याशङ्काया अनिस्तारः, नहि वह्निः शीत इतिबोधनेऽपि तत्र तत्त्वम्भवति इत्यत आह—तस्य चेति। अवयवसादृश्यञ्चावयवविग्रहणग्राह्यत्वेन बोध्यम्। तथा च तेनैव यदागमन्यायो लब्ध इति बोध्यम्।

वर्णग्रहणे अस्या अप्रवृत्तिरिति—अननुगतानित्यत्वज्ञापनापेक्षयानुगतस्थलेऽप्रवृत्तिज्ञापने लाघवमिति भावः, वर्णत्वव्याप्यधर्मघटितधर्मानयन इत्यर्थः।

इत्यत्र 'तास्यनुदात्तेदि'ति स्वरो न स्यादित्याशङ्क्यादुपदेशभक्तस्तद्ग्रहणेन ग्राहीष्यत इत्युक्तेरसङ्गत्यापत्तेः । किञ्च ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडित्यर्थे कुर्वन्नास्ते इत्यादौ ङमो ङमुडागमे णत्वप्राप्तिमाशङ्क्य यदागमा इति न्यायेनाद्यनस्यापि पदान्तग्रहणेन ग्रहणात् 'पदान्तस्य'

अदुपदेशभक्त इति—उपदिश्यमानाकारस्यावयव इत्यर्थः । दीव्यमान इत्यर्थमकारान्तोपदिश्यमानादित्यर्थः 'तास्यनुदात्तेदि' त्यादेस्तदन्तविधिना कार्यः । उपदिश्यमानाकारान्तत्वञ्च मकारसहिते अमि यदागमन्यायेनानीय स्वरस्साधितः सोऽसङ्गतः स्यात् अकारान्तोपदिश्यमानत्वस्य वर्णत्वव्याप्यधर्मघटितत्वादिति भावः ।

यत्तु केनचित्—यथाऽधोगित्यत्रादुहित्यस्यौपदेशिकदादित्वन्तथा पचमान इत्यत्राप्यमित्यस्यौपदेशिकमदन्तोपदिश्यमानत्वं स्वत एवास्ति, अतएव तत्र परिभाषोपन्यासो न कृतो भाष्य इत्युक्तभाष्यासङ्गतिर्न्नेत्युक्तम्—तदविचारितरमणीयम् । तथाहि—अधोगित्यत्रादुहित्यस्मिन् यदागमन्यायेन दुह्धातुत्वातिदेशे दुहित्यस्य अदुहित्यस्य चैक्यबुद्धौ दुहित्यस्य य उपदेशस्सोऽदुहित्यस्यापीति तदुपदेशकाले तस्य चेद्दादित्वन्तर्हि तदभिन्नस्यादुहित्यस्यौपदेशिकदादित्वमस्तीत्यविवादमेव । पचमान इत्यत्र तु वर्णग्रहणेऽप्रवृत्तावस्यबुद्ध्यभावेन अ-अम-अनयोर्भेदादकारस्य य उपदेशः स न अमित्यस्येत्यकारस्यौपदेशिकादन्तत्वेऽप्यमित्यस्य तत्त्वोपपादनस्याशक्यसम्भवत्वादिति विभावनीयम् । न च वर्णत्वव्याप्यधर्मस्यातिदेशो नेत्येव ज्ञाप्यत इति नोक्तभाष्यविरोध इति वाच्यम्, दिदीय इत्यादावजादित्वस्यातिदेशापत्तेः ।

आद्यनस्यापि पदान्तग्रहणेन ग्रहणादिति—नकारविशेषण-

**निषेध इति; अनया च परिभाषया आगमानामागमिधर्म-वैशिष्ट्यमपि बोध्यत इत्याशयकङमुट्सूत्रस्थभाष्यासङ्गतेः ।**

पदान्तस्येत्यस्य वर्णबोधकत्वेन वर्णग्रहणे अप्रवृत्तावत्राप्यप्रवृत्त्या भाष्यासङ्गतिरिति भावः । वस्तुतः—नेदं युक्तम्, वर्णत्वव्याप्यस्य तद्घटितस्य वा नातिदेश इति हि तस्यार्थः, पदान्तत्वस्य स्वघटकत्व-स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्तित्वोभयसम्बन्धेन पदवि-शिष्टत्वरूपस्य वर्णसमुदायेऽपि सत्त्वेन वर्णत्वव्याप्यत्वाभावेनाति-देशे बाधकाभावात् ।

आगमानामागमिधर्मवैशिष्ट्यमपीति । इदमपि न युक्तम्, फलाभावात्, रामाणामित्यादावामवृत्तिपदान्तत्वस्य नकारेऽति-देशेन 'पदान्तस्ये'ति निषेधापत्त्या णत्वानापत्तेश्च । प्रकृते आगम-विशिष्ट एव नकारद्वयात्मकसमुदाये पदान्तत्वातिदेशेन 'वर्णग्रहणे जातिग्रहणमि'त्यनेन नकारद्वयस्यापि नग्रहणेन ग्रहणेन निषेधोप-पत्तेश्च पदान्तस्य नद्वयात्मकनकारस्य पर्याप्त्याऽपर्याप्त्या वा णत्वाभावो निषेधेन बोध्यत इति भावः । सजातीयानेकवर्ण-घटितसमुदायेऽपि तज्जातेरारोप इति वर्णग्रहणे जातिग्रहण-मित्यस्यार्थः ।

केचित्तु—पदान्तस्येत्यवयवषष्ठी, ततश्च पदान्तावयवस्य नस्येत्यर्थेनाद्यस्य व्यपदेशिवद्भावेन पदान्तस्य च परिभाषां विनैव निषेध इति वदन्ति—तन्न, रामेणेत्यादावपि नेतिसमुदायस्य पदान्तत्वेन तदवयवस्यापि नस्य णत्वानापत्तेः ।

यत्तु—पदविशिष्टस्य नस्य णत्वन्नेत्यर्थः, वैशिष्ट्यञ्च स्वघट-कत्व-स्वघटकनकारेतरवर्णप्रागभावाधिकरणावृत्तित्वोभयसम्बन्धे-नेति विनैव परिभाषां निषेधसिद्धिरुभयोरिति—तदसमञ्जसम्, शब्दमर्यादयोक्तार्थालाभात् ।

किञ्च गुणादेरपरत्वे रेफविशिष्टे गुणत्वाद्येष्टव्यम्, अन्यथर्का-

यदपि केनचित्—नस्येत्यत्रावयवषष्ठीमाश्रित्य पदान्तनकारावयवस्य णत्वन्नेत्यर्थेन निषेध इत्युक्तं—तदप्यविचारितरमणीयमेव, अवयवस्य स्थानित्वबोधकषष्ठ्यन्तराभावात्। रषाभ्यामित्यनुवर्त्य पञ्चम्योपस्थापितस्योत्तरस्येत्यस्य विशेष्यत्वेन पदान्तनकारावयवत्वविशिष्टस्य रषाभ्यामुत्तरस्येत्यर्थेनोत्तरपदोत्तरं षष्ठ्या स्थानित्वार्थकत्वमित्याशयवर्णनन्तु न युक्तं, 'रषाभ्यामि'त्यनुवृत्तेः फलाभावात्। अस्तु वा यथाकथञ्चित्।

गुणादेरपरत्वे रेफविशिष्टे गुणत्वाद्येष्टव्यमिति। अयं भावः—कर्त्तेत्यादौ ऋकारस्य त्रयो गुणपदबोध्याः प्रसक्ताः तत्राकारस्य प्रसङ्गावस्थायामेव रपरत्वेनारितिप्रसक्तस्संपन्नः तत्र यदागमन्यायेनाकारवृत्तिगुणत्वस्यातिदेशेन मूर्द्धस्थानिकवर्णघटितत्वेन च 'स्थानेन्तरतम'इत्येतत्सहकारेण 'सार्वधातुकार्द्धधातुकयो'रित्यस्यान्तरतमो गुणो भवतीत्यर्थसत्त्वेनारेव ऋकारस्य भवति, वर्णत्वव्याप्यधर्मानतिदेशे गुणत्वस्यातिदेशाभावेनारित्यस्य गुणत्वाभावादकारस्य तत्त्वेऽप्यन्तरतमत्वाभावाद्विनिगमनाविरहेण त्रयाणां पर्यायापत्तिरिति। वस्तुतः—नायं दोषः, रेफविशिष्टे गुणत्वाभावेऽप्यकारस्य 'उरण्रपर' इत्यनेन रेफावयवकत्वबोधनेन ऋकारस्य मूर्द्धस्थानिकावयवकत्वेनान्तरतमोऽकार एव भविष्यति, स च भवन् अर् एव सम्पन्नो भविष्यति। न च तावतापि ऋकारस्य गुणवृद्धी अरारावेवेति सामानाधिकरण्यानुपपत्तिः; इष्टत्वात्, तस्य भाष्यप्रयोगत्वाभावात्, ऋकारस्य यत्र गुणवृद्धी भवतस्तत्रारारावेव संपद्येते इति तस्य व्याख्यानाच्च, ऋकारस्याप्यादेशकोटावन्तरतमो नास्त्यकारस्यापि स्थानिकोटावन्तरतमो नास्तीत्यन्तरतमाभाववत्त्वेनाकारस्यैव ऋकारान्तरतमत्वाच्च। तदुक्तम्—अनान्तर्यमेवैतयोरान्तर्यमिति।

रस्य गुणवृद्धी अरारावेवेति नियमो न स्यात्, तच्च वर्णग्रहण एतदप्रवृत्तौ न सङ्गच्छते । अतएव 'रदाभ्यामि'तिसूत्रे भाष्ये 'गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभि-

रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तत इति । रेफः शिरः परावयवो यस्यारित्यादेः स गुणादिसंज्ञक इत्यर्थः । अत्वस्य गुणसंज्ञकत्वस्य चाऽरित्यत्रातिदेशाभावे तस्य गुणसंज्ञकत्वानुपपत्तिरिति भावः । वस्तुतः इदमपि भाष्यन्नैव विरुणद्धि, गुणवृद्धिसंज्ञकोऽकारादिः रेफशिरा अभिनिर्वर्त्तत इत्यर्थात् । रेफशिरा इत्यत्र चातद्गुणसम्विज्ञानम् ।

तथा चाद्यदूषणमेव सम्यगिति तत्त्वम् । उपदिश्यमानाकारान्तात्परत्वस्योपलक्षणत्वे तु तत्रापि न दोष इति विभावनीयम् ।

यत्तु—लुलविथेत्यादौ अवादेशावयवाकारस्य गुणशब्दप्रयोज्यविधेयताश्रयत्वरूपस्य गुणशब्दभावितत्वस्याभावेन 'न शसदद' तिनिषेधाप्राप्तिः तदर्थं स्थानिवद्भावेन गुणशब्दभावितत्वमवादेशेऽप्यानेयम्, तस्य चाल्मात्रवृत्तित्वात् स न स्यात्; अर्शब्दे गुणत्वातिदेशे तु तस्यापि गुणशब्दभावितत्वेन तस्य अल्मात्रवृत्तित्वन्न भवतीति स्थानिवद्भावेन निषेधः सिद्ध्यतीति वर्णग्रहणे प्रवृत्तिरावश्यकीति—तन्न, अल्मात्रवृत्तित्वाभावेऽप्यशास्त्रीयत्वेन गुणशब्दभावितत्वस्यातिदेशासंभवेन दोषस्य प्रकारान्तरेणैव वारणीयत्वात् । कोऽसौप्रकार इति चेत, अत्रोच्यते—गुणपदस्य स्वविशिष्टे लक्षणा, वैशिष्ट्यञ्च स्वप्रयोज्यविधेयताश्रयत्व-स्वप्रयोज्यविधेयताश्रयस्थानिकत्वान्यतरसम्बन्धेन । स्वबोध्यविधायकशास्त्रव्यापाराधीनलब्धसत्ताकत्वावच्छिन्ने वा लक्षणा, तथा च स्थानिवद्भावं विनैव निषेधः प्रकृते उपपन्न इति ।

लोकन्यायसिद्धाया अस्याः शास्त्रे आश्रयणे मानमाह—

निर्वर्तेत' इति। अतएव 'नेटि' 'णेरनिटि' इत्यादि चरितार्थम्।

'अनागमकानां सागमका आदेशा' इत्यस्य त्वयमर्थः—आर्धधातुकस्येडागम इत्यर्थे ज्ञाते नित्येषु शब्देष्वागमविधानानुपपत्त्या अर्थापत्तिमूलकवाक्यान्तरकल्पनेन इड्रहितवृद्धिप्रसङ्गे सेड्वृद्धिः कर्त्तव्येति। एवं चादेशेष्विवात्रापि वृद्धिविप-

---

अतएव नेटीत्यादि—यदागमपरिभाषाया: शास्त्रे आश्रयणादेवेत्यर्थः, मा भवानतीदित्यादौ यदागमन्यायाभावे इड्विशिष्टे सिच्त्वाभावेनेटा व्यवधानेन वृद्ध्यप्राप्तौ 'नेटी'त्यस्य वैयर्थ्यात्। एवमेव 'णेरनिटी'त्यत्रानिटीत्यस्यापि वैयर्थ्यं बोध्यम्।

ननु प्रणिदापयतीत्यादौ दाप्त्विदात्वस्य दाप्शब्दे स्थानिवत्सूत्रेणातिदेश एव 'अनागमकानां सागमका आदेशा' इति स्थान्यादेशभावकल्पनाया: फलम्, तदतिदेशस्य च यदागमपरिभाषयैव लाभेन भाष्ये दृश्यमानस्य 'अनागमकानां सागमका आदेशा' इत्यस्य किं प्रयोजनमित्यत आह—अनागमकानां सागमका आदेशा इत्यस्य त्वयमर्थ इति। इदं वक्ष्यमाणं प्रयोजनमित्यर्थः। अर्थापत्तीति—अर्थस्योपपादकस्यापत्तिः कल्पनं यया सा अनुपपत्तिरूपा अर्थापत्तिः पञ्चमं प्रमाणं वेदान्तिसम्मतमित्यर्थः। प्रकृते नित्ये शब्दे उपचयापचयरूपविकाररहिते, आगमरूपोपचयस्यासम्भवेन आगमविधानानुपपत्त्या इड्रहितस्य वलादेरार्द्धधातुकस्य सेट् इति वाक्यान्तरं कल्प्यते, तेन च 'मृजेर्वृद्धि'रित्यादिना मृजिप्रसङ्गे मार्जिरिव इड्रहितस्य तव्येत्यस्य प्रसङ्गे इतव्यः साधुरिति बोध्यते; तथा च नोत्पत्तिनिवृत्ती, अपि तु तद्बुद्धिप्रसङ्गे तद्बुद्धिरिति आदेशस्थलवदागमस्थलेऽपि न नित्यत्वहानिरिति बोध्यम।

ननु आगमस्थलेऽपि अनित्यत्ववारणायावश्याश्रयणीये स्था·

रिणाम इति न नित्यत्वहानिः। स्थानिवत्सूत्रे नेदृशादेशग्रहणं, साक्षादष्टाध्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात्। किञ्चैवं सति स्थानिबुध्यैव कार्यप्रवृत्त्या 'निर्दिश्यमानस्ये'तिपरिभाषाया अप्राप्त्याऽडागमसहितस्य पिबाद्यादेशापत्त्या लावस्थायामडिति भाष्योक्तसिद्धान्तासङ्गतिः। स्थानिवद्भावविषये 'निर्दिश्यमानस्ये'तिपरिभाषायाः प्रवृत्तौ तिसृणामित्यत्र परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रयादेशमाशङ्क्य सकृद्गतिन्यायेन समाधानपरभाष्यासङ्गतिः। 'एरु'रित्यादौ स्थानषष्ठीनिर्देशा-

---

न्यादेशभावे स्थानिवत्सूत्रेणैव निर्वाहात् यदागमपरिभाषा मास्त्वित्यत आह—स्थानिवदिति। साक्षादिति—अष्टाध्यायीस्थशास्त्रघटकषष्ठीप्रतिपाद्येत्यर्थः। अयं तु स्थान्यादेशभावो न तथा, अपि तु अष्टाध्यायीस्थशास्त्रकल्पितशास्त्रघटकषष्ठीप्रतिपाद्य इति बोध्यम्।

ननु 'नेटि' 'णेरनिटी'ति ज्ञापकेनोभयविधस्थान्यादेशभावयोः स्थानिवत्सूत्रे एव ग्रहणमस्तु। मास्तु परिभाषेत्यत आह—किञ्चेति। स्थानिवद्भावविषयेऽपि निर्दिश्यमानपरिभाषाप्रवृत्तौ दण्डमाह—स्थानिवदित्यादिना। भाष्यासङ्गतिरिति। स्थानिवद्भावेन तिस्रादेशे त्रिशब्दत्वबुद्धावपि अपिबदित्यत्रेव निर्दिश्यमानत्वाभावादादेशाप्रवृत्तेरिति भावः।

ननु भवत्वित्यादाविकारोकारयोः 'एरु'रितिशास्त्रस्थषष्ठीप्रतिपाद्यस्थान्यादेशभावेऽपि इकारे तिङ्त्वाभावात्तिशब्दस्यानुमानिकस्थानित्वेऽपि तस्य स्थानिवत्सूत्रेऽग्रहणेन तिङ्त्वस्याक्तपरिमाणनिष्टत्वेन एकदेशविकृतन्यायाप्रवृत्तेश्च तिङ्त्वाभावात्पदत्वानापत्तिरित्यत आह—एरुरित्यादि। 'आर्द्धधातुकस्येड्वलादे'रित्यत्र षष्ठ्या अवयवत्वार्थकतया तत्सूत्रकल्पितवाक्यान्तरस्थैव षष्ठी

त्तदन्तपरतया पठितवाक्यस्यैव समुदायादेशपरत्वेनादेशग्रहणसामर्थ्यात्तस्य 'स्थानिवत्'सूत्रे ग्रहणेन न दोषः । आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इति 'अचः परस्मिन्' इत्यादेर्नासङ्गतिः । एतेन 'यदागमा' इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम् । एतत्सर्वं 'दाधाघ्वदाप्'ितिसूत्रे भाष्ये स्पष्टम् ॥ ११ ॥

---

स्थानित्वार्थिका, अत्र तु अष्टाध्यायीस्थसूत्रघटकषष्ठ्येव स्थानित्वबोधिका, इकारादिपदस्य तदन्ते लक्षणयैव समुदायस्य तितुरूपस्य स्थान्यादेशभावलाभादस्य स्थानिवत्सूत्रे ग्रहणम्भवतीति भावः । ननु स्थानिवत्सूत्रस्य प्रथमोपस्थितश्रौतस्थान्यादेशभावमादाय रामायेत्यादौ चारितार्थ्येन लक्षणादिलब्धसमुदायस्थान्यादेशभावग्रहणे मानाभाव इत्यत आह—आदेशग्रहणसामर्थ्यादिति । अयम्भावः—पितृवदधीत इत्यादौ पितृपदार्थस्य ससम्बन्धिकत्वात् पुत्रस्येव स्थानिवदित्येतन्मात्रोक्तावपि आदेशस्य लाभादादेशग्रहणमादेशमात्रग्रहणार्थं तेनानुमानिकस्यापि साक्षादष्टाध्यायीबोधितस्य ग्रहणं, न तु अर्थापत्तिमूलकवाक्यान्तरबोधितस्य तस्य, अतिविलम्बोपस्थितिकत्वादप्रधानत्वाच्चेति ।

ननु आनुमानिकस्थान्यादेशभावकल्पने अज्मात्रस्थानिकादेशस्यासम्भवा'दचः परस्मिन्नि'ति व्यर्थमित्यत आह—आनुमानिकेत्यादि । इवस्थाने यण्साधुः । परन्तु इदन्न युक्तम्, इग्घटितस्य यण्घटितस्साधुरित्येवंक्रमेण प्रक्रियानिर्वाहाय शास्त्राणामर्थकल्पनात् ।

एतेन—आगमस्थलीयस्थान्यादेशभावस्य स्थानिवत्सूत्रे ग्रहीतुमशक्यत्वेनेत्यर्थः । अपास्तमिति । अत्रोच्यते—न वयं स्थानिवत्सूत्रविषये नियमेन प्रवर्त्तते न प्रवर्त्तते वा निर्दिश्यमानपरि-

भाषेत्यभ्युपगच्छामः, अपि तु यस्य निर्दिश्यमानत्वं तस्यादेशो भविष्यति यस्य न तस्यादेशो नेत्येव कल्प्यते; यदागमपरिभाषा च न मन्यते; स्थानिवत्सूत्रे च सर्वेषामादेशानां ग्रहणं क्रियते। निर्दिश्यमानत्वञ्च षष्ठीप्रकृतिविशिष्टत्वम्, वैशिष्ट्यञ्च स्वजन्योपस्थितिविषयत्व-स्वजन्योपस्थितिविषयसमभिव्याहृतवर्णाघटितत्वोभयसंबन्धेन। अपिबदित्यत्र न दोषः, 'पाघ्राध्मे'तिसूत्रस्थषष्ठीप्रकृतिपाविशिष्टत्वं पाशब्दस्यैवेति तस्यैव पिबादेशः, स्वजन्योपस्थितीयविषयताश्रयत्वमस्ति पाशब्दस्य, स्वजन्योपस्थितीयविषयताश्रयः पा, तत्समभिव्याहृतोऽकारः, तद्घटितत्वमपाशब्दस्य, अघटितत्वं तस्येति समन्वयः। तिसृणामित्यत्र च षष्ठीप्रकृतिः 'त्रेस्त्रय'इतिसूत्रस्था त्रिरूपा, तज्जन्योपस्थितिविषयताश्रयत्वं तिसृशब्दस्य, तत्समभिव्याहृत उदासीनः तदघटितत्वमपि तिसृशब्दस्यैवेति प्राप्तस्त्रयादेशः सकृद्गतिन्यायेन वारितो भाष्य इति सर्वं समञ्जसम्।

नन्वेवं देवीमञ्चति देवद्र्यङित्यत्र 'विष्वग्देवयोश्चटे'रित्यनेन देवीशब्दावयवटेरद्र्यादेशो न स्यात्, अवयवषष्ठीविषयेऽप्यस्याः प्रवृत्तेर्देवपदीयनिर्दिश्यमानावयवटेरेवाञ्चतौ परे अद्र्यादेशेन देवीशब्दस्य निर्दिश्यमानत्वाभावात्; यद्यपि लिङ्गविशिष्टपरिभाषया देवग्रहणेन देवीशब्दस्यापि ग्रहणात् षष्ठीप्रकृतिर्देवशब्दः, तज्जन्योपस्थितीयविषयताश्रयत्वं देवीशब्दस्य, परं स्वजन्योपस्थितीयविषयताश्रयो देवशब्दः, तत्समभिव्याहृत ईकारः, तद्घटितत्वस्यैव सत्त्वात्; वर्णे स्त्रीप्रत्ययेतरत्वनिवेशे तु प्रकृते दोषाभावेऽपि अस्य स्त्री ई तस्या जरसौ ईजरसावित्यत्रापि समुदायस्य निर्दिश्यमानत्वापत्तिर्दुर्वारा, स्वजन्योपस्थितीयविषयताश्रयसमभिव्याहृतस्त्रीप्रत्ययेतरवर्णाघटितत्वात् इति चेत्—न, द्वितीयसम्बन्धस्थाने स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वस्य निवेशनीयत्वात्। वैशिष्ट्यञ्च स्वसमभिव्याहृतत्व-

स्वप्रकृतिकस्त्रीप्रत्ययेतरत्वोभयसम्बन्धेन । देवीत्यत्र स्वजन्योपस्थितीयविषयताश्रयो देवस्तद्विशिष्टत्वमिकारस्य नास्ति स्वसमभिव्याहृतत्वेऽपि स्वप्रकृतिकस्त्रीप्रत्ययेतरत्वाभावात् । ईजरसावित्यत्र चेकारस्य तद्विशिष्टत्वेन न दोषः ।

नन्वेवमपि जराया जरा जराजरा, जराजरसावित्यत्रोपस्थितीयविषयताश्रयः पूर्वो जराशब्दः, तद्विशिष्ट उत्तरजराजकारः तद्घटितत्वादुत्तरस्य निर्दिश्यमानत्वाभावः ; न च द्वितीयसम्बन्धस्थाने स्वजन्योपस्थितीयविषयताश्रयावधिकपूर्ववर्णाघटितत्वसम्बन्धस्य निवेशादुत्तरस्य निर्दिश्यमानत्वमक्षतमिति वाच्यं, त्रिशब्दादाचारक्विबन्तात् कर्तरि क्विपि तुकि आमि त्रितामित्यादौ उपस्थितीयविषयताश्रयस्त्रिशब्दः तदवधिकपूर्वो वर्ण उदासीनः तदघटितत्वं त्रिदित्यस्येति तस्य निर्दिश्यमानत्वेन त्रयादेशापत्तेः; अथ स्वजन्योपस्थितीयविषयताश्रयत्व-स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वोभयसम्बन्धेन षष्ठीप्रकृतिविशिष्टत्वन्तत्त्वम् , वैशिष्ट्यञ्च स्वावधिकपूर्वत्व-स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वैतदन्यतरसम्बन्धेन, जराजरसौ निर्जरसावित्यादौ समुदायस्य व्याघ्रपात्पद इत्यादौ पूर्वपाच्छब्दस्य च तत्त्वाभावाय पूर्वत्वनिवेशः, त्रितामित्यादौ तदभावायोद्देश्यताघटितो द्वितीय इति सर्वमवदातम् ; नन्वेवमपि प्रतिपिञ्चतीत्यादौ नुम्विशिष्टस्य तन्मध्यपतितन्यायेन सिच्त्वेऽपि सिज्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयो नुम् तद्घटितत्वेन निर्दिश्यमानत्वाभावात् पत्वानापत्तिरिति चेत्—न, सम्बन्धघटकद्वितीयसम्बन्धस्थाने स्वसमभिव्याहृतत्व स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वैतदुभयसम्बन्धेन स्वविशिष्टत्वस्य निवेशनीयत्वात् , नुमः सिच्समभिव्याहृतत्वविरहात् पूर्वपरयोरेव समभिव्याहृतपदार्थत्वादिति चेत्—मैवम् , यतो व्याघ्रपदः सुपद इति समुदाये उपस्थितीयविषय-

ताश्रयपरपाच्छब्दावधिकपूर्ववर्णघटितत्वेन पूर्वस्य पदादेशाभावापत्त्याऽव्यवहितपूर्वत्वं सम्बन्धघटकं वक्तव्यम्। तथा चास्नात्वाकालकं स्नात्वाकालकं कृत्वा स्नात्वाकालकीकृत्येत्यत्र मयूरव्यंसकादित्वात्स्नात्वाकालक इत्यत्र समासः, पश्चाच्च्व्यन्तस्य गतित्वात् 'कुगतिप्रादय' इति समासे पूर्वक्त्वाप्रत्ययस्यापि 'समासे नञ् पूर्वे'त्यत्रत्यषष्ठीप्रकृतिक्त्वाविशिष्टत्वान्निर्दिश्यमानत्वेन ल्यबादेशापत्तिर्यतः स्वजन्योपस्थितीयविषयताश्रयत्वमप्यस्ति, स्वजन्योपस्थितीयविषयताश्रयः परस्तदव्यवहितपूर्ववर्णाघटितत्वेन तद्विशिष्टवर्णाघटितत्वञ्चास्ति। ननु स्नात्वाकालिक इत्यादौ ल्यपोऽभावाय 'स्नात्वाकालकादीनां प्रतिषेधो वक्तव्य' इत्यनेन भाष्यवार्तिकेनैवात्रापि वारणं, समासान्तरघटकत्वेऽपि स्नात्वाकालकत्वाविशेषादिति चेत्—न, वार्त्तिकप्रत्याख्यानायानञ्पूर्वपदकस्य क्त्वान्तसमासस्य ल्यबित्यर्थस्य भाष्यकृताश्रयणात्। अतएव 'स्नात्वाकालकादीनां प्रतिषेधो वक्तव्य' इत्युक्त्वा तदन्तनिर्देशात्सिद्धमित्युक्तम्। तथा च प्रत्याख्यानपक्षे पूर्वक्त्वाप्रत्ययस्यापि ल्यबापत्तिः, क्त्वान्तसमासावयवक्त्वापदीयनिर्दिश्यमानस्य ल्यबित्यर्थात्।

अत्रोच्यते—आरम्भप्रत्याख्यानयोः फलभेदेनानभिधानमेवास्य, किञ्च मयूरव्यंसकादौ समासार्थं स्नात्वाकालक इति निपातनमवश्यं कर्तव्यं, तेनैव ल्यबभावोऽपि भविष्यति।

यत्तु—स्नात्वाकालकेति समासप्रयोज्यस्यैव ल्यपोऽभावो निपातनाद्भविष्यति, न स्नात्वाकालकीकृत्येतिसमासप्रयोज्यस्यापीति—तन्न, तादृशविशेषाश्रयणाभावेऽपि बाधकाभावात्। अतएव युधिष्ठिरपुत्र इत्यत्र सप्तम्या विशिष्टसमासप्रयोज्योऽपि 'हलदन्तात्सप्तम्या' इति न लुक्। अनञ् इति पर्युदासादव्ययपूर्वपदात्परस्य क्त्वो ल्यबित्यर्थाद्वा ल्यबभावः। तदुक्तं भाष्ये—'समासनिपातनाद्वा, अवश्यमत्र समासार्थं निपातनं कर्त्तव्यं, तेनैव यत्नेन

ल्यबपि न भविष्यति अनञो वा परस्य अथवा ,अनञः परस्य ल्यपा भवितव्यमि'त्यादि ।

यत्तु — 'मयूरव्यंसकादयश्चे'तिचकारेणैतद्विहितसमाससंज्ञकानां समासान्तरे न प्रवेशः, अतएव परमाश्च ते मयूरव्यंसका इतिवाक्यमेवेति स्नात्वाकालकघटितसमासस्यासाधुत्वान्नैतत्प्रयोग इति—तन्न, सजातीये कर्मधारय एव तेनाप्रवेशबोधनात्। अतएव प्रत्ययमात्रग्रहणे इत्यादिग्रन्थकृत्प्रयोग उपपद्यते। किञ्च 'अन्त्यबाधेऽन्त्यसंदेशस्ये'तिपरिभाषयापि पूर्वस्य क्त्वो ल्यबभावः, न च प्रकृते नान्त्यस्य बाधः, न वान्त्यसदेशस्याऽऽकारविनिर्मुक्तस्य क्त्वितिसमुदायस्य प्राप्तिरिति वाच्यम्, अन्त्यपदेन वर्णस्यैव विवक्षितत्वात् । तथा चान्त्यवर्णपर्याप्तोद्देश्यताककार्यप्रयोजके शास्त्रे अन्त्यसदेशस्येत्यस्योपस्थितिरिति परिभाषार्थः। अन्त्यसदेशस्येत्यस्य नाभेदेन निर्दिश्यमानविशेषणत्वम्, अपि तु आदेशे एवैकत्र द्वयमितिरीत्याऽन्वयः । तथा चानञ्पूर्वपदकस्य क्त्वान्तस्य समासस्यावयवो यः क्त्वापदीयनिर्दिश्यमानस्तत् स्थानिकत्वविशिष्टः सन् अन्त्यसदेशस्थानिको ल्यबिति बोधः। अन्त्यसदेशस्य स्थानिता चापर्याप्त्या तथा च तथा ल्यप् भविष्यति यथा निर्दिश्यमानान्त्यसदेशोभयस्थाने स्यात् । स चान्त्यक्त्वाप्रत्ययस्य ल्यबादेशे एवेति न पूर्वस्यादेशः। किञ्च षष्ठीप्रकृतिविशिष्टत्वं तत्त्वम्, तत्र वैशिष्ट्यनियामकद्वितीयसम्बन्धस्थाने स्वप्रयोज्यशाब्दबोधीयविषयताविशिष्टवर्णाघटितत्वं निवेशनीयम्। वैशिष्ट्यञ्च वर्णे स्वानाश्रयत्व-स्वाश्रयसमभिव्याहृतत्वोभयसम्बन्धेन । स्नात्वाकालकीकृत्येत्यत्र क्त्वान्तसमासस्य ल्यबित्यर्थे क्त्वापदीयशाब्दबोधीयविषयतायास्समासान्ते क्त्वाशब्दे एव सत्त्वेन, तदनाश्रयत्वस्य तदाश्रयसमभिव्याहृतत्वस्य च पूर्वक्त्वाप्रत्ययघटकवर्णे सत्त्वेन, तद्घटितत्वस्यैव पूर्वस्मिन् सत्त्वेन न पूर्वस्य निर्दिश्यमानत्वम् । व्याघ्रपदः सुपद इत्यत्र 'पादः पदि'तिसूत्र-

घटकपाच्छब्दप्रयोज्यशाब्दबोधीयविषयताया एकस्या एवोभयत्र सत्त्वेन स्वानाश्रयत्वस्य पाच्छब्दावयवे अभावेनोभयत्र निर्दिश्यमानत्वोपपत्तिः, अवच्छेदकभेदेनैव विषयताया भेदात्। अतएव सजुषस्सजुषौ सजूस्सजुषौ ताभ्यां सजूस्सजूभ्यामित्यत्रोभयत्र निर्दिश्यमानत्वसिद्धिः, 'ससजुषो रु'रित्यस्य सजूश्शब्दान्तपदस्य रुरित्यर्थेन पदनिष्ठविशेष्यतानिरूपितायाः सजूश्शब्दत्वावच्छिन्नायाः शाब्दीयविषयताया एकस्या एवोभयत्र सत्त्वादवच्छेदकस्योभयत्रैकस्यैव सत्त्वेन विषयताभेदे मानाभावात्। न च अपिबदित्यादावर्थवत्त्वावच्छिन्नविषयतया संकुचितायाः पात्वावच्छिन्नविषयताया आगमविशिष्टे एव सत्त्वं; न तु तद्रहिते, तस्यानर्थकत्वात्; ततश्च शाब्दबोधीयविषयताविशिष्टोऽकारो न भविष्यतीति तादृशविषयताविशिष्टवर्णाघटितत्वेन उपस्थितीयविषयताश्रयत्वेन च विशिष्टस्यापि निर्दिश्यमानत्वापत्तिरेवमागमस्थले सर्वत्र बोध्यमिति वाच्यम्; स्वजन्योपस्थितीयविषयताश्रयनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयाघटितत्वरूपतृतीयसम्बन्धस्यापि स्वतन्त्रस्य निवेशेनादोषात्। न वा प्रतिषिञ्चतीत्यत्र तादृशविधेयताश्रयनुम्घटितत्वेन दोषावसरः, तादृशोपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वस्य विवक्षितत्वात्। वैशिष्ट्यञ्च स्वसमभिव्याहृतत्व-स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वोभयसम्बन्धेन, नुमस्समभिव्याहृतत्वाभावात्। एवञ्च यदागमपरिभाषा निष्फलेति विभावयन्तु सुधियः।

परे तु—पचमान इत्यादौ 'तास्यनुदात्तेदि'ति स्वरार्थं ऋकारस्य गुणवृद्धी अरारावेवेति नियमार्थञ्च परिभाषावश्यकत्वमेव, अकारान्तोपदिश्यमानत्वस्य गुणत्वस्य चाल्मात्रवृत्तिधर्मघटितत्वेन स्थानिवत्त्वाप्रवृत्तेरिति वर्णग्रहणे न प्रवर्त्तत इत्येतत्खण्डनखण्डनावसरे विस्तरेण प्रतिपादितमिति तत एव द्रष्टव्यमित्याहुः।

ननु स्थानेद्विर्वचनरूपपदद्वित्वे जराजरसावित्यादौ स्थानिव-

द्भावेन समुदायस्यापि जरात्वात् शाब्दबोधीयविषयताया उत्तरजराशब्दे इव समुदायेऽपि तस्या एव सत्त्वेन पूर्वजराऽऽकारस्य तादृशविषयताश्रयावधिकपूर्वत्वेऽपि स्वानाश्रयत्वाभावेन विषयताविशिष्टत्वाभावेन विशिष्टवर्णाघटितत्वेन समुदायस्यादेशापत्तिः; नन्वयं प्रयोगो न सम्भवति, हलङ्यादिलोपे जरेतिपदस्य समुदायस्यानस्तमितावयवकत्वेन भागद्वयस्य सुबन्तत्वेन समासग्रहणनियमेन स्थानिवद्भावेन प्रत्ययान्तत्वाच्च प्रातिपदिकत्वाभावात्ततो विभक्त्युत्पत्त्यसम्भवात्, न च तस्य कृतद्वित्वस्य परमादिना समासं कृत्वा एकशेषेण परमजराजरा औ इत्यादौ दोष इति वाच्यं, यत्किञ्चिन्निरूपितव्याप्यताया एव वीप्सापदार्थतया वीप्सितस्य व्यापके अन्वयनियमेन परमादिनाऽसामर्थ्येन समासाप्राप्तेरिति चेत्—न, अतिशयिता जराजरा अतिजराजरा इत्यत्र अत्यर्थातिशयं प्रत्येव वीप्सितत्वेन तत्रैवान्वयेन समासस्य द्वित्वस्य चोपपत्त्या पश्चादेकशेषे अतिजराजरसाविति प्रयोगस्योपपादनसम्भवात; इति चेत—मैवम्, समुदायादेशस्यैवेष्टत्वात्। न च तत्र विशिष्टस्य नेष्यत आदेशः अतएव 'जरायाः' इति सूत्रे प्रतिपत्तिलाघवाय जराया असुङ् न कृतः, 'त्रेस्त्रय' इति त्रेरयङिति न कृत इति शेखरकृतोक्तं सङ्गच्छते, अन्यथा पदद्वित्वस्थले समुदायस्य जरसादेशे अतिजरसाविति असुङादेशेऽतिजराजरसाविति, एवं पदद्वित्वस्थले समुदायस्य त्रयादेशेऽतित्रयाणामिति, अयङादेशेऽतित्रित्रयाणामितिप्रयोगभेदरूपदोषसत्त्वे लाघवपर्यन्तानुधावनस्य ग्रन्थकृतोऽसङ्गत्यापत्तेरिति वाच्यं, पदद्वित्वस्थलापर्यालोचनेनैव तद्ग्रन्थस्य सत्त्वात, त्रिशब्दस्य बहुवचनान्तस्य पदस्य द्वित्वे स्थानित्वेन त्रय इति तदादेशस्य त्रयः त्रयः इति समुदायस्य स्थानिवद्भावेन त्रिशब्दत्वालाभाच्च। न चाश्वचनं साकच्कार्थम्, इमोऽः इत्येव सिद्धे कादेशः साकच्कार्थं इति भाष्यादिग्रन्थविरोधः पदद्वित्वस्थले फलभेदादिति वाच्यं, साकच्कार्थं

नन्वेवमुदस्थादित्यादौ 'उदः स्थास्तम्भोःपूर्वस्ये'ति

मित्यस्य पदद्वित्वस्याप्युपलक्षकत्वात्, अन्तरङ्गत्वात् कादेशे कृते द्वित्वप्राप्त्या समुदाये स्थानिवद्भावेन किम्-शब्दत्वालाभाच्च । 'पादः पदि'तिसूत्रेणोपधाया ह्रस्वत्वं वक्तव्यम्, अन्यथा द्विपदः पश्येत्यादौ समुदायस्यादेशापत्तिर्न्न वक्तव्यं, निर्दिश्यमानस्यैवादेशादित्यर्थकभाष्यविरोधः, पदद्वित्वस्थले व्याघ्रपात्पद इति ह्रस्वपक्षे निर्दिश्यमानस्यादेशपक्षे च व्याघ्रपद इति फलभेदात्— इत्यपि न वाच्यम्; वार्त्तिकस्य द्विपद इत्यादौ समुदायादेशाभावरूपं यत् प्रयोजनं तस्य निर्दिश्यमानपरिभाषया अन्यथासिद्धिप्रतिपादनमात्रपरं हि तद्भाष्यं, न तु ह्रस्वकरणे दोषो नास्तीत्यत्र तात्पर्यं तद्भाष्यस्येतिकल्पनात् । तथा च द्विपद इत्यादौ विशिष्टस्य निर्दिश्यमानत्वाभावेनादेशाप्राप्तेः, पदद्वित्वस्थले दोषाच्च ह्रस्वत्वन्न वक्तव्यमिति फलति । अतएव व्याघ्रपाच्छब्दाण्णिजन्तात् क्विपि णिलोपटिलोपयोः शसि निर्दिश्यमानस्य पदादेशे व्याघ्रपदः, ह्रस्वे व्याघ्रप इतिफलभेदोद्भावनमपि न युक्तं; तत्र दोषस्यैव सत्त्वात्, णिलोपस्य स्थानिवद्भावेऽपि तत्पूर्वभागस्य पाच्छब्दान्तभत्वानपायात् सूत्राप्रवृत्तेर्वक्तुमशक्यत्वात्, बहुव्रीहावेव कृतसमासान्तत्वेन तत्र च समासैकदेशस्य वीप्सितत्वासम्भवाच्च, भाष्यप्रामाण्यात् तादृशलक्ष्याणामनभिधानकल्पनाच्च । एतेन निरुक्तदोषैः पदद्वित्वस्थले विशिष्टस्य निर्दिश्यमानत्वं नैवेष्यत इति केनचिदुक्तन्त्वविचाररमणीयम्; 'येन विधि'-'यदागम' इत्युभयबोधितस्थानित्वप्रतिषेधमात्रफलिका निर्दिश्यमानपरिभाषेत्यस्य 'अनया परिभाषया येन विधिरितिसूत्रे'त्यादिवक्ष्यमाणग्रन्थकारोक्त्या स्पष्टं लाभादिति दिक्, निर्जरसावित्यादौ जरेति हलन्तस्य स्थानिवद्भावेन जरात्ववत् पदद्वित्वस्थलेऽपि स्थानिवद्भावेन विशिष्टस्य जरात्वसत्त्वेन वैषम्ये बीजाभावाच्च ॥ ११ ॥

पूर्वसवर्णापत्तिरत आह—

निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

नन्वेवमुदस्थादित्यादाविति। यदागमपरिभाषायाः स्वीकारे अस्थेत्यस्यापि तथा स्थात्वादिति भावः। सत्याञ्चास्यां निर्दिश्यमान एवोदःपरत्वस्यान्वयेनोदस्थादित्यत्राकारेण व्यवधानान्न दोष इति बोध्यम्[1]। ननूदस्थेतिसूत्रे लुप्तषष्ठ्यन्तसकारस्य प्रश्लेषेणोदः परस्य स्थास्तम्भसम्बन्धिसकारस्येत्यर्थेन न दोष इति चेत्—उदस्थादिति निर्जरसावित्यस्योपलक्षणं, तत्र तदन्तविधिना समुदायस्य जरसादेशापत्तिः। न च जराया इत्यादेरपि अङ्गस्येत्यवयवषष्ठ्याऽजादिविभक्त्यव्यवहितपूर्वस्याङ्गावयवस्य जराशब्दस्य जरसित्यर्थेन न दोषः, न च सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वान्नैवमिति वाच्यम्, सत्यामपि परिभाषायां जराशब्दान्ताङ्गावयवस्य निर्दिश्यमानस्येत्यर्थेन वैयधिकरण्यान्वयस्यावश्यकत्वात् इति वाच्यं; तावताप्याचारक्विबन्तप्रकृतिककर्तृक्विबन्तत्रितशब्दादामि त्रितामित्यादौ यदागमन्यायेन त्रिस्शब्दस्य त्रिशब्दत्वात् आमव्यवहितपूर्वत्वाच्च विशिष्टस्या-

[1] न दोष इति बोध्यमिति। न च लुङ्लङ्लृङामिति न्यासे लुङाद्यन्तानामड़ागम इत्यर्थे लुङाद्यन्तग्रहणेन अड्विशिष्टस्य ग्रहणेऽपि स्याग्रहणेन अड्विशिष्टस्याग्रहणान्न दोष इति वाच्यम्; वीधातोर्लिटि प्रथमपुरुषबहुवचने लावस्थायामडितिपक्षे इयटं बाधित्वा अनेकाच्त्वाद्यणि अव्यन्नितिप्रयोगे अड्विशिष्टधातावद्वत्वातिदेशाभावेन यणनापत्तेः, प्रययदादित्यत्र अड्विशिष्टे दात्वातिदेशाभावे घुसंज्ञानुपपत्तेश्च। न च सत्यामपि परिभाषायामुदःपरीभूतस्यावयवनिर्दिश्यमानस्येत्याद्यर्थे दोषस्तदवस्थ इति वाच्यम्, 'सम्भवति सामानाधिकरण्य'इतिन्यायेन उदःपरीभूतनिर्दिश्यमानस्थाशब्दस्येत्यर्थे दोषाभावात्।

देशापत्तेः। न च यदागमपरिभाषाया लक्षणाग्राहकत्वेन[1] त्रिशब्दस्य त्रिशब्दविशिष्टे लक्षणया त्रिशब्दादुपस्थितत्रिशब्दविशिष्टैकदेशे त्रिशब्दे एवाऽऽमव्यवहितपूर्वत्वस्यान्वयेनाऽऽमव्यवहितपूर्वत्वविशिष्टो यस्त्रिशब्दस्तद्विशिष्टस्य त्रयादेश इत्यर्थेन न दोष इति वाच्यम्, अपिबदित्यत्र तावताप्यनिस्तारात् परिभाषाया आवश्यकत्वात्[2]।

---

१ लक्षणाग्राहकत्वेनेति। 'कास्प्रत्ययादि'तिसूत्रे प्रत्ययग्रहणमपनीय 'कास्यनेकाच इति वक्तव्यमि'तिवार्त्तिककरणेन एकाच्भ्य आचारक्विपोऽनभिधानेन त्रितामितिप्रयोगस्य अनभिधानत्वमपि बोध्यम्।

२ परिभाषाया आवश्यकत्वादिति। इदञ्चिन्त्यम्, 'पाघ्राध्मेत्यत्र वकारप्रश्लेषेण घादिघ्राधातोः जिघ्रादेशविधाने तत्साहचर्यादनतिदिष्टस्यैव पाधातोर्ग्रहणेनापिबदित्यत्र दोषाभावात्। न च सुपात्पदः विश्ववाडूह इत्यादि परिभाषाफलमिति वाच्यम्, 'पादः पदि'तिशास्त्रस्य भपदेनाजादिप्रत्ययाक्षेपात् अजादिप्रत्ययपरकाव्यवहितस्याङ्गावयवस्य पादः पदित्यर्थे 'वाहऊडि'तिशास्त्रस्य उक्तयुक्त्या अजादिप्रत्ययपरकाव्यवहितस्य भसंज्ञकाङ्गावयवस्य वाहऊडित्यर्थे च दोषाभावात्। स्नात्वाकालकीकृत्येति च मयूरव्यंसकादौ निपातनात्सिद्धम्। न चारुदितामित्यत्र 'रुदादिभ्य' इति तस इटि कृते निर्दिश्यमानपरिभाषयैव तस्मात्रस्य तामादेश इति वाच्यम्, इटो बहिरङ्गतयाऽसिद्धत्वेन प्रागेव तामादेशेनादोषात्। न च परिभाषासत्त्वे रमायामित्यादौ याटा व्यवधानात् रमायामित्यत्र ङेरामोऽप्राप्तौ अनवकाशत्वमूलकेन 'येन नाप्राप्ति'न्यायेन आमा याटो बाधेऽपि पुनर्याट्सिद्धिः, परिभाषाऽभावे तु यदागमपरिभाषया याड्विशिष्टस्य ङित्त्वातिदेशेन याट्कृते चारितार्थ्यसत्त्वेन तक्रन्यायेन याटो बाधे पुनर्याट् न स्यादिति वाच्यम्; 'ङेरामि'त्यनेन नीसाहचर्यादनतिदिष्टस्यैव ङेराम्विधानेन रमायामित्यत्र कृते चारितार्थ्यविरहेण तक्रन्यायस्याप्रवृत्तौ दोषाभावात्। न च सर्वस्यै इत्यादौ स्याड्विशिष्टस्य स्मैआदेशापत्तिः, स्याड्विधानसामर्थ्यात्। 'पूर्वादिभ्यो नवभ्यो वे'ति विकल्पपक्षेऽपि न चारितार्थ्यम्, 'ङेयें' इत्यादीनां प्रवृत्तेर्दुर्वारत्वादिति विभावनीयम्।

'षष्ठी स्थाने योगा' इतिसूत्रमावर्त्तते, तत्र द्वितीयस्यायमर्थः—षष्ठ्यन्तं निर्दिश्यमानमुच्चार्यमाणसजातीयमेव निर्दि-

---

सूत्रकारमते—षष्ठ्याः स्थानपदार्थानुयोगिकसम्बन्धार्थकत्वाय सूत्रस्यावश्यकत्वेनावृत्त्या द्वितीयार्थमाह—'षष्ठीस्थाने योगे'तिसूत्रमावर्तत इत्यादिना। भाष्यमते तु—राज्ञः पुरुष इत्यादौ पदान्तरसमभिव्याहारात् षष्ठ्याः स्वत्वार्थकत्वस्येव 'इको यणची'त्यादावपि यणादिपदसमभिव्याहारादेव षष्ठ्याः स्थानार्थकत्वालाभात 'षष्ठी स्थाने'तिसूत्रं निर्दिश्यमानस्यादेशा इत्यर्थकमेव, तन्मते आवृत्तेर्नोपयोगः। प्रत्ययग्रहणे तदन्तग्रहणादाह—षष्ठ्यन्तमिति। ननु षष्ठ्यन्तं जराया इति समुदायः, न तस्य स्थानेन योग इति चेत्—न, अन्तशब्दस्य परसमीपबोधकतया षष्ठी अन्तः परसमीपो यस्येत्यतद्गुणसम्विज्ञानबहुव्रीहिणा षष्ठीप्रकृतिरूपार्थस्य लाभात। वस्तुतस्तु—सूत्रे यतस्सेत्यध्याहारेण यतः षष्ठी सा स्थाने योगेत्येवार्थः सम्यक्, षष्ठ्यन्तं-स्थानेयोगेत्यनयोरभेदे समानलिङ्गकत्वस्यौचित्यात्, 'प्रत्ययग्रहणे तदन्तग्रहणमि'त्येतल्लब्धस्यान्तपदस्य परसमीपबोधकत्वेऽतद्गुणसम्विज्ञाने चातिप्रसङ्गात, निर्दिश्यमानस्येत्यध्याहारस्यानुपयोगाच्च। निर्दिश्यमानमिति। इदमध्याहारलब्धम्। ननु षष्ठीप्रकृतिः सूत्रे उच्चार्यते, न तस्या स्थाने, अपि तु तद्बोध्यस्येत्यत आह—उच्चार्यमाणसजातीयमेवेति।

ननु सूत्रे उच्चार्यमाणस्यादेशासम्भवादाह उच्चार्य्यमाणसजातीयमेवेतीति केनचिदुक्तं न युक्तं, पञ्चम्या असङ्गतेः। उच्चार्य्यमाणमित्यसङ्गतमित्यत इति शेषेण कथञ्चित् लापने तु न विद्वेषः। एवकारेण सूत्रे उच्चार्य्यमाणस्य व्यावृत्तिः। साजात्यञ्च समानानुपूर्वीकत्वेनेति बोध्यम्। ननु अयोगवाहानां वर्णसमाम्नाये पाठा-

श्यमानावयवरूपमेव वा स्थानेन स्थाननिरूपितसम्बन्धेन

भावे विसर्गस्याल्त्वाभावेन 'अलोऽन्त्यस्ये'त्यस्याप्रवृत्तौ विसर्जनीयस्य स' इत्यनेन पदाधिकारात्तदन्तविधिना विसर्जनीयान्तस्य पदस्य सत्त्वमित्यर्थकेन, वृत्तस्तत्रेत्यादौ समुदायस्थानिकसत्वापत्तेः निर्दिश्यमानपरिभाषया वारणपरभाष्यासङ्गतिः, विन्दुद्वयात्मकविसर्गस्य विसर्जनीयपदसजातीयत्वाभावात्; किञ्च 'तदोस्सस्सावनन्त्ययो'रित्यत्र 'त्यदादीनाम' इत्यतस्त्यदादिपदसम्बन्धेनाङ्गाधिकारेण च त्यदाद्यन्तं यदङ्गन्तदवयवस्य त्यदादिपदीयनिर्दिश्यमानस्य योऽवयवोऽनन्त्यस्तकारो दकारश्च तस्य सत्वमित्यर्थः, अतएवातिस इत्यादावादितकारस्य न सत्वं, तस्य त्यदादिपदीयनिर्दिश्यमानावयवत्वाभावात्; तत्र तच्छब्दस्य त्यदादिपदसजातीयत्वाभावेन निर्दिश्यमानत्वाभावः; न वा तस्य स्थानेन योगः, अपि तु तदवयवस्यैव; इत्यत आह—**निर्दिश्यमानावयवरूपमेव वेति**, षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितीयविषयताश्रयावयवमेवेत्यर्थः।
ननु तर्हि षष्ठीप्रकृतिजन्योपस्थितीयविषयताश्रयस्य निर्जरसावित्यादौ जरशब्दस्य स्थाने योगो न स्यात्, अपि तु तदवयवस्यैवेति चेत्—न, व्यपदेशिवद्भावेन स्वस्यापि स्वावयवत्वात् वृक्षप्रचलन्यायेन समुदाय एवादेशप्रवृत्तेः। यद्वा षष्ठीप्रकृतिजन्योपस्थितीयविषयताश्रय एव स्थानेन युज्यते, परन्तु स्थानषष्ठीस्थले साक्षात् स्थानषष्ठीप्रकृत्यर्थान्वय्यवयवषष्ठीस्थले स्वावयवद्वारेति बोध्यम्।

'निर्दिश्यमानावयवरूपमेवे'तिप्रतीकमुपादाय अयं भावः—सर्वा अपि सूत्रघटकषष्ठीप्रकृतयः साक्षात् स्वावयवमात्रघटितपरम्परया वा स्थानेन युज्यन्त इतिसूत्रार्थादिति केनचिदुक्तं न युक्तं, आगमशास्त्रघटकषष्ठीप्रकृतेस्तथात्वाभावात्, स्थानषष्ठीमात्रविषयकत्वे स्वावयवेत्याद्यसङ्गतेश्च।

युज्यते न प्रतीयमानमिति तेनेदं सिद्धम् । न च 'अस्य च्वा'-वित्यादौ दीर्घाणामादेशानापत्तिस्तेषां निर्दिश्यमानत्वाभावा-दिति वाच्यं, जातिपक्षे दोषाभावात् । किञ्च 'न भूसुधियो'रिति

न प्रतीयमानमिति—द्वितीयोपस्थितीयविषयताश्रयो न स्थानेन युज्यत इत्यर्थः । 'येन विधि'सूत्रसहकारेण तदन्तस्य यदागमपरिभाषासहकारेण सागमस्योपस्थितिर्हि स्वरूपोपस्थित्यनन्तरं द्वितीयोपस्थितिरिति तदन्तस्य सागमस्य च स्थानित्वाभावः, तथा च शास्त्रान्तरासहकारेण षष्ठीप्रकृतिजन्योपस्थितीयविषयताश्रयत्वन्निर्दिश्यमानत्वमिति फलति । ननु शालीभवति मालीभवतीत्यादावाऽऽकारस्य 'अस्य च्वावि'तिसूत्रस्थापदेनाणुदित्सूत्रसहकारेणैवोपस्थितत्वान्निर्दिश्यमानत्वाभावेनेत्वानापत्तिरित्यत आह—न चास्य च्वावित्यादाविति । जातिपक्षे दोषाभावादिति । तस्मिन् पक्षे अपदस्थात्वजात्यवच्छिन्ने शक्तत्वेनाणुदित्सूत्रस्य प्रत्याख्यानात् शास्त्रान्तरासहकारेणैव दीर्घस्याप्युपस्थितिरिति भावः ।

व्यक्तिपक्षेऽपि समाधानमाह—किञ्च न भूसुधियोरिति । भुवौ भुव इत्यादौ सुधियौ सुधिय इत्यादौ च दीर्घोकारेकारयोर्व्यक्तिपक्षे 'ओः सुपी'त्यत्रोपदेन 'एनरेकाच'इत्यत्रेपदेन ग्रहणकशास्त्रसहकारेणैवोपस्थितत्वेनानिर्दिश्यमानत्वाद्यणोऽप्राप्तौ 'न भूसुधियोरि'तिनिषेधसामर्थ्यादुक्तलक्षणे शास्त्रान्तरपदे ग्रहणकशास्त्रातिरिक्तत्वेन सङ्कोच इति बोध्यम् । इदमुपलक्षणं, शास्त्रान्तरस्यापि कस्यचिद्भेदस्य निवेशयिष्यमाणत्वात् । यत्तु केनचित् भूसुधीशब्दयोर्नपुंसकह्रस्वत्वे चारितार्थ्यमुक्तं—तन्न युक्तम्, तत्र यणपेक्षया परत्वेन नुम एव प्रवृत्तेः । यदपि तत्रैव तेनोक्तं दीर्घभूशब्दसाहचर्य्येण दीर्घान्तसुधीशब्दस्यैव तत्र सत्त्वेन तत्रेयङ्निर्देशासङ्गत्या ज्ञापनमिति—तदपि न. तन्निर्देशेनानित्य-

साहचर्यपरिभाषानाश्रयणस्यापि ज्ञापनसम्भवात्। न च भवति यत् कुलम् तद् भुकुलं परमं भुकुलं ययोस्तौ परमभुवावित्यादौ चारितार्थ्यम्, न च परमस्य गतिकारकेतरत्वान्न यण् तत्र प्राप्नोति, 'गतिकारकेतरपूर्वस्य यण् नेष्यत' इति निषेधात्, एवं परमसुधियावित्यत्रापि बोध्यमिति वाच्यम्, तथापि आ भवति आ संध्यायति यत् कुलन्तदाभु आसंधि, आ आभु आ आसंधि ययोः तौ आभुवौ आसंधियावित्यादौ परादिवद्भावेन गतिपूर्वपदकत्वस्यैव सत्त्वेन यणः प्राप्तेस्तन्निषेधाय चारितार्थ्यात् इति वाच्यम्; 'ह्रस्वो नपुंसके प्रातिपदिकस्ये'त्यनेनाच्पदीयनिर्दिश्यमानस्यैव ह्रस्वत्वेन दीर्घस्याच्पदीयनिर्दिश्यमानत्वाभावेन ह्रस्वत्वाप्राप्तेः। तस्माज्ज्ञापकत्वं युक्तमेवेति दिक्। तथा च ग्रहणकशास्त्रातिरिक्तशास्त्रासहकारेण षष्ठीप्रकृतिजन्योपस्थितीयविषयताश्रयत्वन्तत्त्वमिति बोध्यम्। न च जरारूपषष्ठीप्रकृत्या 'स्वंरूप'शास्त्रसहकारेणैव जराशब्दस्योपस्थितत्वेन तस्यापि निर्दिश्यमानत्वानापत्तिः, एवं निर्जरसावित्यादावपि स्थानिवत्सूत्रसहकारेणैव जरशब्दस्योपस्थितत्वम्, एवं देवीमञ्चति देवद्र्यङित्यादौ 'विष्वग् देवयो'रित्यत्रत्यदेवपदेन प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापीत्येतत्सहकारेणैव देवीशब्दस्योपस्थितिरिति तेषामप्यनिर्दिश्यमानत्वापत्तिः, 'किमः क' इत्यत्रत्यकिम्पदीयनिर्दिश्यमानत्वमकज्विशिष्टकिम्शब्दस्य न स्यात् तन्मध्यपतितन्यायसहकारेणैवोपस्थितत्वादिति वाच्यम्; अणुदित्सूत्रातिरिक्तत्वस्येव 'स्वंरूप'-'स्थानिवत्'-'प्रातिपदिकग्रहणे'-'तन्मध्यपतिते'तदतिरिक्तत्वस्यापि शास्त्रे निवेशनीयत्वात्।

वस्तुतस्तु—'येन विधिः'-'यदागमा' इत्येतच्छास्त्रद्वयासहकारेण षष्ठीप्रकृतिजन्योपस्थितीयविषयताश्रयत्वंन्तत्त्वम्। अतएव 'अनया च परिभाषया येन विधिरितिसूत्र' इत्यादि वक्ष्यते मूले।

यत्पदघटितत्वेन चोभयोः प्रवेशः। यद्यपि भाष्ये यदागमपरिभाषाया यत्पदघटितत्वन्नास्ति तथापि यत्पदं प्रवेश्य तथा

वक्तुं शक्यते ।

नन्वेवं जराया जरा जराजरा ततो द्विवचने जराजरसावित्यादौ पूर्वस्यापि जराशब्दस्य निरुक्तनिर्दिश्यमानत्वापत्तिः; न च विभक्त्यव्यवहितपूर्वत्वस्य निर्दिश्यमान एवान्वयान्नादेशापत्तिरिति वाच्यम्, प्रत्ययस्याङ्गांशे एवान्वयस्य शेखरकृता व्यवस्थापनात्, 'पादःपदि'तिसूत्रे निमित्तस्यानुपादानेन व्याघ्रपात्पद इत्यादौ गतिविरहाच्च, स्वमते आक्षिप्तस्य शाब्दबोधे भानाभावाच्च, संज्ञासूत्राणां पदैकवाक्यतयान्वयावोधाच्च; इति चेत्—न, स्वजन्योपस्थितिविषयताश्रयत्व-स्वजन्योपस्थितीयविषयताश्रयसमभिव्याहृतवर्णाघटितत्वोभयसम्बन्धेन षष्ठीप्रकृतिविशिष्टत्वन्तत्त्वमित्याशयात् । विस्तरेण[1] पूर्वपरिभाषायामेवोक्तमिति तत्रैव द्रष्टव्यम् ।

यत्तु—षष्ठीप्रकृतिविशिष्टत्वं तत्त्वं, वैशिष्ट्यञ्च स्वप्रयोज्यशाब्दबोधीयविषयत्वाश्रयत्व-स्वप्रयोज्यशाब्दबोधीयविषयताश्रयाघटितत्वोभयसम्बन्धेनेत्युक्तम्—तन्न, पदद्वित्वस्थले विशिष्टस्यादेशानापत्तेः । विशिष्टस्य निर्दिश्यमानत्वाभाव एवेष्यत इति तु पूर्वपरिभाषायामेव खण्डितम् ।

---

१ विस्तरेणेति । तथा च षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वमिति निर्गलितम् । वैशिष्ट्यञ्च स्वजन्योपस्थितीयविषयताश्रयत्व-स्वप्रयोज्यशाब्दबोधीयविषयताविशिष्टवर्णाघटितत्व-स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वैः । मध्यमसंसर्गवैशिष्ट्यं स्वानाश्रयत्व-स्वाश्रयसमभिव्याहृतत्वाभ्याम् । चरमसंसर्गवैशिष्ट्यं स्वसमभिव्याहृतत्व-स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वाभ्याम् । एतेन दवीमञ्चतीति देवद्रूद् जराया जरा जराजरा तौ जराजरसौ निर्जरसौ व्याघ्रपदः सुपदः प्रतिपिञ्चति अपिचदित्यादौ न दोषः । ग्लात्वाकालकीकृत्येत्यत्र शाब्दबोधीयविषयता समासान्तक्त्वाशब्दस्यैवास्ति, क्त्वान्तसमासस्य ल्यबित्यर्थात् । मज्जुः मजूभ्यामित्यत्रैकैव शाब्दबोधीयविषयता उभयत्रेति न दोषः ।

अवशिष्टं विचार्यते। यदागमपरिभाषया आगमिवृत्तिधर्मस्य सागमे आरोपो बोध्यते, न तु शास्त्रघटकतत्तत्पदानां स्वशक्यविशिष्टे लक्षणा, तत्तच्छास्त्राणामधिकार्थविषयकबोधजनकत्वेन तत्तत्पदजन्योपस्थितीनामधिकलक्ष्यार्थविषयाणां कारणत्वेन च गौरवात्। ततश्च 'पाघ्राध्मे'त्यादिसूत्राणां विशिष्टरूपोपादानसत्त्वादर्थवत्परिभाषयार्थवतः पाधातोः पिबादेशः, अर्थवतस्त्रिशब्दस्य त्रयादेशः, अर्थवतः स्थाशब्दस्य पूर्वसवर्ण इत्यर्थः। ततश्च अपिबत् त्रिताम् उदस्थादित्यादौ आगमिनोऽनर्थकत्वेनार्थवत्पास्त्वावच्छिन्नशाब्दबोधीयविषयताया अभावेन तद्घटितस्यापि सागमस्यापेत्यादेः स्वप्रयोज्यशाब्दबोधीयविषयताश्रयत्वेन पिबाद्यादेशापत्तिर्वज्रलेपायते। स्वप्रयोज्यशाब्दबोधीयविषयता अर्थवत्त्वासङ्कुचितैव गृह्यते सा चापिबदित्यत्रागमरहितेऽपि वर्त्तते तद्घटितत्वाद्विशिष्टस्य न निर्दिश्यमानत्वमित्यपि न युक्तम्, अर्थवत्त्वविषयतया निरूप्यनिरूपकभावापन्नविषयतानिरूपकवाक्यार्थबोधीयविषयताया अर्थवत्त्वासंकुचिताया अप्रसिद्धेः।

यदपि—षष्ठीप्रकृतिविशिष्टत्वन्तत्त्वं, वैशिष्ट्यञ्च स्वजन्योपस्थितीयविषयताश्रयत्व-स्वविशिष्टवर्णाघटितत्वोभयसम्बन्धेन, तत्र वैशिष्ट्यं स्वजन्योपस्थितीयविषयताश्रयाव्यवहितपूर्वत्व-स्वप्रयोज्यशाब्दबोधीयविषयताश्रयान्तेतरत्वोभयसम्बन्धेन; अपिबत निर्जरसावित्यादौ अकारस्य रेफस्य च स्वविशिष्टत्वेन समुदायस्य तद्घटितत्वेन पाजरयोश्चाघटितत्वेनानिर्दिश्यमानत्वानिर्दिश्यमानत्वयोरुपपत्तिः; सजूस्सजूर्भ्यामित्यादौ पूर्वसजूश्शब्दसम्बन्धिषकारस्योपस्थितीयविषयताश्रयोत्तरसजूश्शब्दाव्यवहितपूर्वत्वेऽपि स्वप्रयोज्यशाब्दबोधीयविषयताश्रयपूर्वसजूश्शब्दान्तत्वस्यैव सत्त्वेन तदितरत्वरूपाद्वितीयसम्बन्धाभावात् तद्घटितत्वेऽपि पूर्वस्य निर्दिश्यमानत्वोपपत्तिः; न च स्नात्वाकालकीकृत्येत्यादौ पूर्वक्त्वाघटकाकारस्य स्वप्रयोज्योपस्थितीयविषयताश्रयोत्तरक्त्वाऽव्यवहि-

तपूर्वत्वरूपप्रथमसम्बन्धाभावेन द्वितीयसम्बन्धसत्त्वेऽपि विशिष्टत्वाभावात् तद्घटितत्वेऽपि पूर्वक्त्वाशब्दस्य निर्दिश्यमानत्वापत्तिरिति वाच्यं, कृद्ग्रहणपरिभाषया कालकीकृत्वेतिसमुदायस्याप्युपस्थितीयविषयताश्रयत्वात्; त्रितामित्यादावपि न दोषः, स्वजन्योपस्थितिविषयविशिष्टवर्णाघटितत्वस्यापि तृतीयसम्बन्धस्य निवेशनीयत्वात्; तत्र वैशिष्ट्यं स्वसमभिव्याहृतत्व-स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वोभयसम्बन्धेन; आद्यसम्बन्धनिवेशात् प्रतिपिञ्छतीत्यादौ न दोषः; न च सुपदो व्याघ्रपद इत्यादौ 'पादःपदे'तच्छास्त्रीयषष्ठीप्रकृतिजन्योपस्थितीया पाच्छब्दान्तत्वावच्छिन्नापि विषयता, तदाश्रयः पूर्वदकारादिसमुदायोऽपि, तदवधिकपूर्वत्वं द्वितीयसम्बन्धश्च पूर्वस्मिन् पकारे, तद्घटितत्वं पूर्वपाच्छब्दे, इति तस्य निर्दिश्यमानत्वाभावादादेशानापत्तिरिति वाच्यम्, उपस्थितीयविषयतां विहाय तत्स्थाने शाब्दबोधीयविषयताया निवेशनीयत्वात्, तस्याश्च तादृशसमुदाय अभावात्; इत्युक्तम्—तदपि न, पदद्वित्वस्थले विशिष्टस्य इष्टादेशानापत्तेः।

अथ 'येन विधि'रितिसूत्रं यदागमपरिभाषा चेत्युभयं लक्षणाग्राहकम्, आद्यं शास्त्रघटकस्याभेदेन विशेषणतात्पर्यकपदस्य तदन्तत्वावच्छिन्ने, अन्त्या च तत्तच्छास्त्रघटकपदस्य स्वशक्यविशिष्टे लक्षणां ग्राहयति; वैशिष्ट्यञ्च स्वेतरत्व-स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयेतरत्वोभयसम्बन्धेन स्वविशिष्टाघटितत्व-स्वघटितत्वोभयसम्बन्धेन; ततश्च षष्ठीप्रकृतिशक्यत्वं निर्दिश्यमानत्वमिति निर्जरसावित्यत्र अपिबदित्यत्र च न विशिष्टस्य तत्त्वमिति न दोषः; 'प्रातिपदिकग्रहणे'-'तन्मध्यपतित'-'स्थानिवत्'-'स्वंरूप'मित्येतत् सर्वं शक्तिग्राहकमिति तत्सहकारेणोपस्थिते सर्वत्र निर्दिश्यमानत्वसिद्धिः; जराया जरसौ जराजरसावित्यत्र पूर्वजराशब्दस्य निर्दिश्यमानत्वेऽपि अजादिविभक्त्यव्यवहितपूर्वत्वाभावान्न दोषः; व्याघ्रपात्पदः स्नात्वा कालकी-

निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः। इयङुवङोर्ङित्त्वं त्विवर्णोवर्णान्तश्नुधातुभ्रुवामित्यर्थेन

कृत्येत्यादौ दीक्षितोक्तदिशा 'अन्त्यबाधे अन्त्यसदेशस्ये'तिपरिभाषया च न पूर्वस्यादेशापत्तिः; पतिरिवाचरति पतित् वृषलः पतित् यस्याः सा वृषलपतित्, पूताः ऋतवो यया सा पूतक्रतुस्सा इवाचरति पूतक्रतुदित्यादौ 'विभाषा सपूर्वस्य'-'पूतक्रतोरैचे'तिसूत्राभ्यां पतिशब्दपूतक्रतुशब्दयोर्नकारैकारावादेशौ स्याताम्, आगमरहितयोरुक्तनिर्दिश्यमानत्वस्य सत्त्वादिति तु न वक्तव्यम्, सर्वस्मिन् परिष्कारे तद्दोषयोः साम्यात् तदर्थमुपायान्तरानुसरणस्यापेक्षणात्; तथा हि पूतक्रतुदित्यत्रोपसर्जनत्वान्नैकारः; द्वितीये पतिशब्दे इकारस्यापि प्रश्लेषेणेकारान्तपतिशब्दस्यैव ग्रहणात् न नकार इति यदागमपरिभाषावतरणनिरूपणावसरे विस्तरेणाभिहितम्; एवं नाभिरिवाचरति नाभिदित्यत्र नाभिनभक्तेरस्याप्रवृत्तयेऽपि यतनीयमेवेति बोद्धव्यमिति चेत्—निर्दुष्टमेवेदमिति मैथिलवराः।

इयङुवङोर्ङित्वं त्विति। अयम्भावः—नियौ निय इत्यादौ अन्त्यादेशार्थमेवादेशे ङित्त्वं कृतमन्त्यादेशश्च य्वोरित्येतत्पदीयनिर्दिश्यमानस्यैव विधानेन सिद्ध एवेति ङित्त्वं व्यर्थमिति नाशङ्क्यम्, य्वोरिव धातोरपि धातुपदीयनिर्दिश्यमानत्वाद् वृद्धप्रचलन्यायेन तस्य प्राप्तादेशव्यावृत्त्यर्थन्तस्यावश्यकत्वादिति।

नन्विदं न युक्तम्, 'जराया जरसन्यतरस्यामि'तिसूत्रस्य जराशब्दान्ताङ्गस्य जरसित्यर्थादङ्गपदीयनिर्दिश्यमानताया निर्जरसावित्यत्र निर्जरशब्दे एव सत्त्वेनोक्तरीत्या समुदायस्यादेशापत्तिवारणाय षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वं वाच्यम, वैशिष्ट्यञ्च च पूर्वोक्तं सर्वम्; अपरञ्च स्वविशिष्टस्थानषष्ठीप्रकृतिजन्योपस्थितीयविषयताश्रयाघटितत्वम, तत्र वैशिष्ट्यं स्वभिन्नत्व-स्वघटि-

धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय । रिङ्रिङोर्ङित्त्वं तु

तशास्त्रघटकत्वोभयसम्बन्धेन; ततश्च निर्जरसमुदाये अङ्गरूप-षष्ठीप्रकृतेः पूर्वोक्तसम्बन्धसत्त्वेऽपि स्वविशिष्टा प्रकृतिर्जरेति तत्र स्वभिन्नत्वस्य, स्वघटितं 'जराया जरसन्यतरस्यामि'तिसूत्रं तद्घ-टकत्वस्य च सत्त्वात् तज्जन्योपस्थितीयविषयताश्रयो जरेति, तद्घटितत्वन्नास्तीति न निर्दिश्यमानत्वमिति न दोषः; एवमेव प्रकृते धातुपदीयनिर्दिश्यमानत्वम्. नियावित्यादौ नीशब्दस्य नास्ति, तत्र धातुरूपषष्ठीप्रकृतेः पूर्वोक्तसम्बन्धसत्त्वेऽपि नूतन-सम्बन्धस्यासत्त्वात्; स्वं धातुस्तद्भिन्नत्वं य्वोरस्ति स्वघटितं'म-चिष्णुधातुभ्रुवामि'तिशास्त्रं तद्घटकत्वमप्यस्तीति स्वविशिष्टा षष्ठीप्रकृतिः य् इति, तज्जन्योपस्थितीयविषयताश्रय ईकारः तद्-घटितत्वाभावात्; इति चेत्—न, निर्दिश्यमानत्वलक्षणे षष्ठी-प्रकृतिपदेनाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितमुख्यविशेष्यत्वा-प्रयोजिकाया एव ग्रहणेनाङ्गरूपायास्तस्या अग्रहणेन निर्जर-सावित्यादौ दोषाभावेन नूतनसम्बन्धनिवेशस्यानावश्यकत्वमि-त्याशयेन तद्ग्रन्थस्य सत्त्वात्। मुख्यत्वञ्चाभेदसम्बन्धावच्छिन्न-प्रकारत्वासामानाधिकरण्यमेव। अङ्गपदप्रयोज्यविशेष्यतायान्ता-दृशप्रकारत्वासामानाधिकरण्यात् मुख्यत्वं, धातुपदप्रयोज्यायाश्-चाङ्गपदप्रयोज्यविशेष्यतानिरूपिततादृशप्रकारतासामानाधिकर-ण्यान्न मुख्यत्वमिति विशेष इति बोध्यम्।

यत्तु केनचित्—निर्दिश्यमानावयवेतरस्यादेशाभावोऽनया

बोध्यमिति। प्रथमोपस्थितिजनकत्वे सति द्वितीयोपस्थितिजनिकायाः षष्ठीप्रकृतिपदेन ग्रहणे 'उदःस्थास्तम्भो'रित्यादौ स्थाशब्दः षष्ठीप्रकृतिशब्देन गृह्यत एव, यदागमपरिभाषाया लक्षणग्राहकत्वपक्षे स्थाशब्दस्य स्थाविशिष्ट-विषयकद्वितीयोपस्थितिजनकत्वात्। अङ्गपदं तु न तादृशं, प्रथमोपस्थिति-जनकत्वेऽपि द्वितीयोपस्थितिजनकत्वविरहात्। एवञ्चाङ्गपदीयनिर्दिश्यमान-त्वमादाय न समुदायस्यादेशप्रसक्तिरित्यपि वदन्ति।

स्पष्टार्थमेव। एतेनेदं ङित्त्वं वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिज्ञापकमित्यपास्तम्। हयवरट्सूत्रस्थेन 'अयोगवाहाना-

परिभाषया बोध्यते, अतएव मूले उक्तं निर्दिश्यमानावयवरूपमेवेति, न तु निर्दिश्यमानावयवेतरत् स्थानेन युज्यत इति हि तस्यार्थः, तथा च निर्जरसावित्यादौ समुदायस्य जरापदीयनिर्दिश्यमानजरावयवेतरत्वान्न तस्यादेशः, नियावित्यादौ च य्वोरित्येतत्पदीयनिर्दिश्यमानेकारावयवेतरत्वात्, समुदायस्यादेशाप्राप्त्या ङित्त्वं रीङो ङित्त्वमिव स्पष्टार्थमेवेत्युक्तम्—तस्यापि मदुक्तनूतनवैशिष्ट्यदानपरतयैव कथञ्चिल्लापनय्युँक्तम्। यथाश्रुतन्तु न विचारसहम्। तथाहि—यदि निर्दिश्यमानावयवत्वावच्छिन्नप्रतियोगिताकसामान्यभेदो विवक्षितस्तदा धातोरपि अङ्गपदीयनिर्दिश्यमानावयवत्वेन दीपतादवस्थ्यं यत्किञ्चिन्निर्दिश्यमानावयवेतरत्वस्य जरापदीयनिर्दिश्यमानेऽपि निर्जरसावित्यादौ सत्त्वेनादेशानापत्तिर्दुर्वारा। एकशास्त्रघटकत्वनिवेशेऽपि समन्वयासम्भवः। जराशब्दान्ताङ्गस्य जरसादेशो निर्दिश्यमानावयवेतरस्य नेत्यर्थेन निर्जरसावित्यादौ जराशब्दस्यापि आदेशानापत्तिः, जराशब्दान्ताङ्गत्वाभावात्; जराशब्दान्ताङ्गावयवस्य जरापदीयनिर्दिश्यमानस्यादेश इत्यर्थस्य तु शब्दमर्यादयाऽलाभात्। किञ्च तच्छास्त्रघटकयत्किञ्चित्पदीयनिर्दिश्यमानस्यादेशः, तच्छास्त्रघटकतदितरपदीयनिर्दिश्यमानावयवेतरस्य नेत्यर्थेऽपि 'ज्वरत्वरे'ति सूत्रेणोपधापदीयनिर्दिश्यमानावयवस्य तच्छास्त्रघटकतदितरवपदीयनिर्दिश्यमानावयवेतरत्वेनादेशानापत्तिः। एवकारेण तु सूत्रे उच्चार्यमाणमेव व्यावर्त्यत इत्यलं परदोषाविष्करणेन।

स्पष्टार्थमिति। न तु किञ्चिदर्थज्ञापनद्वारापि सफलमिति भावः। एवेति—ज्ञापनेनापि साफल्यस्यासम्भव इति भावः।

हयवरट्सूत्रस्थेनेत्यादि—विसर्गस्यापि वर्णत्वेन तत्र त्वदु-

मट्सूपदेशेऽलोन्त्यविधिः प्रयोजनम्, वृक्षस्तत्र, नैतदस्ति प्रयोजनं, निर्दिश्यमानस्येत्येव सिद्धमि'ति भाष्येण विरोधात् ।

अनया परिभाषया 'येन विधि'रितिसूत्रबोधिततदन्तस्य स्थानित्वाभावबोधनं, 'यदागमा' इति लब्धस्य च; तेन सुपद उदस्थादित्यादिसिद्धिः ।

---

क्तरीत्या निर्दिश्यमानपरिभाषाया अप्रवृत्तौ निर्दिश्यमानस्येत्येव सिद्धमित्यस्यासङ्गत्यापत्तिरिति भावः । यदि च विसर्गस्य न वर्णत्वं ज्ञाप्यशरीरे वा वर्णत्वस्थानेऽल्त्वमेव प्रवेश्यते तदा न भाष्यविरोधलेश इति चेत्—फलाभावादेव ज्ञापनं न युक्तमित्यवेहि । न च शब्दानित्यत्ववारणायैरुरित्यस्यैकारान्तस्योकारान्त आदेश इत्यर्थे भवत्वित्यत्र एरित्येतत्पदीयनिर्दिश्यमानस्यैकारमात्रस्योकारान्ततुशब्दादेशाभाव एव फलमिति वाच्यम्, तत्र निर्दिश्यमानपरिभाषायाः प्रवृत्तौ शब्दानित्यत्वध्रौव्येण तदन्तपरतया व्याख्यानस्यैव व्यर्थत्वापत्तेः आनुमानिकस्थान्यादेशभावस्थले उक्तपरिभाषाया अप्रवृत्तिकल्पनात् । न च तदपि 'वर्णग्रहणे न प्रवर्त्तत'इत्यनेनैव गतार्थमिति वाच्यम्; 'भस्य टेर्लोप' इत्यादौ पथ्यादिसम्बन्धिटिघटितस्य लोपघटित आदेश इत्यर्थस्य शब्दानित्यत्ववारणायावश्यकत्वेन टेरित्यस्य वर्णग्रहणत्वाभावेन निर्दिश्यमानपरिभाषया पथ इत्यादौ टिमात्रस्य टिपदीयनिर्दिश्यमानस्य लोपघटितपथिरयादेशापत्तेस्तत्कल्पनाया आवश्यकत्वात्, उकारमात्रस्यापि व्यपदेशिवद्भावेनोकारान्तत्वादन्तरतमपरिभाषया तस्यैवादेशत्वेन दोषाभावाच्चेति दिक् ।

अनया परिभाषयेत्यादि । एतेन पदद्वित्वे समुदायस्य निर्दिश्यमानत्वाभाव इति वदन्तः परास्ताः, प्रकृतशास्त्रद्वयबोधि-

अनया च स्वस्वनिमित्तसन्निधापितानामलोऽन्त्यस्येत्यादीनां समावेश एव, न बाध्यबाधकभावः, विरोधाभावात्। नाप्येतयोरङ्गाङ्गिभावः, उभयोरपि परार्थत्वेन तदयोगात्। 'अनेकाल् शित्'इतिसूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते। यत्तु 'आदेः परस्य' 'अलोन्त्यस्य' इत्येतावेव तद्बाधकाविति— तन्न, 'उदस्थादि'तिसूत्रविषयेऽस्याः 'पादःपत्'इतिसूत्रे भाष्ये

---

तस्यैव स्थानित्वाभावस्य परिभाषाफलत्वेनोपसंहारात्।

'समस्सुटी'त्यादौ 'उदः स्थास्तम्भो'रित्यादौ च समपदीयनिर्दिश्यमानान्त्यस्यादेः परस्य, स्थास्तम्भपदीयनिर्दिश्यमानादेरित्यादिरीत्या समावेशसम्भवान्न बाध्यबाधकभावः, 'विरोधे हि बलीयसा दुर्बलो बाध्यत' इत्युक्तेरित्याह—अनया च स्वस्वनिमित्तेत्यादि। नाप्येतयोरिति—अलोऽन्त्यनिर्दिश्यमानपरिभाषयोरित्यर्थः। तथा सति निर्दिश्यमानान्त्यस्याल् आदेश इत्यर्थापत्तौ अनेकाल्विषये निर्दिश्यमानपरिभाषाया अप्रवृत्त्यापत्तिरिति भावः। परार्थत्वेनेति—विध्युपकारार्थत्वादुभयोः, 'गुणानाञ्च परार्थत्वादसम्बन्धस्समत्वात्स्यादि'त्युक्तेरिति भावः। ननु निर्दिश्यमानपरिभाषया निर्जरसावित्यादौ जराशब्दस्य अनेकाल्परिभाषया जराशब्दान्ताङ्गस्यादेशो बाध्यत इति विरोधाद्बाध्यबाधकभावः स्यादित्याह—सर्वश्चेति। एतत्परिभाषाबोधित इति—निर्दिश्यमानपरिभाषाबोधित इत्यर्थः। निर्दिश्यमानस्य सर्वस्येत्यन्वयेन समावेश एवेति भावः। तद्बाधकाविति—निर्दिश्यमानपरिभाषाया बाधकावित्यर्थः। उदस्थादिति—उदस्थादिति यः सूत्रस्य 'आदेःपरस्ये'त्यस्य विषयस्तत्रेत्यर्थः। अस्याः—निर्दिश्यमानपरिभाषाया इत्यर्थः। सूत्रस्य बाधकत्वे हि तद्विषये

सञ्चारितत्वात् । नाप्येतयोरियं बाधिका, एतयोर्निर्विषयत्वप्रसङ्गादिति 'तित्रिंशते'रिति सूत्रे कैयटः ।

अकज्विषये तु नायं न्यायः, स्थानिवद्भावेनैव तन्मध्यपतितन्यायेन तद्बुद्ध्यैव कार्यजननात् ।

---

बाध्यभूतायाः परिभाषायाः सञ्चारस्यायुक्तत्वमिति भावः । यत्तु केनचिदुक्तं 'उदःस्थास्तम्भो'रितिसूत्रविषय इति—तन्न, तत्सूत्रविषयत्वप्रदर्शनस्येहोपयोगाभावात् ।

अकज्विषये नायं न्याय इति—अकज्विशिष्टस्य स्थानित्वव्यावर्त्तकोऽयं न्यायो नेत्यर्थः । तथा चाणुदित्सूत्रातिरिक्तत्वस्येव तन्मध्यपतितन्यायातिरिक्तत्वस्यापि निवेशो निर्दिश्यमानत्वलक्षणे इति बोध्यम् । अत्र 'ज्ञापकमनाप्यक' इतिसूत्रे अकग्रहणम्, अन्यथा अकज्विशिष्टस्येदकम्शब्दस्येदम्पदीयनिर्दिश्यमानत्वाभावात् इदम्पदीयनिर्दिश्यमानावयवो य इद् तस्यानादेश इत्यर्थकस्य 'अनापी'त्यस्य साकचि अप्राप्त्या अकइत्यस्य वैयर्थ्यमेव । ज्ञापिते तु साकच्कस्यापीदम्पदीयनिर्दिश्यमानत्वेन तद्व्यावृत्त्यर्थन्तत् । न च तत्रेदमइत्यस्यावयवषष्ठ्यन्तत्वेन स्थानषष्ठीविषयकनिर्दिश्यमानपरिभाषाया अप्रवृत्तिरिति वाच्यम्, अवयवषष्ठीविषयेऽपि तत्प्रवृत्तेर्वक्ष्यमाणत्वात्; अतएवाकज्विशिष्टस्यापि किम्शब्दस्य कादेशसिद्धिः । न चैवं निर्दिश्यमानत्वाभावादकच्सहितस्य कादेशो न स्यादित्याशङ्क्य 'किमः क' इत्यस्यावृत्त्या समाधानपरशब्देन्दुशेखरविरोध इति वाच्यम्, कैयटमतेन तद्ग्रन्थस्य सत्त्वात्; अतएव तत्रावृत्त्याश्रयणाददोष इति कैयट इत्युक्तम् । न च भिन्धकीत्यत्राकचि धित्वं न स्यान्निर्दिश्यमानत्वाभावादित्याशङ्क्यान्तरङ्गत्वाद्धित्वेऽकजितिभाष्य उक्तन्तद्विरुद्धञ्चेतेति वाच्यम्; धर्मिग्राहकमानात् साकच्कानपहारके आदेशो

इयं चावयवषष्ठीविषयेऽपि, अतएव 'तदोः सः सा'विति सत्वम्, अतिस्य इत्यत्रोपसर्गतकारस्य न। निर्दिश्यमानयुष्म-

नायं न्याय इतिकल्पनेनादोषात्, धित्वस्य कादेशस्य च साकच्कापहारकत्वेन तद्विषये निर्दिश्यमानपरिभाषायाः प्रवृत्त्या भाष्यस्य शेखरग्रन्थस्य चोपपन्नत्वात्। सर्वशब्दस्याकचि दाप्रत्यये सर्वकशब्दस्य निर्दिश्यमानत्वाभावेन 'सर्वस्य सोऽन्यतरस्यां दी'त्यनेन सादेशाभावेन सर्वकदेत्येव। ज्ञापनादेव तच्छब्दस्याकचि निर्दिश्यमानत्वाभावेऽपि साकच्कानपहारकत्वेन निर्दिश्यमानपरिभाषाया अप्रवृत्तेरत्वसत्वयोः सक इति सिद्धम्।

केचित्तु—'तिङश्चे'त्यनेन तिङन्ततदादेरकज्विधानेन भिन्द्धिपर्याप्तमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वस्यैवाकचस्सत्त्वेन हिपर्याप्तमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वाभावेन तन्मध्यपतितन्यायेन हकिशब्दस्य हिशब्दत्वासम्भवः, स्वघटकपूर्वत्व-स्वघटकपरत्व-स्वपर्याप्तमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वैतत्त्रितयसम्बन्धेन तद्विशिष्टत्वस्यैव तन्मध्यपतितत्वपदार्थत्वात्; अतएव समासोत्तरजायमानायाः कमण्डलुपाणिं छात्रमद्राक्षीदित्यादौ कमण्डलुप्रकृतिकतृतीयायाः प्रातिपदिकानवयवत्वेन 'सुपो धात्वि'तिलुगभाव उक्तः कैयटेनेति 'इत्थं भूतलक्षण'इतिसूत्रस्थशेखर उक्तम्, उद्देश्यताघटिततृतीयसम्बन्धस्यानिवेशे तु तन्न्यायेन विशिष्टस्य प्रातिपदिकत्वेन लुको दुर्वारत्वेन कैयटोक्त्यसङ्गत्यापत्तेः; तथा च हिशब्दत्वाभावादेव भिन्धकीत्यत्राकचि धित्वन्न प्राप्नोतीत्युक्तं भाष्यकृता, न तु निर्दिश्यमानपरिभाषाबलादित्यस्य वक्तुं शक्यतया अकज्विषये सामान्यतोऽप्रवृत्तावपि न विरोधलेशः; अकज्विषयेऽपि सदेत्येव साध्वित्याहुः—तन्न, 'हुझल्भ्यो हेर्धि'रितिसूत्रभाष्यपर्यालोचनया निर्दिश्यमानपरिभाषाबलादेव धित्वाभावे भाष्यतात्पर्यावधारणात्। तत्र हि रुदिहि

दाद्यवयवमपर्यन्तस्यैव यूयादयो, न त्वतियूयमित्यादौ सोपसर्गावयवमपर्यन्तस्येति बोध्यम् ।

---

स्वपिहीत्यत्र धित्वमाशङ्क्य निर्दिश्यमानपरिभाषया समाधाय 'यद्येवं, भिन्धकीत्यत्राकचि धित्वन्न प्राप्नोती'त्युक्तम् । यद्येवमिति प्रतीकमुपादाय 'निर्दिश्यमानस्यादेशा भवन्तीति स्वीकार' इत्युक्तं कैयटेनापि । एतद्भाष्यबलादेव मुख्योद्देश्यताघटितस्य तृतीयसम्बन्धस्य मध्यपतितत्वेऽप्रवेशः, अन्यथा तन्मध्यपतितत्वाभावादेव धित्वाप्राप्त्या निर्दिश्यमानपरिभाषास्वीकार इत्यर्थकस्य यद्येवमित्यस्यासङ्गत्यापत्तेः । लुगभावबोधककैयटस्तु चिन्त्य एवेति । नरं मन्य इत्यादौ 'इच एकाचोऽम् प्रत्ययवच्चे'तिसूत्रेण समासोत्तरविहितस्य नृशब्दप्रकृतिकस्यामोऽम्भावेन लुकमाशङ्क्य अम्विधिसामर्थ्येन वारणं भगवता कृतमुपपद्यते; अन्यथा समासीभूतनृमन्यशब्दनिष्टमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वस्याम्यसत्त्वेन तन्मध्यपातितत्वाभावेनाम्विधिसामर्थ्यप्रयुक्तलुगभावकथनस्यासङ्गत्यापत्तेः, धनवन्तावित्यादौ वत्वस्यासिद्धत्वेन पूर्वजातस्य नुमस्समुदायपर्याप्तमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वेऽपि मतुप्पर्याप्तमुख्योद्देश्यताकत्वाभावेन मतुब्ग्रहणेन मन्तेत्यस्याग्रहणेन 'मादुपधायाश्चे'त्यस्याप्रवृत्त्या वत्वानापत्तेश्च । नन्वेवं जनं रातीति जनरतिशब्दस्यापि मध्यपतितनकारत्वेन तन्मध्यपतितन्यायेन जरसादेशापत्तिः, तृतीयसम्बन्धानिवेशे तु नेति चेत्—न, अव्यवहितोत्तरत्वसम्बन्धेन जविशिष्टरात्वस्यैव जरात्वपदार्थतया तस्य प्रकृते कस्मिन्नपि क्षणेऽसत्त्वेन तन्मध्यपतितत्वाभावेन न्यायेन कथमप्यानयनासम्भवात् ।

अन्ये तु—तृतीयसम्बन्धघटकोद्देश्यतायां मुख्यत्वं न दीयते; तावतापि कैयटग्रन्थ उपपद्यते; उत्तरपदशब्दस्य समासचरमावयवार्थकत्वेन तद्घटकसमासत्वावच्छिन्नविषयताया नृमन्यसमुदा-

'पादःपदि'तिसूत्रे 'षष्ठीस्थाने'इतिसूत्रे च भाष्ये स्पष्टैषा ॥१२॥

यपर्याप्तत्वेन तन्मध्यपतितन्यायेन प्राप्तस्य लुकोऽमूविधिसामर्थ्येन वारणं सम्यगेव; कमण्डलुपाणिशब्दे च तृतीयानिष्ठविधेयतानिरूपितोद्देश्यतायाः कस्या अपि समुदायेऽसत्त्वेन न्यायाप्रवृत्तिः; धनवन्तावित्यादावपि उगित्पदप्रयोज्यविषयताया मतुपि सत्त्वेन तन्निष्ठोद्देश्यतानिरूपितविधेयताया नुमि सत्त्वेन न्यायेन वत्वसिद्धौ बाधकाभावः; एवमेवाकर्चि धित्वन्न प्राप्नोतीत्यादावपि तिङ्प्रयोज्यविषयताया हिपदे सत्त्वेन न्यायेन हित्वस्य सत्त्वेऽपि निर्दिश्यमानपरिभाषया आदेशाभावशङ्काप्युपपद्यते; जनं रातीत्यादौ जरात्वस्य कथञ्चिदुपपादनेऽप्युद्देश्यतामात्रस्याभावेन न दोष इति साकचूकानपहारक इति कल्पनमेव युक्तम्; अत्र कस्यचिदन्यथा व्याख्यानन्तु अविचारितरमणीयमिति विभाव्यतामित्याहुः।

उच्छृङ्खलास्तु[1]—'अनाप्यक' इत्यत्रत्याकग्रहणेन षष्ठ्यर्थावयवत्वमुपलक्षणन्न तु विशेषणमित्येव ज्ञाप्यते, तावतैवाकज्विषये अनादेशाप्राप्त्या चारितार्थ्यसम्भवात्, इदकम्शब्दावयवस्येच्छब्दस्यापीदमशब्दावयवत्वेन दृष्टत्वात्; सक इत्यादौ अत्वसत्वयोस्सिद्धिश्च, तकदित्येतदवयवतकारस्य दकारस्य च त्यदाद्यवयवत्वेन दृष्टत्वात्; धनवन्तावित्यादौ मकारस्य च मतुवचय-

1 उच्छृङ्खलास्त्विति । षष्ठ्यर्थावयवत्वस्योपलक्षणत्वे इण्धातोः क्विपि सिद्धस्येच्छब्दस्य ईशशब्देन समासे निष्पन्नस्य इदीशशब्दस्यावयवे इच्छब्दे अनादेशापत्तिः; न च नायमिदम्शब्दावयव इति वाच्यम्, मानाभावात्, इदम्शब्दघटकेच्छब्दमनुकृत्येशशब्देन समासस्यात्र एव वा तदापादानात्; प्रत्युच्चारणं शब्दो भिद्यते इत्यभ्युपगमे तु अकच्घटितेदकम्शब्देऽपि अनादेशाप्राप्तिरित्यस्वरसात् उच्छृङ्खलपदेन सूचितम् ।

ननु चेतेत्यादौ ह्रस्वस्येकारस्य प्रमाणत आन्तर्यादकारोऽपि स्यादत आह—

यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥ १३ ॥

अनेकविधं स्थानार्थगुणप्रमाणकृतम् । अत्र मानं 'षष्ठी स्थाने' इत्यत एकदेशानुवृत्त्या स्थाने ग्रहणेऽनुवर्तमाने पुनः 'स्थानेऽन्तरतम' इतिसूत्रे स्थानेग्रहणमेव । तद्धि तृतीयया विपरि-

---

वत्वेन दृष्टत्वाद्धत्वसिद्धिः; निर्दिश्यमानपरिभाषाया अकञ्चिपयेऽपि प्रवृत्त्युपगमेन भिन्धकीतिभाष्यं शेखरग्रन्थश्चोपपद्यत इत्याहुः ॥ १२ ॥

ननु चेतेत्यादाविति । प्रमाणत आन्तर्यादित्यस्य कालकृतसादृश्यादित्यर्थ; तथा च तालुस्थानजन्यत्वेन यथैकारस्सदृशस्तथा मात्राकालिकत्वेनेकारस्याकारोऽपि सदृश इति विनिगमनाविरहेण पर्यायापत्तिरिति बोध्यम् । मात्रिकत्वं विहाय मात्राद्वयन्यूनकालिकत्वपर्यन्तानुधावनं कस्यचित्तु वृथेति प्रतिभाति । आन्तर्यमिति—सादृश्यमित्यर्थः । आदेशनियामकत्वेन प्रसक्तमिति शेषः । वाक्यभेदेनेति । 'स्थानेऽन्तरतम' इतिसूत्रे अन्तरतम इत्येकं वाक्यं पूर्वं पठनीयं, स्थाने इत्यपरम्; तत्र पूर्वस्मिन वाक्ये स्थाने इत्यनुवर्त्तते, प्रसङ्ग इति तस्यार्थः तथा च प्रसङ्गे सति सदृशतमो भवतीत्यर्थः । द्वितीये स्थाने इति वाक्ये पूर्ववाक्यादनुवृत्तं स्थाने इति अन्तरतम इति च पदद्वयमनुवर्त्तते, सूत्रस्थं स्थाने इति स्थानेनेत्यर्थकम, तथा च प्रसङ्गे सति स्थानेन स्थानघटितधर्मेण सदृशतमो भवतीत्यर्थः । इदञ्च पूर्ववाक्येनैव स्थानघटितधर्मेण सदृशस्यापि विधानसम्भवात् व्यर्थं सन् स्थानेनैव सदृशतमो भव-

णामध्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति सम्भवे स्थानत एवान्तरतम इत्यर्थकम् । तमब्ग्रहणमेवानेकविधान्तर्य-

तीति नियमार्थम् । सति सम्भव इति । एतच्च योगविभागसाम-र्थ्याल्लभ्यते । तथा चैतत्फलितैव 'यत्रानेकेति'परिभाषेति बोध्यम ।

ननु वाक्यभेदे किं प्रमाणं ? प्रसङ्गे सति स्थानेन सदृशतमो भवतीत्यर्थकमेकमेव वाक्यमस्तु, इत्यत आह—तमब्ग्रहणमेवेति । अनेकविधेति—अनेकविधान्तर्यसत्ता आदेशनियामिकेत्यत्र गम-कमित्यर्थः । यथाश्रुतन्तु न युक्तम्, सादृश्यस्य वस्तुधर्मत्वेन तत्र ज्ञापकस्यानुपयोगात् अस्य वाक्यभेदज्ञापनद्वारेत्यादिः । तथाहि यद्येकमेव वाक्यं, स्थाने इति चानुवृत्तं स्थानेनेत्यर्थकम्, तर्हि स्थानघटितधर्मेण सदृशतमो भविष्यतीत्येवार्थः । ततश्च तमब्ग्र-हणं व्यर्थम् । न च सादृश्ये अतिशयलाभार्थमस्तु, तेन च लाकृ-तिरित्यादौ दन्तस्थानजन्यत्वेन लकारवकारयोस्तुल्यत्वेऽपि दन्त-मात्रस्थानजन्यत्वेनातिशयसदृशो लकार एव न वकारः, अधुना पर्यायेण वकारोऽपि स्यात्, उभयोः स्थानघटितधर्मेण सदृशत्वा-विशेषादिति वाच्यम्; तथा सति समानं स्थानं यस्येत्यर्थकं सस्थानमित्येव सिद्धेऽन्तरग्रहणसामर्थ्यादन्तरतम इत्यर्थस्य लाभ-सम्भवात् । वाक्यभेदे ज्ञापिते तु पूर्ववाक्यस्य प्रसङ्गे सति सदृशतमो भवतीत्यर्थेनार्थकृतगुणकृतप्रमाणकृतसदृशानां विधान-लाभायान्तरग्रहणस्य चारितार्थ्येनान्तरग्रहणसामर्थ्येनातिशया-र्थस्य लाभासम्भवात्तल्लाभार्थं तमपो ग्रहणं चरितार्थमिति बोध्यम । तेन च वाक्यभेदज्ञापनेऽर्थादेवानेकविधान्तर्यस्यादेशनियामकत्व-लाभः । तच्च अर्थकृतमनान्तर्यकृतं स्थानकृतं गुणकृतं प्रमाणकृतमेव गृह्यत इत्यत्र तु भाष्यकारादिव्याख्यानमेव शरणं, स्थानकृतन्तु सूत्रादपि लभ्यत इति विवेकः ।

केनचित्—स्थान इति पूर्वं वाक्यमन्तरतम इत्यपरं कृत्वा

स्थाने इत्यत्रान्तरतम इत्यनुवर्तत इत्युक्तं—तदसमञ्जसम्, उत्तरत्र सम्बन्धस्यैवानुवृत्तिपदार्थत्वेन सर्वसम्मतत्वात्।

यदपि केनचिदुक्तं—न च तमब्ग्रहणमतिशयलाभार्थम्, आदेशवृत्त्यतिशयश्च स्ववृत्तित्व-स्वस्थानिवृत्तित्व-स्वेतरयावदादेशावृत्तित्वैतत्त्रितयसम्बन्धेन स्वविशिष्टधर्मवत्त्वरूप इति; अत्रोच्यते—अन्तरतमपदघटकतमप्प्रतिपाद्योऽतिशयः स्वप्रकृत्यर्थनिष्ठ एव भवितुं युक्तः, प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वान्नादेशनिष्ठः। न चान्तरशब्दार्थोऽप्यादेश एवेति नासङ्गतमिति वाच्यम्; प्रकृत्यर्थतावच्छेदके एवातिशयस्य तमपा बोधनात्, सादृश्य एवातिशयो बोध्यते न तु धर्मिण्यादेशे, सप्तम्यन्तपाठे स्थानिन एवान्तरतमपदार्थान्वयेनादेशवृत्तित्वस्य शब्दमर्यादयाऽलाभाच्चेति।

ननु सादृश्येऽपि कोऽतिशय इति चेत्, उच्यते—सादृश्यानुयोगित्वेन विवक्षितविशिष्टधर्मसाधारणधर्मकत्वरूपः। वैशिष्ट्यञ्च स्ववृत्तित्व-स्वघटितदलघटकस्वेतरावृत्तित्वोभयसम्बन्धेन; स्वघटितदलत्वञ्च स्वनिष्ठविषयताप्रयोजकपदप्रयोज्यविषयताश्रयत्वम्। तथा च लाकृतिरित्यादौ ऌकारस्य वकारो नान्तरतम इति न स आदेशः। तथा हि—यदा वकारोऽन्तरतमत्वेन विवक्षितस्तदा सादृश्यानुयोगित्वेन स एव विवक्षितस्तद्विशिष्टो न कोऽपि धर्मः, दन्तस्थानजन्यत्वस्य स्ववृत्तित्वेऽपि ऌकारे सत्त्वेन द्वितीयसम्बन्धस्यासत्त्वात्, यदा च लकारोऽन्तरतमत्वेन विवक्षितस्तदा सादृश्यस्यानुयोगी स एव, तद्विशिष्टश्च दन्तमात्रस्थानजन्यत्वरूपस्तत्र स्ववृत्तित्वस्य स्वघटितदलघटकस्वेतरो वकारादिस्तदवृत्तित्वस्य च सत्त्वात्। तेन साधारणधर्मेण ऌकारस्य सदृशो लकार इति स एवादेशः। एवमेव सर्वत्र बोध्यम्। सप्तम्यन्तपाठे अन्तरतमे स्थानिनि आदेश इत्येवार्थस्तदा यदा दध्यत्रेत्यत्रेकारस्य यण् चिकीर्षितस्तदा सादृश्यानुयोगी स एव ह्रस्वेकारस्तद्विशिष्टो धर्मः द्विमात्रान्यूनकालिकत्वविशिष्टतालुस्थानजन्यत्वरूपस्तत्र स्व-

सत्तागमकम्। स्थानतः स्थानेनेत्यर्थः। तत्र स्थानत आन्तर्यम् 'इको यणची'त्यादौ प्रसिद्धमेव, अर्थतः 'पद्न्न' इत्यादौ। स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति सिद्धान्ताद्यदर्थाभिधानसमर्थो यः स तस्यादेश इति तत्समानार्थतत्समानवर्णपादादीनां ते,

---

वृत्तित्वस्य स्वघटितदलघटकस्वेतरावृत्तित्वस्य च सत्त्वात्। तेन रूपेण यकारसदृशतमः स एवेति तस्यैव यण् स्यान्न दीर्घेकारस्य, तद्विशिष्टस्य धर्मस्य यकारसाधारणस्याभावात्। अतएव प्रथमान्तपाठस्सिद्धान्तित इति दिक्।

प्रसिद्धमेवेति। तत्र यदा यकारोऽन्तरतमत्वेन विवक्षितस्तदा यकारविशिष्टो धर्मस्तालुस्थानजन्यत्वरूप इति तेनेकारसदृशतमस्स एवेत्येवंक्रमेण बोध्यम्। अर्थतः पद्न्नित्यादाविति। तत्र शस्प्रभृतिष्विति सप्तमीबलाच्छसाद्यव्यवहितपूर्वस्य पदादय आदेशा इति सामान्यतोऽर्थे जाते पदादेशः स्वसदृशतमस्य दादेशः स्वसदृशतमस्येत्येवंक्रमेण सप्तम्यन्तपाठेऽर्थः, तत्र यदा पदादेशस्य सदृशतमत्वेन पादशब्दो विवक्षितस्तदा पादविशिष्टो धर्मो भवति। चरणवाचकत्वे सति पकारदकारघटितत्वरूपः, तस्य स्वं पादशब्दः, तद्वृत्तित्वस्य, स्वघटितदलघटकाः स्वेतरे स्थानित्वेन सम्भाविताः सर्व एव तदवृत्तित्वस्य च सत्त्वात्; तेन धर्मेण पदादेशस्य सदृशतमस्स एवेति पादशब्दस्यैव पदादेशः, चरणादिशब्दस्य पदादेशसदृशतमत्वं न सम्भवति। यतो यदा सदृशतमत्वेन चरणशब्दो विवक्षितस्तदा चरणशब्दविशिष्टः पदादेशसाधारणो यस्तेनैव सादृश्यं ग्राह्यम्। तच्च न सम्भवति, कस्यापि स्ववृत्तित्व-स्वघटितदलघटकस्वेतरावृत्तित्वयोरभावात्। चरणवाचकत्वस्य तु पादादिवृत्तित्वेन निरासः। चकारघटितत्वे सति तत्त्वस्य तु पदादेशसाधार-

'तृज्वत्क्रोष्टु'रिति च। गुणतो वाग्घरिरित्यादौ। प्रमाणतः 'अदसोऽसे'रित्यादौ। स्थानेऽन्तरतमसूत्रे भाष्ये स्पष्टैषा ॥ १३ ॥

---

णत्वाभावादेव पदादेशसादृश्यनियामकत्वासम्भवः। एवं ददादेशस्य सदृशतमो दन्तशब्द एव भविष्यति नान्यो रदनादिशब्द इति विभावनीयम्। तत्तदर्थवाचकत्वधर्मे तत्तदादेशघटकाद्यहल्द्वयघटितत्वसाहित्येन तत्तदादेशस्य सादृश्यप्रयोजकत्वमुपपादनीयम्। तथा च चरणवाचकत्वे सति पकारदकारघटितत्वं, दन्तवाचकत्वे सति दकारनकारघटितत्वं, मासवाचकत्वे सति मकारसकारघटितत्वं, हृदयवाचकत्वे सति हकारदकारघटितत्वमित्यादय एव धर्मा भविष्यन्तीति विचारणीयम्। न चैवं निशाशब्दस्यैवेति कथं, तत्र रात्रिवाचकत्वे सति नकारशकारघटितत्वं हि सादृश्यप्रयोजकं वाच्यम्, तस्य निशीथिनीशब्देऽपि सत्त्वादिति वाच्यम्; थकाराघटितत्वसहितस्य तस्य तथात्वसम्भवात्। नन्वेवमपि नासिकाशब्दस्यैव नसादेश इत्यनियमस्तत्र साधारणधर्माप्रसिद्धेः, नासिकावाचकत्वे सति नकारसकारघटितत्वस्य नासाशब्देऽपि सत्त्वादिति चेत्—न, नासाशब्दापर्यालोचनेनैव कौमुद्यां नासिकेतिविशेषोक्तेः। वस्तुतस्तु नासाशब्दस्यापि नसादेशे इष्टापत्तिरेवेत्यलम्।

सप्तम्यन्तपाठस्य दीर्घेकारादौ यणोऽसिद्ध्या दूषितत्वेन सिद्धान्तभूते प्रथमान्तपाठे फलमाह—तृज्वत्क्रोष्टुरिति चेति। तत्र क्रोष्टुशब्दस्य स्थाने शृगालवाचकत्वेन सदृशतमः क्रोष्टृशब्द एवादेशो न पक्तृशब्दः। न च तत्र स्थानषष्ठ्यभावेन स्थान्यादेशभावाभावात् 'स्थानेऽन्तरतम' इत्यस्याप्रवृत्तिरिति वाच्यम्, रूपातिदेशस्थले स्थानषष्ठीं विना गत्यभावात्। तथा हि धर्मिणि विद्यमान एवापरधर्मिणोऽतिदेशे क्रोष्टुक्रोष्टृइत्युभयोः श्रवणापत्तिः, धर्मिणं विहायानुपूर्वीमात्रस्यानुपूर्व्यन्तरविशिष्टे अतिदेशे च एकस्मिन्नेव

ननु प्रोढवानित्यत्र 'प्रादूहोढ'इति वृद्धिः स्यादत आह—

अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥

विशिष्टरूपोपादाने । उपस्थितार्थस्य विशेषणतयान्वयस-

धर्मिणि क्रोष्टुत्वक्रोष्टृत्वयोः श्रवणप्रसङ्गः, तस्मात् क्रोष्टुशब्दस्य स्थाने तृजन्तादेश इत्यस्यागत्याङ्गीकारेणान्तरमोपस्थितौ बाधकाभावः। गुणत इति—बाह्यप्रयत्नकृत इत्यर्थः। प्रमाण इति-कालकृत इत्यर्थः। अदसोऽसेरित्यत्र मात्राद्यन्यूनकालिकत्वेन ह्रस्वव्यञ्जनयोर्ह्रस्वः, द्विमात्रिकत्वेन दीर्घस्य दीर्घ इति बोध्यम् ॥१३॥

ननु प्रौढवानित्यत्रेति-'प्रादूहोढोढी'त्यनेनोढत्वरूपानुपूर्वीविशिष्टे परे वृद्धिविधानेनोढवच्छब्दघटकोढशब्दस्याप्यूढत्वरूपानुपूर्वीविशिष्टत्वेन तस्याग्रहणे प्रमाणाभावेन वृद्ध्यापत्तिरित्यर्थः। अर्थवद्ग्रहणे नानर्थकस्य—अर्थवद्ग्रहणे सम्भवति सति अनर्थकस्य ग्रहणं न भवतीत्यर्थः, तेन प्रौढ इत्यादावर्थवदूढशब्दे परे वृद्धिर्जाता, प्रोढवानित्यत्र न, तत्रोढशब्दस्यानर्थकत्वात्। अयम्भावः—घटमानय घटमुच्चारयेत्यादौ अर्थस्य शब्दस्य च भानादर्थे शक्तिः शब्दे लक्षणेत्यत्र विनिगमनाविरहात् प्रयोगप्राचुर्य्यस्य शक्तिग्राहकस्य निर्द्धारयितुमशक्यत्वात् व्यवहारस्योभयत्र तुल्यत्वात्, 'न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते' इति जैमिनीयादर्थबोधस्थलेऽपि शब्दभानस्य प्रामाणिकत्वाच्च शब्दे अर्थे च शक्तिरभ्युपगन्तव्या। घटमानयेत्यादौ घटवाच्यमर्थमानय; घटमुच्चारयेत्यादौ घटरूपार्थबोधकं घटशब्दमुच्चारयेत्येवंक्रमेण बोधः। तत्र शब्दविशिष्टे अर्थे अर्थविशिष्टे शब्दे च शब्दानां शक्तिकल्पने शक्यतावच्छेदके गौरवात्, लाघवात् सर्वेषां शब्दानां स्ववृत्तिश्रूयमाणानुपूर्व्यवच्छिन्ने घटत्वादितत्तद्रूपावच्छिन्ने च खण्डशः शक्तिः कल्प्यते। लोके आनयना-

म्भवे त्यागे मानाभावोऽस्या मूलम् । अत्रार्थः कल्पितान्वय-

---

दिकार्यस्य शब्दे बाधादर्थस्य विशेष्यतया शब्दस्य चार्थे विशेषणतया, शास्त्रे राज्ञो यदित्यादौ मांसपिण्डरूपार्थस्य विशेष्यतया भानासम्भवात् प्रातिपदिकेन सहानन्वयात् , प्रत्ययेन पौर्वापर्यासम्भवाच्च शब्दस्य विशेष्यतया शब्दे चार्थस्य विशेषणतया बोधः । तथा च तत्तदर्थविशिष्टे परे तत्तत्कार्यमिति लब्धे फलितेयं 'अर्थवद्ग्रहणेनानर्थकस्ये'तिपरिभाषा; विशिष्टरूपोपादान एषा प्रवर्त्तत इति वृद्धोक्तेः, अलैवानर्थकेन तदन्तविधिरिति भाष्याच्च । लुनातीत्यादौ लस्य तिवादेशमाशङ्क्यार्थवत्त्वाभावेऽपि धातोः परत्वाभावेन समाधानकरणपरभाष्याच्च वर्णानामर्थविशिष्टे वर्णे एका शक्तिरपरा च वर्णमात्रे । तथा च शास्त्रे वर्णो यत्र उपात्तो वर्त्तते तत्र लोक इवार्थविशेष्यकबोधे कार्याणां बाधादपरा या वर्णमात्रनिरूपिता शक्तिस्तयैव वर्णमात्रस्य बोधः, न तु विशिष्टरूपोपादान इवार्थविशिष्टवर्णबोध इत्युक्तभाष्यबलात् कल्प्यत, इति तत्रानर्थकस्यापि वर्णस्य ग्रहणं भवति । अतएव 'स्वंरूप'सूत्रं प्रयोजनाभावात् भाष्ये प्रत्याख्यातम् । अर्थवैशिष्ट्यञ्च शब्दे स्वविषयकबोधजनकत्वेन तात्पर्यविषयत्वसम्बन्धेन । एतेन बोधकत्वसम्बन्धेनार्थवैशिष्ट्ये यदि बोधकता फलोपधायकता कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तिस्वरूपा तदा यदा प्रतिबन्धकवशाद्बोधाभावस्तदा प्रौढ इत्यादावपि वृद्धिर्न स्यात्; यदि स्वरूपयोग्यता बोधजनकतावच्छेदकानुपूर्वीरूपा तर्हि प्रोढवानित्यत्रापि तादृशानुपूर्व्याःसत्त्वेन वृद्ध्यापत्तिरित्यपास्तम् । तात्पर्यीयविशेष्यतापर्याप्त्यवच्छेदकघटकोढशब्देऽभावात् सिद्धान्ते दोषाभावः । यद्यप्यर्थबोधकता लोके प्रौढ इति समुदायस्यैव न नूढशब्दे तथापि शास्त्रीयकार्यनिर्वाहाय शास्त्रप्रामाण्यात तत्रापि स्वीक्रियत एव । तदाह—अत्रार्थः

व्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यत इति 'सङ्ख्याया'इति सूत्रे भाष्ये स्पष्टम् । इयं वर्णग्रहणेषु नेति 'लस्ये'त्यत्र भाष्ये स्पष्टम् । अतएवैषा विशिष्टरूपोपादानविषयेति वृद्धाः । एतन्मूलकमेव 'येन विधि'रित्यत्र भाष्ये पठ्यते 'अलैवानर्थकेन तदन्तविधि'रिति । किञ्च 'स्वंरूप'मितिशास्त्रे स्वशब्देनात्मीयवाचिनार्थो गृह्यते, रूपशब्देन स्वरूपम्, एवञ्च तदुभयं शब्दस्य संज्ञीति तदर्थः । तत्रार्थो न विशेष्यस्तत्र शास्त्रीयकार्यासम्भवात्,

---

कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयोऽपीति—कल्पितौ यावन्वयव्यतिरेकौ ताभ्यां कल्पितः प्रकृत्यर्थः प्रत्ययार्थश्च, यथा प्रौढ इत्यत्र वहनकर्मादिरूपः । यत्र कल्पितावपि तौ न स्तो यथा यावक इत्यादौ कप्रत्ययाभावे योऽर्थः प्रतीयते स एव कप्रत्ययेऽपि, तत्र प्रत्यय इति महासंज्ञाबलेन कप्रत्ययस्य प्रकृत्यर्थेनैवार्थवत्त्वं मन्यत इति सोऽपि गृह्यते शास्त्रीयकार्याय ।

परञ्चैतत्कल्पे 'गोतो णिदि'त्यादौ गोपदेन कोऽर्थो विवक्षितः? यदि गोत्वावच्छिन्नस्तर्हि पशुतात्पर्येण प्रयुक्ते गामानयेत्यादौ स्यात् पृथिव्यादितात्पर्यके न स्यात; ततश्च लोके यावन्तोऽर्था गोपदेन बोध्यन्ते तत्सकलार्थतात्पर्यकोऽयं सूत्रस्थो गोशब्द इति वक्तव्यम्, अन्यथा सर्वत्र वृद्धिर्न स्यात् । न च सर्वेऽर्थाः सकृदुच्चरिताद्गोशब्दाद्बोद्धुं शक्याः सकृदुच्चरितन्यायविरोधादिति प्रतिशक्यतावच्छेदकं सूत्रमावर्त्तनीयं, तथा च किरणतात्पर्यकाद्गोशब्दात् पृथ्वीतात्पर्य्यकात् गोशब्दात गोत्वावच्छिन्नतात्पर्य्यकाद् गोशब्दादित्यादिप्रकारेणार्थः कर्त्तव्यः, न त्वर्थवाचकाद्गोशब्दादित्येकरूपेण, अर्थत्वेन रूपेणार्थे गोपदशक्तेरभावात; एवं रीत्या नानार्थकस्थले सर्वत्रावृत्तौ गौरवम् । एवं 'केऽण' इत्यादा-

किन्तु शब्दविशेषणम्; एवञ्चार्थविशिष्टः शब्दः संज्ञीति फलितम्। तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्टम् ॥ १४ ॥

नन्वेवमपि महद्भूतश्चन्द्रमा इत्यत्र 'आन्महत'इत्यात्वापत्तिरत आह—

गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ॥ १५ ॥

---

वर्थविशिष्टे कशब्दे परे इत्यर्थो न स्यात्, प्रत्ययजन्यबोधे प्रकृतिसमभिव्याहारस्य कारणत्वात्, अन्यथाऽणादिशब्दादप्यपत्यादिबोधप्रसङ्गात्। यदि तु लौकिके प्रयोगे कशब्दप्रकारककुत्साद्यर्थविशेष्यकबोधस्यैव सत्त्वेन तादृशबोध एव प्रकृतिसमभिव्याहारस्य कारणत्वं, सूत्रे 'केऽण' इत्यादौ त्वर्थप्रकारकशब्दविशेष्यकबोधस्य सत्त्वेन न तत्र प्रकृतिसमभिव्याहारापेक्षेत्युच्यते—तथापि कार्यतावच्छेदके कशब्दनिष्ठप्रकारतानिरूपितकुत्साद्यर्थनिष्ठविशेष्यतायाः प्रवेशे गौरवम्। 'स्वंरूप'सूत्रसत्त्वे तु तेन सूत्रेण शास्त्रघटकशब्दे अपूर्वः सङ्केतो बोध्यते। स चार्थत्वावच्छिन्ने स्ववृत्तिरूपावच्छिन्ने च, तथा च 'गोतो णिदि'त्यादावर्थविशिष्टस्य गोशब्दस्येत्यर्थेन सर्वत्रार्थे प्रयुज्यमानस्य गोशब्दस्यैकेनैव सूत्रेण कार्यप्रवृत्त्याऽऽवृत्तर्नोपयोगः। 'केऽण' इत्यादावप्यर्थविशिष्टे कशब्दे परे इत्येवार्थः, तत्र न प्रकृतिसमभिव्याहारस्य कारणत्वम्, अपि तु कुत्सार्थबोध एवेति न विशेषरूपेण कार्यकारणभावकल्पनप्रयुक्तमपि गौरवमिति प्रत्याख्यानं न युक्तम्। इत्यत एवारुचेः प्रत्याख्यानपक्षं प्रथममुपन्यस्यारम्भपक्षमन्ते उपन्यस्यति—किञ्चेत्यादिना। शेषं सुगमम् ॥ १४ ॥

नन्वेमपीति—अर्थवद्ग्रहणपरिभाषायाः स्वीकारेऽपीत्यर्थः। आत्वापत्तिरिति। अर्थवत्त्वस्य तत्रापि सत्त्वादिति भावः। मह-

गुणादागतो गौणः, यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो

द्भूतइत्येतद्धटकमहच्छब्दस्य ह्यारोपितमहत्त्वविशिष्ट इत्यर्थोऽभूततद्भावे च्विप्रत्ययात्। गौणमुख्ययोरिति—गौणमुख्ययोरर्थयोर्मध्ये मुख्य एवार्थे कार्यसम्प्रत्ययः, मुख्यार्थबोधके एव शब्दे कार्यप्रवृत्तिरित्यर्थः। गुणादागत इति। गुणादिति हेतौ पञ्चमी, आङ्पूर्वकगम्धातोर्ज्ञानमर्थः, क्तप्रत्ययार्थो विषयताश्रयः, ज्ञानआरोपात्मकं हेतुबोधकपदसान्निध्यात, गुणपदं गुणज्ञानपरम्, तथा च गुणप्रतिसन्धानप्रयोज्यारोपीयविषयताश्रय इत्यर्थः। स्वशक्यतावच्छेदकसमानाधिकरणगुणप्रतिसन्धानप्रयोज्यस्वशक्यतावच्छेदकप्रकारकारोपीयविशेष्यताश्रयोऽर्थः स्वस्य गौणोऽर्थ इति निष्कर्षः। गौर्वाहीक इत्यादौ गोपदशक्यतावच्छेदकं गोत्वं, तत्समानाधिकरणं यज्जाड्यमान्द्यादिकं तस्य वाहीके संस्कारहीने पुरुषविशेषे ज्ञानाद् गोपदशक्यतावच्छेदकं गोत्वं तत्रारोप्यत इति वाहीको गोपदस्य गौणोऽर्थः। एवं महत्त्वसमानाधिकरणस्य विशिष्टशिरोवहनकर्मत्वस्य चन्द्रे दर्शनात् कलङ्किन्यपि चन्द्रे महत्त्वारोप इति चन्द्रतात्पर्यको महच्छब्दः प्रकृते गौणार्थः।

'गुणादागत इति प्रतीकमादाय तद्वृत्तिगुणसत्ताप्रयोज्यारोपविषयीभूत इत्यर्थः, यथा गोवृत्तिजाड्यादिगुणसत्ताप्रयोज्यारोपविषयीभूतगोत्वादिरर्थो गौण इति कस्यचित् लेखोऽसङ्गतः। तथा हि—तद्वृत्तीत्यशब्दार्थोऽनुपयुक्तः। आरोपविषयीभूतगोत्वादिरर्थो गौण इत्यप्ययुक्तम्, न हि गोत्वं नाना येनैकं गौणमपरं मुख्यं स्यात्, न ह्यारोपेण वस्तुभेदः शिष्टानुमत उपपन्नो वा। 'गुणादागतो गौणः यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीक' इति मूलेन वाहीकादेर्धर्मिण एव गौणार्थत्वावगमाच्च, गौणो ह्यर्थो वाहीकादावेति स्वमन्याच्च, जाड्यादिर्गुणो निमित्तमस्येत्यर्थः। अर्थ इत्यस्य बोधविषय इत्यर्थः। जाड्यादिगुणप्रयोज्यबोधविषयो

वाहीकः। अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुध्यते। मुखमिव प्रधानत्वान्मुख्यः प्रथम इत्यर्थः। गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्तते। एवञ्चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम्। तेन प्रियत्रयाणामित्यादौ त्रयादेशो भवत्येव, तत्र त्रिशब्दार्थस्येतरविशेषणत्वेऽप्युक्तरूप-गौणत्वाभावात्।

---

वाहीक इत्यर्थः। बोधे प्रयोज्यता च प्रवृत्तिनिमित्तारोपद्वारा बोध्या। अप्रसिद्धश्च संज्ञादिरपीति। गौण इति शेषः। गौणत्वे हेतुमाह—तद्गुणारोपादेव बुध्यत इति। यः कश्चित् पुत्रादे रामेति कृष्णेति वा नाम करोति स रामादिगतपित्राज्ञापालन-कर्तृत्वादिकं पुत्रादावारोप्य तद्धेतो रामत्वादिकमारोप्य रामत्वा-दिना बोधं करोति; तथा च गुणप्रतिसन्धानप्रयोज्यशक्यताव-च्छेदकप्रकारकबोधविषयत्वरूपगौणत्वस्य तत्रापि समन्वय इति भावः। इयानेव विशेषो यदेकत्र गुणप्रतिसन्धानं प्रमात्मकमपर-त्रारोपात्मकमिति। ननु संज्ञा नाम शब्दः गौणश्चार्थ इति संज्ञादिरपीत्यसङ्गतमिति चेत्—न, संज्ञादीतिपाठस्यैव सत्त्वेन संज्ञा आदिः प्रथमो बोधको यस्येतिव्युत्पत्त्या अर्थस्यैवावगमात्, सम्यग् ज्ञायते बोध्यते इति संज्ञेति व्युत्पत्त्याऽर्थस्यैव लाभाच्च। मुखमिवेति। मुख्यार्थस्य प्राधान्यं गौणे मुख्ये वा, सर्वत्र भास-मानत्वात्। तदेवोपपादयति—गौणे ह्यर्थ इत्यादिना। सामा-न्यगौणत्वमुक्तं, तद्व्याप्यमप्रसिद्धत्वं गौणलाक्षणिकत्वञ्चेति बोध्यम्। गौणलाक्षणिकत्वन्तु गुणप्रयोज्यलक्षणाविषयत्वं, लक्षणा च शक्यतावच्छेदकारोप एवेति बोध्यम्। गौर्वाहीक इत्यादौ आरोपितगोत्ववान् वाहीकः, गोत्ववान् वाहीक इति वा

किञ्चायं न्यायो न प्रातिपदिककार्ये, किन्तूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्य एव। परिनिष्ठितस्य पदान्तरसम्बन्धे हि गौर्वाहीक इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्ज्ञातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम्। श्वशुरसदृशस्यापत्यमित्यर्थके श्वाशुरिरित्यादौ अत इञः सिद्धये उपात्तमित्यादि। न च प्रातिपदिकपदं तादृशमिति वाच्यम्, तेन हि प्रातिपदिकपदवत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात्।

---

बोध इत्युभयमसङ्गतम्, गौर्वाहीकमितिबोध एव सम्यक्। अमहाब्राह्मण इत्यादौ नञ आरोपार्थकत्वेन महत्त्वारोपविषयस्यैव महच्छब्देन प्रतीतावप्यारोपस्य गुणहेतुकत्वाभावेनोक्तगौणत्वाभावादात्वसिद्धिः।

किन्तूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपम्यँत्र तादृशपदकार्य एवेति। उपात्तमित्यस्य सूत्र उच्चार्यमाणमित्यर्थः, विशिष्यार्थोपस्थापकमित्यस्य स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नबोधकमित्यर्थः, विशिष्टरूपमित्यनेन स्ववृत्तिधर्म आनुपूर्वीरूप एवेति बोध्यते; तथा च स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकपदोपादान एव परिभाषाप्रवृत्तिरिति पदत्रयेण बोधितम्। 'अत इञ्'इत्यादावत्पदस्य प्रातिपदिकपदस्य वोपादानं, न विशिष्टरूपोपादानम्, अत्त्वस्य प्रातिपदिकपदवत्त्वस्य वाऽऽनुपूर्वीरूपत्वाभावात्। अतएव गौणेऽपि तस्य प्रवृत्तिः। न च यद्धर्मावच्छिन्ने शक्तिस्तस्यैव तत्पदप्रयोज्यविषयतावच्छेदकत्वं, प्रातिपदिकपदवत्त्वस्य च तत्र भवितुमर्हति, धातुभिन्नत्वादिविशिष्टार्थवत्त्वावच्छिन्ने च प्रातिपदिकपदस्य सङ्केतादिति वाच्यम्;

निपातपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यक-कार्यविधायके 'ओत्' इत्यादावेतत्प्रवृत्त्या गोऽभवदित्यादौ दोषो

---

पाणिनिकृतप्रातिपदिकपदसङ्केतस्य तत्तद्धर्मावच्छिन्ने सत्त्वेऽपि लाघवानुरोधेन पाणिनिसङ्केतसम्बन्धेन प्रातिपदिकपदवत्त्वावच्छिन्ने शक्त्यन्तरकल्पनेनादोषात्। ननु च्व्यन्ते गोऽभवदित्यादौ प्रगृह्यसंज्ञावारणायौत्सूत्रे भाष्यकारेण कृता गौणमुख्यन्यायप्रवृत्तिः विरुद्ध्येत, ओत्पदस्य निपातपदस्य वोक्तरीत्या ओदन्तत्वाद्यवच्छिन्नविषयताप्रयोजकत्वेन आनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वाभावेन विशिष्टरूपोपादानाभावादित्यत आह—निपातपदन्तु चादित्वेन चादीनामुपस्थापकमित्यादि। तथा च चादित्वस्यानुपूर्वीरूपत्वाद्विशिष्टरूपोपादानमस्तीति न दोषः। ननु चत्वावच्छिन्ने वात्वावच्छिन्ने शक्तिकल्पनायामपि स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वस्याभाव एवेति चेत्—न, स्ववृत्तित्वं विहायानुपूर्व्यवच्छिन्नेत्यादेरेव प्रवेशात्। ननु तथा सति शक्यतावच्छेदकभेदेन शक्तिभेदापत्त्या सर्वधर्मावच्छिन्नस्यैकदा बोधाभावप्रसङ्ग इति चेत्—न, चाद्यन्यतमत्वावच्छिन्ने शक्तिकल्पनया शक्यतावच्छेदकभेदाभावेन शक्तिभेदाभावात्।

नन्वानुपूर्व्या साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकपदोपादानं विशिष्टरूपोपादानमिति वक्तव्यम्, अन्यथा प्रातिपदिकपदवृत्तिविषयतायाः प्रातिपदिकत्वरूपानुपूर्व्या साक्षादवच्छिन्नत्वेन प्रातिपदिकपदवत्त्वावच्छिन्नमुख्यविशेष्यतायाः परम्परया आनुपूर्व्यवच्छिन्नत्वेन च प्रातिपदिकपदोपादानस्यापि विशिष्टरूपोपादानत्वापत्तिः; उक्तनिवेशे तु आद्यविषयताया मुख्यविशेष्यतात्वविरहात् अन्त्यायास्साक्षात्तदवच्छिन्नत्वाभावान्न दोषः; तथा च निपातपदस्य चाद्यन्यतमत्वावच्छिन्नबोधकत्वाङ्गीकारेऽपि तत्पदीयमुख्यविशेष्यतायाश्चत्वाद्यानुपूर्व्या साक्षादवच्छिन्नत्ववि-

न । अग्नीषोमौ माणवकावित्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वेऽन्तरङ्गत्वादीत्वषत्वे भवत एव । सदृशला-

रहात् चत्वादिना साक्षादवच्छिन्नायाश्च मुख्यविशेष्यतात्वाभावात्प्रातिपदिकपदस्यैवास्याप्युपादानं न तादृशम्; स्वेन साक्षादवच्छिन्नत्वं स्वावच्छिन्नत्व-स्वावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वाभाववत्त्वोभयसम्बन्धेन स्वविशिष्टत्वम्; मुख्यत्वञ्च विशेष्यतायां प्रकारत्वासामानाधिकरण्यम; किञ्च निपातपद इव प्रातिपदिकपदेऽपि घटाद्यन्यतमत्वावच्छिन्ने शक्त्यापत्तिः; न च घटादीनामानन्त्याच्चादीनाञ्च परिसंख्यातत्वान्नायं दोष इति वाच्यम्, चादेरपि आकृतिगणत्वेन उभयोः साम्यात् इति चेत्—अत्र वदन्ति—'ओत्' सूत्रस्थभाष्यप्रामाण्यात् निपातपदस्य स्वाश्रयसङ्केतवत्त्वसम्बन्धेन निपातत्वरूपानुपूर्वीविशिष्टे शक्तिः कल्प्यते, तथा च निपातपदप्रयोज्यमुख्यविशेष्यतानिरूपिता स्वाश्रयसङ्केतवत्त्वसम्बन्धावच्छिन्ना साक्षादवच्छेदकता निपातत्वरूपानुपूर्वीनिष्ठेति विशिष्टरूपोपादानत्वमुपपन्नम् । प्रातिपदिकपदे च स्वनिरूपितसङ्केतवत्त्वसम्बन्धेन प्रातिपदिकपदविशिष्टे शक्तिरिति मुख्यविशेष्यता प्रातिपदिकपदेनैव साक्षादवच्छिन्ना, न स्वानुपूर्व्येति न तत्र विशिष्टरूपोपादानमिति दिक् ।

पदकार्यत्वञ्च विभक्त्यनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वम् । 'त्रेस्त्रयः'-'औतोम्शसोः'-'गोतो णिद्'इत्यादीनां विभक्तिनिमित्तकत्वेन पदकार्यत्वाभावान्न तत्रैतस्याः प्रवृत्तिः । 'जानपदकुण्ड'ेति ङीपः स्त्रीत्वनिमित्तकत्वेन पदकार्यत्वाभावात् गौणेऽपि प्रवृत्तिः, अत एव कौमुद्यां गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणमित्युक्तम् । पदकार्ये प्रवृत्तौ बीजमुक्तं परिनिष्ठितस्य पदान्तरान्वयादिना । अनेन यदा गौणत्वप्रतीतिस्तदैतत्परिभाषया कार्याभाव इति सूचितम्; तेन च प्रातिपदिक-

त्वणिकाग्निसोमपदयोर्द्वन्द्वे तन्नामकावित्यर्थके च नेत्वपत्वे, आद्ये गौणत्वात्त्वणिकत्वादन्त्येऽप्रसिद्धत्वात् । अतएवाग्निसोमौ माणवकावित्यत्र गौणमुख्यन्यायेन षत्ववारणपरम् 'अग्नेः स्तुत्स्तोमसोमा'इतिसूत्रस्थं भाष्यं सङ्गच्छते ।

गाम्पाठयेत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासम्भवेन विभक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्या-

---

संस्कारवेलायां गौर्वाहीक इत्यादौ अग्नीषोमौ माणवकावित्यादौ च न गौणत्वप्रतीतिरिति नैतत्परिभाषाप्रवृत्तिः । यदि च तत्रापि कदाचित्प्रातिपदिकसंस्कारवेलायामेव गौणत्वप्रतीतिस्तर्हि गौण-मुख्यन्यायः प्रवर्त्तत एव; अतएवाग्निसोमौ माणवकाविति भाष्यं सङ्गच्छते । एतत्फलितमेव 'पदकार्ये अयं न्यायो न प्राति-पदिककार्य' इति ।

ननु विभक्त्यनिमित्तकत्वांशस्यैतत्फलितत्वेऽपि स्त्रीत्वानिमित्तकत्वांशे किं प्रमाणमिति चेत्—न, 'जानपदे'तिसूत्रे नागग्रहणस्यैव प्रमाणत्वात्, अन्यथा गजवाचिनागशब्दात् मुख्ये 'जातेरस्त्री'त्यनेनैव ङीपि सिद्धे तस्य वैयर्थ्यापत्तेः । उक्तांशज्ञापने तु गौणे चारितार्थ्यमिति न वैयर्थ्यम् । न च तत्रापि 'जाते'रित्येवसिद्धमारोपितगजत्वजातिप्रकारेणैव तत्र बोधादिति वाच्यम्, स्वसामानाधिकरण्य-स्वनिष्ठप्रकारतानिरूपितत्वोभयसम्बन्धेन जातिविशिष्टविशेष्यताकबोधजनकत्वरूपजातिवाचकत्वाभावात् ।

ननु विभक्त्यनिमित्तकत्वांशो न फलितः, गां पाठयेत्यादौ कर्मत्वाय पाठनक्रियान्वयस्य विभक्त्युत्पत्तिवेलायामेवावश्यकत्वेन मुख्यगोपदार्थस्य पाठनान्वयासम्भवाद् गोपदस्य गौणार्थकत्वस्य वक्तव्यत्वादित्यत आह—गां पाठयेत्यादाविति । अप-

प्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वस्य ग्रहेणात्वं त्वं सम्पद्यते, अमहान् महान् भूतस्त्वद्भवतीत्यादिभाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यविषय-

---

दस्याप्रयोगेण बोद्धृभिस्सर्वत्र पदस्यैव गौणार्थकत्वग्रहेणेति । अयं भावः—उच्चारणानन्तरमेवार्थप्रतीतिः, उच्चारणन्तु पदस्यैव "अपदन्न प्रयुञ्जीते"तिभाष्यात्; तथा च पदत्वसिद्ध्युत्तरमेव श्रोतुर्गौणार्थकत्वग्रहः, यदा च श्रोतुर्गौणार्थकत्वग्रहसम्भवस्तदेव गौणमुख्यन्यायप्रवृत्तिरितिकल्पनात् प्रयोक्तुः पूर्वं गौणार्थकत्व-ग्रहेऽपि न परिभाषाप्रवृत्तिरिति । अग्निसोमावित्यादौ द्वन्द्वात् प्रागपि श्रोतुर्गौणार्थकत्वग्रहे तत्रापि न्यायप्रवृत्तिः; यदि द्वन्द्वोत्तरं तथा प्रतीतिस्तर्हि इत्वषत्वे भवत एवेति फलितमेव 'विभक्त्यनि-मित्तककार्ये प्रवृत्ति'रिति ।

वस्तुतस्तु—प्रयोक्तुरेव प्रयोगनिमित्तज्ञानं भवितुर्युक्तमिति तस्यैव मुख्यार्थतात्पर्ये शास्त्रप्रवृत्तिर्गौणार्थतात्पर्ये शास्त्राप्रवृत्ति-रित्येव कल्पना ज्यायसीति अग्नीषोमावित्यादौ तात्पर्यग्रहसमय-भेदेन कार्यतदभावौ सिद्धौ । तथा च न फलितमिदं 'विभक्ति-निमित्तककार्ये न प्रवृत्ति'रिति गां पाठयेत्यादौ विभक्त्युत्पत्तिवे-लायामेव गौणार्थतात्पर्यस्यावश्यकत्वादित्यरुचेराह—अत्वं त्वं सम्पद्यत इत्यादि । तथा चैतद्भाष्यप्रामाण्यादुक्तरूपे पदकार्ये एव परिभाषाप्रवृत्तिरिति । अत्वं त्वं सम्पद्यत इत्यत्र च्विप्रत्ययो वैकल्पिकत्वान्न भवति । एवममहान् महान्भूत इत्यत्रापि बोध्यम । परन्तु आरोपितसम्बोध्यत्वादिप्रकारेणैव बोधाद् गौण-त्वमस्तीति भावः । त्वाद्यादेशदीर्घादीनामिति । त्वं सम्पद्यते इत्यत्र 'त्वाहौ सावि'त्यनेन त्वादेशः । अयुवां युवां युध्येते, अयूयं यूयं युध्यन्ते इत्यादौ युवादेशादेरादिपदेन संग्रहः । दीर्घादीत्या-

त्वमेवोचितम्; अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः ।

किञ्च शुक्लामित्युक्ते कर्मनिर्दिष्टं, कर्तृक्रिये चानिर्दिष्टे इत्याद्युक्त्वा इहेदानीं गामभ्याज कृष्णां देवदत्तेत्यादौ सर्वं निर्दिष्टं गामेव कर्म देवदत्त एव कर्ता अभ्याजेव क्रियेत्य-

---

दिना त्वद्भवतीत्यादौ प्रत्ययोत्तरपदयोश्चेत्यस्य संग्रहः । तत्रापि विभक्तावित्यनुवृत्त्या पदकार्यत्वाभावः, अतएव 'अन्तरङ्गानपि विधीन् वहिरङ्गो लुग्बाधत' इत्येतज्ज्ञापनं प्रत्ययग्रहणेन सङ्गच्छ-ते, अन्यथा युष्मच्छब्दाण्णिचि आदेशार्थं तस्यावश्यकत्वेन ज्ञापकत्वस्यासङ्गत्यापत्तेः । अन्यथेति—विभक्तिनिमित्तककार्येऽपि परिभाषाप्रवृत्तावित्यर्थः ।

ननु त्वाद्यादेशकरणेन पदं संस्कृत्याभूततद्भावविवक्षायां जातसंस्कारस्य वाधायोगेन नैते दोषाः, एकतरपक्षेण लक्ष्ये सिद्धे पक्षान्तरेण दोषदानस्यादृष्टत्वादित्यरुचेराह—किञ्चेति । 'शुक्ला-मित्युक्ते कर्मनिर्दिष्टमि'त्यादिभाष्येण सामान्यतः क्रियाकर्मत्व-विवक्षया द्वितीयादेस्साधुता भवतीत्यस्य लाभेन गौणस्थलेऽपि मुख्यार्थे एव क्रियाकर्मत्वादिविवक्षया पदं संसाध्य पश्चाद् गौणा-र्थविवक्षाप्रयोक्तुरपि भवतीत्यर्थः स्पष्टमेव लभ्यते । तेन फलित-मेवेदं 'पदकार्ये अयं न्यायो न प्रातिपदिककार्ये' इति । अग्नीषोमौ अग्निसोमावित्युभयोर्दर्शनात् क्वचित् द्वन्द्वं कृत्वा गौणार्थवि-वक्षा, क्वचित् पदे एव गौणार्थविवक्षां कृत्वा द्वन्द्वकरणमिति फलबलेन कल्प्यत इति विभावयन्तु सुधियः । 'कर्त्ता क्रिया चानिर्दिष्टे' इति । 'पुमान् स्त्रिये'तिसूत्रेण पुम्बोधकस्यैव शेषेण निर्दि-ष्टाविति युक्तम् । गामेव कर्मेति—गामित्येतत्पदवाच्यमेवेत्यर्थः ।

केचित्तु—पदात्परत्वव्याप्यविषयताप्रयोजकशास्त्रविहितं कार्यं पदकार्यमिति वदन्ति । 'आन्महत' इत्यात्वमीत्वपत्वे च भवन्ति

र्थकेनार्थवत्सूत्रस्थभाष्येण कारकादिमात्रप्रयोगे योग्यसर्वक्रियाध्याहारे प्रसक्ते नियमार्थः क्रियावाचकादिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां साधुत्वान्वाख्यानमित्यर्थलाभेन पाठनक्रियान्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि । एवमेतन्मूलकः 'अभिव्यक्तपदार्थाय' इतिश्लोकोऽपि पदकार्यविषयकः । ध्वनितं चेदं 'सर्वादीनी'तिसूत्रे संज्ञाभूतानां प्रतिषेधमारभता वार्त्तिककृता, 'पूर्वपरे'तिसूत्रेऽसंज्ञायामितिवदता सूत्रकृता, अन्वर्थसंज्ञया त-

---

तथाभूतमिति तत्र न्यायः प्रवर्त्तते । 'त्रेस्त्रयः'-'औतोम्शसो'रित्यादिशास्त्रं च न निरुक्तविषयताप्रयोजकमिति न तत्र परिभाषाप्रवृत्तिः, तदीयायाः कस्या अपि विषयतायाः पदात्परत्वव्याप्याया अभावात् । सुबन्तादेव तद्धितोत्पत्त्या तद्धितनिष्ठायास्तस्यास्तथाभूतत्वेन 'अत इञ्'इत्यादेः पदकार्यत्वसिद्धिः ।

एतन्मूलक इति—गौणमुख्यन्यायमूलक इत्यर्थः । अभिव्यक्तेति । अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।

शास्त्रार्थास्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥ इति श्लोकः ।

ध्वनितश्चेदमिति—गौणमुख्यन्यायस्य पदकार्यविषयकत्वं ध्वनितमित्यर्थः, अन्यथानेनैव न्यायेन संज्ञायां सर्वनामत्वाद्यप्राप्तौ तदर्थः प्रयासो विफलः स्यादाचार्याणामिति भावः । संज्ञाभूतानामिति । संज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वेन 'सर्वादीनि सर्वनामानी'त्यस्य विभक्तिनिमित्तकत्वात्पदकार्यत्वाभावः । आरभतेति । अनुदात्तेत्वलक्षणम् 'आत्मनेपदमनित्यमि'त्यभिप्रायेण ज्ञेयम् । आरभमाणेनेति तु युक्तम् ।

रस्तत्याख्यानं कुर्वता भाष्यकृता च।

'अर्थाश्रय एतदेवं भवति शब्दाश्रये च वृद्धयात्वे' इति ओरसूत्रस्थभाष्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय एष न्यायस्त-द्रहितशब्दाश्रये च ते इत्यर्थः। गोत इति यथाश्रुतसूत्रे विशिष्ट-रूपोपादानसत्त्वेनोक्तरीत्यैव तस्य भाष्यस्य व्याख्येयत्वा-दित्यलम् ॥ १५ ॥

अर्थवद्ग्रहणे इत्यस्यापवादमाह—

अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ १६ ॥

---

ननु गौर्वाहीकः गां पाठयेत्यादौ गौणमुख्यन्यायेन वृद्ध्या-त्वयोरप्राप्तिमाशङ्क्य 'अर्थाश्रये एतदेवं भवति शब्दाश्रये च वृद्ध्यात्व' इति समाधानस्य भाष्ये करणेन प्रातिपदिककार्यत्वेन परिभाषाप्रवृत्तिवारणमसङ्गतमित्यत आह—लौकिकार्थवत्त्वेति। लौकिकार्थवत्त्वस्य पदे एव सत्त्वेन अर्थाश्रय इत्यस्य पदाश्रय इत्यत्र तात्पर्यम्, शब्दाश्रय इत्यस्य प्रातिपदिकाश्रय इत्यत्र तात्पर्यमिति भावः; यथाश्रुतार्थकत्वे 'गोतो णिदि'तिसूत्रन्याससत्त्वे विशिष्टरूपोपादानसत्त्वादर्थोपस्थित्या वृद्ध्यात्वयोरप्यर्थाश्रयत्वेन परिभाषावारणस्याशक्यत्वापत्तेः ॥ १५ ॥

तदन्तविधिं प्रयोजयन्ति—ते अन्ता येषां तानि तदन्तानि तेषु विधिस्तम्। अर्थवता अनर्थकेनेत्यभेदे प्रकृत्यादित्वात् तृतीया, तत्पदार्थे तस्यान्वयः। अथवा लक्ष्यस्थमनादिकं कर्तृ स्वान्ते विधिं प्रयुङ्क्ते करोति तं सूत्रस्थानि प्रयोजयन्तीत्यर्थ-विवक्षया प्रयोज्यकर्त्तरि तृतीया बोध्या। अनिति प्रकृतिभावबा-धनार्थं 'कार्मस्ताच्छील्य'इतिनिपातनमेकदेशानुमत्याऽस्यां ज्ञा-

'येन विधि'रित्यत्र भाष्ये वचनरूपेण पठितैषा । तेन राज्ञा साम्नेत्यादावल्लोपः, दण्डी वाग्मीत्यादौ 'इन् हन्नि'ति नियमः, सुपयाः सुस्रोता इत्यादौ 'अत्वसन्तस्ये'ति दीर्घः, सुशर्मा सुप्रथिमेत्यादौ 'मन'इति ङीप्निषेधश्च सिद्धः ।

---

पकम्, अन्यथानर्थकत्वात् कार्म इत्यत्र प्रकृतिभावाप्राप्त्या 'नस्तद्धित' इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । राज्ञेत्यत्रान् अर्थवान्, उणादीनामव्युत्पन्नत्वे सुजम्भन इत्यनिजन्तेऽर्थवदुदाहरणम्बोध्यम् । अथवा अन्धातोः क्विप्यान्शब्दादपत्येऽणि आन इत्यादावेवानिति प्रकृतिभावः स्यान्नत्वनर्थक इति बोध्यम् । दण्डीत्यत्रेन् अर्थवान्, वाग्मीत्यत्रानर्थकः । सुपया इत्यत्रास् अर्थवान् । अव्युत्पत्तिपक्षे प्रजामाचष्टे इत्यर्थे णिचि टिलोपे क्विपि णिलोपे च तन्दन्तबहुव्रीहावसिचि सुप्रजा इत्युदाहर्तव्यम् । सुश्रोता इत्यत्र श्रुधातोरसिप्रत्ययः, तस्य तुडागमेनागमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वेनास् अनर्थकः । ननु यदागमन्यायेनासूपदेनागमसहितस्यासो ग्रहणेन तस्य चार्थवत्त्वेनानर्थकोदाहरणमयुक्तम्; न च निर्दिश्यमानस्यासो ग्रहणेन तस्यानर्थकत्वमेवेति वाच्यम्, असपदोत्तरषष्ठ्यभावेन तस्या अनुपस्थानात् निर्दिश्यमानपरिभाषया अर्थवदसन्तावयवासपदीयनिर्दिश्यमानावयवस्योपधाभूतस्य दीर्घ इत्यर्थस्यैव सत्त्वेन निर्दिश्यमाने अर्थवत्त्वस्यानन्वयाच्च; न च 'उणादीन्यव्युत्पन्नानी'तिदृष्ट्या श्रोतसित्यस्यैवार्थवत्त्वेनासोऽनर्थकत्वमिति वाच्यम्, तथा सति सुपया इत्यत्राप्यनर्थकस्यैवासस्सत्त्वेनार्थवदुदाहरणदानासङ्गत्यापत्तेः, इति चेत्—न, श्रुधातोर्विचि गुणे श्रो इति तस्मात्पञ्चम्यन्तात्तसि प्रत्यये श्रोतसिति तदनुकरणस्य सुशब्देन बहुव्रीहौ सुश्रोता इत्यत्रासोऽनर्थकत्वमित्याशयात् । सुशर्मेति । अत्र मन्नर्थवान् ।

अन्ये तु परिवेविपीध्वमित्यत्र ढत्वव्यावृत्तये क्रियमाणात् 'इणः षीध्वमि'त्यत्राङ्गग्रहणादर्थवत्परिभाषाऽनित्या, तन्मूलक-मिदमित्याहुः ।

'विभाषेट' इत्यत्रानर्थकस्यैव षीध्वमः सम्भवादत्रापि

---

सुप्रथिमेति । अत्रेमनिच्प्रत्ययावयवस्य मनोऽनर्थकत्वम्बो-ध्यम्, शोभनः प्रथिमाऽस्या इत्यर्थे अनित्यनर्थकस्य ग्रहणाद् 'अनो बहुव्रीहे'रित्येव सिद्धे अनर्थकस्य मनोग्रहणे नैतदुदाहरणं युक्तम्; न सुप्रथिमाऽसुप्रथिमेति बहुव्रीह्युत्तरपदकनञ्तत्पुरुषे उदाहरण-मिति परे । 'अनो बहुव्रीहे'रित्यत्र बहुव्रीहिपदेन प्रातिपादिक-स्य विशेषणात् तदन्तविधिना तत्रापि सिद्धौ प्रथिमानमतिक्रान्ता अतिप्रथिमेत्युदाहरणमुचितमित्यपरे । केचित्तु सुप्रथिमेत्यादौ 'अनो बहुव्रीहे'रित्यस्य सुराज्ञीत्यत्रेव बाधेन पक्षे 'अन उपधालो-पिन'इतिङीबापत्तिः, अनर्थकस्य मनोग्रहणे तु मन इत्यनेन बाध्यसामान्यचिन्तया तस्यापि बाध इत्यनर्थकस्य मनोग्रहणे फलं सम्यगेवेत्याहुः । वस्तुतः सुगरिम्णीतनूममुकनाम्नीमितिप्रयोगद-र्शनात् 'मन' इत्यस्यापि 'अन उपधे'त्येव बाधकमित्यतिप्रथिमे-त्येव युक्तमित्यस्माकमाकर्त्तौ । सुगता प्रथिमानं सुप्रथिमेति नवीनाः ।

परिवेविषीध्वमिति — परिपूर्वकाज्जौहोत्यादिकाद्विष्धातोर्वि-धिलिङि सीयुडागमे सकारलोपे द्वित्वेऽभ्यासगुणे परिवेविषीध्व-मिति साधुः । अस्धातोर्विधिलिङि कर्मव्यतिहारे आत्मनेपदे व्यतिषीध्वमित्यत्रार्थवतः षीध्वमः सम्भवेन तत्र मूर्धन्यवारणाया-ङ्गग्रहणस्य चारितार्थ्यात् ज्ञापकासङ्गतिरिति तु न वाच्यम्, तत्र 'उपसर्गप्रादुर्भ्यामि'तिविहितषत्वस्यासिद्धत्वेन षीध्वमोऽभावेना-ङ्गग्रहणस्य चारितार्थ्याभावात् आगमसमभिव्याहारे तद्विशिष्टस्यै-वार्थवत्त्वेनेटः परस्य षीध्वमोऽर्थवत्त्वासम्भवात्तत्रार्थवत्परिभाषा-

तस्यैव ग्रहणमिति भ्रमवारणायाङ्गादिति परे ॥ १६ ॥

ननु 'उश्चे'त्यत्र 'लिङ्सिचा'वित्यत आत्मनेपदेष्वित्येव सम्बध्येतानन्तरत्वादत आह—

एकयोगनिर्दिष्टानां सह वा प्रवृत्तिःसह वा निवृत्तिः॥ १७॥

वाशब्द एवार्थे । परस्परान्वितार्थकपदानां सहैवानुवृत्तिनिवृत्ती इत्यर्थः; एककार्यनियुक्तानां बहूनां लोके तथैव दर्शनादिति भावः।

यत्त्वत्र ज्ञापकं 'नेड्वशि' इत्यत इडित्यनुवर्त्तमान 'आर्द्धधातुकस्येट्' इत्यत्र पुनरिड्ग्रहणं तद्धि नेत्यस्यासम्बन्धार्थमिति—तन्न, 'दीधीवेवीटामि'तिसूत्रे भाष्ये तत्रत्येड्ग्रहणप्रत्याख्यानायेड्ग्रहणेऽनुवर्त्तमाने पुनरिड्ग्रहणस्येटो गुणरूपविकाराभावार्थकत्वस्योक्तत्वेन तद्विरोधात् । नञो निवृत्तिस्तु

---

बाधेऽप्यत्र बाधे मानाभावादङ्गग्रहणं ज्ञापकमेवेति दिक् ॥ १६ ॥

एकयोगनिर्दिष्टानामिति—एकस्मिन् योगस्सम्बन्धस्तेन निर्दिष्टानामेकान्वितानामित्यर्थः । यथा कित्त्वे अन्वितानां लिङ्सिजात्मनेपदानामितिबोध्यम् । एतदेवाह—परस्परान्वितार्थकपदानामिति—स्वप्रयोज्यविषयतया साक्षात्परम्परया वा निरूपिता या विषयता तत्प्रयोजकानामित्यर्थः । योगपदं कार्यपरमिति केनचिदुक्तं न युक्तं, योगशब्दस्य कार्यपरतायाः क्वाप्यदृष्टत्वादनन्वयाच्च, एकत्रार्थे योगस्सम्बन्ध इतिमूलेन विरोधाच्च । एतेषामेव क्वचित्सहानुवृत्तिनिवृत्ती क्वचिदेकदेशानुवृत्तिरिति परिभाषाद्वयेनोच्यते । द्विवचननिर्देशस्तु बहुवचनस्याविवक्षाबोधनार्थः । परस्परान्वितार्थकं क्वचित्पदत्रयं, क्वचित्पदद्वयं सर्वं ग्राह्यमिति तात्पर्यम् ।

'क्वचिदेकदेशोऽप्यनुवर्त्तत'इतिन्यायेन सिद्धा ।

वस्तुतस्तु—'दीधीवेवीटामि'तिसूत्रस्थभाष्यमेकदेश्युक्तिः, 'आर्द्धधातुकस्ये'तिसूत्रस्थेड्ग्रहणस्य 'नेड्वशी'तिसत्रे भाष्ये प्रत्याख्यानात् तत्करणेन गुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात् ॥ १७ ॥

नन्वलुगधिकारः प्रागानङ उत्तरपदाधिकारः प्रागङ्गाधिकारादित्यनुपपन्नमेकयोगनिर्दिष्टत्वात्; तथा 'दामहायनान्ताच्चे'त्यादौ 'सङ्ख्याव्ययादेः' इत्यतः सङ्ख्यादेरित्यनुवर्त्ततेऽव्ययादेरिति निवृत्तमिति चानुपपन्नमत आह—

एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्त्तते ॥ १८ ॥

एकत्रार्थे योगः सम्बन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थ इति 'पक्षात्ति'रितिसूत्रे कैयटः । ताव-

---

तद्विरोधादिति । इदमुपलक्षणं सूत्रारम्भसामर्थ्यान्नञो निवृत्तौ ज्ञापितायां स्वांशे चरितार्थ्याभावादित्यपि बोध्यम् ।

ज्ञापकजिज्ञासायां तु 'ईदूदेद्द्विवचनं प्रगृह्यमि'त्यत ईदूदित्येतन्मात्रानुवृत्त्यैव सिद्धावेकारानुवृत्त्यर्थं क्रियमाणम् 'अदसो मादि'त्यत्र मादूग्रहणमेव; ज्ञापितायान्त्वाद्यायामेकारानुवृत्तिनिरासाय चरितार्थम् । 'लिङ्सिचा'वित्यतः सिज्ग्रहणानुवृत्त्यैव सिद्धौ 'हनः सिच' इत्यत्रत्यं सिज्ग्रहणञ्च ज्ञापकम् । 'दामहायनान्ताच्चे'त्यत्र "संख्यादेरिति वक्तव्य'मितिवार्तिकप्रत्याख्यानमेकदेशस्यापि 'संख्याव्ययादेर्ङीपि'त्यतः संख्यादेरित्यस्यानुवृत्त्या कृतम् ; अन्त्याया अभावे अव्ययस्याननुवृत्तये संख्यादेरित्यस्याप्यननुवृत्तेः प्रत्याख्यानासङ्गतिः स्पष्टैवेति बोध्यम् ।

न्मात्रांशे स्वरितत्वप्रतिज्ञाबलाल्लभ्यमिदम् । स्पष्टा चेयं 'दामहायनान्ताच्चे'तिसूत्रे 'औतोऽम्शसो'रितिसूत्रे च भाष्ये पूर्वा च ॥१८॥

ननु 'त्यदादीनाम'इत्यादिनेमामित्यादावनुनासिकः स्यादत आह—

भाव्यमानेन सवर्णानां ग्रहणं न ॥ १९ ॥

'अणुदित्'सूत्रेऽप्रत्यय इत्यनेन सामर्थ्यात्सूत्रेण प्राप्तं

---

कैयट इति । अनेनारुचिस्सूचिता; 'अलुगुत्तरपदे' इत्यवतरणभाष्यविरोधात् 'औतोम्शसो'रित्यत्राचिनवमित्यत्रात्वाप्रवृत्त्यर्थं 'वा सुपी'त्यतो वेति निवृत्तं सुपीत्यनुवर्त्तत इति भाष्यविरोधाच्च उभयत्र समासस्याभावात् ॥ १७ ॥ १८ ॥

इमावित्यादौ 'त्यदादीनाम' इत्यनेनानुनासिकाकारस्य विधानेऽपि ऐचोऽनुनासिकस्याभावेन शुद्धस्यैवौकारस्य 'वृद्धिरेची'त्यनेन विधानात् इमे इत्यत्र परस्येकारस्य द्विमात्रत्वेन तत्सदृशगुणकस्यैव विधानेन दोषाभावेन द्विवचनाद्यपेक्षयैकवचनस्य प्राथम्याच्च द्वितीयैकवचनान्तमवतरणम् । भाव्यमानेन सवर्णानां ग्रहणन्नेति । कर्त्तरि तृतीया, ग्रहणमिति भावे प्रत्ययः । ननु भाव्यमानं विधेयभूतं लक्ष्यस्थं तेन सवर्णग्रहणं न प्रसक्तं, सूत्रे एवाणुदित्सूत्रप्रवृत्तेर्लक्ष्ये सवर्णग्राहकताया अनुपयोगाच्च तत्र निषेधो व्यर्थ इति चेत्—न, बोध्यबोधकयोरभेदेन भाव्यमानपदेन विधेयताप्रयोजकपदस्यैव ग्रहणात् । किञ्च पदे सवर्णग्राहकतायां बोधकत्वसम्बन्धेनाणूहेतुरण्बोधकं हि पदं सवर्णग्राहकमित्यणा बोधकत्वसम्बन्धेन पदे सता हेतुना पदेन सवर्णग्रहणम्भवति । भाव्यमानेन विधेयभूतेन तेन हेतुना सवर्णानां ग्रहणन्न भवतीति परिभाषार्थः । तथा च हेतावेषा तृतीया विधेयबोधकमेव भाव्यमानपदमिति बोध्यम् । अप्रत्यय इत्यनेनेति । अस्य बोध्यत इत्यने-

जातिपक्षेण प्राप्तं गुणाभेदकत्वेन च प्राप्तं नेत्यर्थः । अतएवा-णुदित्सूत्रे प्रत्ययादेशागमेषु सवर्णग्रहणाभावं प्रकारान्तरेणो-क्त्वा 'एवं तर्हि सिद्धे यदप्रत्यय इति प्रतिषेधं शास्ति, तज्ज्ञा-पयति भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं ने'ति।

किञ्च ज्याद ईयस इत्येवान्तर्यतो दीर्घे सिद्धे ज्यादादिति

---

नान्वयः। नेत्यर्थ इति। अस्य बोध्यत इति शेषः। अयम्भावः— 'अणुदित्सवर्णस्य चाप्रत्यय' इत्यत्राप्रत्यय इति पृथक् योगः, प्रत्ययः सवर्णग्राहको नेत्यर्थः; यदि चायं सूत्रप्राप्तस्यैव निषेधस्तदा योग-विभागो व्यर्थस्तत्सामर्थ्यात प्रदर्शितप्रकारत्रयेण प्राप्तं वार्यते, परन्तु तावतापि व्यर्थमेव 'इहल्यघो'रित्यनेन ह्रस्वेकारकरणेनैव ग्राहकसू-त्रबलेन दीर्घे सिद्धे ईकारकरणात् 'ज्यादादीयस' इत्यत्र अदादेशेनैव ग्राहकशास्त्रबलेन दीर्घे सिद्धे दीर्घोच्चारणाच्चादेशे, इड्विधानेनैवा-णुदित्सूत्रबलेन दीर्घस्यापि विधिसिद्धौ 'वृतो वे'तिसूत्रारम्भसा-मर्थ्यादागमे, अनभिधानात्प्रत्यये, सवर्णग्रहणे सिद्धे अप्रत्यय-ग्रहणं व्यर्थमेवेतिसामर्थ्यादनेनैवाप्रत्ययग्रहणेनैकदेशानुमत्येयं परिभाषा ज्ञाप्यते; भाव्यमानस्य प्रत्ययागमादेशरूपांशत्रयात्म-कत्वादिति भावः। ननु नेदमप्रत्ययग्रहणमुक्तपरिभाषाज्ञापकमपि तु प्रतीयते विधीयत इति व्युत्पत्त्या प्रत्ययपदस्य वाच्यार्थ एव परिभाषार्थः, अथवा प्रत्ययस्यैवाग्राहकत्वन्नागमादीनामित्येत्र सामर्थ्यात् कुतो न कल्प्यत इत्यत आह— अतएवाणुदित्सूत्र इति। प्रकारान्तरेणेति—उक्तप्रकारेणेत्यर्थः। ज्ञापयतीति—एकदेशा-नुमत्या बोधयतीत्यर्थः। वाच्यार्थत्वे नैवं वदेदिति भावः। नेती-ति। भाष्ये उक्तमिति शेषः। अत्रैवाणुदित्सूत्र इत्यस्यान्वयः।

उक्तभाष्यस्य वाच्यार्थपरतयापि कथञ्चिज्ज्ञापनाग्रहे आह— किञ्चेति। इदं भाष्यं परिभाषार्थस्याप्रत्ययपदवाच्यत्वे विरुद्ध्येतेति.

दीर्घोच्चारणमस्या ज्ञापकम् । अणुदित्सूत्रे च भाष्ये स्पष्टैषा । 'चोःकु'रित्यादौ भाव्यमानेनापि सवर्णग्रहणम्, विधेये उकारोच्चारणसामर्थ्यात् । एतन्मूलकमेव भाव्यमानोऽण् सवर्णान्न गृह्णातीति नव्याः पठन्ति ॥ १९ ॥

---

भावः । तेन च प्रत्ययसंज्ञक एवार्थ इति सिद्धम् । ज्ञापितायामप्यस्यां कथं दीर्घोच्चारणं स्वांशे चरितार्थं, ह्रस्वाकारविधानेऽपि सवर्णदीर्घेण रूपसिद्धेः, न च पररूपं बाधकम्भविष्यतीति वाच्यम्, लोपग्रहणमनुवर्त्यैकारस्य लोपविधानेनैव सिद्धेऽकारविधानसामर्थ्येन पररूपस्याप्रवृत्त्या दीर्घसिद्धेः, इति चेत्—न, लोपे 'अकृत्सार्वधातुकयो'रितिदीर्घापत्त्याकारविधानस्य पररूपे सत्यपि व्यर्थत्वाभावात् । न च 'अङ्गकार्य'इतिपरिभाषया 'अकृदि'तिदीर्घाभाव इति वाच्यं, तस्या भाष्ये लक्ष्यसंस्काराय क्वाप्यनाश्रयणात् । ननु धृष्णुयेत्यत्र दीर्घवारणाय 'अकृदि'त्यत्र क्ङितीत्यस्यानुवृत्तेरावश्यकतया लोपे दीर्घाभाव इति चेत, अत्रोच्यते—अकारविधानसामर्थ्येन पररूपन्नेति कल्प्येत आहोस्विदविकृताकार एव श्रूयते इति वा कल्प्येतेत्यत्र विनिगमकाभावेनाकारविधानस्यावश्यकत्वात् । किञ्चाकारविधित्सया दीर्घोच्चारणं पाणिनिना कृतम्, तदनुपपन्नम्; ह्रस्वकरणेनापि ग्राहकसूत्रबलेनाऽकारविधिसम्भवेन दीर्घोच्चारणजनकप्रयत्नस्यानुपयोगात् । तस्मात्परिभाषाज्ञापने ह्रस्वकरणेन दीर्घविधानस्याशक्यत्वात्तदर्थं दीर्घोच्चारणमावश्यकमिति नानुपपन्नं दीर्घोच्चारणम् । एतदेव स्वांशे चारितार्थ्यं नाम येनानुपपन्नेन किञ्चिज्ज्ञाप्यं तेन ज्ञापितेन सानुपपत्तिरवश्यं परिहरणीयेति । अकारविधानमेवास्तु दीर्घेण रूपसिद्धिर्भविष्यतीदन्त्वन्यत् । तस्यैव किं समाधानमिति चेत्—पूर्वोक्तमेव गृहाणेत्यलम् ।

ननु कोऽयं परिभाषार्थः ? न तावत् विधेयताप्रयोजकं पदं स्वसवर्णग्राहकन्नेत्यर्थः, 'त्यदादीनाम'इत्यत्र विधेयताप्रयोजक- मेतिपदं तत्स्वसवर्णस्य शुद्धह्रस्वाकारस्यापि दीर्घानुनासिकयोरिव ग्राहकन्न स्यादिति तत्सूत्रस्यैव वैयर्थ्यापत्तिः; यदि च स्वबोध्य- सवर्णग्राहकन्नेत्यर्थः, तथापि स एव दोषः; स्वबोध्यो ह्रस्वोऽकार- स्तत्सवर्णस्स एव ; यदि च स्वबोध्यविशिष्टग्राहकन्नेत्यर्थः, वैशि- ष्ट्यञ्च स्वभिन्नत्व-स्वसवर्णत्वोभयसम्बन्धेन, स्वस्मिन् स्वभिन्न- त्वाभावान्न दोष इत्युच्यते, तथापि जातिपक्षे स्वबोध्यो दीर्घोऽपि सानुनासिकोऽपि तद्विशिष्टत्वमुक्तसम्बन्धाभ्यां शुद्धह्रस्वाकारे तस्याग्रहणस्यापरिहार एव; एवं स्वबोध्य एको ह्रस्वोऽकारस्तद्वै- शिष्ट्यमपरस्मिन् तादृशेऽकारे तस्याग्रहणापत्तौ स इत्यत्र स्यात्, एष इत्यत्र न स्यात्; अत्रोच्यते—विधेयताप्रयोजकं पदं स्ववि- शिष्टग्राहकन्नेत्यर्थः, वैशिष्ट्यं स्वसवर्णत्व-स्वावृत्तिधर्मवत्त्वोभय- सम्बन्धेन । 'त्यदादीनाम' इत्यत्र स्वमेति तद्विशिष्टस्सानुनासिको दीर्घश्च तत्र स्वसवर्णत्वस्य, स्वावृत्तिधर्मोऽनुनासिकत्वं दीर्घत्वञ्च तस्य च सत्त्वात्तयोर्ग्रहणाभावः । शुद्धह्रस्वाकारे च स्वावृत्तिधर्म- वत्त्वस्याभावान्न दोषः । नन्वेवं तत्पुरुषीयत्व-तत्कालिकत्वादयः स्वावृत्तयो धर्मास्तद्वत्त्वस्य तत्रापि सत्त्वात् स दोषो दुरुद्धर इति चेत्—न, श्रावणप्रत्यक्षविषयतावच्छेदकस्यैव धर्मस्य ग्रहणेन तेषां धर्माणामतादृशत्वेन दोषाभावात् । न च तद्व्यक्तित्वन्तथा- विधं तदादाय दोषानिस्तार इति वाच्यं, तदतिरिक्तत्वेनापि धर्मस्य विशेषणात् । न चाननुगम इति वाच्यं, भेदविशिष्टान्यत्वेनानु- गमसम्भवात; वैशिष्ट्यं स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्यो- भयसम्बन्धेन बोध्यम् । न चैवमपि स्वावृत्तयो धर्माः तादृशा उदा- त्तत्वस्वरितत्वादयः तद्वतामपि ग्रहणन्न स्यात्, तथा च वृक्षेभ्य इत्यादावुदात्तानुदात्तयोः स्थान्यन्तरतमयोर्विधानन्न स्यात्, इष्यते तु गुणानामभेदकतया सर्वेषामुदात्तादीनामेकाराणां विधानमिति

नन्वेवम् 'अदसोऽसे'रित्यादिनाऽमू इत्यादौ दीर्घविधानं न स्यादत आह—

भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ॥ २० ॥

---

वाच्यं; स्वरत्वव्याप्यधर्मेतरत्वस्यापि निवेशनीयत्वात्।

अथवा स्थानप्रयत्नजन्यतावच्छेदकस्यैव धर्मस्य निवेशः; तत्पुरुषीयत्वतद्व्यक्तित्वादयश्च न तथेति न तादृशधर्ममादाय दोषः। स्वरत्वव्याप्यधर्मेतरत्वमत्रापि देयमेव, तेषामपि तादृशजन्यतावच्छेदकत्वात्। न चैवमपीकोयणचीत्यादौ दोष एव, तत्र विधेयताप्रयोजकं यण्पदं तत्सवर्णाप्रसिद्ध्या विशिष्टस्याप्रसिद्धत्वेन परिभाषाया अप्रवृत्त्या सानुनासिकयोर्यकारवकारयोरपि विधानापत्तेः; न च स्वबोध्यविशिष्टनिवेशाददोष इति वाच्यम्, 'त्यदादीनाम' इत्यत्र जातिपक्षे स्वबोध्यो दीर्घस्तद्विशिष्टो ह्रस्वस्तस्याग्रहणापत्तेः, इति वाच्यम्, यतः स्वतादात्म्यस्वनिष्ठशक्तिनिरूपकतावच्छेदकसमुदायाघटकत्वैतदन्यतरसम्बन्धेन स्वविशिष्टो यस्तद्विशिष्टस्य ग्राहकं विधेयताप्रयोजकं पदन्न भवतीत्यर्थः। अन्त्ये वैशिष्ट्यं पूर्ववदेव बोध्यम्। तादात्म्यनिवेशात् 'त्यदादीनाम' इत्यादौ न दोषः, द्वितीयसम्बन्धनिवेशादिकोयणचीत्यादौ न दोषः, अग्रिमवैशिष्ट्यनिवेशफलन्तु पूर्वमुक्तमेवेति सुधियो विभावयन्तु ॥ १९ ॥

नन्वेवमिति—भाव्यमानस्य सवर्णाग्राहकत्वे इत्यर्थः। ननु उश्च ऊश्चेति ह्रस्वदीर्घयोस्समाहारद्वन्द्वेन तत्रोभयोर्विधानसिद्धिः, अतएव कौमुद्यामुक्तं ह्रस्वदीर्घयोस्समाहारद्वन्द्व इति चेत्—न, उश्चऊश्चेतिसमाहारद्वन्द्वे घित्वात् ह्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वत्वदीर्घत्वयोः प्राप्तावपरनिमित्तकत्वेनान्तरङ्गत्वात् ह्रस्वे पश्चात् सवर्णदीर्घे लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाप्रवृत्तौ दीर्घस्यैव

'दिव उत्' 'ऋत उत्' इति तपरकरणमस्या ज्ञापकम्। तित्स्वरितम्'इतिसूत्रे भाष्ये स्पष्टैषा ॥ २० ॥

श्रवणापत्तेः।

दिव उदिति—तपरकरणं हि दीर्घव्यावृत्त्यर्थम्, एतत्परिभाषाया असत्त्वे तु दीर्घस्य पूर्वपरिभाषयाऽविधानसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। न च ज्ञापितेऽपि स्वांशे चारितार्थ्याभावः, सवर्णग्राहकत्वेऽपि वकारस्य स्थानिनो द्विमात्रन्यूनकालिकत्वेनान्तरतम्याद्ध्रस्वस्यैव प्रवृत्तेः ननु 'च्छ्वोश्शूडि'तिसूत्रे क्ङितीत्यस्याननुवृत्तेः द्युभ्यामित्यादौ परत्वात् पूर्वमूठि आन्तरतम्यात् 'दिव उदि'त्यनेन प्राप्तस्य दीर्घस्य वारणार्थं, दिवुधातोः क्विपि ऊठि भ्यामि द्युभ्यामित्यादौ ह्रस्वार्थञ्च तपरत्वं चरितार्थमिति चेत्—न, प्रतिपद्विधित्वेन पूर्वं 'दिव उदि'त्यस्यैव प्रवृत्तेः; 'निरनुबन्धकग्रहणे न सानुबन्धकस्ये'तिपरिभाषया दिवुधातोः क्विप्यप्रवृत्तेश्चेति वाच्यं, दिवमिच्छतीत्यर्थे क्यजन्तात् क्विप्यल्लोपयलोपयोरूठि भ्यामि द्युभ्यामित्यादौ ह्रस्वार्थन्तस्यावश्यकत्वात्। न चोठि अल्लोपस्य स्थानिवत्त्वं, क्वौ विधिं प्रतीतिनिषेधात्। न चोत्वे तस्य स्थानिवत्त्वेनापदान्तत्वादुत्वाभावः, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य कार्याभावात्। कार्यं हि उकारस्य, स च न स्थानिभूतादचः पूर्वत्वेन दृष्टः। स्थानिवत्सूत्रेण तु तथा दृष्टत्वमलभ्यम्, शास्त्रीयत्वात्पूर्वत्वादिघटितस्यातिदेशाभावाच्च। ऋत उदिति—न च तपरत्वं सूत्रान्तरप्राप्तदीर्घस्याप्यभावार्थम, अतएव पितूराज्यमित्यादौ दीर्घासाधुत्वमिति वाच्यम्, 'उरण् रपर'इतिसूत्रस्थे ऊरपरइतिभाष्यप्रयोगे 'सवितूरत्नयो यथे'तिरामायणप्रयोगे च दीर्घदर्शनात् अक्षरमर्यादयाऽलाभाच्च सूत्रान्तरप्राप्तस्य तस्येष्टत्वात्।

अत्र केचित्—इयं परिभाषा सूत्रकारानभिप्रेता ह्रस्वोकारकरणेनाप्यान्तरतम्याद्दीर्घे सिद्धे 'ऊदुपधाया गोह' इत्यत्र ऊदिति-

ननु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेनाबाधा-

दीर्घोच्चारणस्य सूत्रकृतो वैयर्थ्यापत्तेः; भाष्यकारानभिप्रेता च, कथमन्यथा उङ्ऊदिति प्रश्लिष्य गोह इति विकृतनिर्देशः प्रत्याख्यातः, ह्रस्वोकारकरणेनापि परिभाषाबलेन दीर्घसिद्ध्या विकृतनिर्देशस्य प्रत्याख्यानसम्भवेन प्रश्लेषासङ्गत्यापत्तेः, इत्याहुः—तन्न, 'दोषो णा'वित्यत्र दुषो णावित्यस्यैव सुवचत्वेन तत्र दीर्घविधानार्थत्वात्। न च ह्रस्वोकारानुवृत्तावपि परिभाषया दीर्घसिद्धिः, तक्रन्यायेन गुणं बाधित्वाऽऽन्तरतम्याद्ध्रस्वस्यैव विधानापत्तेः। न च ह्रस्वस्य ह्रस्वविधानं व्यर्थं, गुणबाधनार्थत्वात्। न वा भाष्यविरोधः, विकृतनिर्देशाभावे ह्रस्वोकारकरणे तक्रन्यायेन गुणं बाधित्वा जुगूहेत्यादावान्तरतम्याद्ध्रस्वविधानापत्तेः। दीर्घप्रश्लेषे तु तत्सामर्थ्यात्तक्रन्यायाप्रवृत्त्या पूर्वं गुणे आन्तरतम्याद्दीर्घसिद्धिर्भवतीति प्रश्लेषस्सार्थकः। न च ह्रस्वकरणे ह्रस्वस्यैव विधाने 'नाभ्यस्तस्याची'त्यस्याग्रे गुहश्चेतिकरणेन गुह उपधाया गुणो नेत्यर्थेन गुणाभावोपपत्तौ ह्रस्वविधानसामर्थ्यात् तक्रन्यायबाधेन गुणे कृते आन्तरतम्याद्ध्रस्वकरणेऽपि दीर्घविधानसिद्धौ दीर्घप्रश्लेषासङ्गतिस्तदवस्थैवेति वाच्यम्, गुह्धातोर्णिजन्ताल्लुङि अजूगुहदित्यादावुपधागुणेऽनेन प्रतिपदोक्तत्वाद्ध्रस्वात्पूर्वं दीर्घोकारविधानसामर्थ्यात्, 'णौ चङ्युपधाया ह्रस्व'इतिह्रस्ववारणेन दीर्घप्रश्लेषस्य सार्थक्यात्।'

वस्तुतस्तु—नैतत्परिभाषायाः फलम्। न चामू इत्यत्र दीर्घविधानं फलम्, 'अदसोऽसे'रितिसूत्रे ह्रस्वदीर्घयोस्समाहारद्वन्द्वेनापि तत्सिद्धेः। न च निर्देशासङ्गतिः, सूत्रत्वाद्दीर्घे कृते ह्रस्वप्रवृत्तिरितिकल्पनया निर्देशोपपत्तेरित्ति दिक्॥ २०॥

ननु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेनेति। ननु 'न लुमताङ्गस्ये'त्यनेन लुमच्छब्देन लुमत्प्रत्ययनिमित्तकं कार्यमङ्गस्य

नेत्यर्थकेनात्रप्रत्ययलक्षणाभावान्न दोष इत्यवतरणासङ्गतिः; न चाङ्गत्वावच्छिन्नोद्देश्यताककार्यस्यैव तेन निषेधात्प्रकृते न दोषः अवादेशस्याङ्गत्वावच्छिन्नोद्देश्यताकत्वाभावादिति वाच्यम्, फलाभावेन तादृशनिवेशस्याभावात्; न चावादेशीयोद्देश्यताया अङ्गपर्याप्तत्वाभावादङ्गपर्याप्तोद्देश्यताककार्यस्यैव तेन निषेधः, अतएवोत्क्रामेत्यादौ हेर्लुकि प्रत्ययलक्षणेन परस्मैपदपरकशित्परकक्रमेश्चो दीर्घः, अन्यथाऽपर्याप्त्या तत्राप्यच्त्वावच्छिन्नोद्देश्यताया अङ्गवृत्तित्वेन निषेधापत्तिरिति वाच्यम्, शब्दानित्यत्ववारणायाजव्यवहितपूर्वत्वविशिष्टस्यैज्घटितस्योच्चारणप्रसङ्गेऽयादिघटितस्साधुरित्यर्थस्यावश्यकत्वेन एज्घटितगोशब्दरूपेऽङ्गे एवोद्देश्यतायाः पर्याप्तत्वात्, इति चेत्, अत्रोच्यते—शब्दानित्यत्ववारणायैवमर्थकरणे केशवोऽत्रेत्यादावप्यजव्यवहितपूर्वस्यैज्घटितस्य केशवशब्दस्यापि प्रसङ्गेऽय्घटितस्य तस्य साधुत्वापत्त्याऽजव्यवहितपूर्वो य एच् तद्घटितस्योच्चारणप्रसङ्गे अयादिघटितस्साधुरित्येवार्थः कर्तव्यः, तथाचैचोऽजव्यवहितपूर्वत्वाभावेन न दोषः। 'न लुमताङ्गस्ये'त्यनेन च लुमता लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नाङ्गपर्याप्तोद्देश्यताककार्यस्यैव निषेधः। पूर्वोक्तार्थे तु दधि-मध्वित्यादावपि 'सुप्तिङन्तं पदमि'तिपदसंज्ञाया निषेधापत्तिः, तस्या अपि लुप्तप्रत्ययनिमित्तकत्वाङ्गपर्याप्तोद्देश्यताकत्वयोः सत्त्वात्। तथा चाङ्गपर्याप्तोद्देश्यताया एज्घटितनिष्ठाया लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नत्वाभावात् एज्निष्ठायास्तस्याश्चाङ्गपर्याप्तत्वाभावात्प्रकृते न प्रत्ययलक्षणनिषेध इत्यवतरणं सम्यगेव। न चैज्घटितनिष्ठाया अप्युद्देश्यतायाः परम्परया लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नत्वादवतरणासङ्गतिरेव साक्षादवच्छिन्नत्वनिवेशे फलाभावादिति वाच्यम्, उत्क्रामेत्यादौ क्रमत्वावच्छिन्नाया अङ्गपर्याप्ताया लुप्तप्रत्ययपरस्मैपदाव्यवहितपूर्वत्वेनावच्छिन्नत्वेन निषेधापत्त्या साक्षादवच्छिन्नत्वनिवेशस्यावश्यकत्वात्। न च केशवोऽत्रेत्याद्यनु-

रोधेनाजव्यवहितपूर्वत्वविशिष्टस्यैजन्तस्योच्चारणप्रसङ्गेऽयाद्यन्तस्साधुरित्येवार्थः क्रियते, तथा चाङ्गपर्याप्ताया एजन्तत्वावच्छिन्नविषयताया लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्नत्वेनावतरणासङ्गतिरेवेति वाच्यम्, 'गोरग्वचनं स्वरसिद्ध्यर्थमि'ति वार्त्तिकरीत्या गवाग्रमित्यादौ गोशब्दस्यागागमे गो-अ इति स्थिते 'आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वमि'त्यनुसारेण गोशब्दस्यानर्थकत्वात्तस्यार्थबोधनाय प्रसङ्गस्यैवाभावेनावादेशानापत्तेः ; अजव्यवहितपूर्वत्वविशिष्टो य एच् तद्घटितस्येत्युक्तौ तु अच् अकारस्तदव्यवहितपूर्वत्वविशिष्ट एच् ओकारस्तद्घटितस्यार्थवतो गो-अइत्यस्योच्चारणप्रसङ्गेऽवघटितस्य गवेत्यस्य साधुत्वेनादोषात्। न चैवमपि 'जराया जरसन्यतरस्यामि'त्यस्य जराशब्दान्तं यदङ्गं तदवयवस्य जरापदीयनिर्दिश्यमानस्याजादिप्रत्ययाव्यवहितपूर्वस्य जरसित्यर्थेन निर्जरपुत्र इत्यादौ प्रत्ययलक्षणेन जरसादेशापत्तिः अङ्गपर्याप्तोद्देश्यताया लुप्तप्रत्ययाव्यवहितपूर्वत्वेनावच्छिन्नत्वाभावात् 'न लुमताङ्गस्ये'त्यस्याप्राप्तेरिति वाच्यम्, अङ्गपर्याप्तधर्मेण साक्षात् परम्परया वाऽवच्छिन्ना या लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्नोद्देश्यता तन्निरूपककार्यन्नेत्यर्थकरणेन निर्दिश्यमानत्वावच्छिन्नोद्देश्यता याऽस्ति तस्याः परम्परयाङ्गपर्याप्तधर्मेण साक्षाल्लुप्तप्रत्ययाव्यवहितपूर्वत्वेन चावच्छिन्नत्वात्तामादायैव निषेधप्रवृत्तेः। यदि चाङ्गवृत्तिर्या षष्ठ्यन्तपदप्रयोज्या विषयता लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना तन्निरूपकं कार्यन्नेत्यर्थः, उत्क्रामेत्यादौ च परस्मैपदेन साक्षादवच्छिन्नायास्सप्तम्यन्तांशितपदप्रयोज्यविषयतायाः षष्ठ्यन्तपदप्रयोज्यत्वाभावेन निषेधाप्रवृत्तिः, प्रकृते त्वेकपदप्रयोज्याया विषयतायाः षष्ठ्यन्तपदप्रयोज्यत्वस्य लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्नत्वस्य च सत्त्वेन निषेधादवतरणमसङ्गतमित्युच्यते—तदा चित्रायां जाता चित्रेत्यत्रावतरणं बोध्यम्।

ननु 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत'इतिन्यायेने-त्संज्ञालोपाभ्यां प्रागेव लुकि प्रत्ययलक्षणेन ञ्वृद्धिरेव स्यान्नतु एवृद्धिरित्यच्परत्वाभावेनावादेशाप्राप्तेरवतरणमसङ्गतमेव; ननु सूत्र एवेत्संज्ञालोपयोः कृतयोरनुबन्धविनिर्मुक्तस्यैव लक्ष्यस्थत्वेन लुकि प्रत्ययलक्षणेनाच्परत्वं सूपपादमिति चेत्—न, लुक्प्रयोज-कसमासादीनामपि तेन न्यायेन प्राबल्यबोधनादित्संज्ञालोपयो-र्लुक्प्रयोजकसमाससम्भावनायां पूर्वमप्रवृत्तेः, अतएव गोमत्प्रिय इत्यादौ पदान्तरसापेक्षसमासात्पूर्वमपि गोमत्प्रकृतिकसोर्हल्ङ्या-दिलोपो नेति चेत्—न, हे वारे इति भाष्यप्रयोगात्संज्ञापेक्षया लुकः प्राबल्याबोधनात्। कथमन्यथा सम्बुद्धिसंज्ञायां कृतायां लुकि प्रत्ययलक्षणेन सम्बुद्धिगुणस्तत्र। नन्वस्तूक्तभाष्यात् सम्बु-द्धिसंज्ञायाः पूर्वं प्रवृत्तिरित्संज्ञालोपयोः पूर्वं प्रवृत्तौ बीजाभाव इति चेत्—न, धर्मिग्राहकमानेन लाघवेन च साधुत्वविधायकशा-स्त्रापेक्षयैव लुकः प्राबल्यबोधनात्; संज्ञाशास्त्रेण 'तस्य लोप' इति शास्त्रेण वा न कस्यचित् साधुत्वम्बोध्यते इति स्पष्टमेव। नन्वेता-दृशविशेषविषयकत्वे फलाभाव इति चेत्— हे वार इत्यस्यैव फल-त्वसम्भवात्, सम्बुद्धिसंज्ञापेक्षया प्राबल्यं न बोध्यत इत्यपेक्षया साधुत्वविधायकापेक्षया प्राबल्यं बोध्यत इत्येतत्कल्पनायामेव लघुत्वात्। अतएव 'ञित्स्वरविधौ प्रत्ययलक्षणप्रतिषेधो वक्तव्यः' इति वार्त्तिकं चरितार्थम्। गर्गाविदा इत्यादौ यञो लुकि प्रत्यय-लक्षणेन ञित्स्वरप्राप्तौ तत्प्रतिषेधार्थं हि वार्त्तिकम्, इत्संज्ञातः पूर्वं लुकि स्वराप्राप्तौ तद्वैयर्थ्यापत्तेः। 'लुकि न स्थानिवदि'त्यप्यत-एव चरितार्थम्, तद्धि पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ 'द्विगोर्लुगनपत्य'इत्यणो लुकि 'लुक् तद्धितलुकी'त्यनेन ङीपो लुकि 'सन्नियोगशिष्टानामि'तिपरिभाषयाऽऽनुको निवृत्तौ कर्त्तव्यायां ङीपो लुकः स्थानिवद्भावेनान्यतरापायाभावादानुको निवृत्त्यभावे प्राप्ते स्थानिवत्त्वनिषेधार्थम्, लुकि लुप्तन्न स्थानिवदिति तदर्थः,

देशापत्तिरत आह—

वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥

वर्णप्राधान्यविषयमेतत् । तत्त्वञ्च 'प्रत्ययलोपे'इतिसूत्रे स्था-

---

इत्संज्ञालोपाभ्यामपि पूर्वं लुकि अज्मात्रस्थानिकादेशाभावात्स्था-निवत्त्वाप्राप्तौ तद्वैयर्थ्यापत्तिः । किञ्च 'प्रत्यय'इतिमहासंज्ञया बोधकस्यैव प्रत्ययत्वेन लोके ङकाररहितस्यैव ए-इत्यस्य बोध-कत्वेन प्रत्ययसंज्ञा स्यान्नतु ङे-इत्यस्य प्रत्ययादर्शनस्यैव च लुक्-पदार्थत्वेन प्रत्ययत्वसम्पादनद्वारेत्संज्ञालोपयोरुपजीव्यत्वेन लुका बाधाभाव इति दिक् । परन्तु गवे हितमितिवद् गोहितमित्या-दाववादेशापत्तिरित्यर्थः । गावौ हितौ यस्य तद्गोहितमिति-समास इति न कोऽपि दोष इत्याहुः ।

वर्णाश्रये नास्ति प्रत्ययलक्षणमिति—वर्ण आश्रयो निमित्त-र्य्यँस्येत्यर्थः । ननु यदि वर्णोद्देश्यककार्ये कर्त्तव्ये प्रत्ययलक्षणसूत्रन्न प्रवर्त्तते इत्यर्थः, तर्हि वेधा इत्यादौ 'ससजुषोरु'रितिरुत्वे कर्त्तव्ये प्रत्ययलक्षणेन पदत्वानापत्ती रुत्वस्य वर्णाश्रयत्वादिति चेत्—न, प्रत्यासत्त्या लुप्तप्रत्ययवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यताके कार्ये इत्यर्थात् । ननु तावतापि तत्रैव दोषः, सत्वस्य लुप्तप्रत्यय-वृत्तित्वादिति चेत्—न, लुप्तप्रत्ययवृत्तिर्या वर्णत्वव्याप्यधर्माव-च्छिन्ना विषयता तन्निरूपके कार्ये इत्यर्थेनादोषात्, प्रकृते तादृशविषयताया अभावात् । तत्त्वञ्चेति—परिभाषारूपञ्चेत्यर्थः, परन्त्वस्मिन्नर्थे त्वप्रत्ययोऽयुक्तः तच्चेत्येव वक्तुर्य्युँक्तम् ।

वस्तुतस्तु—तत्त्वञ्चेत्यस्य सारांशस्त्वित्यर्थः । अयम्भावः—यथान्यत्र किञ्चिज्ज्ञापकम्भवति ज्ञापनोत्तरं स्वांशे चारितार्थ्यं भवति तथा प्रकृते नास्ति, किन्तु तत्तत्पदमहिम्ना प्रत्ययलोपसूत्र-स्यैव तथार्थोऽस्ति येन वर्णाश्रये न प्रवृत्तिर्भवतीति; तल्लक्षणमि-

निवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्येतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थमित्येतत्सिद्धम् । वर्णप्राधान्यं च वर्णस्येतराविशेषणत्वरूपं, प्रत्ययनिरूपितविशे-

---

ष्येव सिद्धे प्रत्ययपदस्वारस्यात् प्रत्ययत्वव्याप्येति वक्ष्यमाणोऽर्थः; स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणात् प्रत्यये प्राधान्यलाभः, तेन वर्णस्य प्राधान्येनाश्रयणे प्रत्ययलक्षणाभाव इति फलति।

प्रत्ययस्येतराविशेषणत्वरूपमिति। ननु तद्यदि इतरनिष्ठविशेष्यतानिरूपितप्रकारत्वानाश्रयत्वरूपम् तदा गोहितमित्यादावेज्निष्ठविशेष्यतानिरूपितान्यवहितपूर्वत्वावच्छिन्नप्रकारताश्रयत्वेन लुप्तप्रत्ययस्य प्राधान्याभावात्प्रत्ययलक्षणाभावेऽपि हे दीर्घाहो निदाघेत्यादौ प्रत्ययलक्षणेनासुपीतिनिषेधानापत्त्या रुत्वेनोत्वानापत्तिः, लुप्तप्रत्ययस्योक्तप्राधान्याभावात्; दधि-मध्वित्यादौ प्रत्ययलक्षणेन 'सुप्तिङन्तमि'तिपदत्वानापत्तिश्च, सुपः प्राधान्याभावात; सखेत्यादावनङाद्यभावश्चेति चेत्—न, वर्णत्वव्याप्यधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतानाश्रयत्वस्य प्रत्ययप्राधान्यपदार्थत्वात्। तस्य च गोहितमित्यादौ चित्रायां जाता चित्रेत्यादौ चाभावान्न प्रत्ययलक्षणम्। न च, ह्रस्वस्य पिति कृती'ति तुक्-कृदित्यादौ न स्यात् प्रत्ययस्य प्राधान्याभावेन प्रत्ययलक्षणाप्रवृत्तेरिति वाच्यम, ह्रस्वान्त एव प्रत्ययस्यान्वयात्।

किञ्चावयवत्वसम्बन्धावच्छिन्नप्रकारताभिन्नप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताश्रयत्वं प्रत्ययप्राधान्यम्। अणो योऽकारस्तदन्तात्प्रातिपदिकान्ङीबित्यर्थात् चित्रायां जाता चित्रेत्यादौ तादृशप्रकारताभिन्नविषयता नास्ति। गोहितमित्यादावेकारनिष्ठविषयतायाः प्रत्ययत्वव्याप्यधर्मावच्छिन्नत्वाभाव इति प्रत्ययप्राधान्याभावः।

ष्यतारूपं च, तेन गोहितमित्यादावत्रादिर्न, चित्रायां जाता चित्रेत्यादावणो योऽकारस्तदन्तानुङीबिति ङीप्च न। इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्राप्तस्य प्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये ॥ २१ ॥

---

वर्णप्राधान्यञ्च वर्णस्येतराविशेषणत्वरूपमिति। यदीतरनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वं तर्हि गोहितमित्यादावेज्निष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वेन प्राधान्याभावान्निषेधानापत्तिः; यदीतरपदेन प्रत्ययस्य ग्रहणात् प्रत्ययत्वव्याप्यधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतानाश्रयत्वं तत्, तर्ह्यनेनैव चित्रेत्यादौ वर्णस्य प्राधान्यात् प्रत्ययनिरूपितविशेष्यतारूपञ्चेतिलक्षणान्तरस्य वैयर्थ्यम्, इति चेत्, अत्रोच्यते—इतरपदेनावयवी गृह्यते। ततश्चावयविनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वमितराविशेषणत्वमित्यस्यार्थः। तच्च गोहितमित्यादावस्ति। चित्रेत्यादौ चावयवि प्रातिपदिकन्तन्निष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वस्यैवाकारे सत्त्वेन प्राधान्यानापत्त्या प्रत्ययनिरूपितविशेष्यतारूपमुक्तम्। यदि प्रत्ययत्वव्याप्येत्यादिनिवेशेनैवोभयत्र प्राधान्यसिद्धौ प्रत्ययनिरूपितेत्यादिलक्षणान्तरं न वक्तव्यमित्युच्यते—तर्ह्यप्राप्तिः। मित्रशीः अतृणेडित्यादौ च वर्णप्राधान्याभावान्न प्रत्ययलक्षणनिषेधः।

भाष्यकारमते प्रत्ययलोपसूत्रन्नियमार्थमेव, स्थानिवत्सूत्रेण सर्वत्र निर्वाहात्। मित्रशीः-अतृणेडित्यादावीत्वादेर्हल्ादित्वनिमित्तकस्य विशेषणतयाऽल्विधित्वात्स्थानिवत्त्वेन यद्यपि न निर्वाहस्तथापि तत्रोपायान्तरस्य शब्दरत्ने उक्तत्वात्। तन्मते गोहितं चित्रेत्यादावनल्विधाविति निषेधेन स्थानिवद्भावाप्राप्तिरेव।

ननु नियमशास्त्राणां स्वमते विधिमुखेनैव प्रवृत्त्या गोहितमित्यादौ प्रत्ययलक्षणं दुर्वारमिति तदर्थं 'वर्णाश्रय' इति परिभाषा-

ननु 'अतः कृकमो'त्यत्र कमिग्रहणेन सिद्धे कंसग्रहणं व्यर्थमत आह—

---

वश्यकीति चेत्—न, तल्लक्षणमित्येवसिद्धे प्रत्ययग्रहणेन प्रत्ययत्व-व्याप्यधर्मस्य यत्राश्रयणं तत्रैवेदं सूत्रं प्रवर्तत इत्यर्थेन गोहितमित्यादौ प्रवृत्त्यभावात्। न च तथाप्यण्सम्बन्ध्यकारत्वस्य प्रत्ययत्व-व्याप्यत्वेन चित्रेत्यादौ प्रत्ययलक्षणप्राप्त्या परिभाषा मन्तव्येति वाच्यम्, एकपदेन प्रत्ययत्वव्याप्यस्य यत्राश्रयणमित्यर्थेन तस्यैक-पदोपात्तत्वाभावात्। तदाह—इयमल्विधौ स्थानिवत्त्वाप्राप्तावपीति। तथा च वार्त्तिकमते मित्रशीः अतृणेडित्यर्थं सूत्रस्यावश्यकत्वेन गोहितमित्यादावपि प्रत्ययलक्षणापत्त्या वर्णाश्रय इति मन्तव्येति भावः। मित्रशीरित्यादावुपायान्तरन्तु भाष्यकृदूहितन्न वार्त्तिककारोहितम्। ननु वार्त्तिकमतेऽपि प्रत्ययत्वव्याप्यधर्माश्रयमेव कार्यं प्रत्ययलोपे सति भवतीत्येवार्थस्सूत्रस्य कर्त्तव्यः, प्रत्ययलोपे तल्लक्षणमित्येवसिद्धे प्रत्ययग्रहणात्; तथा च मित्रशीरित्यादौ कथं प्रत्ययलक्षणमीत्वादौ प्रत्ययत्वव्याप्यस्यानाश्रयणात्; न च हलादि-ङ्कित्त्वादि तथा, तस्य तथात्वेऽपि एकपदोपात्तत्वाभावात्; इति चेत्—न, प्रत्ययत्वव्याप्यविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदक-धर्माश्रयं कार्यमेव प्रत्ययलोपे सति भवतीत्यर्थस्यैव तन्मते प्रत्यय-ग्रहणेन बोधनात्; तथा च तत्र हलादित्वस्य तथाभूतत्वेनादोषात् सुदृपत्प्रासाद इत्यादौ वार्त्तिकमते दोष एव अस्त्वस्यातथात्वेन तत्सूत्राप्राप्तावपि स्थानिवत्सूत्रप्राप्तिसत्त्वात्। अतएव भाष्यकारेण तदेव नियमफलमुक्तम्। वार्त्तिकमतेऽपि तत्र दूषणोद्धारः शब्दरत्नादावुक्तः तत्रैव द्रष्टव्य इत्यलम् ॥ २१ ॥

कमिग्रहणेन सिद्धे इति—'विष्वग्देवयोश्चे'तिसूत्रे अप्रत्य-यग्रहणेन धातुग्रहणेऽपि तदादिविधिज्ञापनात्कमादावुत्तरपदे पर

उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥

इदमेवास्या ज्ञापकमिति कैयटादयः। कंसेस्तु न सोऽनभिधानात्। 'प्रत्ययस्य लुगि'त्यादौ भाष्ये स्पष्टा। 'ण्वुल्तृचा'वित्यादौ भाष्ये व्युत्पन्नानीत्यपि। इदं शाकटायनादिरीत्या। पाणिनेस्त्वव्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम्। 'आयनेयी'तिसूत्रे भाष्ये स्फुटमेतत् ॥ २२ ॥

ननु देवदत्तश्चिकीर्षतीत्यादौ देवादेः सन्नन्तत्वप्रयुक्त-

---

इत्यर्थेनायस्कंस इत्यस्य सिद्धावित्यर्थः। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि—उणाद्यन्ततदादीनि अव्युत्पन्नानि प्रकृतिप्रत्ययविभागशून्यानीत्यर्थः। यथाश्रुतन्तु न युक्तमुणादिप्रत्ययमात्रस्य प्रातिपदिकत्वाभावात। ननु तावतापि उणाद्यन्ततदादीनि प्रकृतिप्रत्ययविभागशून्यानीति विरुद्धमेवेति चेत्—न, उणाद्यन्ततदादित्वेन शाकटायनाभिप्रेतानि वस्तुतः प्रकृतिप्रत्ययविभागशून्यानि, उणाद्यन्तानि प्रकृतिप्रत्ययविभागप्रयोज्यपाणिनिसूत्रप्रवृत्त्यनर्हाणीति वाऽर्थात्। इदमेवेति—कंसग्रहणमेवेत्यर्थः। अनभिधानादिति—कमेः सः कंस इतिभाष्यकारोक्तेरिति भावः। नन्वेवं सर्पिश्शब्दस्य यजुश्शब्दस्य चाव्युत्पन्नत्वे सर्पिषा यजुषेत्यादौ प्रत्ययावयवसकाराभावेन षत्वानापत्तिरिति चेत्—न, उणाद्यन्तत्वेन पराभिमतानि बहुलं साधूनीत्यर्थकेन 'उणादयो बहुलमि'तिसूत्रेण षत्वोपपत्तेः। आयनेयीतिसूत्रे भाष्ये इति—तत्र हि शम्भः स्यः शल्कः शण्ढ इत्यादावौणादिकमाशङ्क्य 'प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेस्सिद्धमि'त्युक्तम्। प्रातिपदिकविज्ञानादित्यस्य प्रकृतिप्रत्ययविभागशून्यप्रातिपदिकविज्ञानादित्यर्थः ॥ २२ ॥

धातुत्वाद्यापत्तिरत आह—

प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥ २३ ॥

'यस्मात्प्रत्ययविधि'रितिसूत्रे यस्मात्प्रत्ययविधिस्तदादि-प्रत्यय इति योगो विभज्यते। गृह्यमाण उपतिष्ठत इति शेषः।

---

देवदत्तश्चिकीर्षतीत्यादौ देवादेरिति। धातुत्वे 'सुपो धात्वि'-तिलुगापत्तिः। न च प्रातिपदिकावयवसुप्साहचर्येण धात्ववय-वोऽपि सुप् संज्ञाप्रयोजक एव गृह्यत इति प्रकृते धातुसंज्ञाप्रयो-जकत्वाभावान्न लुगिति वाच्यम्, पदसंज्ञाप्रयोजकत्वस्य तत्रापि सत्त्वात्। वृत्तिप्रयोजकत्वमपि साहचर्यादलभ्यमिदानीम्, देवदत्तो गार्ग्य इत्यत्र देवदत्तो गार्ग्येति समुदायस्यापि तद्धितान्तत्वेन प्रातिपदिकत्वात्तदवयवस्य सुपो वृत्त्यप्रयोजकस्यापि सम्भवेन साहचर्यस्यासम्भवात्। देवादेर्द्वित्वापत्तिरपि दोषः। यदि 'सन्यङो'रित्यत्रानभ्यासस्येत्यस्य सम्बन्धस्तच्च बहुव्रीहिबलात्सन्न-न्तविशेषणं तदा स दोषो नास्ति। न च वाक्यसंस्कारपक्षे प्रथममेव देवादेर्द्वित्वापत्तिरिति वाच्यम्, एकतरपक्षेण लक्ष्य-सिद्धेः पक्षान्तरेण दोषदानस्यानुचितत्वेन तत्पक्षानाश्रयणेनापि तद्दोषवारणसम्भवात्।

प्रत्ययग्रहणे यस्मादिति—'सनाद्यन्ता धातव'इत्यादौ स-न्निति प्रत्ययग्रहणस्य सत्त्वात् तदादिरित्यस्योपस्थितिः, तत्र सना-द्यन्ता इत्यस्याभेदेनान्वयः, तथा च सनादिर्यस्माद्विहितस्तदादिर्य-स्सनाद्यन्त इत्यादिक्रमेण बोधः। यत्र चान्तपदं नास्ति यथा 'ङ्या-प्प्रातिपदिकाद्'इत्यत्र, तत्र तदादेरित्यस्योपस्थितस्य ङ्याब्भ्या-मभेदेन विशेषणात् 'येन विधि'रिति तदन्तविधिना ङ्याबन्ता-

**तेन तदाद्यन्तांशः सिद्धः। तदन्तांशस्तु 'येन विधि'रित्यनेन सिद्धः। स च शब्दरूपं विशेष्यमादाय विशेष्यान्तरासत्त्वे।**

---

तदादेरित्यर्थस्तदाह—तदन्तांशस्तु। येनेति। स च शब्दस्वरूपमिति। इदमत्र बोध्यम्—यत्र प्रत्ययस्य विशेष्यं सूत्रे नोपात्तं यथा 'ङ्याबि'त्यत्र, तत्रोपस्थिततदादिशब्दस्वरूपविशेषणादेव ङ्याब्भ्यां तदन्तविधिः; यत्र विशेष्यान्तरं सूत्रे उपात्तमस्ति यथा 'यञिञोश्चे'त्यत्र प्रातिपदिकादिति, तत्र प्रातिपदिकमेव विशेष्यीकृत्य प्रत्ययेन तदन्तविधिः; धर्मिण उपस्थितौ फलाभावेन तदादित्वमात्रस्योपस्थितस्य स्वरूपसम्बन्धेन प्रत्ययान्तेऽन्वयः। नामार्थत्वेन स्वरूपसम्बन्धेन कथमन्वय इति चेत्—अस्तु तदनुरोधेन धर्मिणस्तदादेरुपस्थितिः तस्य चाभेदेन तदन्तेऽन्वयः। तदेवोच्यते—विशेष्यान्तरासत्त्व इति।

क्वचित्तु लक्ष्यानुरोधात प्रमाणान्तराद्वा विशेष्यान्तरसत्त्वेऽपि तदादिरूपविशेष्यमादाय प्रत्ययेन तदन्तविधिं कृत्वा पुनर्विशेष्यान्तरमादाय प्रत्ययान्ततदादिना तदन्तविधिः, यथा 'वनोरचे'त्यादौ वन्नन्तान्तादित्यर्थेनातिधीवरीत्यस्य सिद्धिः। प्रमाणन्तु 'नित्यं समासेऽनुत्तरपदस्थस्ये'तिसूत्रेऽनुत्तरपदग्रहणमेव। तद्धि परमसर्पिः कुण्डिकेत्यादौ पत्ववारणाय। समासात्पूर्वपदस्याध्याहारेण तदेव विशेष्यान्तरमादायेसुसप्रत्ययौ तदन्तबोधकौ, ताभ्यामुपस्थितं तदादित्वन्तु स्वरूपसम्बन्धेन तत्रैव विशेषणम्, इसुस्प्रत्ययान्तं यत्पूर्वपदं तदादित्वविशिष्टन्तस्य षत्वमित्यर्थे परमसर्पिरित्यत्र प्राप्त्यभावेन तद्व्यर्थं सदुक्तार्थे ज्ञापकम्। ज्ञापिते तु इसुसन्ततदाद्यन्तपूर्वपदस्येत्यर्थेन तत्र प्राप्त्या स्वांशे चरितार्थम्। यदि तु सर्पिरादिकमव्युत्पन्नमेव, इसुसपदन्न प्रत्ययबोधकम्, तदाऽतिधीवरीतिलक्ष्यानुरोधादेव तथा कल्प्यते।

यत्तु—प्रत्ययेन स्वप्रकृत्यवयवकसमुदायाक्षेपात्तद्विशेषणत्वेन तदन्तविधिरिति—तन्न, इयानित्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात् ।

यत्र प्रत्ययो निमित्तत्वेनाश्रीयते तत्र तदादेरित्यन्तांश-

---

यत्तु प्रत्ययेन स्वप्रकृत्यवयवकेति । प्रत्ययः स्वप्रकृत्यवयवकसमुदायविशिष्टः प्रत्ययत्वादित्यनुमितिरूपाक्षेपेणोपस्थितस्य स्वप्रकृत्यवयवकसमुदायस्य प्रत्ययेन विशेषणात्तदन्तविधौ प्रत्ययान्तः स्वप्रकृत्यवयवकसमुदाय इत्यर्थेन सिद्धौ प्रत्ययग्रहणपरिभाषा निष्फलेति तदाशयः ।

अत्रेदं चिन्त्यते—एतादृशार्थे देवदत्तश्चिकीर्षतिसमुदायस्य धातुत्वापत्तिरेव, तस्य प्रत्ययान्तत्वेन तत्प्रकृत्यवयवकत्वेन च निरासासम्भवात् । यदि च स्वप्रकृत्याद्यवयवकसमुदायः साध्यत्वेनाभिमतः तर्हि बहुच्प्रत्यये व्यभिचारः । न च परत्वावच्छिन्नविधेयताश्रयत्वं हेतुस्तन्नास्ति तत्रेति न दोष इति वाच्यम्, रुणद्धीत्यादौ श्नमप्रत्यये हेतोः सत्त्वेन स्वप्रकृतोरुधेति तदाद्यवयवकत्वस्य रुनध्समुदायेऽभावेन तत्र व्यभिचारस्य तावतापि सत्त्वात् ।

यदि च साध्ये प्रकृतित्वमपर्याप्त्यापि गृह्यते रुमात्रस्यापि तदस्ति तन्निष्ठावयवतानिरूपकत्वं रुनध्समुदायस्यास्ति घटकत्वरूपसाध्यतावच्छेदकसम्बन्धेन तद्विशिष्टो नेति न व्यभिचार इत्युच्यते, तदाह—इयानित्यादाविति । अत्र परत्वावच्छिन्नविधेयताश्रयत्वस्य सत्त्वेऽपि तादृशस्समुदायो नास्तीति व्यभिचारो दुरुद्धरः । यदि च परत्वे सति परत्वावच्छिन्नविधेयताश्रयत्वं हेतुः, प्रकृते परत्वाभावेन न व्यभिचारः, परन्तु शाब्दबोधे शब्दनिष्ठवृत्तिज्ञानाधीनोपस्थितेर्हेतुत्वेनानुमित्योपस्थितस्य शाब्दबोधे भानन्न स्यात्, अतः परिभाषा मन्तव्यैवेति बोध्यम् ।

मात्रोपस्थितिरिति 'अङ्गस्ये'तिसूत्रे भाष्यकैयटयोः। एवं यत्रापि पञ्चम्यन्तात्परः प्रत्यय आश्रीयते तत्रापि तदादीत्यन्तांशोपस्थितिः, परन्तु तत्र पञ्चम्यन्तता। अतएव 'एङ्ह्रस्वादि'ति सूत्रे एङन्तादित्यर्थलाभः।

अस्याः परिभाषायाः प्रयोजनान्तरं 'येन विधि'रित्यत्र

---

यत्र प्रत्ययो निमित्तत्वेनाश्रीयत इति, यथा 'स्यतासील्लुटोः'-'सुपि चे'त्यादौ, तत्र तदन्तांशोपस्थितौ तु लृडन्तलुडन्ततदादौ सुबन्ततदादावित्यर्थेन द्वितीयाद्धातोर्द्वितीयस्याङ्गस्य च कार्यं स्यात्; तदन्तानुपस्थितौ तु यथासम्भवं 'लृलुटो'रित्यत्र 'धातो'रिति पञ्चम्यन्तानुरोधेन पञ्चम्यन्ततैव तदादेरित्यस्य, व्यपदेशिवद्भावाच्च स्वस्मिन्नेव तदादित्वं, 'सुपि चे'त्यादावङ्गस्येति षष्ठ्यन्तानुरोधेनात इत्यनुरोधेन च षष्ठ्यन्ततैवेति ध्येयम्। 'आन्महतस्समानाधिकरणजातीययो'रित्यत्र जातीयर्प्रत्ययेनोपस्थिततदादिविशेष्यमादाय महच्छब्देन तदन्तविधावतिमहाजातीय इत्यत्रात्वसिद्धिः, तदन्तांशोपस्थितौ तु न स्यादिति बोध्यम्। एङन्तादिति। आक्षिप्तस्य शाब्दबोधे भानाभावेनाङ्गस्याक्षेपेण तु तदन्तविधिर्न युक्त इत्यन्यत्रोक्तमिति भावः। हे कतरदित्यत्र सम्बुद्ध्यवयवाकारान्तस्यापि ह्रस्वान्ततदादित्वेन ततः परस्य सम्बुद्ध्यवयवस्य हलो लोपापत्तिस्तु न, एङ्साहचर्येणाङ्गानवयवभिन्नस्यैव ह्रस्वस्य ग्रहणात्। सम्बुद्ध्यवयवाघटितस्यैव तदादेर्ग्रहणमुक्तसाहचर्यादिति तु न युक्तम्, हे कुलेत्यत्र लोपानापत्तेः। सम्बुद्धिविशिष्टभिन्नस्यैव ह्रस्वस्य ङसाहचर्येण ग्रहणम्; वैशिष्ट्यं स्वावयवत्व-स्वावयवस्थानिकादेशभिन्नत्वोभयसम्बन्धेनेत्यपि कश्चित्। उभयत्रापि तदन्तांशानुपस्थितौ मूलमग्रिमा परिभाषैवेति नवीन स्पष्टीभविष्यति।

भाष्ये उक्तम्—परमगार्ग्यायण इति, परमगार्ग्यस्यापत्यमिति-विग्रहेऽपि गार्ग्यशब्दादेव प्रत्ययो न विशिष्टात्; निष्कृष्य तावन्मात्रेणैकार्थीभावाभावेऽपि वृत्तिर्भवत्येव। अत्र चेदं भाष्यमेव मानमित्यन्यत्र विस्तरः।

प्रत्ययमात्रग्रहणे एषा न तु प्रत्ययाप्रत्ययग्रहण इति

---

परमगार्ग्यस्यापत्यमिति। राजपुरुषस्यापत्यं राजपौरुषिरिति वारणाय तद्धितप्रत्ययः स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नवाचकतापर्याप्त्यधिकरणाद्भवतीत्यर्थस्याभ्युपेयतया परमगार्ग्यस्यापत्यमित्यर्थे स्वार्थापत्यरूपार्थान्वयितावच्छेदकं परमाभिन्नगर्गापत्यत्वं, तदवच्छिन्नवाचकतापर्याप्त्यधिकरणं परमगार्ग्येति-समुदायः तस्य च यञन्ततदादित्वाभावः, नेष्यते च ततः प्रत्ययः, यतश्चेष्यते गार्ग्यशब्दात्स च न तादृश इति कथं भाष्यसङ्गतिरित्यत आह—निष्कृष्येति। एतस्यैव व्याख्यानं—तावन्मात्रेणेति, तत्पर्याप्त्येत्यर्थः। तथा चास्मादेव भाष्यात्तादृशपर्याप्त्यधिकरणघटकादपि तद्धितो भवतीति कल्प्यत इति भावः। न चैवं राजपौरुषिरिति स्यादिति वाच्यम, धर्मिग्राहकमानेन प्रत्ययान्तत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकतद्धितविषयकत्वादुक्तज्ञापनस्य। न चैवं शिवस्य भगवतोऽपत्यं शिवभागवतमित्यत्र भगवच्छब्दात्प्रत्ययो न स्यादणप्रत्ययस्य प्रत्ययान्तत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वाभावादिति वाच्यम, तद्भाष्यप्रयोगादेव समासस्येव प्रत्ययस्यापि सिद्धेः।

प्रत्ययमात्रग्रहण इति - प्रत्ययबोधकत्वे सति प्रत्ययेतराबोधक इत्यर्थः। ननु प्रतीपिपतीत्यत्रेणधातोस्सनि द्वितीयस्यैकाचस्सशब्दस्य द्वित्वे 'सन्यत' इत्यभ्यासावयवाकारस्येत्वे तस्योत्तरखण्डरूपसन्परत्वेन 'अज्झनगमामि' तिदीर्घमाशङ्क्योत्तर-

'उगितश्चे'तिसूत्रे भाष्ये । इयमङ्गसंज्ञासूत्रे भाष्ये स्पष्टा ॥ २३ ॥

---

खण्डस्याप्रत्ययत्वाद्दीर्घाभाव इति सन्नन्तप्रकरणे शब्देन्दुशेखरे प्रतिपादितम्; तत्र धातुत्वायोत्तरखण्डस्य 'सनाद्यन्ता धातव' इत्यत्रत्यसन्पदेन ग्रहणस्यावश्यकतया प्रत्ययेतरबोधकत्वेन प्रत्ययमात्रग्रहणाभावात् कथं 'सनाद्यन्ता'इत्यत्र परिभाषाप्रवृत्तिः इति चेत्—न, उत्तरखण्डस्य प्रत्ययत्वेनादोषात् । अजन्ताङ्गस्य झलादौ सनि दीर्घ इत्यर्थेन प्रत्यासत्त्या यादृशझलादौ सनि दीर्घः तादृशसन्निरूपिताङ्गत्ववत एव दीर्घ इत्यर्थस्य लाभेनोत्तरखण्डस्य 'आगन्तुकानामग्रे निवेश'इति न्यायेन विधेयत्वेन कुतश्चिद्विहितत्वाभावेन पूर्वभागस्य तन्निरूपिताङ्गत्वाभावेन प्रतीपिपतीत्यादौ दीर्घाभावः; शेखरे अप्रत्ययत्वादित्यस्याजन्तवृत्त्यङ्गत्वोपयोगिप्रत्ययत्वाभावादित्यर्थेन तद्विरोधाभावात्, हन्गमवयवाच्साहचर्येणाभ्यासानवयवस्यैवाचोऽजन्ताङ्गावयवस्य ग्रहणेन दीर्घाप्राप्त्या शेखरस्य खण्डनीयत्वाच्च ।

केचित्तु—'सन्यत' इतीत्वे प्रतिपद्विधित्वात् पूर्वं दीर्घे ह्रस्वः; अप्रत्ययत्वादितिशेखरोक्तन्तु न युक्तम्, प्रतीपिपेत्यादौ 'अप्रत्ययादि'त्यप्रत्ययानापत्तेरित्याहुः ।

परे तु—'प्रत्ययमात्रग्रहण' इत्यत्र मात्रपदेन प्रातिपदिकमात्रस्यैव निरासः, तथा च प्रत्ययबोधकत्वे सति प्रातिपदिकाबोधक इत्यर्थेनाप्रत्ययरूपोत्तरखण्डबोधकत्वेऽपि दोषाभाव इत्याहुः ।

अन्ये तु—प्रत्ययमात्रग्रहण इत्यस्य प्रत्ययविशिष्टग्रहण इत्यर्थः, वैशिष्ट्यं स्वबोधकत्व-स्वविशिष्टाबोधकत्वोभयसम्बन्धेन, तत्र वैशिष्ट्यं स्वेतरत्व-स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वैतदुभयसम्बन्धेन, उत्तरखण्डस्याप्रत्ययत्वेऽपि न क्षतिरिति व्याचख्युरिति दिक् ।

उगितश्चेति—अत्रोगित्पदस्य सर्वनामभवतुरूपप्रातिपदिक-

'येन विधि'रितिसूत्रे भाष्य एतद्घटकतदन्तांशस्याप-वादः पठ्यते—

प्रत्ययग्रहणे चापञ्चम्याः ॥ २४ ॥

यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय परि-

---

बोधकत्वेन प्रत्ययमात्रबोधकत्वाभावेन परिभाषाया अप्रवृत्त्या निर्यवमतीत्यादिसिद्धिः ॥ २३ ॥

तदन्तांशस्यापवादः पठ्यत इति। एतेन परिभाषायास्तदन्त-विधिर्नेत्यर्थः फलितः। तथा च 'प्रत्ययग्रहणे चापञ्चम्या' इत्यस्याः पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्मावच्छिन्नविष-यताप्रयोजकं पदन्तदन्तबोधकन्नेत्यर्थः। यत्र पञ्चम्यन्तात्परः प्रत्यय इति—यत्र शास्त्रे पञ्चम्यन्तार्थावधिकपरत्वविशिष्टः प्रत्यय इत्यर्थः। न च 'रदाभ्यामि'त्यस्य तकारविशेषणत्वेन पञ्चम्यन्ता-र्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताया अ-भाव इति वाच्यम्, प्रत्ययावयवे प्रत्ययत्वव्यवहारेण निष्ठाव-यवत्वस्य प्रत्ययत्वव्याप्यत्वात्। न च तदवच्छिन्नविषयता-प्रयोजकं निष्ठातपदं न निष्ठापदमिति वाच्यम्, तादृशविषयता-प्रयोजकपदघटकमित्यर्थेनादोषात्।

कार्यान्तरविधानायेति—न तु स्वस्यैव विधानायेत्यर्थः। एतेन परिभाषार्थे विषयतापदेन विधेयताभिन्ना विषयता गृह्यत इति सूचितम्। तथा च पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्य-यत्वव्याप्यधर्मावच्छिन्नोद्देश्यताप्रयोजकमित्यर्थः फलितः। यत्र स्वस्य विधानायैव प्रत्ययग्रहणं यथा 'ऋन्नेभ्यो ङीपि'त्यादौ तत्र-तद्वाक्यार्थबोधात्प्राक् प्रत्ययग्रहणपरिभाषाप्रवृत्तिसमये ङीपः प्रत्ययत्वस्यैवाभावेन प्रत्ययग्रहणत्वाभावान्नैतत्परिभाषाप्रवृत्त्युप-योग इत्येतत्फलितमेव कार्यान्तरविधानायेति भावः।

स्यादेव । 'स्यतासी ऌलुटो'रित्यादौ ऌलुटोः परयोरित्यर्थे नियमेनावधिसाकाङ्क्षत्वेनोपस्थितधातोरित्यस्यैवावधित्वेनान्वयान्न

---

तद्भाष्यं निर्दिश्यमानपरिभाषाप्रवृत्तौ विरुणद्धीत्यस्या अनुपस्थितौ मानाभावेनावतरणमसङ्गतमेवेत्युच्यते, तदा अन्धातोः क्विपि 'डावुभाभ्यामि'तिडाप्रत्यये टिलोपे 'सुप्पितावनुदात्ता'वित्यनुदात्तत्वे आशब्दादाचारक्विबन्तात् कर्त्तरि क्विपि नपुंसकह्रस्वत्वे अ इत्यनुदात्तम्, तस्मादाचारक्विबन्तात्क्तप्रत्यये 'एकाच उपदेश' इत्यनिटि अतो लोपे त इति तस्य हृषादित्यनेन सम्बन्धे हृषत्त इत्यत्र नत्वापत्तिरिति बोध्यम् । न च निष्ठान्ततदादित्वाभावान्नत्वाप्राप्तिरिति वाच्यम्, व्यतिसे इत्यत्रेव व्यपदेशिवद्भावेन तल्लाभसम्भवात् ।

ननु 'स्यतासी ऌलुटो'रित्यादौ पञ्चम्यन्तार्थावधिकपरत्वेन ऌलुटोरनाश्रयणात्प्रकृतपरिभाषाया अप्रवृत्त्या तदादितदन्तोपस्थितौ ऌडन्तलुडन्ततदादौ परे इत्यर्थापत्त्यातिप्रसङ्गः स्यादित्यत आह—'स्यतासी ऌलुटो'रित्यादाविति । 'तस्मिन्नि'तिपरिभाषाया यथा सप्तम्यन्तार्थाव्यवहितपूर्वस्य कार्यं भवेत्तथा कर्त्तव्यमित्यर्थकतया ऌलुटोरित्यत्र परयोरित्यस्य शेषेण ऌलुटोः परयोरित्यर्थस्य बोधनेन कस्मात्परयोरितिनियमेनाकाङ्क्षायामुपस्थितधातोरित्यस्यैवावधित्वेनान्वयात्पञ्चम्यन्तार्थात्परत्वेनाश्रयणात्परिभाषाप्रवृत्तिस्सुलभेति भावः ।

'हल्ङ्याब्भ्य' इत्यादौ ङ्यापोः प्रत्ययत्वेन प्रातिपदिकात्परत्वस्य सत्त्वेऽपि नित्यसाकाङ्क्षत्वबोधकपदाभावेनाकाङ्क्षाया अभावेनाक्षेपाभावात् पञ्चम्यन्तार्थावधिकपरत्वेन तयोराश्रयणाभावान्न परिभाषाप्रवृत्तिरिति तदादितदन्तोभयोपस्थितौ ङ्याबन्ततदादेरित्यर्थलाभेन तदवधिकपरत्वेन सु-ति-सीनामाश्रयणात्तत्र

तदन्तविधिः । 'ङ्याब्भ्य' इत्यादौ तु न दोषः, तत्र कस्मादितिनियतावध्याकाङ्क्षाया अभावेन पञ्चम्यन्तस्य प्रत्ययविशेषणत्वाभावात् । अङ्गसंज्ञासूत्रे तु तदादेः प्रत्यये पर इत्यर्थे पञ्चम्यन्तस्य विशेषणत्वं स्पष्टमेव । अतएव 'उत्तमैकाभ्यां'मित्यादिनिर्देशाः सङ्गच्छन्ते ॥ २४ ॥

नन्वेवं कुमारी ब्राह्मणिरूपेत्यादौ 'घरूपे'तिह्रस्वापत्तिरत आह—

---

तदन्तांशानुपस्थित्या तदादिमात्रस्योपस्थित्या तदेव विशेष्यीकृत्य ङ्याबन्ततदादिस्वान्तबोधकमिति ङ्याबन्ततदाद्यन्ततदादेः परेषां सु-ति-सीनां हलो लोप इत्यर्थेन बहुश्रेयसीत्यादौ सुलोपसिद्धिः । न च तदादेर्विशेष्यान्तरस्य सत्त्वे कथं प्रथमतदन्तविधिरिति वाच्यम्, 'वनोरचे'त्यादिवदत्रापि सत्त्वादिति सर्वमभिप्रेत्याह—ङ्याब्भ्य इत्यादौ तु न दोष इत्यादि ।

आक्षिप्तपञ्चम्यन्तार्थावधिकपरत्वमादायापीयं परिभाषा प्रवर्त्तत इत्यर्थो धर्मिग्राहकमानादेवेत्याह—अतएवोत्तमैकाभ्यामिति । परिभाषायामपीदं ज्ञापकमिति बोध्यम्. अन्यथा 'सुपि चे'त्यत्र तदादितदन्तोपस्थितौ सुबन्ततदादौ परे पूर्वस्य दीर्घ इत्यर्थेन निर्देशासङ्गतिः स्पष्टैवेति दिक् ॥ २४ ॥

कुमारीब्राह्मणिरूपेत्यादाविति । नन्वियं शङ्का नोदयमर्हति, 'स्यतासी लृलुटोः' 'सुपि चे'त्यत्रेवात्रापि पूर्वपरिभाषयैव तदन्तविध्यभावसिद्धेः; अतएव घांशे न तदन्तविधिः, अन्यथा तत्र तदन्तविधौ कुमारीब्राह्मणितरेत्यादौ ह्रस्वापत्तेरसत्त्वेन प्राथम्यात्तस्यैवावतरणत्वं वक्तुं युक्तं स्यादिति चेत्—न, तदादिरूपविशेष्यमादाय प्राप्तदन्तविधेरेव तया निषेधात् । अतएव 'रात्रेः कृती'-

गृह्यते तत्र तदन्तविधिर्नेत्यर्थः, यथा 'रदाभ्यां निष्ठातो न'त्यत्र,

केचित्तु—कार्यान्तरेत्यस्य प्रत्ययेतरकार्येत्यर्थः, तेन 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यनेन तिङन्तरूपपञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यघसंज्ञकत्वावच्छिन्नविषयताप्रयोजकत्वेऽपि घपदस्यामूरूपप्रत्ययविधानायैवाश्रयणादस्या अप्राप्त्या तदन्तविधौ घान्ततदादिपचतितरेतिसमुदायादेवामो विधानेन पचतितरामित्यस्य तद्धितान्ततदादित्वनिबन्धनप्रातिपदिकत्वसिद्धिः, अन्यथा तदन्तविधेरनया निषेधे तरप्रत्ययादेवामिसमुदायस्य तद्धितान्ततदादित्वाभावेन प्रातिपदिकत्वानापत्तिरित्याहुः—तन्न, उक्तयुक्त्या प्रत्ययान्तरवस्याप्यभावेन पूर्वसूत्रेण प्रातिपदिकत्वसिद्धेः। समासग्रहणनियमस्य तु न विषयः, पचतीत्यस्य स्वातन्त्र्येण प्रयोगार्हत्वेऽपि तरामित्यस्य तत्त्वाभावात्।

परिगृह्यत इति—तद्बोधकं पदमुच्चार्यत इत्यर्थः। तदन्तविधिर्नेति—प्रत्यासत्त्या तादृशप्रत्ययबोधकं पदं तदन्तबोधकन्नेत्यर्थः, यथा 'अतो भिस ऐस्'·'ह्रस्वनद्याप'इत्यादौ। रदाभ्यामिति। एतत्परिभाषाया अभावे निष्ठापदेन तदादितदन्तोपस्थितौ निष्ठान्ततदाद्यवयवो यो रदाभ्यां परस्तकारस्तस्य नत्वमित्यर्थेन तॄधातोः क्तप्रत्यये इत्वे रपरत्वे टापि तीर्तो, तस्य तृपत् सम्बन्धे निष्ठान्ततदाद्यवयवस्तकारः प्रत्ययावयव इव धात्ववयवोऽपि, स च दकारात्परोऽप्यस्तीति तस्य नत्वापत्तिः; परिभाषायाञ्च सत्यां निष्ठापदस्य तदन्तबोधकत्वाभावेन तदुपस्थाप्यतदादिशब्दस्वरूपं विशेष्यीकृत्य 'रदाभ्यामि'त्यनेन तदन्तविधौ रेफान्तो दान्तश्च यो निष्ठा यस्माद्विहितस्तदादिस्ततः परस्य निष्ठावयतवकारस्य नत्वमित्यर्थेन धातुतकारस्य नत्वाभावः। ननु तृपत्तीर्णेत्यादौ 'अन्त्यबाधेऽन्त्यसदेशस्ये'तिपरिभाषया धातुतकारस्य नत्वाप्राप्तिरिति चेत्—न तीर्णमाचष्ट इत्यर्थे नत्वस्यासिद्धत्वेन पूर्वं णिचि

तेन ह्यपत्तीर्णेत्यादौ धातुतकारस्य न नत्वम्। तदन्तेत्यंशानुपस्थितावपि तदादीत्यंशस्योपस्थितौ रेफदान्तात्परस्य निष्ठातस्येत्यर्थ इति न दोषः, तदाद्यंशानुपस्थितौ मानाभावात्। तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति ह्यपत्तीर्णेत्यादौ दोषः

---

टिलोपे तीर्णयतीत्यादावन्त्यस्यैव तकारस्य नत्वप्रवृत्त्यान्त्यबाधाभावात्, ह्यपत्तीर्णवानित्यस्योपलक्षणत्वाद्वा, तत्र ह्यन्तसदेशस्याभावेन सूत्राप्रवृत्तेः।

केनचित्तु—आचारक्विबन्तप्रकृतिककर्तृक्विबन्तस्य ऋच्छब्दस्य देवशब्देन समासे देवर्त्त इत्यत्रान्त्यतकारस्य नत्वप्राप्त्यान्त्यबाधाभाव उक्तः—तन्न युक्तम्, 'निष्ठानत्वमवृद्धे'रित्यत्र वृद्धिपदस्य गुणस्याप्युपलक्षकत्वात्।

नन्ववयवषष्ठीविषयेऽपि निर्दिश्यमानपरिभाषाप्रवृत्त्या निष्ठान्ततदाद्यवयवो यो निष्ठापदीयनिर्दिश्यमानस्तदवयवस्य रदाभ्यां परस्य तकारस्य नत्वमित्यर्थेन धातुतकारस्य निष्ठापदीयनिर्दिश्यमानावयवत्वाभावेन परिभाषां विनापि दोषाभाव इति चेत्—न, प्रकृतसूत्रस्थभाष्यप्रामाण्यादत्र निर्दिश्यमानपरिभाषाया अप्रवृत्तेः। भाष्ये हि 'रदाभ्यां किं? चरितम्मुदितमि'त्युक्त्वा 'अथाप्युच्यमाने रदाभ्यामिति कस्मान्न भवती'त्याशङ्क्य 'रदाभ्यामिति न निष्ठा विशेष्यते, अपि तु तौ विशेष्यत' इति समाहितम्; निर्दिश्यमानपरिभाषाप्रवृत्तौ तु निष्ठापदीयनिर्दिश्यमानविशेषणत्वेऽप्यागमव्यवधानेन दोषाभावात्तकारविशेषणत्वकथनमसङ्गतं स्यात्। यदि तु 'क्तक्तवतू निष्ठे'तिसूत्रे षष्ठ्यभावेन निर्दिश्यमानपरिभाषाया अप्राप्त्याऽऽगमविशिष्टस्यापि क्तादेर्निष्ठासंज्ञायां रदाभ्यामित्यत्रत्यनिष्ठापदीयनिर्दिश्यमानत्वमागमविशिष्टस्यैवेति निष्ठापदीयनिर्दिश्यमानविशेषणत्वेऽपि दोषतादवस्थ्येन तकारविशेषणत्वमिति न-

त्यादौ तदादिविशेष्यकतदन्तविधेर्निषेधेऽप्युत्तरपदं विशेष्यमादाय प्राप्तस्य तस्य न निषेधः। न चानया तत्र निषेधो दुर्वारः; प्रत्ययवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजक एवैतस्याः प्रवृत्तिस्वीकारात्। अतएव घांशे तदादिविशेष्यकतदन्तविधेः पूर्वपरिभाषया निषेधेऽप्युत्तरपदविशेष्यकतदन्तविधिना दोषस्य सत्त्वेन प्राथम्यात्तदेवावतरणं वक्तुमुचितमित्यपास्तम्; तत्साध्यदोषाभावकस्यैव तदवतरणत्वेनोक्तरीत्या श्रावणप्रत्यक्षविषयतावच्छेदकनिवेशस्यावश्यकत्वेन परिभाषया दोषनिराकरणासम्भवात्।

ननु मास्त्ववतरणन्तत्, उत्तरपदं विशेष्यमादाय तदन्तविधिना ह्रस्वापत्तिस्तु तत्र दुर्वारा इति चेत्—न, संज्ञाविधौ तदन्तविधिनिषेधसामर्थ्यात्प्रदेशेऽपि न तदन्तविधिरित्यनेन शब्देन्दुशेखरे समाहितत्वात्। तथा हि 'तरप्तमपौ घ' इत्यत्र तदन्तविधिनिषेधे प्रदेशे घपदस्य प्रत्ययमात्रग्रहणत्वेन तदादितदन्तलाभः, संज्ञाविधौ निषेधाभावे तरबाद्यन्तस्य घसंज्ञायां प्रदेशे घपदस्य प्रत्ययमात्रग्रहणत्वाभावेन तदन्तविध्यभावात्तरबाद्यन्ततदादेरेव लाभः। घरूपसूत्रेऽपि तदादिविशेष्यकतदन्तविधौ पूर्वपरिभाषया वारिते उत्तरपदविशेष्यकतदन्तविधौ घान्तो यावान् समुदायो लभ्यते तावानेव संज्ञाविधौ निषेधाभावे तदन्ततदादेर्घसंज्ञायां घरूपसूत्रे उत्तरपदविशेष्यकतदन्तविधिना लभ्येतेति प्रदेशे तदन्तविधौ संज्ञायां तन्निषेधो व्यर्थ एव। किञ्च रूपबादिनिमित्तको ह्रस्वः प्रत्ययाव्यवहितपूर्वस्यैवेकारस्य भवति, तत्साहचर्याद् घनिमित्तकोऽपि ह्रस्वः प्रत्ययपूर्वस्यैवेत्यर्थेनादोषः।

केचित्तु—रूपबाद्यंशे अनया परिभाषया साक्षाच्छास्त्रबाधकल्पनापेक्षयोत्तरपदस्य विशेषणत्वबोधनमेव युक्तन्तथा च घांशे ह्रस्य विशेष्यत्वे सर्वेषामेकस्मिन्नन्वयाभावेन द्वन्द्वासाधुत्वापत्त्या तत्रापि विशेषणत्वमेवेति न घांशेऽपि तदन्तविधिरित्याहुः।

## उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥२५॥

'हृदयस्य हृल्लेखयदण्लासेष्वि'त्यत्र लेखग्रहणात्। तत्र लेखेति न घञ-

---

अन्ये तु—प्रत्ययवृत्तिश्रावणेत्यादि न निवेश्यते, प्रत्ययबोधकमात्रं न तदन्तबोधकं घांशे प्राथम्यादवतरणं वक्तुर्युक्तमेव; 'रात्रेः कृती'त्यादौ तु सामर्थ्यात्तदन्तविधिः कृद्रूपोत्तरपदस्यासम्भवादित्याहुः—तन्न, अशब्दादाचारक्विबन्ताद् घञ्प्रत्ययेऽतोलोपे रात्रिम इत्यादावुत्तरपदस्य कृद्रूपत्वसम्भवेन चारितार्थ्यादित्यास्ताम्।

अथात्र कर्मधारये बहुव्रीहौ वा पुम्वद्भावापत्त्या कुमारब्राह्मणिरूपेति स्यात्, षष्ठीतत्पुरुषे 'नदीतरे प्रतिषेधो वक्तव्यो न वक्तव्यः समानाधिकरण इति वर्त्तत'इतिभाष्यात्समानाधिकरणे एव ह्रस्वप्रवृत्तिलाभेनासङ्गत्यापत्तिरिति चेत्—न, वयोवाचके वैकल्पिकजातिकार्यस्येष्टत्वेन 'जातेश्चे'त्यनेन पुंवद्भावनिषेधात् बहुव्रीहौ दोषाभावात्। यद्वा कुमारीब्राह्मणिरूपेतिवाक्यमेव, अत्र समासे इष्टस्य पुंवद्भावस्य परत्वाद्बाधेन ह्रस्वापत्तिरित्याशयात्। इदमुपलक्षणं, ब्राह्मणिरूपेत्यादौ ह्रस्वानापत्तिरित्यपि बोध्यम्।

लेखग्रहणादिति। ननु लेखग्रहणे तदन्तविधिना हृदयशब्दस्य परमलेखशब्देन समासे हृत्परमलेख इति भवति, तदभावे अणन्ततदादिरूपोत्तरपदपरत्वाभावेन हृदयपरमलेख इति वैषम्यात्कथं ज्ञापकमिति चेत्—न, 'गिलेऽगिलस्ये'त्यत्र तदन्तविधौ गिलान्त उत्तरपद इत्यर्थेन तिमिङ्गिलगिल इत्यस्य सिद्धौ 'गिलगिले चे'त्यंतत्सामर्थ्यात् 'उत्तरपदाधिकारे प्रातिपदिकग्रहणे न तदन्तग्रहणमि'तिपरिभाषान्तरस्य ज्ञापितत्वेन लेखशब्दे तदन्तविध्यभावात्। अतएव 'इष्टकेषीकामालानां चिततूलभारिष्वि'त्यादौ चिताद्यंशे न तदन्तविधिः, तेनेष्टकापरिचितमित्यादौ

न्तमनभिधानात् । इयश्च 'हृदयस्ये'तिसूत्र एव भाष्ये स्पष्टा ॥२५॥

ह्रस्वाभावः ।

केचित्तु—तिमेर्गिलस्तस्य गिल इत्यर्थके तिमिंगिलगिल इत्यत्र तदन्तविधावपि गिलगिलशब्दस्योत्तरपदत्वाभावेनाप्राप्त्या तत्र विधानार्थं 'गिलगिले चे'तिचरितार्थमित्याहुः—तन्न, अन्तरङ्गत्वेन पूर्वमेव मुम्सिद्धेः, वार्त्तिकेऽप्युत्तरपदसम्बन्धस्य सत्त्वेन तस्याप्राप्तेश्च । नापि गिलान्ते चेद्गिलगिल एवेति नियमार्थतया न ज्ञापकमिति युक्तम्; विधिनियमसम्भवे विधेरेव ज्यायस्त्वात्, 'वनोर चे'त्यादाविव विशेष्यान्तरसत्त्वेऽपि तदादिस्वरूपमादायापि तदन्तविधिना अणन्ततदाद्यन्तोत्तरपद इत्यर्थेन फलभेदाभावाच्च, ज्ञापकपरभाष्यप्रामाण्यात् 'हृत्परमलेख'इत्यादेरनभिधानाच्च ।

न चैतत्परिभाषासत्त्वे उपसर्गस्य घञीत्यत्र तदन्तविध्यभावेन घञन्त इत्यर्थः कथमिति वाच्यम्, सूत्रारम्भसामर्थ्येन तदन्तविधिनिषेधाभावात्, नहि घञ्रूपमुत्तरपदं सम्भवति । न चाशब्दादाचारक्विबन्तात् घञि तत्सम्भवः, तत्र दीर्घोत्तर'मिकोऽसवर्णे'इतिह्रस्वसमुच्चितप्रकृतिभावे यणि वा दीर्घविधानस्य फलाभावात् । 'खित्यनव्ययस्ये'त्यत्र खित्पदस्य 'तत्पुरुषे कृती'त्यादौ कृत्पदस्य च प्रत्ययवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मावच्छिन्नबोधकत्वाभावान्न निषेधः ।

उत्तरपदाधिकारे प्रातिपदिकग्रहण इत्यस्याः प्रातिपदिकवृत्तिविषयताप्रयोजकपदे एव प्रवृत्तिः, अतएव 'एकहलादौ पूरयितव्य' इत्यत्र एकहलादिपदेन तदन्तविधिः ।

वस्तुनस्तु—एकहलादिपदे तदन्तविधावुदकस्थितिशब्देऽप्यसंयुक्तहलादिस्तिशब्दस्तदन्तः स्थितिशब्द इति तत्राप्यादेशापत्त्यैकग्रहणसामर्थ्यान्न तदन्तविधिः । तथा च श्रावणप्रत्यक्षविषयता-

नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रेवातिकारीषगन्ध्यापुत्र इत्यत्र 'ष्यङः सम्प्रसारणं पुत्रपत्यो'रिति स्यादत आह—

---

वच्छेदकधर्मावच्छिन्नविषयताप्रयोजकं पदमुत्तरपदं विशेष्यीकृत्य तदन्तबोधकन्नेत्येव परिभाषाद्वयस्थाने उच्यते ।

केचित्तु—पदघटितं विशेष्यीकृत्येत्याद्यर्थः, अतएव 'पादस्य पदाज्याती'त्यादौ पूर्वपदं विशेष्यमादायापि पादशब्देन न तदन्तविधिः, तेन दग्धपादोपहत इत्यादौ न पदादेश इत्याहुः—तन्न, तथा सति पक्वेष्टकचितमित्यादावपि ह्रस्वत्वानापत्तिः, 'इष्टकेषी'त्यादावपि तदन्तविधिनिषेधापत्तेः, दग्धपादोपहत इत्यत्र तु भाष्यप्रयोगान्नेत्यस्यापि वक्तुं शक्यत्वात् ।

अन्ये तु—पदघटितं विशेष्यमादायेत्येवार्थः, 'इष्टकेषीके'त्यादौ पूर्वपदस्यानाक्षेपान्न दोषः, अतएव तुन्दशोकयोः परिमृजापनुदो-रित्यादावुपपदं विशेष्यमादाय न तदन्तविधिरित्याहुः ।

वस्तुतस्तु — अत्रोपपदशब्दस्याभावेन तदन्तविधेरप्रसङ्ग एवेति दिक् ।

चन्द्रिकाकारास्तु — कुमारीब्राह्मणितरेत्यस्यैतत्परिभाषाफल-त्वेन घरूपसूत्रे भाष्यकृतोक्तत्वेन श्रावणप्रत्यत्त्वेत्याद्यनिवेशः, इयञ्च धर्मिग्राहकमानादादेशविधायक एव प्रवर्त्तते, अतएव रात्रेः कृतीत्यादौ न दोषः; 'खित्यनव्ययस्ये'त्यत्र तु अनव्ययस्येत्येतत्सा-मर्थ्यात्तदन्तविधिः, 'तत्पुरुषे कृती'त्यस्यादेशविधायकत्वाभावा-देवादोषः, 'प्रातिपदिकग्रहण'इत्यस्य तु आगमविधायकेऽपि प्रवृत्तिः, अतएव 'कारे सत्यागदस्ये'त्यत्र कारशब्दे न तदन्तविधिः, अतएव न द्वयोरेकत्वसम्भव इत्याहुः ॥ २५ ॥

नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रेवातिकारीषगन्ध्यापुत्र

इति । नन्विदमवतरणन्न युक्तं; पूर्वपदरूपविशेष्यान्तरस्य सत्त्वेन तदादिविशेष्यकतदन्तविध्यभावे पूर्वपदं विशेष्यमादाय तदन्तविधिः, तदन्ते च तदादेरभेदेनान्वयः, तथा च तदाद्यभिन्नं यत् ष्यङन्तं पूर्वपदमित्यर्थस्यैव लाभेन परमकारीषगन्ध्येत्यस्य ष्यङन्तपूर्वपदत्वेऽपि ष्यङ् यस्माद्विहितस्तदादित्वविरहेण सम्प्रसारणाप्राप्त्या दृष्टान्तत्वासिद्धेः; न च परमकारीषगन्धीपुत्र इत्यत्रेवातिकारीषगन्ध्या पुत्र इत्यत्रापि स्यात् अर्थान्न स्यादित्येव तात्पर्यविषय इति वाच्यम्, तत्राभावस्यैवेष्टत्वेनोपपत्त्यभावात्; न च 'वनोरचे'त्यत्रेवात्रापि तदादिविशेष्यकतदन्तविध्युत्तरं पूर्वपदं विशेष्यीकृत्य पुनस्तदन्तविधिः, अथवा पूर्वपदस्य विशेष्यान्तरस्य सत्त्वेऽपि तद्विशेष्यकतदन्तविधेः प्रथमं पूर्वपरिभाषया निषेधात् तस्य सत्त्वेऽपि तदादिविशेष्यक एव तदन्तविधिः, तदन्तविधिप्रयोजकस्यैव विशेष्यान्तरस्य तदादिविशेष्यकतदन्तविधिप्रतिबन्धकत्वात्, ततश्च ष्यङन्ततदादेः प्रत्ययग्रहणत्वाभावेन पूर्वपरिभाषाया अप्राप्त्या पूर्वपदविशेष्यकतदन्तविधौ ष्यङन्ततदाद्यन्तपूर्वपदस्येत्यर्थेन परमकारीषगन्धीपुत्र इत्यत्र प्राप्त्या दृष्टान्तत्वमुपपन्नमिति वाच्यम्, तथा सति परिभाषायामवतीर्णायामपि अतिकारीषगन्ध्यापुत्र इत्यत्र ष्यङन्ततदाद्यन्तत्वेन दोषस्य दुरुद्धरत्वादसङ्गतेस्तादवस्थ्यात्; न च 'अनङ् ऋतो द्वन्द्वे' इत्यत्रेवात्रापि पूर्वपदन्नाक्षिप्यते, ततश्च ष्यङन्ततदादेः संप्रसारणमित्यर्थेन दृष्टान्तत्वोपपत्तिरित्यपि युक्तं, दत्तोत्तरत्वात्; इति चेत्, अत्रोच्यते—तदाद्यभिन्नं ष्यङन्तं यत्पूर्वपदमित्येवार्थः, इवशब्दस्यातिकारीषगन्ध्या पुत्र इत्यत्रेत्यस्याग्रे उत्कर्षः, तथा चातिकारीषगन्ध्यापुत्र इत्यत्रेव परमकारीषगन्धीपुत्र इत्यत्रापि स्यादित्यर्थः । यथा तत्र स्वाभाववत्त्वसम्बन्धेन भवति तथा परमकारीषगन्धीपुत्र इत्यत्र स्यात्, मूर्खपुत्रे मूर्खपितृवदयं पण्डित इत्यत्र यथा, न स्यादिति यावदिति युक्तमेवावतरणमिति ।

## स्त्रीप्रत्यये चानुपसर्जने न ॥ २६ ॥

स्त्रीप्रत्यये चानुपसर्जने न । ननु कोऽर्थोऽस्याः ? न तावत् स्त्रीप्रत्ययेऽनुपसर्जने तदादिविधिर्नेत्यर्थः, अनुपसर्जनस्त्रीप्रत्ययस्य लक्ष्ये सत्त्वेऽपि तत्र तदादेरप्रसङ्गात्, उत्सर्गापवादयोस्समानदेशत्वभङ्गापत्तेश्च; नापि प्रत्ययग्रहणपरिभाषाया अपवादत्वाद् ग्रापि ग्रहणपदसम्बन्धेनानुपसर्जनस्त्रीप्रत्ययबोधके तत्पदघटिते शास्त्रे तदादिविधिर्नेत्यर्थः, 'ष्यङस्सम्प्रसारणमि'तिसूत्रघटकष्यङ्पदस्यानुपसर्जनपरमकारीपगन्ध्याघटकष्यङ्बोधकत्वेन तदादिनियमाभावे ष्यङन्तपूर्वपदस्येत्यर्थे परमकारीपगन्धीपुत्र इत्यत्र सम्प्रसारणोपपत्तावप्यतिकारीपगन्ध्यापुत्र इत्यत्रापि सम्प्रसारणापत्तिः, तत्रापि ष्यङन्तपूर्वपदस्य सत्त्वात्; इति चेत्, अत्र वदन्ति—'ष्यङस्सम्प्रसारणमि'तिसूत्रे ष्यङ्पदे आवृत्तिः, एकमनुपसर्जनतात्पर्यकम्, अपरमुपसर्जनतात्पर्यकम्। तत्रानुपसर्जनतात्पर्यके एषा तदादिनियमं वारयति, ततश्चानुपसर्जनष्यङन्तपूर्वपदस्य सम्प्रसारणमित्यर्थेन परमकारीपगन्धीपुत्र इत्यत्र सम्प्रसारणम्; उपसर्जनष्यङन्ततात्पर्यके ष्यङ्पदे तदादिनियमेनोपसर्जनष्यङन्ततदादिपूर्वपदस्येतिद्वितीयोऽर्थः, तथा च अतिकारीपगन्ध्यापुत्र इत्यत्र पूर्वपदस्य तदादित्वाभावादुपसर्जनवाक्यस्य, ष्यङ उपसर्जनत्वादनुपसर्जनवाक्यस्य चाप्राप्त्या सम्प्रसारणाभावः। न चोपसर्जनवाक्यस्यानर्थक्यम्, कारीपगन्ध्या इव मनुष्य इत्यर्थे कनो लुपि ष्यङ उपसर्जनत्वेन कारीपगन्धीपुत्र इत्यत्र चारितार्थ्यात्। उपसर्जनत्वञ्च प्रकृते न शास्त्रीयं, प्रत्ययमात्रे तदसम्भवात्; नापीतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वं तत, परमकारीपगन्धीपुत्र इत्यत्रापि ष्यङ उपसर्जनत्वापत्तेः; अपि तु स्वान्तसमुदायपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकताप्रयोजकत्वम्। एवं यस्य प्रत्यय-

स्योपसर्ज्जनत्वमिष्टं तत् । कनलुबन्तष्यङन्तसमुदायपर्याप्तशक्तिनिरूपकार्थः कारीषगन्ध्यासदृशः, अतिकारीषगन्ध्यापुत्र इत्यत्र कारीषगन्ध्याकर्मकातिक्रमणकर्त्ता, तन्निष्ठविशेष्यतानिरूपितप्रकारता कारीषगन्ध्यापदार्थे करीषगन्धसदृशगन्धविशिष्टसम्बन्धिस्त्रीत्वविशिष्टापत्यरूपे, तदवच्छेदकता स्त्रीत्वे, तत्प्रयोजकत्वं ष्यङ इति लक्षणसमन्वयः । तथैवातिकारीषगन्ध्येत्यत्रापि बोध्यम् । परमकारीषगन्धीपुत्र इत्यत्र च स्वान्तसमुदायः परमकारीषगन्ध्या, तन्निष्ठशक्तिनिरूपकार्थः परमाभिन्नकरीषगन्धवत्सम्बन्धिस्त्रीत्वविशिष्टापत्यरूपः, तन्निष्ठविशेष्यतानिरूपितप्रकारता परमपदार्थे, तदवच्छेदकता टावर्थस्त्रीत्वे, तत्प्रयोजकत्वं टापो न तु ष्यङ इत्यनुपसर्ज्जनत्वन्तस्य बोध्यम् ।

अथवा अस्मिन् कल्पे आवृत्त्याश्रयणरूपगौरवभयेन स्त्रीप्रत्ययबोधकपदघटिते शास्त्रेऽनुपसर्ज्जनेनेत्यस्योपस्थितिरित्यर्थः, न तु तत्र तदादेरुपस्थितिस्तस्यानया बाधात् । अनुपसर्ज्जनेनेति तृतीयार्थोऽभेदः, तथा चानुपसर्ज्जनष्यङन्तपूर्वपदस्य सम्प्रसारणमित्येक एवार्थः । परमकारीषेत्यत्रानुपसर्ज्जनत्वात्सम्प्रसारणम्, अतिकारीषगन्ध्यापुत्र इत्यत्रोपसर्ज्जनत्वात्सम्प्रसारणाभावश्चोपपद्यते । न च कनलुबन्तकारीषगन्धीपुत्र इत्यत्रोक्तरीत्योपसर्ज्जनत्वेन सम्प्रसारणाभावप्रसङ्ग इति वाच्यम्, इष्टत्वात् । पूर्वकल्पादत्रकल्पे फलभेदस्त्वकिञ्चित्कर एव, गौरवस्यैव पूर्वकल्पे कनलुबन्ते सम्प्रसारणापत्तेरपि बाधकस्य वक्तुं शक्यत्वात् । फलैक्याग्रहे तु अस्मिन् कल्पे उपसर्ज्जनत्वं स्वान्ततदाद्यव्यवहितपूर्वपदप्रयोज्यविशेष्यतानिरूपितप्रकारतावच्छेदकताप्रयोजकत्वम् । कनलुबन्ते स्वान्ततदाद्यवधिकपूर्वपदस्याभावात्, परमकारीषगन्धीत्यत्र ष्यङन्ततदाद्यवधिकपूर्वपदं परमपदन्तत्प्रयोज्यप्रकारताया एव सत्त्वत्र तु विशेष्यताया इति उभयत्र विशेषणाभावप्रयुक्तो विशिष्टाभाव इत्यनुपसर्ज्जनत्वम् । अतिकारीषगन्ध्येत्यत्र पूर्वपदप्रयो-

ज्यातिक्रमणकर्तृनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकत्वप्रयोजकत्वरूपोपसर्जनत्वस्यैव सत्त्वेन न सम्प्रसारणमिति विभावयन्तु। नन्वेकदेशिसमासस्य कर्मधारयमाश्रित्य तत्प्रत्याख्यानस्य च फलैक्यानापत्तिः, तथा हि—पिप्पल्या अर्धमर्धपिप्पलीत्यारम्भपक्षे पूर्वपदार्थस्यार्धस्य प्राधान्यात्स्वान्तसमुदायोऽर्द्धपिप्पलीरूपः, तत्पर्याप्तशक्तिनिरूपकार्थः पिप्पल्यर्धरूपः, तन्निष्ठविशेष्यतानिरूपिता प्रकारता पिप्पलीनिष्ठा, तदवच्छेदकत्वं स्त्रीत्वे, तत्प्रयोजकत्वरूपोपसर्जनत्वं ङीप इत्यनुपसर्जनेनेत्यस्योपस्थितिकल्पे 'हल्ङ्याब्भ्य' इत्यस्यानुपसर्जनभूतौ यौ ङ्याषौ तदन्तो यस्सुतिसीत्येतत्सम्बन्धितदादिस्ततः परस्य सु-ति-सिरूपस्य हलो लोप इत्यर्थेन सुलोपो न प्राप्नोति; अर्द्धा चासौ पिप्पलीति कर्मधारये परमकारीषगन्धीत्यत्रेवानुपसर्जनत्वेन सुलोपः प्राप्नोतीति फलभेदः स्पष्ट एव; एवं गोवक्रयणीतिपूर्वपदार्थप्रधानकर्मधारयेऽप्युक्तरीत्योपसर्जनत्वेनानुपसर्जनेनेत्यस्योपस्थितिकल्पे सुलोपानापत्तिश्च; इति चेत्—न, अवयवावयविभावसम्बन्धेतरसम्बन्धावच्छिन्नाया एव प्रकारताया ग्रहणेनाद्ये प्रकारताया अवयवावयविभावसम्बन्धावच्छिन्नत्वेन अन्त्ये अभेदस्य सम्बन्धत्वाभावेन सम्बन्धावच्छिन्नत्वस्याभावेन अनुपसर्जनत्वेनादोषात्। स्वान्ततदाद्यवधिकपूर्वपदपर्याप्तप्रयोजकता ग्राह्या, तेन परमा कारीषगन्ध्या यस्या इति बहुव्रीहौ पूर्वपदे अन्यपदार्थनिष्ठविशेष्यताप्रयोजकताया अपर्याप्त्या सत्त्वेऽपि न तादृशविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकस्यापि ष्यङ उपसर्जनत्वमिति तादृशपरमकारीषगन्धीपुत्र इत्यादौ सम्प्रसारणसिद्धिः। नन्वेवमावृत्तिकल्पे निरुक्तस्थले स्वान्तसमुदायः परमकारीषगन्ध्यारूपः, तत्पर्याप्तशक्तिनिरूपकार्थोऽन्यपदार्थः, तन्निष्ठविशेष्यतानिरूपितप्रकारता कारीषगन्ध्यानिष्ठा, तदवच्छेदकता स्त्रीत्वनिष्ठा, तत्प्रयोजकत्वस्यैव ष्यङस्सत्त्वेनानुपसर्जनवाक्यस्य न

प्रवृत्तिः; नाप्युपसर्ज्जनवाक्यस्योपसर्जनष्यङन्ततदादिरूपपूर्वपदत्वाभावादिति फलभेदः इति चेत्—न, सम्प्रसारणाभावस्यैव तत्रेष्टत्वात्। अनेन सह फलैक्यायानुपसर्ज्जनेनेत्युपस्थितिकल्पेऽपि सम्प्रसारणाभावस्यैवेष्टत्वेन प्रयोजकतायां पर्य्याप्तेरनिवेश एव। न चैवं परमकारीषगन्धीपुत्र इत्यादौ विशिष्टार्थनिरूपितैकार्थीभावरूपशक्तेस्समुदाये सत्त्वेन तत्रत्यसकलविषयताप्रयोजकतापर्य्याप्तेस्समुदाये सत्त्वेन पुत्रत्वावच्छिन्नविशेष्यताप्रयोजकतापि समुदायपर्याप्ता, सा परमरूपपूर्वपदेऽप्यस्ति, ततश्च स्वान्ततदाद्यवधिकपूर्वपदं परमरूपं, तन्निष्ठप्रयोजकतानिरूपितप्रयोज्यतावद्विशेष्यता पुत्रत्वावच्छिन्ना, तन्निरूपितप्रकारता कारीषगन्ध्यानिष्ठा, तदवच्छेदकता स्त्रीत्वनिष्ठा, तत्प्रयोजकत्वरूपोपसर्ज्जनत्वस्यैव ष्यङस्सत्त्वेन सम्प्रसारणानापत्तिरिति वाच्यम्; स्वविशिष्टविशेष्यतानिवेशेनादोषात्, वैशिष्ट्यञ्च स्वान्ततदाद्यवधिकपूर्वपदप्रयोज्यत्व-स्वोत्तरपदपर्य्याप्तप्रयोजकतानिरूपितप्रयोज्यत्वाभाववत्त्वोभयसम्बन्धेन; पुत्रत्वावच्छिन्नविशेष्यतायाश्च स्वोत्तरपुत्रपदपर्याप्तप्रयोजकतानिरूपितप्रयोज्यत्वस्यैव सत्त्वेन लक्षणघटकत्वाभावादिति दिक्।

अथवा स्त्रीप्रत्यय इत्यस्य स्त्रीप्रत्ययान्ततदादावित्यर्थः, अनुपसर्ज्जन इति स्त्रीप्रत्ययान्ततदादेर्विशेषणं, शास्त्रीयमेव चोपसर्जनत्वं ग्राह्यं, तथा चानुपसर्ज्जने स्त्रीप्रत्ययान्ततदादौ सति तदादिनियमो नेत्यर्थः; अधिकव्यावर्त्तको नेति यावत्; तदादिघटिते तदादित्वारोप इति तत्त्वम्। एवञ्च कारीषगन्ध्यारूपतदादिघटिते परमकारीषगन्ध्याशब्दे तदादित्वारोपेण ष्यङन्ततदादिरूपपूर्वपदस्य परमकारीषगन्ध्याशब्दस्य सम्प्रसारणसिद्धिः, अतिकारीषगन्ध्येत्यत्र ष्यङन्ततदादेरुपसर्ज्जनत्वेन तद्घटिते समुदाये तदादित्वारोपाभावात् न सम्प्रसारणं, कन्लुबन्ते च स्वत एव तदादित्वमिति सर्वमवदातम्।

विषयसप्तमी । यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाह तत्र तदादिनियमो न, यस्त्वप्राधान्येनाह तत्र तदादिनियमोऽस्त्येवेत्यर्थः। प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम् । तेनातिराजकुमारिरित्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थे प्रत्युपसर्जनत्वेऽपि तदर्थं प्रत्यनुपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः।

---

विषयसप्तमीति—सत्सप्तमीत्यर्थः। स्त्रियं प्राधान्येनाहेति—स्त्रीत्वं पूर्वोक्तप्रकारतावच्छेदकतया नाहेत्यर्थः। अप्राधान्येनेत्यस्य तादृशप्रकारतावच्छेदकतयेत्यर्थः । प्रत्यासत्त्येति । अयम्भावः-अतिराजकुमारिरित्यत्र स्वान्ततदादिः कुमारीशब्दः, तदवधिकपूर्वपदमतिपदं, तत्प्रयोज्यविशेष्यतातिक्रमणकर्तृनिष्ठा, तन्निरूपितप्रकारता कुमारीनिष्ठा, तदवच्छेदकता स्त्रीत्वे, तत्प्रयोजकत्वरूपोसर्ज्जनत्वं ङीपः । एवमाद्यकल्पेऽपि स्वान्तसमुदायोऽतिराजकुमारीशब्दः, तत्पर्य्याप्तशक्तिनिरूपकोऽर्थः राजकुमारीकर्मकातिक्रमणकर्त्ता, तन्निष्ठविशेष्यतानिरूपितप्रकारता कुमारीनिष्ठा, तदवच्छेदकताप्रयोजकत्वरूपोपसर्ज्जनत्वं ङीपः। 'गोस्त्रियोरुपसर्ज्जनस्ये'त्यस्यानुपसर्ज्जनेनेत्युपस्थितिकल्पे अनुपसर्ज्जनाभिन्नो यस्त्रीप्रत्ययस्तदन्तं यदुपसर्ज्जनन्तदन्तसमासस्य ह्रस्वः। एवमेवाद्यकल्पे अनुपसर्ज्जनवाक्यस्याप्यर्थः। उपसर्ज्जनवाक्यस्य चोपसर्ज्जनस्त्रीप्रत्ययान्ततदादिरूपं यदुपसर्ज्जनन्तदन्तस्य ह्रस्व इत्यर्थः। प्रकृते ङीप उपसर्ज्जनत्वेनाद्यपक्षयोर्ह्रस्वाप्राप्तिः स्पष्टैव; अन्तिमपक्षे उपसर्ज्जनस्त्रीप्रत्ययो ङीप्, तदन्ततदादिः कुमारीशब्दः, तच्च नोपसर्ज्जनं, यदुपसर्ज्जनं राजकुमारीशब्दो न स उपसर्जनस्त्रीप्रत्ययान्ततदादिरिति ह्रस्वाप्राप्तिरिति

अतएवात्र परिभाषायां न शास्त्रीयमुपसर्जनत्वम्, असम्भवात्।

अस्याः 'प्रत्ययग्रहणे' इत्यस्यापवादत्वात्तदेकवाक्यतापन्नत्वादत्रापि ग्रहणपदसम्बन्धेन स्त्रीप्रत्ययसामान्यग्रहणे विशेष-

---

शङ्का। समाधानन्तु—प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेतव्यं तद्धटकं पूर्वपदं विवक्ष्यते, स्त्रीप्रत्ययान्तत्वञ्च राजकुमारीशब्दे आनेतव्यं, न तद्धटकोऽतिशब्दः, अपि तु राजन्शब्दः, तत्प्रयोज्यविशेष्यताया अभावादनुपसर्ज्जनत्वमेव ङीपः। आद्यकल्पेऽपि स्वान्तसमुदायस्स एव गृह्यते यस्य स्त्रीप्रत्ययान्तत्वमानेतव्यम्; स च राजकुमारीशब्द एव, तन्निष्ठशक्तिनिरूपकोऽर्थो राजसम्बन्धिकुमारीरूपः, तन्निष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकताप्रयोजकता न ङीप इत्यनुपसर्ज्जनत्वमेवेति न दोष इति।

अतएवेति—प्रत्ययमात्रस्योपसर्ज्जनत्वविवक्षणादेवेत्यर्थः। असम्भवादिति—प्रत्ययमात्रस्यासम्भवादित्यर्थः। नन्विदं न युक्तम्, अस्य स्त्री ई याः निष्क्रान्ता निरिरित्यत्र प्रत्ययमात्रस्यापि तत्सम्भवात; न च तस्य तत्त्वे फलाभावः, निरेरपत्यमित्यर्थे स्त्रीप्रत्ययान्ततदादेर्ढगित्यर्थकात् 'स्त्रीभ्यो ढगि'तिसूत्रात निरिशब्दाड्ढगभावस्यैव फलत्वसम्भवात्, उपसर्ज्जने तदादिनियमान्निरिशब्दस्य स्त्रीप्रत्ययान्ततदादित्वाभावात; इति चेत्—न, अतिकारीषगन्ध्यापुत्र इत्यत्र प्रत्ययमात्रस्य तदसम्भवादित्यर्थात स्त्रीबोधकाड्ढगित्यर्थस्यैव 'ढकि लोप'इत्यनेन ज्ञापनसम्भवेन फलाभावाच्च स्त्रीप्रत्ययान्त एवानुपसर्ज्जनत्वान्वयस्य पूर्वमुक्तत्वेन शास्त्रीयस्यापि ग्रहणे न दोष इत्यपि प्रागुक्तन्न विस्मर्त्तव्यमिति दिक्।

स्त्रीप्रत्ययसामान्यग्रहणे इति—स्त्रीप्रत्ययत्वावच्छिन्नबोधके इत्यर्थः, यथा 'गोस्त्रियोरुपसर्ज्जनस्ये'त्यादौ। विशेषणग्रहणे इति-

ग्रहणे च प्रवृत्तिर्न तु स्त्रीप्रत्ययात्स्त्रीप्रत्ययग्रहणे। ध्वनितं चेदम् 'अर्थवत्'सूत्रे भाष्ये।

इयञ्च वाचनिकयेव 'ष्यङ'इतिसूत्रे भाष्ये स्पष्टा ॥ २६ ॥

नन्वेवं 'तरप्तमपौ घ'इत्यादिना तरबन्तादेः संज्ञा स्यादत आह—

**संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७ ॥**

---

स्त्रीप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकपदे इत्यर्थः, यथा 'ष्यङस्संप्रसारणमि'त्यादौ। न तु स्त्रीप्रत्ययात्स्त्रीप्रत्ययग्रहणे इति- उक्तस्थलद्वयातिरिक्ते स्त्रीप्रत्ययवृत्तिविषयताप्रयोजके नेत्यर्थः। अर्थवत्सूत्रे इति—तत्रत्यप्रत्ययपदस्यापि स्त्रीप्रत्ययवृत्तिविषयता- प्रयोजकत्वेनैतत्परिभाषया अनुपसर्जने तदादिनियमाभावेन राजकुमारीतिसमासस्य प्रत्ययान्तत्वेन पूर्वेणाप्राप्तप्रातिपदिकत्व- विधानाय चारितार्थ्यसम्भवे समासग्रहणस्य नियमार्थत्वोक्तिर- सङ्गता स्यादिति तत्र तदप्रवृत्तिर्ध्वनितेति भावः।

वाचनिकयेवेति। भाष्यकारेण ज्ञापकत्वोपन्यस्तमिति भावः, न तु ज्ञापकत्व सम्भवतीति; अङ्गसंज्ञासूत्रे 'नेयङुवङ्स्थानावस्त्री'- रयतोऽस्त्रीपदस्य सम्बन्धस्तस्य स्त्रीबोधकभिन्नोऽर्थस्तस्य च प्रत्यय अन्वयः, स्त्रीबोधकश्च 'प्रधानाप्रधान'न्यायेनानुपसर्जन एव गृह्यते, तथा चानुपसर्जनस्त्रीबोधकभिन्नप्रत्यये गृह्यमाणे तदादिरित्युप- तिष्ठत इत्यर्थादनुपसर्जनस्त्रीप्रत्यये तदादिनियमालाभादियं परि- भाषा लब्धेतिज्ञापनसम्भवात ॥ २६ ॥

नन्वेवमिति—प्रत्ययग्रहणपरिभाषायास्स्वीकार इत्यर्थः। संज्ञाविधाविति। ननु कोऽस्या अर्थः? संज्ञाविधायकशास्त्रघटकं

प्रत्ययबोधकं पदन्तदन्तबोधकन्नेत्येव यद्यपि शब्दमर्यादया लभ्यते, परन्त्वस्मिन्नर्थे प्रातिपदिकसंज्ञाविधायकशास्त्रघटकं प्रत्ययबोधकं प्रत्ययपदमपि तदन्तबोधकन्न स्यात्, तथा च प्रत्ययान्तभिन्नमित्यर्थो न स्यात्; नापि संज्ञानिष्ठविधेयतया साक्षान्निरूपिता योद्देश्यता तत्प्रयोजकं प्रत्ययबोधकं पदन्तदन्तबोधकन्नेत्यर्थः, प्रातिपदिकसंज्ञया साक्षान्निरूपितोद्देश्यतायाः प्रयोजकमर्थवत्पदन्न तु प्रत्ययपदमिति न तत्र निषेध इति युक्तम्, 'कृदतिङि'त्यादौ कृत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितोद्देश्यतायाः प्रयोजकत्वस्याभावात्तिङ्पदे तदन्तबोधकत्वापत्तेः; अत्रोच्यते—संज्ञानिष्ठविधेयतया साक्षान्निरूपिता प्रत्ययत्वव्याप्यधर्मेण साक्षादवच्छिन्ना योद्देश्यता तत्प्रयोजकशास्त्रघटकं प्रत्ययबोधकं पदन्तदन्तबोधकन्नेत्यर्थः। 'अर्थवत्'सूत्रे विधेयतया साक्षान्निरूपितायाः प्रत्ययत्वेन साक्षादवच्छिन्नत्वाभावान्न निषेधः; कृदतिङि'त्यादौ च कृत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितायास्तस्याः प्रत्ययत्वेन साक्षादवच्छिन्नतया तत्प्रयोजकशास्त्रघटकत्वात्तिङ्पदे निषेधः।

अथवा संज्ञानिष्ठविधेयतया साक्षान्निरूपितप्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताप्रयोजकं पदन्तदन्तबोधकन्नेत्यर्थः। अर्थवत्सूत्रे प्रत्ययत्वावच्छिन्नोद्देश्यतायाः संज्ञानिष्ठविधेयतया साक्षान्निरूपितत्वविरहान्न निषेधः। 'कृदतिङि'त्यादौ तिङ्त्वावच्छिन्नोद्देश्यतायाः कृत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितत्वविरहेण निषेधाप्रवृत्तावपि प्रत्ययग्रहणेनैव तिङन्ततदादि भवतीत्यादिव्यावृत्तौ तदन्तविधिना तिङन्ततदादिव्यावर्त्तकातिङ्पदस्य वैयर्थ्यापत्त्या सामर्थ्यात्तदन्तविध्यभावः। न च व्यतिसे इत्यत्र सेमात्रस्य प्रत्ययत्वेऽपि व्यपदेशिवद्भावेन तिङन्ततदादित्वात्तद्व्यावर्त्तनार्थमतिङ्ग्रहणमस्त्विति वाच्यम्, 'व्यपदेशिवदेकस्मिन्नि'त्यनेन स्वस्मिन् स्वघटकत्व-स्वघटितत्वयोरेवातिदेशस्य

लोकदृष्टान्तेन लाभात् स्वस्मिन् स्वान्ततदादित्वस्य तेन न्याये-नातिदेशाभावेनातिङ्पदवैयर्थ्यात् । सेमात्रप्रयोजनकत्वे 'न ह्येकमुदाहरणमि'तिन्यायेनातिङ्ग्रहणस्य वैयर्थ्यापादनं न सम्यक्, अशब्दादाचारक्विबन्तादाशिपि लिङि अतो लोपे यात् इत्यत्रापि प्रयोजनसम्भवात् 'न ह्येकमुदाहरणमि'तिन्यायस्य विषयाभावात्।

अथवा तिङन्ततदादिभिन्न इत्यर्थे प्रत्ययमात्रस्य कृत्संज्ञापत्तौ 'अकृत्सार्वधातुकयोर्दीर्घ'इत्यत्र कृद्ग्रहणेनैव सिद्धौ सार्वधातुकग्रहणस्य वैयर्थ्यापत्त्या अत्र तदन्तविध्यभावः कल्प्यत इत्यदोषः।

अथवा प्रत्ययमात्रोद्देश्यके संज्ञारूपे कार्ये तिङन्ततदादेः पर्युदासेन तिङ्पदस्य स्वबोध्यावयवपरत्वं, अवयवोद्देश्यककार्ये यत्र समुदायः पर्युदस्यते तत्र समुदायबोधकपदानां स्वावयवपरत्वात्, तथा च तिङन्ततदाद्यवयवभिन्नस्येत्यर्थेनादोषात्। अतएव 'नश्छव्यप्रशानि'तिसूत्रे प्रशान्शब्दस्य 'अत्वसन्तस्य चाधातो'रितिसूत्रस्थधातुपदस्य च स्वावयवपरत्वेन प्रशानशब्दावयवभिन्नस्य नस्येत्यर्थः, धात्ववयवभिन्नो योऽस् तदन्तस्योपधाया इत्यर्थः। 'षः प्रत्ययस्ये'त्यत्र प्रत्ययस्यादिः ष इदित्यर्थे प्रत्ययपदस्येत्संज्ञानिष्ठविधेयतया साक्षान्निरूपितोद्देश्यताप्रयोजकत्वाभावेन निषेधाप्राप्त्या प्रत्ययान्ततदाद्यादिः ष इत्यर्थापत्त्या षण्णामित्यादौ प्रकृतिषकारस्येत्त्वापत्तिस्तु न, प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारेणेत्संज्ञानिष्ठविधेयतया साक्षान्निरूपिताया आदित्वावच्छिन्नविषयताया अपि प्रत्ययत्वव्याप्यधर्मावच्छिन्नत्वेन तत्प्रयोजकं 'षः प्रत्ययस्ये'तिसूत्रन्तद्घटकप्रत्ययपदस्य तदन्तबोधकत्वाभावस्यानेन बोधनसम्भवात्। न चाद्यार्थे दोषाभावेऽपि द्वितीयार्थे दोष एव, प्रत्ययपदस्य तावतापि संज्ञानिष्ठविधेयतया साक्षान्निरूपितविषयताप्रयोजकत्वाभावादितिवाच्यम्, नागेशमते सूत्रान्तर्गतानामेवेत्संज्ञालोपयोस्सत्त्वेन 'प्राचांष्फस्तद्धित' इति

'सुप्तिङन्तमि'त्यन्तग्रहणमस्या ज्ञापकम् । न च प्रत्ययोः पदसंज्ञायामपि प्रत्ययग्रहणपरिभाषया तदन्तग्रहणसम्भवाज्ज्ञापितेऽपि फलाभाव इति वाच्यम्, पदसंज्ञायाः स्वादि-

---

सूत्रघटकं यत्प्रत्ययबोधकं ष्फपदं तद्बोधकत्वेऽपि 'षः प्रत्ययस्ये'ति-सूत्रघटकप्रत्ययपदस्य प्रत्ययबोधकत्वाभावेन प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या तदाद्युपस्थितेरेवाभावेन तदन्तविधेरप्रसङ्गात् । 'सामन्त्रितमि'त्यादौ आमन्त्रितेतिमहासंज्ञयाऽऽमन्त्रणं येन भवति तस्यैवामन्त्रितसंज्ञेतिबोधनात्तदन्तविधिः, प्रत्ययमात्रेणामन्त्रणस्यासम्भवात् । 'तद्धितश्चासर्वविभक्ति'रित्यत्रासर्वविभक्तिं विशेष्यमादाय तदन्तविधिः; तदादिविशेष्यकतदन्तविधेरेवानेन निषेधात्, अत्युच्चैसावित्यादौ लुगभावाय 'अव्ययादाप्सुप'इत्यादौ विहितविशेषणस्यावश्यकत्वेन प्रत्ययमात्रस्याव्ययसंज्ञायां फलाभावाच्च । अतएव कृन्मेजन्त इत्यत्र निषेधो न । 'कृत्तद्धितसमासाश्चे'-त्यत्रार्थवदनुवृत्तिसामर्थ्यात्तदन्तविधिः, कृत्तद्धितान्तञ्चैवार्थवदिति-भाष्येण कृत्तद्धितयोरर्थवत्त्वाभावादिति शेखरे स्पष्टम् । सर्वादिगणघटकडतरडतमप्रत्यययोस्तदन्तविध्युपायस्तु कौमुद्यामेव स्पष्टः । तथैव वतुडतिप्रत्यययोरपि तदन्तविधिः ।

वस्तुतस्तु नास्या उपयोगः । प्रत्ययग्रहणपरिभाषया तदादीति-प्रातिपदिकमात्रस्योपस्थितिः, तस्य यथा 'एङ्ह्रस्वादि'त्यत्रान्वयानुरोधेन पञ्चम्यन्तता तथा यत्रास्याः प्रवृत्तिरिष्यते तत्रापि पञ्चम्यन्ततैव, तथा च तदन्तविधेरप्राप्त्या न दोषः; स्वीकृतायामप्यस्यामनेकत्रानेकक्लिष्टकल्पनाया आवश्यकत्वेन तदपेक्षया परिभाषाया अकरणलाघवेन तदादेः पञ्चम्यन्तत्वकल्पनाया एव लघीयस्त्वात् ।

अन्तग्रहणमस्या ज्ञापकमिति—अस्या अभावे तदादिरूपवि-

न्वितिविषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात्। 'सुप्तिङन्तमि'तिसूत्रे भाष्ये स्पष्टा ॥ २७ ॥

नन्वेवमवतप्ते नकुलस्थितमित्यादौ नकुलस्थितशब्दस्य क्तान्तत्वाभावात्समासो न स्यादत आह—

**कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ २८ ॥**

---

शेष्यमादाय तदन्तविधौ सुबन्ततिङन्ततदादीत्यर्थस्यान्तग्रहणाभावेऽपि लाभादिति भावः। ननु अन्तग्रहणे सति तदादिविशेष्यकतदन्तविधिना सुप्तिङ्पदस्य सुबन्ततिङन्ततदादीत्यर्थः, सुप्तिङ्पदस्यान्तशब्देन बहुव्रीहौ सुबन्तान्ततिङन्तान्तयोः पदसंज्ञा; अन्तग्रहणाभावे सुबन्ततिङन्ततदादेरितिफलभेदात् कथं ज्ञापकमिति चेत्—न, अन्तग्रहणे सति तदादेरुपस्थितावपि अन्तविशेषणतयोपस्थितयोः सुप्तिङोस्तत्र विशेषणत्वायोगात्, 'एकत्र विशेषणतयान्वितस्यापरत्र विशेषणतयान्वयो ने'तिव्युत्पत्तेः; तथा च तदादेरेव सुप्तिङन्तेऽभेदेनान्वय इति फलैक्यसम्भवात् विशेष्यान्तरासत्त्वे इत्यस्य प्रकारान्तरेण तदन्तार्थलाभसम्भवे तदादिविशेष्यकतदन्तविधिर्नेत्यर्थः।

कुत्रचित् विशेष्यान्तरमादाय तल्लाभः, क्वचिदन्तग्रहणात्तल्लाभः, अतएव 'सनाद्यन्ता' इत्यत्र न तदादिविशेष्यकतदन्तविधिः, तथा च प्रकृते न तदादिविशेष्यकतदन्तविधिप्रयुक्तफलभेदाशङ्कापीत्यपि कश्चित् ॥ २७ ॥

नन्वेवमवतप्त इति—प्रत्ययग्रहणपरिभाषया क्तान्ततदादिप्रकृतिकसुबन्तेन सह सप्तम्यन्तः समस्यत इत्यर्थेन नकुलस्थितशब्दस्य क्तान्ततदादित्वाभावात् समासो न स्यादित्यर्थः। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति—कृन्मात्रनिष्ठविषयताप्रयो-

अस्याश्च कर्मणि क्तान्त उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इत्यर्थके 'गतिरनन्तर'इति सूत्रेऽनन्तरग्रहणं ज्ञापकम्, तद्धि अभ्युद्धृतमित्यादावभावतिव्याप्तिवारणार्थम्, प्रत्ययग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाप्राप्तौ तद् व्यर्थं सदस्या ज्ञापकम्। न चाभ्युद्धृतमित्यादौ परत्वाद्गतिर्गतावित्यनेनाभेर्निघात एवेति वाच्यम्, पादादिस्थत्वेन पदात्परत्वाभावेन च

---

जकं पदं कृद्विशिष्टे लाक्षणिकमित्यर्थः। वैशिष्ट्यञ्च स्वनिष्ठचरमावयवतानिरूपकत्व-स्वविशिष्टाघटितत्वोभयसम्बन्धेन, पुनर्वैशिष्ट्यं स्वेतरत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाव्यवहितपूर्वत्वविशिष्टगतिकारकान्यतरेतरत्वैतत्त्रितयसम्बन्धेन; एवंभूतो नकुलस्थितशब्दः, समन्वयः स्पष्टः। लक्ष्यतावच्छेदकेन कृत्प्रत्ययविशिष्टत्वेनैव कृदन्ततदादेः गतिकारकविशिष्टस्य तस्य च ग्रहणम्। अथवोक्तसम्बन्धैः कृद्विशिष्टे कृदन्ततदादित्वारोपोऽनया बोध्यते ततश्च कृदन्ततदादित्वेनैवोभयोर्बोधः। एतेन शाब्दबोधे शक्तिलक्षणाज्ञानस्य हेतुत्वात्तदभावेन परिभाषया बोधितोऽपि गतिकारकपूर्वस्य बोधोऽयुक्त एवेत्यपास्तम्।

ज्ञापितेऽपि कथं चरितार्थमित्याह—न चाभ्युद्धृतमित्यादाविति। पदात्परत्वाभावेन चेति। नन्विदमयुक्तं, 'कुत्सने च सुप्यो'त्यतः प्रागेव 'पदादि'त्यस्य निवृत्तेरन्यत्र स्पष्टत्वात्, 'गतिर्गता'वित्यस्य च ततः परत्वादिति चेत्, अत्र चन्द्रिकाकाराः—चो हेतौ, यतः पदात्परत्वाभावोऽतः पादादिस्थत्वमिति व्याचख्युः—तन्न, पदात्परस्यापि श्लोकद्वितीयपादादेः पदस्य पादादिस्थत्वेन पदात्परत्वाभावस्य पादादिस्थत्वं प्रति व्यभिचरितत्वेन हेतुत्वा-

तदप्राप्तेः। अनन्तरग्रहणे कृते तु तत्सामर्थ्याद्रत्याक्षिप्तधातु-निरूपितमेवानन्तर्यं गृह्यते इति न दोषः। न चाभ्युद्धृतमित्यादावभिना समासेऽनन्तरस्योदः पूर्वपदत्वाभावेऽपि स्वरार्थं तदिति वाच्यम्, 'कारकाद्दत्ते'तिसूत्रे कारकादितियोगं विभज्य गतिग्रहणमनुवर्त्य कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदा-

---

सम्भवात्; तस्मादयुक्तमेवैतदिति परे। न च परिभाषायां सत्यामुद्धृतशब्दस्य क्तान्तपदेन ग्रहणे तदनन्तरत्वमेवाभेरिति कथं लब्ध्यावृत्त्या चरितार्थमनन्तरग्रहणमित्यत आह—सामर्थ्यादिति, अनन्तरग्रहणसामर्थ्यादित्यर्थः। 'यावता विना न चारितार्थ्यं तावज्ज्ञाप्यमि'तिन्यायादिति भावः। न च गतिसमभिव्याहारेऽनया विशिष्टस्यैव कर्मक्तान्तपदेन ग्रहणे तदव्यवहितपूर्वस्य धात्वनन्तरत्वं बाधितमिति वाच्यं, पुनः सामर्थ्याद्गतिसंमभिव्याहारेऽपि क्तान्ततदादेरेव ग्रहणमित्यस्य 'कृद्ग्रहण इत्यस्य मूल एव स्पष्टत्वात्।

अनन्तरग्रहणस्य परिभाषाज्ञापनमन्तरापि चारितार्थ्यं शङ्कते—**न चाभ्युद्धृतमित्यादावभिनेति**। न चोद्धृतशब्दस्याभिना समासेऽपि उद्धृतरूपसमासीयपूर्वपदत्वमुदोऽक्षतमेवेति कथमपूर्वपदत्वन्तस्येति वाच्यम्; उद्धृतरूपसमासीयपूर्वपदत्वमादाय प्रवृत्तं 'गतिरनन्तर' इति सूत्रं तत्समासीयथाथादिस्वरस्यैव प्रत्यासत्त्या बाधकं स्यान्नत्वभ्युद्धृतेतिसमासीयस्य बहिरङ्गत्वादिति विशिष्टसमासीयथाथादिस्वरबाधनार्थं तत्समासेऽपि 'गतिरनन्तर'इति सूत्रं प्रवर्तनीयं तत् समासापूर्वपदत्वाच्च न प्राप्नोति; उक्तरीत्याऽनन्तरग्रहणसामर्थ्यादनन्तरमात्रस्य भवतीत्यर्थबोधनद्वारा अपूर्वपदत्वेऽपि स्वरार्थमस्तु, न परिभाषायां ज्ञापकमित्याशयात्।

त्वमितिनियमेन थाथादिस्वराप्राप्त्या कृत्स्वरेणोद् उदात्तत्व-सिद्धेः। तस्मादन्तरग्रहणं व्यवहितनिवृत्त्यर्थमेवेति ज्ञापकमेव।

यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहणमपिशब्दात्तदसमभिव्याहृतस्य केवलस्यापीत्यर्थः; अन्यथानया कृद्ग्रहणविषये परत्वात् प्रत्ययग्रहण-

---

अभ्युद्धृतं पुरोहितमित्यादौ समासस्वरः प्राप्तस्तम्बाधित्वाऽव्ययपूर्वपदप्रकृतिस्वरस्तम्बाधित्वा 'गतिकारकोपपदादि'तिकृत्स्वरस्तम्बाधित्वा थाथादिस्वरः प्राप्तस्तम्बाधित्वा 'गतिरनन्तर'इतिप्रकृतिस्वर इति स्वरप्रक्रिया। अभ्युद्धृतमित्यत्र 'गतिरनन्तर' इत्यस्याभावे थाथादिस्वरेणान्तोदात्तत्वं स्यात, तच्चेत् 'कारकादेव परमि'तिनियमेन वारितं, तदा 'गतिकारकोपपदात्कृत्' इत्यनेन प्रकृतिस्वरेण उद् उदात्तत्वसिद्ध्यां तत्र 'गतिरनन्तर'इत्यस्याप्रवृत्तावपि क्षतिविरह इति भावः। न चास्यामवस्थायां परिभाषाया अभावेन उद्धृतशब्दस्य कृदन्ततदादित्वक्तान्ततदादित्वविरहात् कृत्स्वरस्य थाथादिस्वरस्य वा न प्राप्तिरिति वाच्यम्, 'वनोरचे'त्यादाविवात्रापि उत्तरपदं विशेष्यमादाय द्वितीयतदन्तविधिना कृदन्तान्तमुत्तरपदमित्याद्यर्थस्वीकारेणादोषात्।

अपिशब्दात् तदसमभिव्याहृतस्येति। यद्यपि नेयमपिशब्दस्य मर्यादा, ब्राह्मणमानय शूद्रमप्यानयेत्युक्तौ ब्राह्मणसत्त्वेऽपि शूद्रस्यानयनं प्रतीयते न तु तदसत्त्व एव, तथा च तदसमभिव्याहार इत्यसङ्गतं, तथाप्यग्रिमभाष्यात्तदसमभिव्याहार इत्यंशस्य लाभेनादोषात्। अन्यथा—अपिशब्दाभावे। परत्वादित्यस्यापवादत्वादित्यर्थः; यथाश्रुतन्तु न युक्तम्, अन्यत्रास्याः चारितार्थ्याभावात्। यत्तु—व्यावक्रोशीत्यत्र 'स्त्रीप्रत्यय'इतिनिषेधेन प्रत्यय-

परिभाषाया बाध एव स्यादित्यपिग्रहणम् । अतएव साङ्कूटिनमिति 'गतिकारकोपपदानामि'ति 'कृद्ग्रहण' इति च परिभाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाणि सिध्यति, न तु सङ्कौटिनमितीति 'पुंयोगादि'तिसूत्रे भाष्योक्तं सङ्गच्छते, अन्यथा तत्र केवलं कूटिन्नित्येतस्यापीनुणन्तत्वात्ततोऽणि पाक्षिकदोषो दुर्वार एव स्यात् । स्पष्टा चेयं'समासेऽनञ्पूर्वे'इतिसूत्रे भाष्यकैयटयोः ।

'गतिरनन्तर' इत्यत्र तु गतेः पूर्वपदस्य क्तान्त उत्तरपदे परे कार्यविधानात्तत्समवधानेऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम् ।

---

ग्रहणपरिभाषाया अप्रवृत्त्या अस्याश्चारितार्थ्यमिति परत्वमपि सुवचमिति—तन्न, तत्रैतस्या अप्यप्रवृत्तौ दोषाभावेन चारितार्थ्यस्य साफल्यरूपस्याभावात् । अतएवेति—गतिसमभिव्याहारे केवलस्याग्रहणादेवेत्यर्थः ।

अहीनवाचिनि समासे क्तान्ततदादौ परे द्वितीयान्तं प्रकृत्येत्यर्थके 'अहीने द्वितीये'तिसूत्रे 'अनुपसर्ग' इति वक्तव्यं, 'नेह सुखप्राप्त' इति भाष्य उक्तं तदप्यस्या ज्ञापकम्, नहि परिभाषां विना सुखप्राप्त इत्यत्र द्वितीयान्तस्य क्तान्ततदाद्युत्तरपदाव्यवहितपूर्वत्वं सम्भवतीति केचित् ।

ननु गतिसमभिव्याहारे केवलकृदन्तस्याग्रहणे उद्धृतं पुरोहितमित्यादौ 'गतिरनन्तर'इति न स्यादत आह—गतिरनन्तर इत्यत्रेति । तत्समवधानेऽपि केवलस्येति । तत्र सूत्रसामर्थ्यात् केवलस्य ग्रहणेऽप्यन्यत्रोक्तभाष्यादग्रहणमेवेति भावः ।

इयं च कृद्विशेषग्रहणे कृत्सामान्यग्रहणे च, न तु कृदकृद्ग्रहण इति 'अनुपसर्जनादि'तिसूत्रे भाष्ये स्पष्टम् ॥ २८ ॥

पदाङ्गाधिकारे तस्य तदन्तस्य च ॥ २९ ॥

पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधिः । 'येन विधि'रित्यस्यायं प्रपञ्चः । तेनेष्टकचितं पक्केष्टकचितमित्यादौ 'इष्टकेषीकामालानां चित'इति ह्रस्वः, महान्परममहान् परमातिमहानित्यादौ 'सान्तमहत'इतिदीर्घश्च सिद्धः । अतएव तदुत्तरपदस्येतिपाठोऽयुक्त इति भाष्ये स्पष्टम् । अत्र पदशब्देनोत्तरपदाधिकारः केवलपदाधिकारश्च, 'पादस्य पदाज्याती'त्यत्र न तदन्तग्रहणं, लक्ष्यानुरोधादिति सर्वं 'येन विधि'रित्यत्र भाष्ये स्पष्टम् ॥ २९ ॥

नन्वेवमस्यापत्यमित्यादावदन्तप्रातिपदिकाभावादिञ् न स्यादत आह—

---

कृद्विशेषग्रहणे । 'क्षेप' इत्यादौ । सामान्यग्रहणे । 'कर्तृकरणे कृते'तिसूत्रे । न तु कृदकृद्ग्रहण इति । अतएव कौम्भकारेयासिद्धिर्द्वितीयतदन्तविधेः फलमुक्तं 'टिढ्ढे'तिसूत्रे भाष्ये ॥ २८ ॥

नन्वेवमिति—विशेषणेन तदन्तविधावित्यर्थः । अदन्तप्रातिपदिकाभावादिति । अन्तत्वं यत्किञ्चिद्विशिष्टत्वं, वैशिष्ट्यं स्वघटकत्व-स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्तित्वोभयसम्बन्धेन । आदित्वं यत्किञ्चिद्विशिष्टत्वं, वैशिष्ट्यञ्च स्वघटकत्व-स्वघटकवर्णध्वंसाधिकरणक्षणावृत्तित्वोभयसम्बन्धेन । मध्यत्वञ्च स्वघटकत्व-स्वघटकवर्णप्रागभावाधिकरणक्षणवृत्तित्व-स्वघटकवर्णध्वंसाधिक-

रणक्षणावृत्तित्वैतत्त्रितयसम्बन्धेन । घटकत्वञ्च स्वव्यापकत्व-स्वव्याप्यत्वाभाववत्त्वैतदुभयसम्बन्धेन यत्किञ्चिद्विशिष्टत्वम् । व्यापकत्वञ्च स्वाधिकरणवृत्त्यभावाप्रतियोगित्वम् । व्याप्यत्वञ्च स्वाभाववदवृत्तित्वम् । प्रकृते उभयत्राधिकरणता वृत्तिता प्रतियोगिता विषयितासम्बन्धावच्छिन्ना ग्राह्या, ज्ञानरूपाधिकरणमादाय लक्षणसमन्वयः । तथा अदन्तत्वादादित्वे अकारविशिष्टस्वरूपे, वैशिष्ट्यं स्वघटितत्व-स्वध्वंसाधिकरणक्षणवृत्तिवर्णाघटितत्वोभयसम्बन्धेन, स्वघटितत्व-स्वप्रागभावाधिकरणक्षणवृत्तिवर्णाघटितत्वोभयसम्बन्धेन । एवमकारमध्यकत्वमपि अकारविशिष्टत्वम्, वैशिष्ट्यञ्च स्वघटितत्व-स्वध्वंसाधिकरणक्षणवृत्तिवर्णाघटितत्व-स्वप्रागभावाधिकरणक्षणवृत्तिवर्णाघटितत्वैतत्त्रितयसम्बन्धेन बोध्यम् । घटितत्वञ्च स्वव्याप्यत्व-स्वव्यापकत्वाभाववत्त्वोभयसम्बन्धेन यत्किञ्चिद्विशिष्टत्वम् । अत्रापि व्यापकता व्याप्यता तद्घटकाधिकरणतादयश्च पूर्वोक्तस्वरूपा एव । पकारादौ रामशब्दादिघटकत्ववारणाय व्यापकत्वं, स्वस्मिन् स्वघटकत्ववारणाय व्याप्यत्वाभावो निवेशितः । प्रकृते चास्यापत्यमिरित्यादावद्विशिष्टत्वरूपमदन्तत्वमकारे नास्ति, द्वितीयसम्बन्धस्य सत्त्वेऽपि स्वघटितत्वसम्बन्धस्याभावात्; तथा चादन्तप्रातिपदिकत्वनिबन्धनमिञ् न स्यादितिपरिभाषा मन्तव्या। कुम्भशब्दे ककारमकाररूपवर्णद्वये आदित्वापादनं केनचित् कृतं न युक्तम्, तथाहि ककारे इष्टत्वात, मकारे स्वघटकवर्णध्वंसाधिकरणक्षणवृत्तित्वात्, ककारमकारातिरिक्तस्य ककारमकाररूपवर्णद्वयस्यानङ्गीकारात् । न च क-म-समुदाये आपाद्यते समुदायश्च स्वमतेऽतिरिक्त इति वाच्यम्, तादृशसमुदायत्वस्याव्यवहितोत्तरत्वसम्बन्धेन कविशिष्टमत्वस्य अव्यवहितपूर्वत्वसम्बन्धेन मविशिष्टकत्वस्य वा वक्तव्यतया तद्वतः कुम्भशब्दे अभावात् । न च 'आद्यन्तवदेकस्मिन्नि'तिसत्रेण आदित्वान्तत्व-

## व्यपदेशिवदेकस्मिन् ॥ ३० ॥

निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी, यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशोऽसहायः स तेन तुल्यं वर्त्तते कार्यं प्रतीत्येकस्मिन्नसहायेऽपि तत्कार्यं कर्त्तव्यमित्यर्थः। तेनाकारस्याप्यदन्तत्वान्न क्षतिः। एकस्मिन्नित्युक्तेः सभासन्नयन आकारस्य नादित्वं, दरिद्रा-

---

शरीरे घटकत्वानिवेशतात्पर्यकेण, सूत्रप्रत्याख्यानपरेण 'अपूर्वानुत्तरलक्षणाद्वे'तिवार्तिकेन वा सिद्धे परिभाषाया न प्रयोजनमिति वाच्यम्, प्रकृते सिद्धावपि धुगित्यादौ धातौ धात्ववयवत्वस्य सूत्रवार्तिकाभ्यामसिद्ध्या वार्त्तिकमते स्वस्मिन् स्वान्तत्वादिव्यवहारस्य मुख्यत्वापत्त्या च परिभाषायाः सूत्रवार्तिकोभयप्रत्याख्यानपराया अवतारस्यावश्यकत्वात्।

एकस्मिन्नित्यस्यासहाये इत्यर्थः। सभासन्नयनेत्यादिव्यावर्त्यत्रयप्रदर्शनेनातिदिश्यमानधर्मवदसमभिव्याहृतत्वे सति अतिदिश्यमानधर्मवदघटकत्वे सति अतिदिश्यमानधर्मवदघटितत्वमसहायत्वमिति ग्रन्थकृता सूचितम्। यद्यपि सभाकारेऽतिदिश्यमानसभासन्नयननिरूपितादित्वधर्मवत्सभासमभिव्याहृतत्वे नासहायत्वाभावान्न तन्निरूपितादित्वं; न वा सभासन्नयनशब्दे वृद्धत्वातिदेशः, अतिदिश्यमानवृद्धत्वधर्मवद्भासन्नयनघटितत्वेनासहायत्वाभावात्; न वा आसन्नयनशब्दे प्रातिपदिकत्वातिदेशः, अतिदिश्यमानप्रातिपदिकत्ववत्सभासन्नयनशब्दघटकत्वेन ससहायत्वात्; इत्यंशत्रयस्यैकत्रापि साफल्यं सम्भवति; तथापि स्पष्टार्थं त्रितयोपादानम्। दरिद्राशब्दघटकैकारे न दरिद्रानिरूपितान्तत्वं, न वा दरिशब्दे धातुत्वं, न वा दरिद्राशब्दे इवर्णान्तत्वं,

धातावविकारस्य नान्तत्वम्, अन्यथा संभासन्नयने भव इत्यर्थे 'वृद्धाच्छः' दरिद्रातेरिवर्णान्तलक्षणोऽच्च स्यात्। अतएव हरिष्वित्यादौ सोः पदत्वं न। लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन्

---

क्रमेणांशत्रयस्य व्यभिचारेण ससहायत्वात्। नापि हरिष्वित्यादौ सोः पदत्वं, पदत्वघटकत्वात्।

तथा च स्वविशिष्टे स्वस्यातिदेश इति परिभाषार्थः पर्यवसितः; वैशिष्ट्यं स्वाश्रयाघटकत्व-स्वाश्रयासमभिव्याहृतत्व-स्वाश्रयाघटितत्वैतत्त्रितयसम्बन्धेन। नन्वेवं रामादिशब्दे उक्तसम्बन्धत्रयेण जराशब्दान्तत्वविशिष्टे जराशब्दान्तत्वातिदेशापत्तिरिति चेत्—न, स्वमुखप्रविष्टधर्मवत्त्वात्मकचतुर्थसम्बन्धस्यापि निवेशनीयत्वात्; प्रकृते स्वं जराशब्दान्तत्वं, तन्मुखप्रविष्टं जरात्वं, तद्वत्ताविरहेणादोषात्। मुखप्रविष्टत्वञ्च स्वघटकनिष्ठावयवत्वव्याप्यधर्मावच्छिन्ना विशेष्यता तन्निरूपितप्रकारतावच्छेदकत्वम्, यथा जराशब्दान्तत्वमुखप्रविष्टं जरात्वम्, अदन्तत्वमुखप्रविष्टमत्वम्। अवयवत्वव्याप्यत्वनिवेशाद्धातौ धातुभिन्नत्वस्य नातिदेशः; धातुत्वस्य तत्र मुखप्रविष्टत्वाभावात्, केवलधातोः प्रयोगाभावेन समुदाये धातुभिन्नत्वरूपातिदिश्यमानधर्मस्य सत्त्वेन तदघटकत्वरूपसम्बन्धस्य तत्रासत्त्वाच्च। एवं भेदघटितधर्माणामतिदेशो निरसनीयः। ननु एकाच्त्वातिदेशो न स्यात् तत्रावयवत्वव्याप्यधर्मस्याभावेन मुखप्रविष्टधर्मस्याभावादिति चेत्—न, एकाज्निष्ठावयवतानिरूपकत्वस्यैवैकाच्त्वरूपत्वेनावयवत्वस्यैवावयवत्वव्याप्यत्वात्। एवमेव धात्ववयवस्याप्यतिदेशः तादात्म्यसम्बन्धेन धातौ, तेन धुगित्यादौ न दोषः। एतेनेकारादावजव्यवहितपूर्वत्वातिदेशेन यणापत्तिः, धुगित्यादौ धात्ववयवत्ववदकारघटितत्वेन ससहायत्वादतिदेशानापत्तिश्च केनचिदुक्ता निरस्ता; आद्ये मुखप्रविष्ट-

ज्येष्ठकनिष्ठत्वादिव्यवहारोऽयं मे ज्येष्ठः कनिष्ठो मध्यम इति, किन्त्वेकपुत्रसत्त्व एव ।

---

धर्माभावात्, एकपदप्रतिपाद्यस्य पूर्वत्वाद्यघटितस्यैव धर्मस्यातिदेश इत्यर्थस्यातिदेशमात्रस्वभावसिद्धत्वाच्च, इदानीमतिदिश्यमानधर्मवदघटितत्वस्यानिवेशाद्द्वितीयापत्तेरप्यभावाच्च । यदपि कुम्भशब्दादिककारे हल्द्वयघटितत्वातिदेशेन विशिष्टस्यैकहलादित्वानापत्तिरित्युक्तम्—तदप्यविचारसहम् ; व्यपदेशिसदृशं कार्यं लभत इत्युक्त्या कार्यप्रवृत्तये एवैतत्प्रवृत्तिलाभात् तस्यातिदेशेऽप्येकहलादित्वाक्षतेः, मुखप्रविष्टधर्माभावाच्चेत्यलं परदोषे दृष्टिपातेन । फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात् कर्मत्वमित्यस्य का गतिः तत्रमुखप्रविष्टधर्माभावादिति चेत्—अयुक्तमेव, तादात्म्यस्यापि फलतावच्छेदकसम्बन्धतास्वीकारेण कर्मत्वोपपत्तेः ।

परे तु—स्वस्मिन् स्वघटकत्वस्वघटितत्वयोरेवानयाऽतिदेशः। परिभाषार्थस्तु एकस्मिन् घटकत्वघटकव्यापकत्वसम्बन्धे घटितत्वघटकव्याप्यत्वसम्बन्धे सति सम्बन्धद्वये यथा घटकत्वघटितत्वप्रयुक्तं कार्यन्तथा भवतीति तावतैव अन्तत्वादित्वैकाच्त्वधात्ववयवत्वादिव्यवहारोपपत्तिरिति विभावनीयम् । इयान् इरित्यादौ च तद्धितान्तत्वस्य घटकत्वमात्रातिदेशेन लाभेऽपि तदादित्वालाभात् कार्यकालपक्षे प्रातिपदिकसंज्ञाया अप्राप्तावपि यथोद्देशपक्षे पूर्वजातप्रातिपदिकत्वस्यानुमानिकस्थान्यादेशभावकल्पनयातिदेशेन निर्वाहः । असहायत्वस्यानिवेशा'न्निजौ चत्वार एकाच'इतिभाष्यमप्युपपद्यते । ननु लोकन्यायसिद्धेयं परिभाषा, लोके च ज्येष्ठत्वादीनामप्यतिदेश इत्यनुपपन्नमिति चेत्—न, घटकत्वघटितत्वातिदेशेनैव ज्येष्ठत्वादिव्यवहारोपपत्तेः । तथाहि पितृविशिष्टविशिष्टत्वं ज्येष्ठत्वं कनिष्ठत्वं मध्यमत्वञ्च । आद्ये वैशिष्ट्यं सर्वत्र स्वजन्यघटितत्व-स्वाजन्याघटितत्वोभयसम्ब-

अनेन चाशास्त्रीयस्याप्यतिदेशः। अतएव इयायेत्यादा-

न्धेन। अन्त्ये वैशिष्ट्यं ज्येष्ठत्वे स्वघटकत्व-स्वघटकोत्पत्ति-ध्वंसाधिकरणक्षणावृत्त्युत्पत्तिकत्वोभयसम्बन्धेन, कनिष्ठत्वे स्वघटकत्व-स्वघटकोत्पत्तिप्रागभावाधिकरणक्षणावृत्त्युत्पत्तिकत्वोभयसम्बन्धेन, मध्यमत्वे स्वघटकत्व-स्वघटकोत्पत्तिध्वंसाधिकरणक्षणावृत्त्युत्पत्तिकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व-स्वघटकोत्पत्तिप्रागभावाधिकरणक्षणावृत्त्युत्पत्तिकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वैतत्त्रितयसम्बन्धेन। आद्याभावनिवेशाज्ज्येष्ठे नातिव्याप्तिः, द्वितीयाभावनिवेशात्कनिष्ठे नातिव्याप्तिः। एकपुत्रसत्त्वे घटकत्वमात्रातिदेशेन ज्येष्ठत्वकनिष्ठत्वयोरुपपत्तावपि मध्यमत्वन्नोपपद्यते, अभावप्रतियोगितावच्छेदकसम्बन्धस्यैव तत्र सत्त्वेनाभावात्मकसम्बन्धद्वयस्य तत्रासत्त्वादिति न वाच्यम्; उभयत्राभावप्रतियोगितावच्छेदकसम्बन्धत्वेन वास्तविकघटकत्वस्यापि विवक्षितत्वेन प्रथमसम्बन्धस्य सत्त्वेऽपि वास्तविकघटकत्वस्यासत्त्वेनोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावात्मकसम्बन्धस्य सुलभत्वात् घटकत्वमात्रातिदेशेन तृतीयसम्बन्धस्य घटकत्वरूपस्यापि संवलनान्मध्यमत्वोपपत्तिरिति विभावनीयम्।

अनेन चाशास्त्रीयस्यापीति। शास्त्रीयत्वं शास्त्रसङ्केतिताव-

---

१ स्वाभाववत्त्वेति। न चैतादृशसम्बन्धस्य वृत्त्यनियामकतया प्रतियोगिताऽनवच्छेदकत्वेन तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धिरिति वाच्यम्, अनुकूलत्वसम्बन्धेन पाकविशिष्टकृत्यभाववांश्चैत्र इति शाब्दबोधपरस्य चैत्रो न पचतीतिवाक्यस्य प्रामाण्यानुरोधेन वृत्त्यनियामकसम्बन्धावच्छिन्नावच्छेदकतायास्तार्किकैरङ्गीकारेण तत्सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वनिवेशेनादोषात्।

वेकाच्त्वनिबन्धनद्वित्वसिद्धिः। अतएव भवतीत्यादौ भूइत्य स्याङ्गत्वम्, व्यतिसे इत्यादौ से इत्यस्य पदत्वम्, इयानित्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वं च सिध्यति; अन्यथा यस्माद्विहितस्तदादित्वाभावान्न स्यात्।

यत्तु—योऽर्थवांस्तत्रार्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशो यथेयायेत्यादावर्थवतो धातोरयं वर्णरूप एकोऽजिति कैय-

च्छेदकधर्मत्वम्। अन्तत्वमादित्वञ्च 'येन विधिः' 'यस्मिन् विधि'रिति शास्त्रसङ्केतितावच्छेदकत्वेन यद्यपि शास्त्रीयन्तथाप्येकाच्त्वस्य तत्त्वाभावेऽप्यतिदेशः।

कैयटोक्तं खण्डयति—यत्त्विति। अयम्भावः—वाचकत्वसम्बन्धेन फलव्यापारविशिष्टः शब्दो धातुः सोऽन्यपदार्थः एकाजितिबहुव्रीहौ एकोऽच्शब्दमात्रं यस्मिन् फलव्यापारविशिष्टशब्दरूपे धातावित्येकाच्त्वमुपपद्यत इण्धातौ। ननु धातुरर्थविशिष्टशब्दः तदवयवः केवलइशब्दः स कथमेकाच् तत्रान्यपदार्थस्यासम्भवादिति चेत्—न, फलव्यापारविशिष्टः शब्दो धातुः तदवयवः फलविशिष्टः शब्दः स एकोऽच्शब्दमात्रं यस्मिन् फलविशिष्ट इशब्दे एवंभूत इत्युपपन्नो धात्ववयवएकाच् इ इति। त्यागोपादानाभ्यामिति। वर्त्तिपदार्थविवक्षायामर्थस्य त्यागः श-

१ तत्त्वाभावेऽपीति। ननु अदन्तत्वादौ शास्त्रीयत्वसिद्ध्यर्थं शास्त्रसङ्केतितावच्छेदकधर्मघटितधर्मस्यैव शास्त्रीयत्वेन कथमेकाच्त्वस्याशास्त्रीयत्वं पाणिनिसङ्केतसम्बन्धेनाच्पदवत्त्वात्मकाच्त्वेन शास्त्रसङ्केतितावच्छेदकधर्मेण एकाच्त्वस्य घटितत्वादिति चेत्—न, अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानवच्छेदकशास्त्रकारीयसङ्केतितावच्छेदकधर्मघटितधर्मस्यैव शास्त्रीयत्वेनाच्त्वे तादृशविशेष्यतानवच्छेदकत्वविरहेणानुपपत्त्यनवकाशादिति गुरुवरचरणाः।

टः—तन्न, तस्यैकपद गित्यत्रत्यभाष्योक्तरीत्या मुख्यव्यवहारसत्त्वात् । एकपद गित्यत्रार्थेन युक्तो व्यपदेश इति भाष्य उक्तम् । ऋक्त्वादेरर्थशब्दोभयवृत्तित्वेन तस्याः शब्दमात्ररूपं पदमेकोऽवयव इत्यर्थ इति तदाशयः । तस्मादेकस्मिंस्तत्तद्धर्मारोपेण युगपद्यथा ज्येष्ठत्वादिव्यवहाराः, यथा च शिलापुत्रकस्य शरीरमित्यादावेकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वाद्यारोपेण तस्य शरीरमित्यादिव्यवहारः तथात्रैकान्त्वादिव्यवहारोपपत्तिरिति लोकन्यायसिद्धेयम् ।

न चासहाय एवैतत्प्रवृत्तौ भवतीत्यत्र भूइत्यस्याङ्गत्वानापत्तिः ससहायत्वादिति वाच्यम्, शपमादायाङ्गत्वे कार्ये यस्माद्विहितस्तदादित्वे तस्य ससहायत्वाभावात्, लोके विजातीयकन्यादिसत्त्वेऽप्येकपुत्रस्य तस्मिन्नेवायमेव ज्येष्ठ इत्यादिव्यवहारवत् । न चैवं 'निजौ चत्वार एकाच' इति भाष्यासङ्गतिरिकारस्यासहायत्वाभावेन तत्रैकाच्त्वानुपपादनादिति वाच्यम्, एकस्मिन्नित्यस्यापर्यालोचनया तत्प्रवृत्तेः । अर्थवता व्यपदेशिवद्भाव इत्यत्रार्थवत्पदेनाप्यसहायत्वमुपलक्ष्यते, अर्थबोधकेन शब्देन व्यपदेशिसदृशो भावः कार्यं लभ्यते इति तदर्थः, प्रायोऽसहाय एवार्थवत्त्वात् । कुरुते इत्यादौ तशब्दा-

---

ब्दमात्रस्य ग्रहणम ; अन्यपदार्थविवक्षायामर्थस्योपादानमित्यन्यपदार्थे अजूघटितत्वमुपपन्नमिति । तन्नेति । एवं रीत्यैकाच्त्वोपपादने एकपदा ऋगित्यत्रत्यभाष्यरीत्या मुख्यव्यवहार

कारोऽचामन्त्य इति व्यवहारे स आदिर्यस्येतिव्यवहारे चासहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धिरित्यन्यत्र विस्तरः ॥ ३० ॥

ननु गर्गादिभ्यो विहितो यञ् तदन्तविधिना परमगर्गादिभ्योऽपि स्यादत आह—

ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥ ३१ ॥

इयं च 'समासप्रत्ययविधौ प्रतिषेध' 'उगिद्वर्णग्रहणवर्जमि'तिवार्त्तिकस्थप्रत्ययांशानुवादः । अतएवेयं प्रत्ययविधिविषय एव । अतएव 'येन विधि'रिति सूत्रे भाष्ये प्रत्ययविधि-

---

एवेति 'व्यपदेशिवदेकस्मिन्नि'त्येतदुदाहरणत्वासङ्गत्या कैयटोक्तं न युक्तमिति नागेशाशयः ॥ ३० ॥

ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न्नास्तीति—ग्रहणवत्प्रातिपदिकप्रयोज्यं तदन्ते विधानन्न भवतीत्यर्थः । तेन गर्गादिशब्दप्रयोज्यं गर्गाद्यन्ते यञ्प्रत्ययस्य विधानन्नेति बोध्यम् । ननु किमिदं ग्रहणवत्त्वं ? न तावदानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वं, गर्गादिपदानां तत्त्वोपपत्तावपि 'वृद्धाच्छ' इत्यत्र वृद्धपदस्य 'नौद्व्यच' इत्यत्र द्व्यच्पदस्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वाभावेन निषेधाप्राप्त्या तदन्तविध्यापत्तेः; नापि प्रातिपदिकत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकत्वन्तत, द्व्यच्त्ववृद्धत्वादीनां प्रातिपदिकत्वव्याप्यत्वाभावात् पूर्वोक्तदोषानुद्धारात्; नापि प्रातिपदिकत्वव्याप्यविषयताप्रयोजकत्वन्तत, 'नौद्व्यचः' 'वृद्धाच्छ' इत्यत्र प्रातिपदिकाधिकारात् प्रातिपदिकत्वावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नायाः द्व्यच्त्ववृद्धत्वावच्छिन्नप्रकारताख्यवि-

भिन्ने'ऽप्तृन्नि'त्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधि-

पयतायाः प्रातिपदिकत्वव्याप्यत्वेन प्रकृतदोषोद्धारेऽपि 'अत इञ्' इत्यादावपि प्रातिपदिकाधिकारेणोक्तरीत्या अत्वावच्छिन्नविषय-तायाः प्रातिपदिकत्वव्याप्यत्वेन तथैव 'उगितश्चे'त्यत्रोगित्त्वाव-च्छिन्नविषयताया अपि तत्त्वेनोभयत्र तदन्तविधिनिषेधापत्तेः; न चास्तु आद्यः पक्षः, वृद्धपदस्य वृद्धपदवत्त्वेन बोधकतया द्व्यच्प-दस्य द्वित्वविशिष्टाच्पदवद्घटितत्वेन बोधकतया वृद्धत्वाच्त्वरूपा-नुव्यर्थो अपि परम्परया विषयतावच्छेदकत्वेन निषेधोपपत्तेरिति वाच्यम्, एवं रीत्योगित्पदस्याप्युक्तस्वरूपानुपूर्व्यवच्छिन्नविषयता-प्रयोजकत्वेन निषेधापत्तेः, 'वनोरचे'त्यादावपि निषेधापत्तेश्च, इति चेत्; अत्रोच्यते—वर्णत्वव्याप्यधर्मावच्छिन्नविषयत्वाप्रयोजकत्वे सति प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयत्वाप्रयोजकत्वे सति प्रा-तिपदिकवृत्तिविषयताप्रयोजकत्वं ग्रहणवत्प्रातिपदिकत्वम्। 'उगि-तश्चे'त्यत्रापि विषयताया वर्णत्वव्याप्योत्त्वावच्छिन्नत्वान्न दोषः। न चैवं द्व्यच्पदस्यापि वर्णत्वव्याप्याच्त्वावच्छिन्नविषयताप्रयो-जकत्वेन निषेधानापत्तिरिति वाच्यम्, धर्मितानवच्छेदकस्यैव वर्णत्वव्याप्यधर्मस्य ग्रहणेनादोषात् तत्र द्वित्वावच्छिन्नप्रकारता-निरूपितविशेष्यतावच्छेदकस्यैवाच्त्वस्य सत्त्वात्। ननु 'अस्माया-मेधास्रजो विनि'रित्यादौ असुपदस्यापि ग्रहणवत्प्रातिपदिकत्वाप-त्त्या निषेधप्रवृत्त्या यशस्वीत्याद्यसिद्ध्यापत्तिः; यत्तु केनचित् प्र-त्ययस्याप्यसः सत्त्वेन प्रत्ययग्रहणभिन्नत्वाभावान्न दोषः प्रत्यय-मात्रग्रहणभिन्नत्वनिवेशे च फलाभावादित्युक्तम्—तन्न, तथासति बहूनां प्रत्ययानामपि द्व्यच्त्वेन वृद्धत्वेन च द्व्यच्पदवृद्धपदयोरपि प्रत्ययग्रहणभिन्नत्वाभावेन निषेधानापत्तेः; तस्मात् 'असमासे निष्कादिभ्य' इतिसूत्रे असमासग्रहणेनास्या अनित्यत्वेनैव दोष-वारणं सम्यक्। अतएव 'रोणी'सूत्रे तदन्तविधिना आयकरौण

प्रतिपादनं स्वसा परमस्वसेत्याद्युदाहरणं च सङ्गच्छते । अत एव च तदन्तविधिसूत्रे भाष्ये समासेत्यादिनिषेधस्य कथनवद्स्य न कथनम् । सोऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीतप्रातिपदिकसूत्र एव । ध्वनितं चेदम् 'असमासे निष्कादिभ्य' इति सूत्रे भाष्ये । अत्र च ज्ञापकं 'स पूर्वाच्चे'तिसूत्रम्, अन्यथा पूर्वादिनिः इत्यत्र तदन्तविधिनैव सिद्धे किं तेन ॥ ३१ ॥

नन्वेवं 'सूत्रान्ताट्ठक्'-'दशान्ताड्डः'-'एकगोपूर्वात्' इत्यादेः केवलसूत्रशब्द-दशन्शब्दैकशब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात्स्यादत आह--

व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ ३२ ॥

---

इति सिद्धं, 'मेघर्त्तिभयेषु कृञः' इत्यत्र भयशब्देन तदन्तविधिना अभयंकर इति सिद्धमिति दिक् । नन्वेवमपि 'अनुदात्तादेरञि'त्यादावनुदात्तत्वादेर्वर्णत्वव्याप्यत्वेनानुदात्तादिपदस्य वर्णत्वव्याप्यधर्मावच्छिन्नविषयत्वाप्रयोजकत्वाभावात् निषेधाप्राप्त्या तदन्तविध्यापत्तिरिति चेत्—न, वर्णत्वव्याप्यधर्मेण साक्षादवच्छिन्नमुख्यविशेष्यत्वाप्रयोजकत्वे सति प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयत्वाप्रयोजकत्वे सति उगित्त्वावच्छिन्नविषयत्वाप्रयोजकत्वन्तत्त्वमित्यदोषात् । अतएवेति—अपूर्वत्वाभावादेवेत्यर्थः ॥ ३१ ॥

व्यपदेशिवद्भावोऽप्रातिपदिकेनेति—प्रातिपदिकेन स्ववृत्तिप्रातिपदिकत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकपदघटितं यदन्तादिपदघटितं पदं तत्प्रयोज्योद्देश्यतानिरूपितविधेयताश्रयीभूतं प्रत्ययविशिष्टं कार्यं न व्यपदेशिवल्लभ्यत इत्यर्थः । प्रत्ययवैशिष्ट्यं स्वतादात्म्य-स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरस-

पूर्वात्सपूर्वादिनिरित्येकयोग एव कर्त्तव्ये पृथग्योगकरणमस्या ज्ञापकम्। न च 'इष्टादिभ्य'इतिसूत्रेऽनुवृत्त्यर्थन्तथा पाठः, अतएवानिष्टीत्यादिसिद्धिरिति वाच्यम्; ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात्, एकयोगेऽपि तावत् उत्तरत्रानुवृत्तौ बाधकाभावाच्च। अतएव 'नान्तादसङ्ख्यादे'रिति चरितार्थम्, अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन सङ्ख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेव।

इयञ्च प्रातिपदिकग्रहणे एव, न तु प्रातिपदिकाप्रातिपदिकग्रहणे। तेन 'उगितश्चे'त्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम्।

---

म्बन्धेन। प्रातिपदिकत्वव्याप्यत्वनिवेशाद्भवतीत्यादौ उगिद्भवच्छब्देन ङीप् लभ्यते 'उगितश्चे'त्यत्रान्तपदाघटितत्वाच्च। अन्तादिपदघटितत्वनिवेशात् रौण इत्यत्र रौणीशब्देन व्यपदेशिवद्भावः 'रौणी'सूत्रेऽन्तादिपदघटितत्वाभावात्। प्रत्ययनिवेशादग्रदन्नित्यत्राग्रशब्दे व्यपदेशिवद्भावेनाग्रान्तत्वाद्दन्तस्य दन् दत्रादेशस्य प्रत्ययरूपत्वाभावात्। प्रत्ययस्य द्वितीयसम्बन्धनिवेशात् पञ्चम इत्यत्र व्यपदेशिवद्भावेन संख्यादित्वं न, अनेन निषेधात्, मटः प्रत्ययत्वाभावेऽपि प्रत्ययोद्देश्यकत्वात्। व्याप्यत्वनिवेशादेव 'अनुदात्तादेरञि'त्यादौ व्यपदेशिवद्भावेनानुदात्तमात्रादप्यञ्सिद्धिः; अनुदात्तत्वस्य प्रातिपदिकत्वव्याप्यत्वाभावेन निषेधाप्रवृत्तेः।

पूर्वात्सपूर्वादिनिरित्येकयोग इति। कृतपूर्वीत्यत्र सपूर्वकः पूर्वशब्दो मुख्यः, पूर्वीत्यत्र व्यपदेशिवद्भावेन सपूर्वत्वमितिभावः। अतएव धर्मिग्राहकमानात्सूत्रोपात्तावयवबोधकशब्दविषयकत्व-

इयं, 'ग्रहणवता' इति च परिभाषा प्रत्ययविधिविषयैवेति 'असमासे निष्कादिभ्य'इतिसूत्रे भाष्यकैयटयोः । तेन अहन्नित्यादेः परमाहन्शब्दे केवलाहन्शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः ॥ ३२ ॥

ननु 'वान्तो यी'त्यादौ यादौ प्रत्यय इत्यर्थः कथमत आह—

यस्मिन् विधिस्तदादावल्ग्रहणे ॥ ३३ ॥

तदन्तविधेरपवाद इयम् । वाचनिक्येषा 'येन विधि'

---

लाभः । नन्वेवमनिष्टीत्यस्येष्टत्वपक्षे का गतिरेकयोगनिर्दिष्टत्वेन सपूर्वादित्यस्यानुवृत्त्यसम्भवादिति चेत्—न, इष्टादिगणे पूर्वशब्दं पठित्वा इष्टान्तादिनिरिरितिन्यासः कर्त्तव्य इत्याशयात् ॥ ३२ ॥

यस्मिन्विधिस्तदादावल्ग्रहणे । यत्पदेन सप्तम्यन्तं परामृश्यते । अल्ग्रहण इत्यस्यल्बोधक इत्यर्थः । विधिपदेन कर्मव्युत्पत्त्या कार्यमुच्यते । 'येन विधि'रित्येतदपवादत्वात् 'उत्सर्गसमानदेशा अपवादा'इतिन्यायेनाभेदेन विशेषणमिति लब्धम् । तथा चाल्बोधके सप्तम्यन्ते पदेऽभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजके सति यत् कार्यं तत् तदादौ, अर्थात् स्वविधायकशास्त्रघटकाभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकसप्तम्यन्तपदबोध्यालादौ भवतीत्यर्थः । यथा 'वान्तो यि प्रत्यय' इत्यादौ यि पदे सप्तम्यन्तमल्बोधकमभेदेन विशेषणं सयकारादिबोधकमिति बोध्यम् ।

वाचनिक्येषेति । भाष्ये वचनस्वरूपमेव पठितम्, न तु ज्ञापकमुपन्यस्तमिति भावः । नैतावता ज्ञापकन्नास्तीति भ्रमितव्यम्, 'वान्तो यि प्रत्यय' इत्यस्यैव ज्ञापकत्वात् । तथाहि एतस्या अभावे 'येनविधि'रितिसूत्रबलाद्यान्ते प्रत्यय इत्यर्थापत्त्या यान्त-

प्रत्ययस्यासम्भवेन सूत्रस्य वैयर्थ्यं स्पष्टमेव। ननु नैतद्युक्तं, गोशब्दान्मयटि गोमयं गोमयमतति गोमयात् तमाचष्ट इत्यर्थे णिचि टिलोपे गोमययतीत्यादौ यान्तप्रत्ययस्य सम्भवेन सूत्रसार्थक्यसम्भवात्; न च स्थानिवद्भावः, अज्झलादेशत्वात्; नापि बहिरङ्गासिद्धत्वं, 'नाजानन्तर्य'इतिनिषेधात्; नापि भान्तप्रत्ययस्यासम्भवादेतस्या अभावे 'अपो भी'ति व्यर्थं सदस्या ज्ञापकमिति वाच्यं, तत्सामर्थ्याद्भीति सप्तमी स्वतन्त्रैव न प्रत्यये विशेषणमितिकल्पनया प्रत्ययाऽव्यवहितपूर्वस्य भकाराऽव्यवहितपूर्वस्यापस्तकार इत्यर्थेन चारितार्थ्यसम्भवात्; न वा 'कोः कत्तत्पुरुषेऽची'त्यस्याजन्ते उत्तरपदे इत्यर्थापत्त्या कद्रथः कद्वद इत्यनयोरयनेनैव सिद्धौ 'रथवदयोश्चे'ति व्यर्थं सदस्या ज्ञापकमिति सम्यक्, रथवदशब्दाभ्यामाचारक्विबन्ताभ्यां कर्त्तरि क्विप्यलोपे रत वत् तयोः कुशब्देन समासे चारितार्थ्यात्; स्थानिवद्भावेनाजन्तत्वन्तु न, कदादेशस्य पदचरमावयवत्वेन 'न पदान्ते'तिनिषेधात् स्थानिभूतादचः पूर्वस्य कार्याभावाच्च; तावन्मात्रप्रयोजनकत्वे तयोरेवानुकरणं कृत्वा रद्वदोरित्येव कर्त्तव्ये 'रथवदयो'श्चेति ज्ञापकमेवेति तु न वाच्यम्, रम्धातोः वद्धातोः क्विपि रत् वत् इत्येतद्व्यावृत्त्या चरितार्थत्वेन ज्ञापकत्वासम्भवात्; इति चेत्—न, 'नल्यपी'त्यस्य ज्ञापकत्वात्, अन्यथा प्रदायेत्यादावीत्वाप्राप्त्या 'नल्यपी'त्यस्य वैयर्थ्यं स्पष्टमेव। न च प्रदायच्छत्रमित्यादौ तुकि हलन्तत्वसम्भवेन प्राप्तस्येत्वस्य वारणाय तस्यावश्यकत्वम्; न चेत्वे कर्तव्ये तुको बहिरङ्गासिद्धत्वं, 'नाजानन्तर्य'इतिनिषेधात्; इति वाच्यम्, इदानीम् 'आतो लोप इटि चे'त्यस्याजन्त इत्यर्थापत्त्या तुकः पूर्वमेवातो लोपे ईत्वाप्राप्त्या निषेधस्य वैयर्थ्यध्रौव्यात्। तस्मात् ज्ञापकसिद्धैवेयम्।

ननु किमेतस्याः फलं ? न चैतस्या अभावे 'वान्तो यि प्रत्यय' इत्यस्य यकाररूपे प्रत्यये यान्ते वा प्रत्यय इत्यर्थापत्तौ गव्य-

मित्यादौ वान्तादेशो न स्यात् गोमययतीत्यादौ वान्तादेशस्या-दित्येतत्परिहार एव फलमिति वाच्यम्, अन्वयस्य कामचारेणै-कत्रद्वयमितिरीत्या ओदौतोरेवोभयोस्स्वातन्त्र्येणान्वयेन यका-राव्यवहितपूर्वो यः प्रत्ययाव्यवहितपूर्व ओकरादिस्तस्य वान्ता-देश इत्यर्थेनोक्तप्रयोगद्वयेऽव्याप्त्यतिव्याप्तिपरिहारसम्भवात्। न-चैवमपि गोयानमित्यादौ प्रत्ययलक्षणेन प्रत्ययाव्यवहितपूर्वत्व-स्य स्वतश्च यकाराव्यवहितपूर्वत्वस्य सत्त्वेन वान्तादेशापत्तिरिति वाच्यं, वृक्षे शाखेतिवत् 'अभिपूर्व' इतिवच्च प्रत्यये आधेयेऽप्याधा-रत्वारोपेण सप्तमीमाश्रित्य प्रत्यये यो यकारोऽर्थात् प्रत्ययावयवो यो यकारस्तदव्यवहितपूर्वयोरोदौतोरित्यर्थेन सर्वदोषवारणस-म्भवात्। ननु उष्ट्रगोयुगमित्यादौ गोयुगच्प्रत्ययावयवयकाराव्य-वहितपूर्वस्य तत्प्रत्ययावयवौकारस्यावादेशापत्तिरिति चेत्—न, ओकारसाहचर्येणौकारस्यापि यकारघटितप्रत्ययावटकस्यैव ग्रह-णेनादोषात्। गव्युगच्चि कर्तव्य ओकारोच्चारणसामर्थ्याच्च तत्र नापत्तिः। यत्तु केचित्—उष्ट्रगोयुगशब्दात पुनः पुनर्णिलोपटि-लोपाभ्यां यकारादिलोप उष्ट्रगोरित्यत्रौकारस्य श्रवणार्थमोकारो-च्चारणमित्याहुः—तन्न युक्तम, लोपात् प्रागेवोपदेशावस्थायामवा-देशप्राप्त्यौकारश्रवणासम्भवात्। नापि 'अपो भी'त्यस्य भादावि-त्यर्थसम्पादनेनाद्भिरित्यादिसिद्धिरिति फलं युक्तम्, उक्तरी-त्या प्रत्ययावयवे भकारे परे इत्यर्थेनादोषात्। 'कोः कत्तत्पुरुषे-ऽची'त्यस्यापि उत्तरपदावयवेऽचि परे इत्यर्थोद्धलादावुत्तरपदे न कदादेशः, एतेन तत्रादेशाभावार्थमियमावश्यकीति परास्तम्। 'ङमो ह्रस्वादची'त्यस्य अच्परको यो ह्रस्वात्परो ङम् तदन्तं यत्पदं ततः परस्य पदस्य, ह्रस्वात्परो यो ङम् तदन्तं यत्पदं पदपरकं ततः परस्याच इति वार्थ इति न नव्यमतेऽपि परमदण्डिनावित्यादौ दोषः; अन्यथा परिभाषाया अभावे ह्रस्वात्परो यो ङम् तदन्तं यत्पदं ततः परस्य पदावयवस्याचो ङमुडित्यर्थापत्तौ नव्यमते

कार्यित्वानिवेशेन 'उत्तरपदत्वे चे'ति निषेधाप्रवृत्त्या प्रत्ययलक्षणेन दण्डिन्नित्यस्य पदत्वे द्विवचनान्तपदमादायौकारस्य पदावयवाच्त्वेन प्राप्तस्य ङमुटोऽभावाय परिभाषाया आवश्यकत्वापत्तिः। न च परिभाषाया अभावे 'गोत्रेऽलुगची'त्यत्र तदादिविध्यभावे अजादौ प्राग् दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुगित्यर्थाभावे प्राग्दीव्यतीयप्रत्ययस्थस्याचो विषये इत्यर्थस्यैव सत्त्वेन गर्गरूप्यमित्यादौ हलादावप्यज्वति प्रत्यये विवक्षितेऽलुगापत्तिस्तत्रापि तादृशाज्विषयतायास्सत्त्वादिति वाच्यम्; प्राग्दीव्यतीयप्रत्ययघटकाजव्यवहितपूर्वत्वाविवक्षायामलुगित्यर्थे गर्गरूप्यमित्यादौ दोषाभावात्, प्राग्दीव्यतीयप्रत्यये सर्वत्राचस्सत्त्वेनाच्ग्रहणसामर्थ्यादजादावित्यर्थलाभाच्च । न चातृणेडित्यादौ नित्यत्वाद्धल्ङ्याब्भ्यादिलोपे इमागमाय प्रत्ययलक्षणेन हलादिपित्सार्वधातुकपरत्वं वक्तव्यं; वर्णाश्रये इति निषेधस्तु न, तस्य वर्णप्राधान्यविषयत्वात्, परिभाषाया अभावे सार्वधातुकस्थे हलीत्यर्थे वर्णप्राधान्यसत्त्वात् प्रत्ययलक्षणनिषेधापत्त्येमागमानापत्तिः इति वाच्यम्; लोपस्यापि शब्दान्तरप्राप्त्याऽनित्यत्वेन परत्वात् प्रतिपदोक्तत्वाच्च इमागमस्यैव पूर्वं प्रवृत्तेः, भाष्यमते 'नाभ्यस्तस्याची'त्यतोऽचि नेत्यनुवृत्त्या हल्ग्रहणाकरणाच्च । परिभाषासत्त्वे इत्संज्ञकशकारादौ प्रत्यये परे पिबाद्यादेश इत्यर्थे पिबतीत्यादौ सिद्धान्तभूते एकान्तपक्षे भूतपूर्वगत्या इत्संज्ञकशकारादित्वमादायादेशः; परिभाषाया अभावे च प्रत्ययस्थे इत्संज्ञकशकारे परे इत्यर्थकरणे भूतपूर्वगत्यापि इत्संज्ञकशकारपरत्वासम्भवेन पिबतीत्याद्यनापत्तिरित्यपि न फलम्; इत्संज्ञकशकारे परे इत्यर्थे सूत्रवैयर्थ्यापत्त्या इत्संज्ञकशकारपरत्वसम्भावनायामित्यर्थेनादोषात्, यदीत्संज्ञालोपौ न स्यातां तर्हीत्संज्ञकशकारपरत्वं स्यादिति सम्भावनायास्सत्त्वात् ।

अत्रोच्यते—नैतस्याः फलम्, अतएव 'एकहलादौ पूरयि-

रित्यत्र भाष्ये पठिता। अस्याश्च स्वरूपसती सप्तमी निमित्तम्। अतएव 'नेड्वशि कृती'त्यादौ वशादेः कृत इत्याद्यर्थलाभः। इयञ्च 'आर्धधातुकस्येडि'तिसूत्रे वलादेरित्यादिग्रहणसामर्थ्याद्विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव प्रवर्तते। तेन

---

तव्य' इत्यत्र 'ह्रस्वात्तादौ तद्धित' इत्यत्र चादिग्रहणं सार्थकम्; परिभाषासत्त्वे हलि-तीतिकरणेनैव तदादिविधिना हलादौ तादावित्यर्थलाभेन आदिग्रहणस्य वैयर्थ्यापत्तिरिति केचित्।

बहुषु स्थलेष्वनेकक्लिष्टकल्पनापेक्षया परिभाषायाः स्वीकारस्यैवौचित्यम्; एकहलादावित्यादावादिग्रहणं स्पष्टार्थमेवेति परे।

**स्वरूपसती सप्तमी निमित्तमिति**। न तु सप्तम्यर्थत्वेन शास्त्रप्रतिपादितार्थबोधिकैव सप्तमी निमित्तम्, अपि तु 'ङि ओस् सुप्' इत्येतत्स्वरूपमेव निमित्तमिति बोध्यम्। तेन वशि कृति इत्यत्राधिकरणार्थाप्रतीतावपि तदादिविधिरिति भावः। **आदिग्रहणसामर्थ्यादिति**—वलि आर्धधातुकस्येतिन्यासेऽपि तदादिविधिना वलादेरार्धधातुकस्येत्यर्थलाभसम्भवादिति भावः। **उभयोस्सप्तम्यन्तत्व इति**। ननु वलि आर्धधातुके इति न्यासकरणे स्वांशे चारितार्थ्याभाव इति चेत्—न, 'तस्मिन्नि'तिपरिभाषयाऽऽर्धधातुकाव्यवहितपूर्वस्येडागमापत्तेः। केनचित्—उभयोः सप्तम्यन्तत्व एवेतिज्ञापनं न्यायसिद्धार्थानुवाद एव समानाधिकरणविशेषणस्थले समानविभक्तिकत्वनियमेनैव तल्लाभादित्युक्तं—तन्न; मृदु पचति सोमेन यजेत प्रकृत्या चारुरित्यादावसमानविभक्तिकयोरपि समानाधिकरणत्वदर्शनात्। **सादेः पदस्येति नार्थ इति**। तथासति पट्वित्वत्यत्र धुट् न स्यादिति दोषः। ननु तदादिविध्यभावेऽपि 'येन विधि'रितिसूत्रेण तदन्तविधिना सान्तस्य पदस्ये-

'ङः सि धुडि'त्यादौ सादेः पदस्येति नार्थः। 'तीषसह' 'सेऽसिचो'त्यादौ यथा तादेरित्याद्यर्थलाभस्तथा शब्देन्दुशेखरे निरूपितम् ॥ ३३ ॥

घटपटं घटपटावित्यादिसिद्धये आह—

सर्वो द्वन्द्वो विभाषैकवद्भवति ॥ ३४ ॥

---

स्यर्थेन पट्त्स्वित्यादौ धुडनापत्त्या सूत्रवैयर्थ्यापत्त्या च तदन्तविध्यभावाय पदावयवस्य सस्येतिवैयधिकरण्येनान्वयस्यावश्यकतया समानाधिकरणविशेषणत्वाभावादेव तदादिविध्यभावे उभयोस्सप्तम्यन्तत्व एव प्रवृत्तिरित्यस्य न फलमिति चेत्—न, उभयसप्तम्यन्तत्वस्यानिमित्तत्वे तदादिविधिसत्त्वे सामानाधिकरण्यान्वये सूत्रवैयर्थ्याभावेन सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वेन सामानाधिकरण्यान्वय एव स्यादित्याशयात्। ननु 'तीषसह'इत्यत्र 'सेऽसिची'त्यत्र च षष्ठ्यन्तस्यैवार्धधातुकपदस्यानुवृत्त्या तदादिविध्यप्राप्त्या तादेः सादेरार्धधातुकस्येत्यर्थो न स्यादित्यत आह—तीषसह-सेऽसिचोत्यादाविति। शब्देन्दुशेखरे निरूपितमिति। तत्र हि ति से इति सप्तम्यौ प्रथमार्थे, आर्द्धधातुकस्येत्यस्यैव वलादेरित्यस्याप्यनुवृत्तिः, तदेकदेशवलपदार्थेऽभेदसम्बन्धेन तकारसकारयोरन्वयः, तथा च तकाराभिन्नो यो वल् सकाराभिन्नो यो वल् तदादेरार्धधातुकस्येत्यर्थ इत्यर्थकमुक्तम्। तीति से इति सप्तम्योः स्वातन्त्र्येण भेदेन विशेषणत्वमङ्गीकृत्य तकाराव्यवहितपूर्वो य इणादिः सकाराव्यवहितपूर्वो यः कृदादिस्ततः परस्यार्धधातुकस्येत्यर्थस्तु न युक्तस्सत्यामेतस्यां परिभाषायाम्, तथासति सर्वत्र तथैव निर्वाहे परिभाषाया निष्फलत्वापत्तिरित्यलम् ॥ ३३ ॥

घटपटं घटपटावित्यादिसिद्धय इति। ननु अविशेषेण द्वन्द्व-

'द्वन्द्वश्च प्राणी'त्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः । 'चार्थे द्वन्द्व'इतिसूत्रेण समाहारेतरेतरयोरविशेषेण द्वन्द्वविधा-

मात्रे उद्भूतावयवभेदविवक्षारूपेतरेतरयोग-तिरोहितावयवभेद-विवक्षारूपसमाहारयोस्सत्त्वेन सर्वस्मादेव द्वन्द्वीभूतशब्दात् विवक्षाभेदेनैकवचनद्विवचनयोरुपपत्तावलं परिभाषयेति चेत्—न । द्विविधो हि शब्दो भवति, कश्चनोद्भूतावयवभेदकसमुदायबोधको यथा वृक्षशब्दोऽतएव तत्र बहुवचनान्त एव वृक्षा इति प्रयुज्यते, कश्चन तिरोहितावयवभेदकसमुदायबोधको यथा वनशब्दस्तत्रैक-वचनान्त एव वनशब्दः प्रयुज्यते; तथा चाविशेषेणेतरेतरयोग-समाहारयोर्द्वन्द्वविधानेऽपि द्वन्द्वीभूतोऽपि घटपटादिशब्दः एक-विधसमुदायबोधक एव स्यादिति एकस्मिन् घटपटादिरूपद्वन्द्वी-भूतशब्द उभयविवक्षाया अभावेनैकवचनद्विवचनान्तत्वमनुप-पन्नमिति तदुपपत्तये परिभाषारम्भः । अयम्भावः— वनवृक्षादि-कतिपयशब्दस्योभयविधसमुदायबोधकत्वाभावेऽपि लोकशब्दसर्व-शब्दयोः सर्वे लोकाः सर्वो लोक इत्युभयविधप्रयोगस्यैकसमुदाय-बोधकस्थले दृष्टतयोभयविवक्षायाः शब्दैकवृत्तित्वेऽविरोधेन तत्र यथोभयविवक्षा भवति तथा द्वन्द्वीभूतकघटपटादिशब्देऽप्यविशेष-णोभयत्र द्वन्द्वविधानलब्धैवोभयविवक्षा परिभाषया बोध्यत इति । ननु परिभाषायां द्वन्द्वपदस्य तन्त्रैकशेषादिना सकलद्वन्द्वपरत्वे एक-वचनानुपपत्तिः एकद्वन्द्वपरत्वे सर्वेतिविशेषणानुपपत्तिः, लोक्यते दृश्यत इति व्युत्पत्त्या लोकत्वस्य प्रत्येकपर्याप्तत्वसमुदायपर्याप्तत्व-योः स्वीकारेऽपि द्वन्द्वत्वस्य तथात्वाभावादिति चेत्—न, सकल-द्वन्द्वबोधकत्वेऽपि जात्येकत्वविवक्षयैकवचनान्तत्वोपपत्तेः । ननु पाणिपादमित्यादौ नित्यैकवद्भावस्यैव दर्शनात् 'सर्वो द्वन्द्व' इत्यनुप-पन्नमित्यत आह—द्वन्द्वश्च प्राणीत्यादीति । 'चार्थे द्वन्द्व'इत्य-

नान्न्यायसिद्धेयम् । 'तिष्यपुनर्वस्वो'रितिसूत्रस्थबहुवचनस्येति-ग्रहणमस्या ज्ञापकं, तद्धीदं तिष्यपुनर्वसवित्यत्र तद्व्यावृत्त्यर्थम् । न चैवमप्यत्र 'जातिरप्राणिनामि'ति नित्यैकवद्भावेन बहुवचनाभावादिदं सूत्रं व्यर्थमिति वाच्यम्, तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात् । न चैते प्राणिन इति वाच्यम्, 'आपोमयः प्राण' इतिश्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात् । स्पष्टं चेदं

---

तत्सूत्रविषय इति यावत् । बहुवचनस्येतिग्रहणमस्या ज्ञापकमिति । द्वन्द्वीभूततिष्यपुनर्वसुशब्दस्योद्भूतावयवसमुदायबोधकत्वे बहुवचनान्तत्वस्यैव सत्त्वेन इदन्तिष्यपुनर्वस्वितिव्यावर्त्यस्थलाभावाद्बहुवचनग्रहणं व्यर्थं, तिरोहितावयवभेदकसमुदायबोधकत्वे एकवचनान्तत्वस्यैव सत्त्वेन बहुवचनान्तस्यासम्भवात् सूत्रस्यैव वैयर्थ्यमित्युभयविवक्षां ज्ञापयतीति युक्तम् । ज्ञापितायान्तूभयविवक्षायां सम्भवव्यभिचारयोस्सत्त्वेन स्वांशे चारितार्थ्यम् । न चैवमप्यत्र जातिरप्राणिनामितीति । 'द्वन्द्वश्च प्राणी'त्येतत्प्रकरणाविषय एवायमिति ज्ञापितेऽपि चारितार्थ्याभाव इति भावः ।

तद्वैकल्पिकत्वस्यापीति । तथा चोभयवचनान्ततिष्यपुनर्वसुशब्दस्य सत्त्वेन सम्भवव्यभिचारयोस्सत्त्वेन स्वांशे चारितार्थ्यं सुघटम् । नन्विदं न युक्तं, तस्य वैकल्पिकत्वे बदराणि चामलकानि च बदरामलकमितिवत् बदरामलकानीत्यपि स्यात्, नैतदिष्यत इति चेत्—न । ज्ञापितं हि वैकल्पिकत्वं व्यवस्थितं, व्यवस्था चेयं बदरत्वादिजातेः प्राधान्ये विवक्षिते एकवद्भावः बदरादिव्यक्तेः प्राधान्ये विवक्षिते बहुवचनान्तत्वमिति । ननु बदरामलकमित्यादौ बदरत्वादेर्धर्मिविशेषणतयैव भानात् जातेः प्राधान्याभाव इति चेत्, इदं प्राधान्यं पदजन्यबोधविषयत्वप्रकारकतात्पर्यीयविषयता-

'तिष्यपुनर्वस्वो'रितिसूत्रे भाष्ये । अतएव 'द्वन्द्वश्च प्राणी'त्यादौ प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ॥ ३४ ॥

सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ ३५ ॥

'व्यत्ययो बहुलमि'तिसूत्रे भाष्ये बहुलमिति योगविभागेन 'षष्ठीयुक्तश्छन्दसी'तिसूत्रे वेति योगविभागेन चैषा साधिता ।

---

समनियतत्वम् । नन्वेवं तिष्यत्वपुनर्वसुत्वयोः प्राधान्ये विवक्षिते एकवचनं भविष्यति तद्व्यावृत्त्यर्थमन्यत्र बहुवचनस्य द्विवचनार्थं च बहुवचनग्रहणं चरितार्थमिति परिभाषाज्ञापकत्वं भविष्यतीति चेत्, अत्रोच्यते—'फल्गुनीप्रोष्ठे'त्यतो नक्षत्रग्रहणानुवृत्त्यैव सिद्धे पुनर्नक्षत्रग्रहणात् तिष्यपुनर्वसुनक्षत्रव्यक्तिप्राधान्य एव 'तिष्यपुन'रितिसूत्रं प्रवर्त्तते; तत्र 'जातिरप्राणी'त्यस्याप्राप्त्या परिभाषां विना समाहारेतरेतरयोगान्यतरविवक्षाया एव सत्त्वे एकवचने बहुवचनस्याभावात् बहुवचने व्यावर्त्याभावात् व्यर्थं सत् बहुवचनग्रहणं परिभाषां ज्ञापयति । ज्ञापितायाञ्चोभयविवक्षायास्तिष्यपुनर्वसुशब्दे सत्त्वेनैकवचनव्यावृत्तिपुरस्सरं बहुवचनस्थानितालाभाय बहुवचनग्रहणं चरितार्थमिति । ननु ज्ञापनद्वयेऽपि बहुवचनग्रहणं व्यर्थमेव, 'द्वन्द्वश्च प्राणी'त्यादिसूत्राणामेषामेव समाहार इत्यंतन्नियामकत्वेनान्यत्र तिष्यपुनर्वस्वादावेकवचनाभावेन व्यावर्त्याभावादिति चेत्—सत्यम्; एतद्बहुवचनग्रहणमेव प्राण्यङ्गादीनां समाहार एवेति मूलोक्तनियमाकारेऽपि ज्ञापकम्, तथा च नक्षत्रप्रकरणाविषय उभयविवक्षायास्सत्त्वेन चरितार्थत्वमुपपन्नमिति दिक् ॥ ३४ ॥

बहुलमिति योगविभागेनेति—छन्दसि विधीयमानानि सर्वाणि कार्याणि बहुलं भवन्तीत्यर्थः । वेति योगस्याप्ययमेवार्थ इत्यं-

तेन प्रतीपमन्य ऊर्मिर्युध्यतीत्यादि सिद्धम्, युध्यत इति प्राप्नोति ॥ ३५ ॥

ननु 'त्रिय' इत्यादावियङ्कथमत आह—

प्रकृतिवदनुकरणं भवति ॥ ३६ ॥

'त्रिय' इतीयङ्निर्देशोऽस्या ज्ञापकः । तत्रैव प्रातिपदिकत्वनिबन्धनविभक्तिकरणादनित्या चेयमिति 'क्षियो दीर्घा-दि'तिसूत्रे भाष्ये स्पष्टम् ॥ ३६ ॥

---

तत्सिद्धं 'सर्वे विधय'इति। युध्यतीति सिद्धमिति। ननु 'अनुदात्तेत्वलक्षणमात्मनेपदमनित्यमि'त्यनयैव परिभाषया युध्यतीति-परस्मैपदोपपत्तौ प्रकृतपरिभाषायाः फलं न युक्तमिति चेत्—न, प्रकृतपरिभाषायाः फलत्वेन तदुदाहरणपरभाष्येण तस्या असत्त्वबोधनात्, तदभावस्याग्रे वक्ष्यमाणत्वाच्च ॥ ३५ ॥

क्षिय इत्यादावियङ् कथमिति—'क्षियो दीर्घादि'तिसूत्रे क्षीत्यस्य लक्ष्यस्थक्षिधातोरनुकरणत्वेन धातुत्वाभावाद्धातुत्वनिबन्धनमियङ् न स्यादिति भावः। प्रकृतिवदनुकरणमिति—अनुकरणत्वं स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वम, प्रकृतिरनुकार्य्यं तद्वत् तद्वृत्तिधर्मवदित्यर्थः। तथा च धातुत्वातिदेशादियङ् उपपद्यते। नन्वेवमधातुपर्युदासात् प्रातिपदिकत्वाभावे विभक्त्यनुपपत्तिरित्यत आह—तत्रैवेति। अनित्येति। यत्किञ्चित्कार्यायानुकार्यधर्म्मारोपो भवति, यत्किञ्चित्कार्याय नेति बोध्यम्। ननु कृतदीर्घस्यानुकरणे तद्बलादेव दीर्घान्तत्वलाभे सूत्रे दीर्घग्रहणं व्यर्थं, ह्रस्वान्तानुकरणे घित्वेन गुणापत्तिरिति चेत्—न, दीर्घान्तस्यैवानुकरणमित्यत्रैव दीर्घग्रहणस्य तात्पर्यात्। केनचित्—लक्ष्यघटकेऽनुकार्ये धातौ फलाभावेन स्थितस्य घित्वाभावस्यानुकरणे ङिशा-

ननु रामावित्यादौ वृद्धौ कृतायां कार्यकालपक्षे कथं पदत्वम् ? उभयत आश्रयणेऽन्तादिवद्भावाभावाद्यस्माद्विहितस्तदादितदन्तत्वाभावादत आह—

एकदेशविकृतमनन्यवत् ॥ ३७ ॥

अनन्यवदित्यस्यान्यवन्नेत्यर्थः । तत्रान्यसादृश्यनिषेधे-

---

न्देऽनयैवातिदेशेन गुणाभावः, सखिशब्दसाहचर्येणानुकरणक्षिशब्दावयवेकारभिन्नस्यैव 'घिसंज्ञा'सूत्रे ग्रहणादस्य घित्वाभावाच्च गुणाभाव इत्युक्तम्—तन्न युक्तम्, शास्त्रीयवचनेनाशास्त्रीयधर्मातिदेशस्य क्वाप्यदर्शनात, शास्त्रीयकार्यप्रवृत्तिफलायैव 'अचः परस्मिन्नि'त्यतद्भिन्नातिदेशस्य प्रवृत्तेश्च । द्वितीयसमाधानमपि न युक्तं; तत्साहचर्येण हरिशब्दावयवभिन्नादेरपि ग्रहणापत्तौ वहूपप्लवः स्यात्, सखिशब्दे प्रथमोपात्तसकारस्यापि साहचर्येणोक्तार्थलाभसम्भवे तदुपेक्षायां वीजाभावाच्च ॥ ३६ ॥

कार्यकालपक्षे कथं पदत्वमिति—एकादेशेन सुपस्तदादेश्चापहारेण सुबन्ततदादित्वाभावात् 'सुप्तिङन्तमि'त्यस्याप्राप्तिरिति भावः । ननु एकादेशघटिते औ शब्दे परादिवद्भावेन सुप्त्वं एकादेशघटिते रामावित्यादौ पूर्वान्तवद्भावेन तदादित्वमिति सुबन्ततदादित्वात्पदत्वं स्यादेवेत्यत आह—उभयत इति । नन्विदं न युक्तं, भपदसंज्ञाविषये यथोद्देशपक्ष एवेति पूर्वोक्तस्वग्रन्थेन विरोधात्, व्यवस्थितपक्षद्वयमध्य एकस्मिन् पक्षे लक्ष्यसिद्धौ पक्षान्तरे लक्ष्यासिद्धावपि क्षत्यभावेन यथोद्देशपक्षे पदत्वसिद्धेश्चेति चेत्—न, प्राचीनमताभिप्रायेणैतद्ग्रन्थस्य सत्त्वात् । किञ्च कार्यकालपक्षे अंशद्वयम्—स्वदेशत्यागो यदा कार्यं तदा संज्ञेति च, तत्राद्यांश एव यथोद्देशपक्ष एवेत्यवकारेण व्यावर्त्यते, अन्त्यांशस्तु पद-

संज्ञायामप्यस्त्येवेति न विरोधः। भसंज्ञासाहचर्येण परनिमित्तक-'स्वादिष्वि'तिपदसंज्ञाया एव तत्रत्यपदपदेन ग्रहणमिति केचित्। 'उभयत आश्रयण' इतिनिषेधोद्भावनमप्ययुक्तं, प्राचीनमताभिप्रायकं वा, स्वमते उभयत आश्रयणेऽपि अन्तादिवद्भावस्येष्टत्वात्। केनचित्तु—तदादित्वस्य प्रत्ययाव्यवहितपूर्वत्वघटिततया व्यपवृक्तत्वेन नातिदेश इत्युक्तम्—तत्तु अत्यन्तमसङ्गतम्, तदादित्वे प्रत्ययाव्यवहितपूर्वत्वघटितत्वस्य कथमप्यसम्भवात्।

वस्तुतस्तु—नेदं परिभाषायाः फलम्, यथोद्देशपक्षे पूर्वजातपदसंज्ञाया राम औ इत्यस्य स्थाने रामावित्यादेश इत्यानुमानिकस्थान्यादेशभावमादाय रामावित्यत्र स्थानिवद्भावेन लाभसम्भवात्। ननु राम औ इत्यवस्थायां पदसंज्ञावृद्ध्यादेशयोः प्राप्तौ कृताकृतप्रसङ्गित्वेन नित्यत्वादादेशप्रवृत्त्या न यथोद्देशपक्षेऽपि पदत्वसिद्धिरिति चेत्—न, अपरनिमित्तकत्वेनान्तरङ्गत्वात् पूर्वं, विरोधाभावेन बाध्यबाधकभावासम्भवात्समकालमेव वा पदसंज्ञायाः प्रवृत्तेः। ननु चकारेत्यत्र कृधातोर्लिटि द्वित्वे पूर्वस्याभ्यासत्वे उरदत्वे रपरत्वे कर-कृइत्यवस्थायां करित्यस्याभ्यासत्वाभावेन हलादिः शेषो न स्यात्, अभ्यासस्यानर्थकत्वेनानुमानिकस्थान्यादेशभावस्यार्थवत्त्वनिबन्धनस्याभावेन स्थानिवद्भावाप्रसक्तेः, द्विरुक्तधातुपूर्वभागत्वाभावेन पुनरभ्याससंज्ञाया अप्राप्तेश्च; स्वीकृतेन तु अनेन न्यायेन कृइत्यत्र स्थितं द्विरुक्तधातुपूर्वभागत्वमभ्यासत्वं वा करित्यत्रानीय हलादिः शेष उपपद्यते इति फलमिति चेत्—नैवम्, अर्द्धाधिकस्य मात्राकालिकस्य ऋकारस्य विकृतत्वेन प्रकृतपरिभाषाया अप्राप्तेः। न च द्वित्वशास्त्रविशिष्टसमुदायविशिष्टस्याभ्याससंज्ञा विधीयते, वैशिष्ट्यञ्च स्वीयोद्देश्यताश्रयघटितत्व-स्वीयविधेयताश्रयघटितत्व-स्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन, तृतीयसम्बन्धघटकं वैशिष्ट्यं स्वीयोद्देश्यताश्रयेतरत्व-स्वीयविधेयताश्रयेतरत्वोभयसम्बन्धेन; स च

समुदायः कृ-कृ इति तद्विशिष्टश्चाद्यः कृ इति, वैशिष्ट्यञ्च स्वारम्भकत्व-स्वारम्भकाव्यवहितपूर्वत्वोभयसम्बन्धेन, समन्वयः सुगमः; एवञ्च कृकृइतिसमुदाये यत् द्वित्वशास्त्रविशिष्टत्वन्तत् 'एकदेशविकृत'न्यायेन कर्-कृसमुदायेऽतिदिश्यते इति द्वित्वशास्त्रविशिष्टसमुदायः कर् कृ इति तद्विशिष्टश्चाग्रिमसम्बन्धाभ्यां कर् इति तस्याभ्याससंज्ञेति युक्तमेव न्यायफलमिति वाच्यम्; द्वित्वशास्त्रविशिष्टसमुदायत्वस्य स्वीयोद्देश्यताश्रयत्वरूपविकृतावयवघटितत्वेनातिदेशालभ्यत्वात्। न च तवैव कथं हलादिः शेष उपपद्यते इति वाच्यं; यतो द्वित्वशास्त्रविशिष्टस्याभ्याससंज्ञेत्यर्थः, वैशिष्ट्यञ्च स्वीयविधेयताश्रयावधिकपूर्वत्व-स्वीयोद्देश्यताश्रयसमभिव्याहृतवर्णाघटितत्वोभयसम्बन्धेन; कर्-कृइत्यत्र करित्यस्य विधेयताश्रयोत्तरखण्डपूर्वत्वमस्ति, उद्देश्यताश्रयकृसमभिव्याहृतो द्वित्वपूर्वकालिकोवर्ण उपसर्गावयवादिस्तदघटितत्वञ्च करित्यस्यास्तीत्युपपन्नं न्यायं विनाप्यभ्यासत्वम्। अथवाऽन्त्यसम्बन्धस्थाने स्वीयोद्देश्यताविशिष्टत्वं देयं, वैशिष्ट्यं स्वाश्रयत्व-स्वाश्रयप्रकृतिकत्वैतदन्यतरसम्बन्धेन, कृकृइत्यत्र कृइत्यत्राद्यः सम्बन्धः, कर्-कृइत्यत्र करित्यत्रोद्देश्यताश्रयः कृ, तत्प्रकृतिकत्वमस्तीति समन्वयः। न च प्रहिणोतीति फलं, तत्र हि प्रहितीति स्थिते श्नुप्रत्ययं युगपद्गुणणत्वयोः प्राप्तौ 'हिनुमीने'त्यस्यासिद्धत्वात्पूर्वं गुणे हिनोशब्दस्यानर्थकत्वेनानुमानिकादेशत्वस्यासत्त्वेन स्थानिवद्भावाप्राप्तेरनेन न्यायेनैव हिनुशब्दत्वं सम्पादनीयमिति फलत्वं सम्यगेवेति वाच्यम्; गुणस्य 'अचः परस्मिन्नि'ति स्थानिवद्भावेन हिनुशब्दत्वस्योपपत्तेः। न च पूर्वत्रासिद्धीय इति निषेधः, तस्य दोष इति प्रतिषेधात्। प्रकृष्टो रा यस्मिन् कुले तत् प्ररि कुलं ततो द्विवचने प्रराभ्यामित्यादौ रिशब्दस्यैकदेशविकृतन्यायेन रैशब्दत्वादात्वसिद्धिरित्यपि फलं न युक्तम्, रैशब्दस्य रीत्यादेश इत्यानुमानिकस्थान्यादेशभावकल्पनात् स्थानिवद्भावेनैव सिद्धेः। गुणोदर्काम-

त्यादौ 'उदकेऽकेवल' इति स्वरसिद्ध्यर्थं दकशब्दस्यानेन न्यायेनोदकशब्दत्वं, तत्र ह्यन्तरङ्गत्वात्पूर्वमेकादेश इति फलम्—इत्यपि न, 'पूर्वोत्तरपदनिमित्तककार्यात्प्रागन्तरङ्गोऽप्येकादेशो ने'तिपरिभाषया स्वरस्यैव पूर्वं प्रवृत्तेः। अतएवानुमानिकस्थान्यादेशभावमाश्रित्यास्य न्यायस्यानाश्रयणं स्थानिवत्सूत्रे भाष्ये उक्तम्।

एकदेशः विकृतो विकारप्रतियोगी यस्मिन्, यन्निष्ठविकारप्रतियोगी एकदेश इति यावत् स एकदेशविकृतः। यथा रामिति मान्तनिष्ठविकारप्रतियोगी रामेत्यकारान्तस्यैकदेशोऽकारस्तथा च यदेकदेशविकृतोऽर्थात् यदेकदेशप्रतियोगिकविकारविशिष्टो यो भवति स ततोऽन्यो न भवतीत्यर्थः। यथा रामशब्दैकदेशाकारप्रतियोगिकविकारविशिष्टो रामिति मान्तस्ततोऽन्यो न भवति। अथवा विकृतमिति भावप्रत्ययान्तो विकार इत्यर्थः, एकदेशस्य विकृतं यस्मिन्निति व्यधिकरणबहुव्रीहिः। यद्वा एकदेशपदमेकदेशप्रतियोगिके लाक्षणिकम्, समानाधिकरणबहुव्रीहिरेव एकदेशपदस्वरसादेव प्रतियोगिभूतावयवभिन्नसकलावयवसद्भावः तदितरवर्णासद्भावश्च सूचितः, तेन जराशब्दैकदेशविकृतो जरशब्दो न तु निर्जर शब्द इति बोध्यम्। तथा च[1] स्वविशिष्टं स्वतो भिन्नं न भवतीत्यर्थः, वैशिष्ट्यं स्वघटकमात्रप्रतियोगिकविकारवत्त्व-स्वविशिष्टाघटितत्वैतदुभयसम्बन्धेन, सम्बन्धे वैशिष्ट्यं स्वाघटकत्व-

---

१ तथा चेति। केचित्तु—प्रकृतिविशिष्टत्वमेकदेशविकृतत्वम्, वैशिष्ट्य स्वघटकोद्देश्यकविकारेतरयावद्घटितत्व-स्वघटकोद्देश्यकविकारघटितत्व-स्वविशिष्टाघटितत्वैः, सम्बन्धघटकवैशिष्ट्य स्वानवयवत्व-स्वघटकमात्रोद्देश्यकविकारेतरत्वाभ्याम्; अत्र निर्जरघटकरेफमात्रस्य रेफान्तस्य निर्जरेतिसमुदायस्य च जराशब्दत्ववारणाय संसर्गत्रयोपादानम्, रामिति मान्तस्य प्रकृतित्वसिद्धये संसर्गघटक आद्यः, वीवधशब्दे 'विभाषा विवधाच्चे'ति ठन्ठञ्सिद्धये द्वितीय इति प्राहुः।

ऽन्यत्राभावः सुतराम् । अतएव तादृशादर्थबोधः, अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात्ततो बोधो न स्यात् । एवं च राम् इति मान्तस्य यस्माद्विहितस्तत्त्वम् औ इत्यस्य परादिवत्त्वेन सुप्त्वमिति तदादितदन्तत्वमार्थसमाजग्रस्तम् । छिन्नपुच्छे शुनि श्वत्वव्यवहारवन्मान्ते तत्त्वं लोकन्यायसिद्धम् । अतएव 'प्राग्दी-

---

स्वघटकमात्रोद्देश्यकविकारेतरत्वोभयसम्बन्धेन । निर्जरशब्दे जराशब्दवैशिष्ट्यवारणाय द्वितीयः सम्बन्धः, तत्रोक्तोभयसम्बन्धेन स्वविशिष्टो निशब्दः तद्घटितत्वात्तद्व्युदासः । राशब्दे जराशब्द-वैशिष्ट्यसत्त्वेऽपि जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन न तस्मिन् तद्रूपताव्यवहारः । नापि रामावित्यादौ रामशब्दैकदेशविकृतत्व-मेकादेशस्य, तद्घटकमात्रोद्देश्यकत्वाभावात् ।

अतएवेति—मान्ते रामि अदन्तरामशब्दाभेदस्यानया बोधि-तत्वादेवेत्यर्थः । स्वाभेदस्य बोधनात्स्ववृत्तिदाशरथिनिरूपितशक्ति-मत्त्वबोधनमर्थात् सिद्धमिति बोध्यम् । न चैवं सति अदन्त-त्वादिधर्मवत्त्वमपि स्यादिति वाच्यं, तस्य वर्णसन्निवेशसापेक्ष-त्वेनातिदेशालभ्यत्वाद्विकृतावयवनिबन्धनत्वाच्च । अन्यथा—परि-भाषाया अभावे । शक्ततावच्छेदकज्ञानादेव शक्तिज्ञानमिति बोध्यम् । एवञ्चेति—परिभाषास्वीकारे चेत्यर्थः । आर्थसमाज-ग्रस्तमिति—अर्थस्यायमार्थः, समाजः समुदायः, आर्थश्चासौ समाज आर्थसमाजस्तेन ग्रस्तं व्याप्तमित्यर्थः । प्रकृते अर्थपदेन सुप्त्वं तदादित्वञ्च विवक्षितमिति बोध्यम् । लोकसिद्धत्वेऽपि शास्त्रे तदाश्रयणे प्रमाणमाह—अतएवेति, परिभाषास्वीकारादेवेत्यर्थः । 'प्राग्दीव्यतोऽणि'तिसूत्रे दीव्यदिति 'तेन दीव्यति खनती'त्यत्रत्य-दीव्यतीत्यस्यानुकरणं, तच्च न सम्भवति, अनुकरणस्यानुकार्यस-

च्यतः' इतिसूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा 'किमर्थं विकृतनिर्देशः एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषैकदेशविकृतमनन्यवदि'तीत्युक्तम्। एतेनायं न्यायः शास्त्रीयकार्य एव शास्त्रीयविकार एवेत्यपास्तम्।

---

मानानुपूर्वीकत्वनियमात्। स्वीकृते चास्मिन् न्याये दीव्यतीत्येतदेकदेशविकृतो दीव्यदिति, तच्च दीव्यतितोऽभिन्नमिति न्यायेन बोधिते दीव्यति चेत्समानानुपूर्वीकत्वाद्दीव्यतेरनुकरणं भवितुमर्हति, तदभिन्नं दीव्यदपि भवत्येव दीव्यतेरनुकरणमिति सुपपन्नं ज्ञापकत्वम्। अत्रापि स्वांशे चारितार्थ्यस्य चर्चा न कार्या, यदनुपपत्त्या यत् कल्पितं तेन तदुपपत्तिमात्रस्यैव ज्ञापनेऽपेक्षितत्वात्। न च दीव्यतीत्येतद्घटकदीव्यत एवानुकरणं दीव्यदित्यस्तु, तथा सत्यनुपपत्तिविरहाज्ज्ञापनासम्भव इति वाच्यम्; तथासत्यवधेर्दीव्यतो निरर्थकत्वेनावध्यवधिमतोस्साजात्यमितिनियमबलात् प्रत्ययार्थबोधनाय निर्दिष्टपदकसूत्र एवाधिकार इत्यर्थालाभेन प्रत्ययार्थबोधकपदाघटितेऽपि शास्त्रे 'बाह्वादिभ्यश्चे'त्यादावणधिकारापत्तेः। दीव्यतीत्यस्यावधित्वे तु न दोषः, तस्यार्थबोधकत्वेनोक्तन्यायविषयत्वात्। दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिति—दीव्यतिशब्दैकदेशो दीव्यच्छब्दोऽनुकरणमित्यर्थः। यत्तु केनचित् दीव्यतिशब्दैकदेशेतिप्रतीकमुपादाय दीव्यतिशब्दवृत्त्यर्थवत्त्वं तान्ते आरोप्य कृतमनुकरणमित्यर्थ इत्युक्तम्—तन्न युक्तं, प्रकृतोपयोग्यर्थशून्यत्वादर्थवत्त्वारोपस्यानुकरणेऽनुपयोगाच्च। एतेनेति—'प्राग्दीव्यत' इतिसूत्रस्थज्ञापकपरभाष्येणेत्यर्थः। तत्र हि विकारस्य कार्य्यस्य च शास्त्रीयत्वाभावाच्छास्त्रीयविकारकार्य्ययोरेव ग्रहणे तद्भाष्यविरोधः स्यादिति भावः।

विकृतावयवनिबन्धनकार्ये तु नायम्, छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद्विकृतावयवव्यवहारस्य दुरुपपादत्वात् ।

एवमक्तपरिमाणग्रहणेऽपि नायम्, उक्तयुक्तेः । एतत् 'येन विधिः' इत्यत्र भाष्यकैयटयोर्ध्वनितम् ।

---

विकृतावयवेति—विकृतो योऽवयवस्तन्निमित्तकं यत्कार्यमित्यर्थः । तेन निजरशब्दे आदन्तत्वप्रयुक्तं कार्यन्नेत्यर्थः ।

अक्तपरिमाणग्रहण इति—परिच्छिन्नपरिमाणग्रहण इत्यर्थः । उक्तयुक्तेरिति—लोके छिन्नपुच्छे शुनि पुच्छवन्निष्ठस्य सेटकपरिमितत्वादेर्व्यवहाराभावादित्यर्थः ।

यत्तु केनचित्—संख्यात्वव्याप्यपरिमाणत्वव्याप्यधर्मानयने तद्घटितधर्म्मानयने च तदप्रवृत्तिरिति प्रतिज्ञाय शतत्वशतमुद्राघटितमञ्जूषात्वयोः सेटकत्वसेटकपरिमितधान्यघटितमञ्जूषात्वयोश्च नातिदेश इत्युक्तम्—तत्तु न विचारसहम्, शतं ब्राह्मणा इत्यादिप्रयोगदर्शनात् शतशब्दः संख्येयपरः, शतत्वं संख्या न तु संख्यात्वव्याप्यधर्मः । मञ्जूषायां मञ्जूषात्वे वा शतमुद्राघटितत्वं खपुष्पायमानं, रामशब्दो रेफघटित इतिव्यवहारवत्, ब्राह्मणो वस्त्रघटित इतिव्यवहाराभावात् । घटितत्वं व्याप्यत्वे सति व्यापकत्वाभाववत्त्वमिति निश्चीयते, मञ्जूषा मञ्जूषात्वं वा न शतमुद्रादिव्याप्यमित्यागोपालाङ्गनं प्रसिद्धमित्यहो व्यामोहः! इत्यलमसत्पदार्थपर्यालोचनेन । एवमत्रैव केचिदित्युपक्रम्य जरात्वस्य चतुष्ट्वसमनियतत्वमुक्तम्—तदपि पदार्थानवबोधविजृम्भितम्, प्रत्युच्चारणभिन्नजराशब्दनिष्ठैकजरात्वस्य प्रतिधर्म्मिभिन्नचतुष्ट्वसंख्यासमनियतत्वासम्भवात् । तत्रैवाभिशब्दत्वातिदेशाभावेनोपसर्गात्परत्वाभावाद् ह्रस्वो नेत्युक्तम—तदप्य-

ज्ञानविलसितम्। न ह्युपसर्गत्वमभिशब्दत्वरूपं तद्धटितं वा येनाभिशब्दत्वानतिदेशप्रयोज्य उपसर्गत्वाभावः स्यादिति विभावयन्तु सुधियः।

प्रकृतमनुसरामः। किन्नामाक्तपरिमाणत्वम्? न तावद्यत्किञ्चित्संख्यासमनियतत्वं, जरात्वाद्यानुपूर्व्याः तिङ्त्वप्रत्ययत्वादीनाञ्च शास्त्रकारसम्मतोऽक्तपरिमाणत्वव्यवहारो न स्यात्, उक्तयुक्त्या कस्या अपि संख्यायास्तेषां समनियतत्वाभावात्, सेटकपरिमितत्वादीनामपि संख्यासमनियतत्वाभावादक्तपरिमाणत्वव्यवहाराभावप्रसंगात्। इदन्तु तत्त्वं—संख्यात्वपरिमाणत्वान्यतरव्याप्ययत्किञ्चिज्जातिव्यापकाभावप्रतियोगित्वमक्तपरिमाणत्वम्। व्यापकत्वघटकाधिकरणता च स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्ना बोध्या। यथा संख्यात्वव्याप्या जातिः पञ्चत्वत्वं, स्वाश्रया-

---

अक्तपरिमाणत्वमिति। अन्ये तु—संख्यात्वपरिमाणत्वान्यतरव्याप्यधर्मावच्छिन्नप्रकारताकबुद्धिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयविशिष्टत्वं तत्त्वम्, वैशिष्ट्यं स्वघटितत्व-स्वसमनियतत्वान्यतरेण। द्व्यच्कत्वादेरेकत्वादिप्रकारकबुद्धिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयीभूतद्वित्वादिघटितत्वात् जरात्वादेश्च तादृशजरागतचतुष्ट्वसमनियतत्वादक्तपरिमाणत्वमुपपद्यते; न च घट एकः रामप्रकृतित्वाभाववत् इति समूहालम्बनबुद्धिनिष्ठप्रकृतित्वाभावप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतामादाय प्रकृतित्वेऽपि अक्तपरिमाणत्वापत्तौ अतिदेशो न स्यादिति वाच्यम्, तादृशबुद्धौ मुख्यविशेष्यताद्वयशून्यत्वनिवेशेनादोषात्; न चैकत्र द्वयंरीत्या जायमानज्ञाने विशेष्यताद्वयविरहात् तादृशमेव एकत्वप्रकृतित्वाभाववत् राममितिज्ञानमादाय अतिव्याप्तितादवस्थ्यमिति वाच्यम्, तादृशबुद्धित्वव्यापकप्रतिबध्यतानिवेशेनादोषात्; न चैवमपि घटाभाववान् प्रकृतित्वाभाववान् इतिनिश्चयविशिष्टघटाभाववत् रामम् इति निश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय दोष इति वाच्यम्, प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशेनादोषात् इत्याहुः।

यत्र त्वर्द्धं तदधिकं वा विकृतं तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्यसिद्ध्यर्थं विकृतानलूरूपावयवत्त्वप्रतीत्यर्थं च स्थानिवत्सूत्रम् ।

---

श्रयत्वसम्बन्धेन तदधिकरणं पञ्चाक्षरावयवकः समुदायः, तन्निष्ठाभावो जरात्वाभावाभावो न स्यात् अपि तु घटत्वाद्यभावः, तदीयप्रतियोगितावच्छेदकं घटत्वत्वम्, अनवच्छेदकं जरात्वाभावत्वं, तद्वत्त्वरूपव्यापकत्वं जरात्वाभावस्य, तत्प्रतियोगित्वं जरात्वस्येति लक्षणसमन्वयः । अङ्गत्वधातुत्वपदत्वादीनाञ्च न तथात्वं, तेषामभावस्य कामपि संख्यात्वव्याप्यजातिं प्रति व्यापकत्वाभावात् । एवं तिङ्त्वोपसर्गत्वप्रत्ययत्वाद्यभावाः पञ्चत्वत्वादिजातिव्यापका इति तेषामक्तपरिमाणत्वसिद्धिः । येषां धर्माणां परिगणिताक्षरारम्भकसमुदायात्मकव्यक्तिवृत्तित्वं तेषामक्तपरिमाणत्वम्, अङ्गत्वधातुत्वपदत्वानां न तथेति न तान्यक्तपरिमाणानीति निष्कर्षः । ननूदकशब्दत्वस्याप्यक्तपरिमाणत्वादनेन न्यायेन दकशब्दे उदकशब्दत्वानयनपरभाष्यविरोध इति चेत्—न, तद्भाष्यस्यैकदेश्युक्तत्वात्, 'पूर्वोत्तरनिमित्तकार्यादि'तिपरिभाषया गुडोदकमित्यादौ 'उदकेऽकेवल' इति स्वरस्य बहिरङ्गस्याप्येकादेशात्प्रागेव प्रवृत्तेः ।

ननु अनेनैव न्यायेन सर्वत्र सिद्धौ स्थानिवत्सूत्रं किमर्थमित्यत आह—यत्रत्वित्यादि । जातिव्यञ्जकेत्यादि, यथा रामायेत्यादौ, तत्र सुप्त्वातिदेशार्थमित्यर्थः । तत्त्वाप्रतीताविति—अनन्यत्वाप्रतीतावित्यर्थः, लोके छिन्नाधिकावयवके श्वादौ श्वत्वाद्यप्रतीतेरिति भावः । विकृतानलूरूपेति—चर्म्मन्शब्दाण्णिचि क्विपि टिणिलोपे चर्मित्यत्रान्नन्तत्वातिदेशार्थमित्यर्थः, तत्रानेन न्यायेन न सिद्धिः, विकृतावयवनिबन्धनत्वादन्नन्तत्वव्यवहारस्य ।

ननु अभीयादिष्वेकादेशे उपसर्गत्वस्याक्तपरिमाणत्वेनानति-

क्वचित्तु लक्ष्यानुरोधान्न्यायानाश्रयणम्, तेनाभीयादित्यादिसिद्धिः। स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः 'प्रथमयोः पूर्वसवर्ण' इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः ॥ ३७ ॥

इति परिभाषेन्दुशेखरे शास्त्रत्वसम्पादकपरिभाषाप्रकरणं समाप्तम्।

## अथ बाधबीजकथनप्रकरणम्

पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं[1] बलीयः ॥ ३८॥

पूर्वात्परं बलवत् विप्रतिषेधशास्त्रात्पूर्वस्य परं बाधकमिति यावत् ॥ ३८ ॥

---

देशाद्ह्रस्वत्वाप्रवृत्तावपि भान्तस्याभित्यस्य पदत्वमनेन न्यायेनादाय जश्त्वापत्तिरित्यत आह—क्वचिदित्यादि।

इति विजयायां शास्त्रत्वसम्पादकपरिभाषाप्रकरणं समाप्तम्।

शास्त्रघटकपदप्रयोज्यविषयतानियामकपरिभाषां व्याख्याय शास्त्रस्य बलवत्त्वप्रयोजकपरिभाषाप्रकरणं व्याख्यातुमारभमाणः सामान्यरूपेण बलवत्त्वप्रयोजकप्रदर्शकपरिभाषामाह—पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इति। क्रमेण निष्कृष्य व्याख्यायते—पूर्वात्परं बलवत् विप्रतिषेधशास्त्रादिति । पूर्वपरशब्दयोः

---

१ उत्तरोत्तरमिति। 'आनुपूर्व्ये द्वे वाच्ये' इत्युत्तरशब्दस्य द्वित्वे 'समासवच्च बहुलमि'ति बहुलग्रहणेन समासवद्भावः तथा च पूर्वपरनित्यान्तरङ्गापवादानां यदुत्तरं तद्बलीय इत्यर्थः।

नन्वेवं भिन्धीत्यत्र परत्वात्तातङा बाधितो धिर्न स्यादत आह—

---

सम्बन्धिशब्दत्वात् स्वोत्तरत्वसम्बन्धेन स्वविशिष्टं शास्त्रं स्वापेक्षया बलवत् स्वोत्तरत्वादित्यनुमानाकारो लभ्यते । उत्तरत्वस्य बलवत्त्वप्रयोजकत्वे बीजमाह—विप्रतिषेधशास्त्रादिति । एतेन विप्रतिषेधशास्त्रस्य परशास्त्ररूपपक्षावृत्तित्वाद्धेतुत्वासिद्धिरित्यपास्तम् । परस्य बहिरङ्गत्वानित्यत्वोत्सर्गत्वान्यतमधर्मवत्त्वे दुर्बलत्वेन बाधदोष इति न वाच्यं, विप्रतिषेधशास्त्रोपन्यासेन तुल्यबलत्वस्यापि सूचनेन स्वनिरूपितबहिरङ्गत्वाभाववत्त्व-स्वनिरूपितानित्यत्वाभाववत्त्व-स्वनिरूपितोत्सर्गत्वाभाववत्त्वसम्बन्धानामपि हेतौ पक्षतावच्छेदके च निवेशबोधनात्। परं बाधकमिति यावदिति—परशास्त्रेण स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविहितकार्याश्रयातिरिक्तत्वेन च पूर्वशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोच इति बोध्यम् ॥ ३८ ॥

नन्वेवं भिन्धीत्यत्र परत्वात्तातङा बाधितो धिर्न्नेति । नन्वेवं पूर्वशास्त्रापेक्षया पूर्वोक्तप्रकारद्वयेन संकोचकत्वरूपबाधकत्वस्य परशास्त्रे स्वीकारे इदन्न युक्तं, तातङि धिभावं परत्वाद्बाधित्वा जाते स्थानिवद्भावेन हित्वं दुर्लभम्; 'तातङादेः स्थानिवत्त्वप्रतिषेधो वक्तव्य'इतिवार्तिकेन स्थानिवत्त्वनिषेधात् भिन्तादित्येव रूपं वैकल्पिकत्वेन तदभावे बाधकाभावाद्धिभावसिद्धेश्च । अथ वैकल्पिकत्वेन तातङ्तदभावौ विधेयौ तातङा इव तदभावेनापि परत्वाद्बाधितो धिर्न्न स्यादपि तु हेरेव श्रवणं स्यादिति सम्यगेवावतरणम्, तातङा इत्युत्तरमिव तदभावेनापीति शेष इति चेत्—न, अप्राप्तविभाषास्थलेऽभावस्य सिद्धत्वेन भावमात्रस्यैव विधेयत्वात्। अतएव 'मुचोऽकर्मकस्य गुणो वे'त्यनेनाभावस्याविधेयत्वात् तत्पक्षे

पुनः प्रसङ्गविज्ञानात्सिद्धम् ॥३९॥

नन्वेवं तिसृणामित्यत्र परत्वात्तिस्रादेशे पुनस्त्रयादेशः स्यादत आह—

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥४०॥

तत्र क्वचिच्चरितार्थयोरेकस्मिन्युगपदुभयोः कार्ययोर-

---

सुसुप्तते वत्सः स्वयमेवेत्यत्र 'अत्र लोपोऽभ्यासस्ये'तिसूत्रेण तत्प्रकरणविधेयसन्नियोगशिष्टाभ्यासलोपविधायकेनाभ्यासलोपो न।

केचित्तु—भिन्धकीत्यत्र परत्वाद्धिना बाधितोऽकच् न स्यादित्यवतरणमाहुः—तदपि न, कुत्सानिमित्तकत्वेनाकचो बहिरङ्गत्वेनैव बाधात् तुल्यबलत्वाभावेन विप्रतिषेधसूत्राप्राप्तेः।

परे तु—भिन्धीति भिन्तादित्यस्योपलक्षणं, तत्र परत्वात्तातङि धिभावं बाधित्वा जाते धिभावस्याप्राप्त्या 'तातङादेः स्थानिवत्त्वप्रतिषेधो वक्तव्य' इतिवार्त्तिकस्य वैयर्थ्यमित्याशयकमवतरणमाहुः।

पुनः प्रसङ्गविज्ञानात् सिद्धमिति—प्रसंगशब्दो लुप्तसप्तम्यन्तः, पुनः प्रसंगे प्राप्तौ सत्यां विज्ञानं शास्त्रप्रवृत्तिरित्यर्थः। तथा च परत्वमूलकबाधस्थले स्वप्रवृत्तियोग्यातिरिक्तत्वेन सङ्कोच इति यावत्। प्रथमान्तविज्ञानशब्दान्लमेव परिभाषास्वरूपम्, अधिकन्तु समाधानरूपम् ॥ ३९ ॥

सकृद्गतावित्यादि—विप्रतिषेधे सति सकृद्यद्बाधितं तत् गतौ प्राप्तौ सत्यामपि बाधितमेव न प्रवर्तत इत्यर्थः, उभयरूपेण पूर्वशास्त्रे संकोच इति यावत। उभयत्र बीजमुपन्यस्यति तत्र क्वचिच्चरिता-

---

अवतरणमाहुरिति। भाष्यानुयायिनस्तु तिसृणामित्यत्र नुटः परत्वात्तिस्रादेशे 'सकृद्गतावि'तिन्यायेन नुट् न स्यादित्यवतरणमाहुः।

संभवेन बाधकाभावात्पर्य्यायेण तृजादिवत् शास्त्रद्वयप्रसङ्गे[1] नियमार्थं विप्रतिषेधसूत्रमिति सकृद्गतिन्यायसिद्धिः। यथा

---

र्थयोरित्यादिना। पर्य्यायेण तृजादिवदिति—यथा ण्वुल्तृचौ पर्य्यायेण भवतस्तथा वृक्षेभ्य इत्यत्रैत्वदीर्घयोरपि पर्य्यायेण प्रसङ्ग इत्यर्थः।

ननु पर्य्यायेण प्रवृत्तिरित्यसंगतं, तथा सति विधेयशून्यस्यापि कस्यचिल्लक्ष्यस्य साधुत्वाभावाय विधेये क्लृप्तस्योद्देश्यतावच्छेदकव्यापकत्वस्य भङ्गापत्तेः पक्तेत्यादौ धातुत्वरूपोद्देश्यतावच्छेदकाधिकरणे स्वाव्यवहितपूर्वत्वसम्बन्धेन ण्वुलोऽभावस्य सत्त्वात्; न चात्रोक्तसम्बन्धेन व्यापकत्वस्य विधेयद्वये बाधितत्वेन अन्यत्र तथा नियमस्वीकारेऽपि प्रकृते उद्देश्यतावच्छेदकसामानाधिकरण्यमात्रस्वीकारेण पर्य्यायेण प्रवृत्तौ बाधकाभाव इति वाच्यम्, तथा सति प्रकृते कदाचिद्विधेयद्वयशून्यस्य पचइत्यस्यापि साधुतापत्तेः; अत्रोच्यते—प्रकृते विधेये अन्यतरवैयर्थ्यापत्त्योद्देश्यतावच्छेदकं प्रति विधेयतावच्छेदकधर्म्मावच्छिन्नव्यापकताया अभानेऽप्यन्यतरत्वावच्छिन्नव्यापकताया एव शास्त्रतात्पर्य्यविषयत्वात्, तस्य चाबाधात् विधेयशून्यस्य साधुत्वाप्रसक्तेः, व्यापकताघटकाधिकरणस्यान्यतरानधिकरणस्यैव प्रकृते निवेशेन विधेयतावच्छेदकावच्छिन्नव्यापकताभानेऽपि क्षत्यभावाच्च।

नियमार्थमिति। विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥

---

1 शास्त्रद्वयप्रसङ्ग इति। यद्यपि उद्देश्यतावच्छेदकावच्छेदेनैव विधेयान्वयो भवति, अन्यथा विधेयरहितोद्देश्यप्रयोगस्यापि साधुता प्रसज्येत, इत्थञ्च पर्यायेणेतिवचनं न सङ्गच्छते; तथापि विधेयद्वयविधानसामर्थ्यात् तत्तद्विधेयान्यतरत्वावच्छिन्नाया एव व्यापकतायाः प्रकृते अभ्युपेयत्वान्न दोष इत्याशयः।

तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति, यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये तदोभयोर्न करोति यौगपद्यासंभवात्, तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिन्लक्ष्ये यौगपद्येन प्रवृत्त्यसंभवादप्रतिपत्तौ प्राप्तायामिदं परविध्यर्थं; तत्र कृते यदि पूर्वप्राप्तिरस्ति तर्हि तदपि भवत्येवेति पुनः प्रसङ्गविज्ञानसिद्धिरिति 'विप्रतिषेध'सूत्रे भाष्ये स्पष्टम्।

यत्तु कैयटादयः—व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोः तत्तल्लक्ष्यविषययोरचारितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति सकृद्गतिन्यायसिद्धिः, अत्र पक्षे एतन्नियमवशादेतल्लक्ष्यविषयकपूर्वशास्त्रानुपप्लव एव; जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन

---

इतिवचनानुसारेण परकार्यरूपविधेयस्य पाक्षिकप्राप्तिरूपस्य नियमत्वप्रयोजकस्य सत्त्वादिति भावः। परमेवेति—न पूर्वमिति नियमस्तेन पश्चादपि न पूर्वप्रवृत्तिरिति बोध्यम्। अप्रतिपत्तौ प्राप्तायामिति—भृत्यस्थानीयं लक्ष्यं कस्यापि शास्त्रस्य विधेयसम्बन्धरूपं कार्यं न करिष्यतीति भवति शास्त्राप्रवृत्तिरूपाप्रतिपत्तिरित्यर्थः। परविध्यर्थमिति—'विधिरत्यन्तमप्राप्तावि'त्युक्तेरिति भावः।

व्यक्तौ पदार्थ इति। 'त्रेस्त्रय'इत्यादिशास्त्रघटकत्र्यादिपदानां त्रित्वाद्युपलक्षिततत्तद्व्यक्तित्वावच्छिन्ने शक्तिरिति न शक्यतावच्छेदकतत्तद्व्यक्तित्वभेदेऽपि शक्तिभेदः, उपलक्षणीभूतधर्मस्यैक्यात्; एकेन पदेनैकतद्व्यक्तित्वावच्छिन्नस्यैव बोधादन्यतद्व्यक्तित्वावच्छिन्ने कार्यं न स्यादिति प्रतिलक्ष्यं लक्षणोपप्लव इति बोध्यम्।

युगपदुभयासम्भवरूपविरोधस्थले उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः प्रसङ्गविज्ञानसिद्धिरित्याहुः—तन्न, व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जातिपक्षे इत्यत्र मानाभावात्, न ब्राह्मणं हन्यादित्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात् । अतएव 'सरूप'सूत्रे भाष्ये जातौ पदार्थेऽनवयवेन साकल्येन विधेः प्रवृत्तौ गौरनुबन्ध्य इत्यादौ सकलगवामनुबन्धनासम्भवात्कर्मणो वैगुण्यमुक्तम्; द्रव्यवादे चासर्वद्रव्यावगतेर्गौरनुबन्ध्य इत्यादावेकः शास्त्रोक्तः अपरोऽशास्त्रोक्त इत्युक्तम् । किञ्च न हि भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वं विषयत्वं न जातिपक्षे इत्यत्र मानमस्ति । अपि च व्यक्तिपक्षेऽप्यन्यव्यक्तिरूपविषय-

---

सत्प्रतिपक्षन्यायेनेति—विरुद्धसाध्यसाधकहेतुमान् पक्षः सत्प्रतिपक्षः, यथा वह्निव्याप्यधूमवान् पर्वतो वह्न्यभावव्याप्यपाषाणमयत्ववानित्यादौ वह्नेस्तदभावस्य च नानुमितिः, एकपरामर्शस्यापरसाध्यकानुमितौ प्रतिबन्धकत्वात्, तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्ताबुद्धेः प्रतिबन्धकत्वात्; तद्वत् एकस्यापि शास्त्रस्य न प्रवृत्तिः ।

सर्वं लक्ष्यं शास्त्रमिति । लक्ष्यं कर्म्म, शास्त्रं कर्तृ । न ब्राह्मणं हन्यादिति । व्यक्तिपक्षे एकस्या एव ब्राह्मणव्यक्तेर्हननं निषिद्धं स्यान्न सर्वासामिति जातिपक्षाश्रयणम् । अत एवेति—जातिपक्षे शास्त्रस्य सकललक्ष्यव्यापकत्वादेवेत्यर्थः । अनवयवेनेत्यस्यैव व्याख्यानम् साकल्येनेति । द्रव्यवादे चेति—व्यक्तिपक्षे चेत्यर्थः ।

लभेन चरितार्थयोरियं व्यक्तिर्विरोधात्स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम्। जातिपक्षेऽपि तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव नैतद्व्यक्तिविषयकत्वमित्यत्र विनिगमकाभावः। तत्र लक्ष्यानुसारात् क्वचिच्छास्त्रीयदृष्टान्ताश्रयणं क्वचिल्लौकिकदृष्टान्ताश्रयणमिति भाष्यसम्मतमार्ग एव युक्त इति बोध्यम्।

द्वयोः कार्ययोर्यौगपद्येनासम्भव एव विप्रतिषेधशास्त्रोप-

इयं व्यक्तिः—लक्ष्यरूपा व्यक्तिरित्यर्थः। स्वमते व्यवस्थामाह—तत्र लक्ष्यानुसारादित्यादिना। शास्त्रीयदृष्टान्ताश्रयणमिति—यथा पर्यायेण ण्वुल्तृचौ भवतस्तथा पर्यायेण प्राप्तिः स्यादित्यर्थः। लौकिकदृष्टान्ताश्रयणमिति—यथा तुल्यबलयोरेकः प्रेष्यो नोभयोः कार्य्यं करोति तथा लक्ष्यं नोभयोः शास्त्रयोर्विधेयसम्बन्धं करिष्यतीत्यर्थः।

यौगपद्येनासम्भव एवेति—न त्वेकस्य कार्य्यद्वयासम्भव एवेत्यर्थः। यथा शिष्टादिति। अत्र तातङ्शादेशयोरेकस्थानिकत्वाभावेऽपि यौगपद्यासम्भवाद्विप्रतिषेधशास्त्रप्रवृत्तिः। ननु शास्हीतिस्थिते हिनिरूपिताव्यवहितपूर्वत्वविशिष्टशास्त्वं शासि, अङ्गाव्यवहितोत्तरत्वविशिष्टहिशब्दत्वं हौ युगपदस्त्येवेति युगपत्प्रवृत्तौ को विरोध इति चेत—न, हिनिरूपिताव्यवहितपूर्वस्य शासः

१ विप्रतिषेधशास्त्रोपयोगीति। गाव्यादीनामसाधुत्वाय स्वविधेयघटितं साधु तदन्यदसाधु इत्यवश्यं सकलशास्त्रेण ज्ञापनीयम्, एवञ्च 'तुह्यो'रित्यनेन शास्तादित्यस्य साधुत्वं शाहीत्यस्यासाधुत्वं 'शा हा'वित्यनेन च शाहीत्यस्य साधुत्व शास्तादित्यस्यासाधुत्वमित्येवं प्रतिपादनात् अन्योऽन्यविरोधोऽपि स्फुटत्येवेति ध्येयम्।

योगी, इदम् 'इको गुणे'तिसूत्रकैयटे स्पष्टम्; यथा शिष्टादित्यादौ तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः। यद्यपि तातङादेः स्थानिवत्त्वेनास्त्येव तत्, तथा-

---

प्रसंगे शा साधुरित्यर्थे शासूहीत्यस्य प्रसङ्गे शामात्रस्य, एवमङ्गोत्तरत्वविशिष्टस्य, हेः प्रसङ्गे तातङ् साधुरित्यर्थे शासः प्रसङ्गे तातङ्मात्रस्य साधुत्वापत्त्या निमित्तवाचकपदानामावृत्त्या विधेयेऽपि निमित्तानन्तर्यविशेषणस्यावश्यकत्वेन युगपदुभयोः प्रवृत्तौ विधेये स्वस्वनिमित्तानन्तर्यबाधेन विरोधस्य स्पष्टत्वात्। ननु विधेये निमित्तानन्तर्यदानेऽपि 'इको यणची'त्यादौ अजव्यवहितपूर्वेग्घटितस्य स्थानेऽजव्यवहितपूर्वयण्घटितः साधुरित्यर्थे सुधी उपास्य इत्यस्य प्रसङ्गे सुध्युपा सुध्यु इत्यादीनां सुध्युपास्यो देवो मध्वरिरित्यादीनां च प्राप्तस्य साधुत्वस्य वारणाय 'स्थानेऽन्तरतम'परिभाषया अजव्यवहितपूर्वेग्घटितस्य प्रसङ्गेऽजव्यवहितपूर्वयण्घटितोऽन्तरतम आदेश इत्यर्थो वक्तव्यः, सादृश्यं च स्वघटकश्रोतस्थानीतरयावद्वर्णघटितत्व-स्वविशिष्टाघटितत्वोभयरूपेण; वैशिष्ट्यञ्च स्वघटकेतरत्व-स्वघटकोद्देश्यकश्रौतादेशेतरत्वोभयसम्बन्धेन, तथा च प्रसक्तापेक्षया न्यूनाधिकवर्णघटितस्य आदेशस्य न प्रसङ्गः, एवञ्चान्तरतमपरिभाषयैव सुध्यु इत्यस्य शामात्रस्य तान्मात्रस्य चादेशत्वाभावसिद्धौ विधेये निमित्तानन्तर्यदानस्य फलाभाव एव; किञ्चेग्घटितस्य प्रसंगे यण्घटितः साधुरित्यर्थस्य बोधनेऽपि यण्मात्रे शास्त्रस्य व्यापारः, तदितरवर्णानान्तु प्रसक्तानामेवादेशे सन्निवेशो न न्यूनाधिकानां मानाभावात् इत्यन्तरतमपरिभाषामन्तरेणाप्युक्तदोषाणामुद्धाराद्विधेये निमित्तानन्तर्यानिवेश इति विरोधाभाव इति चेन्—न, अजव्यवहितपूर्वेग्घटितस्य प्रसङ्गे यण्घटितः साधुः तद्घटितोऽसाधुरिति

ष्यादेशप्रवृत्त्युत्तरमेव स, न तु तत्प्रवृत्तिकाले। एवं नुम्तृ-ज्वद्भावयोः प्रियक्रोष्टूनीत्यादौ युगपदसम्भवः, 'यदागमा' इत्यस्य नुम्प्रवृत्त्युत्तरं प्रवृत्तेः। एवं भिन्धीत्यत्र तातङ्धिभाव-योर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य चासम्भवो

---

व्यापारस्य 'सुधी उपास्य' इत्यस्य साधुत्वाभावायावश्यकतया अकृतेऽपि शासहीत्यस्य प्रसङ्गे शाघटितः साधुरन्योऽसाधुरित्यर्थे शास्तात् शातात् इत्यनयोरसाधुत्वे बोधिते अङ्गात्परत्वविशिष्ट-हीत्यस्य प्रसङ्गे तातङ्घटितस्साधुरन्योऽसाधुरितिबोधनेन शाही-त्यस्य शास्हीत्यस्य चासाधुत्वं बोधितमिति एकेन यस्य साधुत्वम-परेण तस्यासाधुत्वमिति विरोध इति बोध्यम्; प्रियक्रोष्टूनीत्यादा-वपि एकेन तृज्वद्भावाघटितस्य प्रियक्रोष्टूनित्यस्यासाधुत्वमपरेण नुमघटितस्य प्रियक्रोष्ट्रीत्यस्यासाधुत्वबोधनाद्विरोधः, तथा नुमनु-टोरपि विरोध उन्नेय इति मूलोक्तविधेयान्वयि निमित्तानन्तर्यं हेयमेवेत्याहुः।

यत्तु—नुमनुटोर्विषये तु वारीणामिति लक्ष्यस्यैवोभाभ्यां सा-धुत्वबोधनेऽपि उभयोरपूर्वबोधकत्वासम्भवेनैकस्य विधायकत्वम-परस्यानुवादकत्वं वक्तव्यं तत्र कस्य विधायकत्वं कस्यानुवादकत्व-मित्यादिग्रन्थेन विरोधोपपादनम्—तच्चिन्त्यम्, नुमि दीर्घाभावेन वारिणामित्यस्य नुटि दीर्घे वारीणामित्यस्य साधुत्वेनोभाभ्यां वारीणामित्यस्यैव साधुत्वबोधनासम्भवात्।

यदपि मूलोक्तं न युक्तमादेशप्रवृत्तिकाले निमित्तानन्तर्याभा-वेऽपि तदुत्तरं स्थानिवद्भावेन तत्सत्त्वेनासम्भवोपपादनस्यैवा-सम्भवादित्युक्तम्—तदपि न, प्रवृत्तिकालिकविरोधमात्रेण 'विप्र-तिषेध'सूत्रप्रवृत्तिसम्भवात्।

यदपि किञ्च 'यदागमा'इतिन्यायस्यागमप्रवृत्तिकाल एव

बोध्यः । नुम्नुटोरपि नुट्यजादिविभक्त्यानन्तर्यबाधो नुमि ह्रस्वान्ताङ्गबाध इत्यसम्भवाद् विप्रतिषेधः ।

क्वचिदिष्टानुरोधेन पूर्वशास्त्रे स्वरितत्वप्रतिज्ञाबलात् स्वरितेनाधिकं कार्यमित्यर्थात्पूर्वमेव भवति । तेन सर्वे पूर्वविप्रति-

---

प्रवृत्तिः, 'आद्यन्तावि'तिशास्त्रसहकारेणोद्देश्यग्रहणग्राह्यत्वविशिष्टानामागमानां तत्तच्छास्त्रैर्विधानादित्युक्तम्—तदपि न, प्रकृते स्वाभीष्टसाधके प्रवृत्तिकाले उद्देश्ये तृजन्तत्वाभावेनोद्देश्यग्राह्यत्वेऽपि आगमविशिष्टे तृजन्तत्वाभावेन तृजन्तरूपविधेये सर्वनामस्थानरूपनिमित्तानन्तर्यबाधेन विरोधस्य स्पष्टत्वात् । किञ्च स्वस्वनिमित्तानन्तर्यासम्भवोऽपि दुरुपपाद एवेति तदुत्तरशङ्काग्रन्थोऽप्यसङ्गतः, विधेये निमित्तानन्तर्यस्य पूर्वमेव बुद्ध्यारूढत्वेन विरोधस्य स्पष्टत्वात्, तद्धृदयस्थं कृत्वैव हि स्थानिवद्भावेन विरोधाभावस्योपपादितत्वात् ।

तदुत्तरं तेषां विधेयकुक्षिप्रविष्टत्वेन शास्तीत्यादावपि हिपरकशादेशापत्तिरिति दूषणदानमपि भावानवबोधविजृम्भितमेव, आवृत्त्योद्देश्यविधेययोरुभयत्रैव निमित्तानन्तर्यविशेषणस्य ग्रन्थकाराभिप्रेतत्वात् ।

न च विशिष्टस्य विधेयत्वेऽपि प्राप्ताप्राप्तविवेकन्यायेन शादेश एव विधेयता पर्यवस्यति, हिशब्दपूर्वत्वन्तु 'सर्वादीनी'त्यादौ सर्वार्थवाचकत्वमिवोद्देश्यगतमेवापेक्षितमिति न दोष इति वाच्यं, शिष्टादित्यत्राप्युद्देश्ये 'शास्धातौ हिशब्दपूर्वत्वस्य सत्त्वेनासम्भवस्य दुरुपपादत्वादि'ति तदुत्तरग्रन्थोऽप्यविचाररमणीयः; सर्वार्थवाचकत्वस्य सामानाधिकरण्यसम्बन्धेन सर्वनामपदे विशेषणत्वेनोद्देश्यतावच्छेदकत्वमात्रेण तस्योपपत्तिः, प्रकृते हिपूर्वत्वविशिष्टशादेशस्य विधानेन शादेशे स्वरूपसम्बन्धेन पूर्वत्वस्य विशेषणत्वेन प्रवृत्ति-

पेधाः संगृहीता इति 'स्वरितेन'इतिसूत्रे भाष्ये। 'विप्रतिपेध'-सूत्रस्थपरशब्दस्येष्टवाचित्वात्तत्संग्रह इति 'विप्रतिपेध'सूत्रे भाष्ये ॥ ४० ॥

नन्वेवमेधत इत्यादौ परत्वाद्विकरणे 'अनुदात्तङित'इत्यादिनियमानुपपत्तिः, तेन व्यवधानात्, अत आह—

विकरणेभ्यो नियमो बलीयान् ॥ ४१ ॥

अत्र 'वृद्भ्यः स्यसनोः'इतिसूत्रेण स्ये विभापाऽतङ्विधानं ज्ञापकम्, अन्यथा स्यव्यवधाने नियमाप्रवृत्तौ सामा-

---

काले तदभावे उद्देश्यगतत्वमात्रेण तदुपपादनस्याशक्यत्वादित्यलमसदर्थचिन्तनेनेति दिक्।

परशब्दस्येष्टवाचित्वादिति। अपरमितिच्छेदेन पूर्वविप्रतिपेधसंग्रहस्तु न युक्तः; परविप्रतिपेधस्यासंग्रहापत्तेः, प्रमाणमन्तरेणावृत्तेरसम्भवाच्च ॥ ४० ॥

नन्वेवमिति। परत्वाद्विकरणे इति। खश्चानशादौ विकरणस्यावकाशो लिडादौ नियमस्यावकाश इति भावः। पूर्वविप्रतिपेधेन तु न निर्वाहः, तस्य भाष्योक्तस्थल एव स्वीकारात्। 'तिप्तसि'त्यादिसामान्यसूत्रेण विहितानाम् 'अनुदात्तङित'इत्यादिनियमेनेतरनिवृत्तिरितिपक्षे इदं बोध्यम्। तिवादिविध्येकवाक्यतया नियमसूत्राणां विधायकत्वमितिसिद्धान्तपक्षे तु लकारावस्थायां सार्वधातुकपरत्वाभावात् परत्वाद्विकरण इत्युक्तिरसङ्गता स्यात्। परत्वादिति नित्यत्वस्योपलक्षणम्, अन्यथा विकरणस्य नित्यत्वेनातुल्यबलत्वात् 'विप्रतिपेध'सूत्राप्रवृत्तौ परत्वादित्यस्यासङ्गत्यापत्तिः। अन्यथा स्यव्यवधान इति। परिभापाया अभावे परत्वात्

न्यशास्त्रेणोभयसिद्धौ विकल्पविधानं व्यर्थं स्यात् । अत्रार्थे ज्ञापिते तु स्य इति विषयसप्तमी बोध्येति 'अनुदात्तङित'इत्यत्र भाष्यकैयटयोः स्पष्टम् । विकरणव्यवधानेऽपि नियमप्रवृत्तेरिदं ज्ञापकमिति 'शदेः शित'इत्यत्र भाष्ये ध्वनितम् ।

वस्तुतोऽस्माज्ज्ञापकात् 'अनुदात्तङित' इत्यादिप्रकरणं तिबादिविध्येकवाक्यतया विधायकम् । तत्र धातोरिति विहितपञ्चमी तत्समानाधिकरणम् 'अनुदात्तङित'इत्यादिविहितविशेषणमेव, एवं च लावस्थायां स्येऽपि तद्व्यवधाने तङ्सिद्धिः । शबादिभ्यस्तु पूर्वमेव नियमः ।

यद्वा लमात्रापेक्षत्वादन्तरङ्गा आदेशा लकारविशेषापेक्षत्वा

---

लट्स्थाने 'तिबा'दिसूत्रेण पदद्वये तङः परत्वात् स्यप्रत्यये तेन व्यवधानान्नियमाप्राप्त्योभयपदस्थित्यैव सिद्धे अतङ्विधानं व्यर्थं सत्परिभाषाज्ञापकं, ज्ञापितायां त्वस्यां स्यप्रवृत्तेः प्राक् नियमप्रवृत्तिवारणाय चरितार्थमिति भावः ।

नन्वस्यामवस्थायां स्यप्रत्ययपरत्वाभावात् कथं 'वृद्भ्यः स्यसनो'रित्यस्य प्रवृत्तिरित्यत आह—स्य इति तु विषयसप्तमीति । पक्षान्तरमाह—विकरणव्यवधानेऽपीति । अस्मिन् पक्षे स्य इति परसप्तम्येव । विप्रतिषेधशास्त्राबाधश्चेतिलाघवम । सिद्धान्तभूतं तृतीयं पक्षमाह—वस्तुतइति । तत्रेति—तिबादिसूत्रे इत्यर्थः । विहितपञ्चमीति । ललुटोः परयो प्रतिपदोक्तत्वात्स्यतासिप्रत्यययोः कृतयोः प्रवृत्त्यर्थं सा आवश्यकीति भावः । शबादिभ्यस्तु पूर्वमेव नियम इति । तिबादिसूत्रस्य परत्वेन तदेकवाक्यतया नियमस्यापि परत्वात्, तं विना सार्वधातुकपरत्वाभावाच्चेति भावः ।

त्स्यादयो बहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोषः । अत्र पक्षे 'वृद्भ्यः स्ये'तिसूत्रं स्यविषय इति व्याख्येयम् । आत्मनेपद-शब्दादौ भाविसंज्ञाश्रयणीयेति तत्त्वम् । भिन्नवाक्यतया सामा-न्यशास्त्रविहितानां नियमे तु लुगादिनेव नियमेन जातनिवृत्तिर-ङ्गीकार्या । 'भुक्तवन्तं प्रति मा भुङ्क्था इति ब्रूयात् किं तेन कृतं स्यादि'तिन्यायस्तु नात्र शास्त्रे आश्रयितुं युक्तः, नियमादिशास्त्रा-

---

विहितपञ्चम्यां गौरवादाह—यद्वेति । इदन्न युक्तं, सामान्या-पेक्षाद्विशेषापेक्षं बहिरङ्गमित्यस्य भाष्यानारूढत्वेन खण्डयिष्य-माणत्वात् । अत्र पक्षे इति । स्यादीनां बहिरङ्गत्वेनान्तरङ्गत्वा-त्प्राप्तं नियममपवादत्वेन बाधित्वा 'वृद्भ्य'इति प्रवर्तत इति बोध्यम् । न चेदानीं स्यपरत्वाभावात् कथं प्रवृत्तिरित्यत आह—वृद्भ्य इत्यादि । ननु जातस्य संज्ञाकरणात् संज्ञया विधाने अन्योऽ-न्याश्रय इत्यत आह—आत्मनेपदशब्दादाविति । विहितानां नियमे दोषमाह—जातनिवृत्तिरिति । ननु 'भुक्तवन्तं प्रति मा भुङ्क्था'इतिनिषेधेऽपि भोजनस्यानिवृत्तिरिवात्रापि जातस्या-निवृत्तिरित्यत आह—भुक्तवन्तं प्रतीति । ननु बलवदनिष्टाननुब-न्धित्वविशिष्टेष्टसाधनत्वं प्रकृत्यर्थक्रियान्वयि लिङाद्यर्थः, निषे-धार्थकमादिशब्दयोगे च क्रियायां तदभावः प्रतीयते, तथा च भोजनं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभाववदित्येव प्रतीयेत, तस्य च जातेऽपि भोजनेऽबाधितत्वेन बोधनसम्भवात् कथं तत्र तद्वाक्यं व्यर्थमिति चेत्—न, विध्यर्थकलिङादिना प्रवृत्तिः निषेधार्थकपदसमभिव्याहारे निवृत्तिश्च प्रकृत्यर्थक्रियायां प्रतीयते,जाते च भोजने निवृत्तेर्बाधितत्वेन तस्य वैयर्थ्यसम्भवात् । यत्तु—विध्यर्थे लिङो विधानात् प्रवृत्तिजनकत्वेन तात्पर्यविषयत्वं

णां वैयर्थ्यापत्तेः। ध्वनितं चेदं 'स्थानेन्तरतम' इतिसूत्रे भाष्ये। शास्त्रानर्थक्यं तु वृद्धिसंज्ञासूत्रे भाष्ये तिरस्कृतम्। सामान्यशास्त्रेणोत्पत्तिस्तु 'सरूप'सूत्रस्थकैयटरीत्या प्रधानानुरोधेन गुणभेदकल्पनात्तावत्प्रकृतिकल्पनया कार्या, प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्तिः कल्प्येति गौरवमित्यन्यत्र विस्तरः ॥४१॥

परान्नित्यं बलवत्, कृताकृतप्रसङ्गित्वात्। तत्राकल्पभा-

---

तदर्थः, नञादिसत्त्वे च निवृत्तिजनकत्वेन तात्पर्यविषयत्वं भासते, तथा च कृतभोजने निवृत्त्यप्रयोजकत्वेन तन्नैरर्थक्यस्य स्पष्टत्वम् इत्युक्तं—तत्तु शाब्दबोधरीत्यनवबोधविलसितम्।

वैयर्थ्यापत्तेरिति। ननु तदपीष्टमेवेत्यत आह—तिरस्कृतमिति। वर्णेनाप्यनर्थकेन न भवितव्यं किम्पुनरियता सूत्रेणेति हि तत्सूत्रे भाष्यम्। ननु विहितानां नियमे सामान्यशास्त्रेण कथमेकस्माद्धातोः परस्यैकस्य लस्याष्टादशादेशाः, अष्टादशानां युगपदेकस्थानिकत्वबाधादित्यत आह—सामान्यशास्त्रेणेत्यादि। प्रकृत्यपेक्षया प्रत्ययः प्रधानमिति बोध्यम। प्रत्ययनिवृत्ताविति। नियमशास्त्रेणेति शेषः ॥ ४१ ॥

परान्नित्यं बलवदिति। स्वविशिष्टं शास्त्रं स्वापेक्षया बलवत्। उभयत्र वैशिष्ट्यं स्वप्रवृत्तिप्राक्कालिकप्राप्तिकत्व-स्वप्रवृत्त्युत्तरकालिकप्राप्तिकत्व-स्वनिष्ठान्तरङ्गत्वानिरूपकत्व-स्वनिष्ठापवादत्वानिरूपकत्वैतच्चतुष्टयसम्बन्धेन। एवं च परस्याप्यनेनैव बलवत्त्वम्, अतएव परत्वान्नित्यत्वाच्चेत्यत्र परत्वादित्युक्तिरेकदेशिन इत्युक्तं शेखरे। कृताकृतप्रसङ्गिवाहिरङ्गोत्सर्गयोर्बलवत्त्वाभावेऽपि न व्यभिचारः, तत्र निरुक्तैतयोरभावादिति बोध्यम। कृताकृतप्रसङ्गित्वस्य बलवत्त्वव्याप्यत्वे व्यभिचारशङ्कानिवारकानुकूलतर्कमाह—अकल-

चकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनमुचितमिति नित्यस्यं बलवत्त्वे बीजम् । तदाह—

कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यम् ॥४२॥

अतएव तुदतीत्यादौ परादपि गुणान्नित्यत्वात् शप्रत्ययादिर्भवति ॥ ४२ ॥

यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वमित्याशयेनाह—

शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४३ ॥

इदं 'शदेः शित'इतिसूत्रे भाष्ये स्पष्टम् । तत्र हि न्यविशतेत्यत्र विकरणे कृते तदन्तस्याकृते धातुमात्रस्येत्यड-

---

प्ताभावकस्येति । तुदतीत्यादौ शप्रत्यये कृते 'क्ङिति च'तिनिषेधेनाप्रवृत्तावपि प्राप्तिमात्रेण गुणस्यापि कृताकृतप्रसङ्गित्वशङ्का न कार्या, बाधकाबाधितप्रसङ्गस्यैव प्रकृते लक्ष्यानुरोधेन ग्रहणात् । आदिपदेन रुणद्धि रन्धयतीत्यादेः सङ्ग्रहः । तत्र श्नमो गुणापेक्षया 'रधिजभोरची'त्यस्योपधावृद्ध्यपेक्षया नित्यत्वं बोध्यम् ॥ ४२ ॥

'शदेः शित' इतिसूत्रस्थभाष्यप्रामाण्यादेकव्यक्तिनिमित्तकमेव कृताकृतप्रसङ्गित्वं गृह्यते । तत्फलितमाह—शब्दान्तरस्य प्राप्नुवन्निति, शब्दान्तरादिति, शब्दान्तरे इति च । तदन्तस्येति ।

---

शप्रत्ययादिरिति । शित्करणसामर्थ्यात् गुणाभावस्तु न वाच्यः, विचतीत्यादौ तस्य सम्प्रसारणार्थत्वात् । यद्यपि प्रतिपदोक्तत्वात् शप्रत्यय इति युज्यते, तथाप्यादिपदग्राह्ये गत्यन्तराभाव इति भावः ।

नित्य इत्युक्तम् ॥ ४३ ॥

एतत्तुल्यन्यायेनाह—

शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ॥ ४४ ॥

एतन्मूलकमेवाह—

लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ ४५ ॥

अतिदेशविषय इयमसिद्धवत्सूत्रे कैयटेनोक्ता ॥ ४५ ॥

यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिविचारो यदापि व्यक्तिविशेषाश्रयणाभावस्तदाह—

क्वचित्कृताकृतप्रसङ्गित्वमात्रेणापि नित्यता ॥४६॥

---

विकरणविशिष्टस्यैव लङ्व्यवहितपूर्वत्वविशिष्टाङ्गत्वादितिभावः। एतत्फलन्तु इप्धातोः सनि इड्द्वित्वयोः प्राप्ताविटि कृते पिशब्दस्याकृते इटि पशब्दस्य प्राप्तत्वेन व्यक्तिभेदेनानित्याद् द्वित्वादकृते कृतेऽपि सन एव प्राप्तत्वेन नित्यत्वात् पूर्वमिटि पिशब्दस्य द्वित्वे एपिपिपतीति भवतीति। एवं कृताकृतप्रसङ्ग एकेनैव लक्षणेनापेक्ष्यत इत्येतत्फलितमाह—लक्षणान्तरेण प्राप्नुवन्निति। अतएव नुम्जरसोः प्राप्तयोः परत्वाज्जरसित्युक्तं भाष्ये। नुमो हि जरसादेशात्पूर्वमजन्तलक्षणेन जरसादेशादुत्तरं झलन्तलक्षणेन प्राप्तत्वादनित्यत्वम् ॥ ४३ ॥ ४४ ॥ ४५ ॥

यदा तु लक्ष्यानुरोधात् व्यक्त्यैक्यस्य लक्षणैक्यस्य वा नादरः तदा आह—क्वचित् कृताकृतेति ॥ ४६ ॥

कृते द्वितीये नित्यत्वेनाभिमतस्य पुनः प्रसङ्गमात्रं नित्यत्वव्यवहारे प्रयोजकं, न तु बाधकाबाधितफलोपहितप्रसङ्ग एव तथेति भावः। तदाह—

यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ ४७ ॥

क्वचित्तु बाधकाबाधितफलोपहितप्रसङ्ग एव गृह्यते। तदाह—

[1]यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥ ४८ ॥

सप्तमे कैयटेनैतदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतम्। वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हतेऽपि सुग्रीवस्य

---

यदा कृताकृतप्रसङ्गमात्रमपेक्षते न तु बाधकाबाधित एवेत्याग्रहस्तदा आह—यस्य च लक्षान्तरेणेति। सप्तमाध्यायभाष्यव्याख्यावसर इत्यर्थः ॥ ४७ ॥

एतदुपष्टम्भकमिति—एतत्परिभाषाद्वयज्ञापकमित्यर्थः। यथा

---

१ यस्य च लक्षणान्तरेणेति। एतदुदाहरणं त्वापयति मापयति इति। अत्रहि मपर्यन्तस्य त्वमादेशानन्तरं पररूपे सति 'प्रकृत्यैकाजि'तिप्रकृतिभावेन टिलोपनिमित्तविघातेऽपि अनया टिलोपस्य नित्यत्वम्। न चान्तरङ्गत्वात्पररूपे प्रकृतिभावे त्वादयतीतिरूपमिष्यते इति वाच्यम्; 'नाजानन्तर्य'इतिनिषेधात्, अन्तरङ्गपरिभाषाया अनित्यत्वाच्च। वार्णपरिभाषा तु भावकार्ये एव प्रवर्त्तते, धर्मिग्राहकमानादिति।

वालिनः प्राबल्यं न व्यवहरन्ति, भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि पाण्डवानां प्राबल्यं व्यवहरन्ति चेति। सर्वं चेदं लक्ष्यानुरोधाद्व्यवस्थितम् ॥ ४८ ॥

'लुटः प्रथमस्य' इतिसूत्रे भाष्ये—

स्वरभिन्नस्य[1] प्राप्नुवन्विधिरनित्यो भवति ॥ ४९ ॥

इति पठ्यते। यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च तत्रेच्छयान्यतरत्तदुभयं वा तस्य बलवत्त्वे नियामकमुल्लेख्यम्। अतएव तत्र तत्र परत्वान्नित्यत्वाच्चेति भाष्य उच्यते। वस्तुतस्तत्र परत्वादित्युक्तिरेकदेशिनः। स्पष्टं चेदं विप्रतिषेधसूत्रे कैयटे।

---

भगवत्प्रयत्नेनैव सुग्रीवस्य पाण्डवानां च जयेऽविशिष्टेऽपि लोकाः वालिनं प्रति सुग्रीवस्य प्राबल्यं न व्यवहरन्ति कौरवान् प्रति पाण्डवानां प्राबल्यं व्यवहरन्ति, तथा प्रकृतेऽपि लक्षणान्तरेण निमित्तविघातस्थलप्रसङ्गस्य बाधकाबाधितफलोपहितप्रसङ्गत्वाभावे अविशिष्टेऽपि क्वचिन्नित्यत्वं क्वचिदनित्यत्वमिति भावः ॥ ४८ ॥

नियामकमुल्लेख्यमिति, उभयोरपि बलवत्त्वप्रयोजकत्वादिति भावः। परत्वादित्युक्तिरेकदेशिन इति—नित्यत्वेन नित्य-

---

१ स्वरभिन्नस्येति। एतदुदाहरणं दध्युदकमिति। अत्र हि दधि-उदकमितिस्थिते 'नब्विषयस्ये'त्याद्युदात्तत्वेनेकारस्यानुदात्तस्य कृताकृतप्रसङ्गितया प्राप्तो यणादेशः पूर्वं न भवति, यत 'उदकेऽकेवले'इतिपूर्वपदान्तोदात्तस्वरेण भिन्नस्य स्थाने प्राप्तत्वादनित्यः स्तस्मात् 'उदकेऽकेवले'इतिपूर्वपदान्तोदात्तत्वे कृते प्रवर्त्तते, तत 'उदात्तस्वरितयोर्यण'इतिस्वरितत्वमुकारस्य सिद्ध्यतीति।

'णौचङि'इति ह्रस्वापेक्षया नित्यत्वान्तरङ्गत्वप्रयुक्तद्वित्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम्। एवं नित्यान्तरङ्गयोर्बलवत्त्वमपि यौगपद्यासम्भव एवेति बोध्यम् ॥ ४९ ॥

नित्यादप्यन्तरङ्गं बलीयः, अन्तरङ्गे बहिरङ्गस्यासिद्धत्वात्। तदाह—

---

स्यानित्यापेक्षयाऽधिकबलवत्त्वेन तुल्यबलत्वाभावेन 'विप्रतिषेध'-सूत्राप्रवृत्तिरिति भावः ॥ ४९ ॥

नित्यादप्यन्तरङ्गं बलीय इति। इदन्तु अन्तरङ्गबहिरङ्गयोः समकालप्राप्तिकत्वे बोध्यम्, जातबहिरङ्गापेक्षया हि अन्तरङ्गस्य बलवत्त्वबोधने फलाभावात्। नित्यादपीति। अपिशब्दात् परादपीति बोध्यम्। अन्तरङ्गञ्च उत्सर्गभिन्नं गृह्यते तेनोत्सर्गरूपान्तरङ्गस्य बलवत्त्वाभावेऽपि न बाधः, तद्भिन्नस्यैव पक्षत्वात्। असिद्धत्वादिति। न चासिद्धत्वस्य बहिरङ्गनिष्ठत्वेन हेतुसाध्ययोर्वैयधिकरण्यमिति वाच्यम्, अन्तरङ्गत्वस्यैव हेतुत्वेन विवक्षितत्वात्। असिद्धत्वादित्यन्तग्रन्थस्तु अन्तरङ्गत्वस्य बलवत्त्वप्रयोजकतायामनुकूलतर्कस्य प्रतिपादकः। असिद्धत्वमभावप्रतियोगित्वम्। तथा च अन्तरङ्गदृष्ट्या बहिरङ्गस्याभावप्रतियोगित्वात् अर्थादन्तरङ्गशास्त्रस्य बहिरङ्गशास्त्रविषयकज्ञानाभावात् विरोधिज्ञानाभावेन लक्ष्येऽन्तरङ्गस्य निश्शङ्कप्रवृत्तिः। बहिरङ्गस्य तु स्वविरोध्यन्तरङ्गज्ञानात् लक्ष्ये साशङ्कप्रवृत्तिरित्यन्तरङ्गस्य बलवत्त्वं, लोके तथैव दर्शनात्। यद्वा अन्तरङ्गे बहिरङ्गस्यासिद्धत्वादिति हेतुरेव, बहिरङ्गविषयकज्ञानाभावादित्यर्थः। तस्य चाभावस्यान्तरङ्गे पक्षे सत्त्वान्न साध्यवैयधिकरण्यम्। तथा च स्वविशिष्टं शास्त्रं स्वापेक्षया बलवत्, स्वविशिष्टत्वात्। उभयत्र वैशिष्ट्यं स्वनिष्ठापवादत्वानिरूपकत्व-स्वनिरूपितान्तरङ्गत्वोभयसम्बन्धेन।

## असिद्धं बहिरङ्गमन्तरङ्गे ॥ ५० ॥

अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम्[१] । एवं तदीयनिमित्त-

---

अथवा स्वविषयकाज्ञानाभावो हेतुः, स च परिभाषालभ्य इत्याह—असिद्धं बहिरङ्गमन्तरङ्ग इति । अनेन जातस्य समकालप्राप्तिकस्य च बहिरङ्गस्य ज्ञानाभावः । अन्तरङ्गशास्त्रे बोध्यत इत्यजातबहिरङ्गके लक्ष्ये इव जातबहिरङ्गकेऽपि लक्ष्ये अन्तरङ्गशास्त्रं प्रवर्त्तत इति बोध्यम् ।

अन्तरङ्गबहिरङ्गयोर्लक्षणे आह—अन्तर्मध्ये इत्यादि । अन्तरङ्गत्वबहिरङ्गत्वयोश्च सनिरूपकत्वेन यन्निरूपितान्तरङ्गत्वं विवक्षितन्तदीयनिमित्तसमुदायान्तर्भूतनिमित्तकत्वमन्तरङ्गत्वम्, यन्निरूपितं बहिरङ्गत्वं विवक्षितं तदीयनिमित्तसमुदायबहिर्भूतनिमित्तकत्वं बहिरङ्गत्वमित्येव लक्षणम्; न त्वन्तरङ्गत्वे बहिरङ्गत्वस्य तस्मिन् वा तस्य प्रवेश इति नाऽन्योन्याश्रयशङ्का । मूले अन्तरङ्गलक्षणे बहिरङ्गस्य, बहिरङ्गलक्षणे अन्तरङ्गस्योपादानन्तु वस्तुगत्या तयोरेव सत्त्वेन बोध्यम् । स्वविशिष्टं शास्त्रं स्वापेक्षया अन्तरङ्गं, स्ववि-

---

[१] तदन्तरङ्गमिति । तेन पदस्य विभज्यान्वाख्यानमिति ग्रामणिनी इत्यादौ कृताकृतप्रसङ्गित्वादपि नुमः प्राक् ह्रस्वत्वस्य सिद्धिः, अन्यथा नुमि अनजन्तत्वान्न स्यात् । एवं परादन्तरङ्गस्योदाहरणं त्रियतीत्यादि । अत्र हि परमपि लघूपधगुणं बाधित्वा पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वादियङ् परापेक्षया अन्तरङ्गस्य बलवत्त्वे बीजञ्च अन्तरङ्गदृष्ट्या परस्यासिद्धत्वेन युगपदसम्भवरूप विप्रतिषेधाभाव एव । अतएव 'ओमाङोश्चे'त्याङ्ग्रहणं चरितार्थम् । तथा नित्यादन्तरङ्गस्य बलवत्त्वादेव पद्व्या-मृद्व्येत्यादौ अनया परयणादेशस्य असिद्धत्वात् पूर्वयणादेशः साधितो भाष्ये ।

समुदायाद्बहिर्भूताङ्गकं बहिरङ्गम् । एतच्च 'खरवसानयो'रिति सूत्रे 'असिद्धवत्'सूत्रे च भाष्यकैयटयोः स्पष्टम् । अत्राङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते, शब्दशास्त्रे तस्यैव प्रधानत्वात् । तेनार्थनिमित्तकस्य न बहिरङ्गत्वम् । अतएव 'न तिसृचतसृ' इतिनिषेधश्चरितार्थः, अन्यथा स्त्रीत्वरूपार्थनिमित्तकतिस्रपेक्षया-ऽन्तरङ्गत्वात् त्रयादेशे तदसङ्गतिः स्पष्टैव । अतएव 'त्रयादेशे

---

शिष्टं स्वापेक्षया बहिरङ्गम् । आद्ये वैशिष्ट्यं स्वीयनिमित्तसमुदायघटकनिष्ठविषयताप्रयोजकसप्तम्यन्तपदघटितत्वसम्बन्धेन; अन्त्ये स्वघटकसप्तम्यन्तपदप्रयोज्यविषयताश्रयघटितसमुदायनिमित्तकत्वसम्बन्धेन । स्वमुभयत्र शास्त्रम् । निमित्तत्वञ्च प्रवृत्तिप्रयोजकत्वमिति निर्गलितोऽर्थः । समन्वयो यथा—'वाह ऊठ्'इत्येतन्निमित्तसमुदायः विश्वौह इत्यत्र विश्ववाहरूपमङ्गम्, तद्घटको ण्विः, शसः पूर्वस्याङ्गत्वात्, तन्निष्ठविषयताप्रयोजकं सप्तम्यन्तमार्धधातुकपदं, तद्घटितत्वं गुणशास्त्रस्येति तस्य 'वाह ऊठि'त्येतदपेक्षया अन्तरङ्गत्वम; एवं 'पुगन्तलघूपधस्य चे'त्येतदपेक्षया तस्य बहिरङ्गत्वम्, स्वघटकसप्तम्यन्तम्पदमार्धधातुकपदं, तत्प्रयोज्यविषयताश्रयो ण्विः, तद्घटितसमुदायो विश्ववाहरूपमङ्गं, तन्निमित्तकत्वमूठ्शास्त्रस्येति दिक् ।

अतएवेति—अर्थकृतबहिरङ्गत्वस्यानाश्रयणादेवेत्यर्थः । तिसृणामित्यत्र त्रिआमिति स्थिते त्रयादेशापेक्षया परत्वात् तिस्रादेशे सकृद्गतिन्यायेन त्रयादेशाभावे 'न तिसृ'तिदीर्घे निषिद्धे तिसृणामिति भवति, तत्र उभयोः शास्त्रयोः प्रकृतिप्रत्ययोभयापेक्षत्वेऽपि तिस्रादेशे स्त्रीत्वरूपार्थस्याधिकस्यापेक्षितत्वेन बहिरङ्गत्वेनान्तरङ्गत्वात् त्रयादेशे स्थानिवद्भावेन प्राप्तमपि तिस्रादेशमुक्तरीत्यैव

स्रन्तस्य प्रतिषेध' इति स्थानिवत्सूत्रस्थभाष्यवार्त्तिकादि सङ्ग-च्छते। एतेन गौधेरः पचेदित्यादावेयादीनामङ्गसंज्ञापेक्षत्वेन

---

बाधित्वा नुटि तथैव दीर्घे ततस्तिस्रादेशे 'लक्ष्ये लक्षण'न्यायेन पुनर्दीर्घाप्राप्तौ 'न तिसृचतसृ'इति निषेधो व्यर्थ इति बोध्यम्[1]। ननु तिस्रादेशशास्त्रे यथा स्त्रीत्वं निमित्तं तथा त्रयादेशे आमंशविशिष्टरूपोपादानसत्त्वेनार्थोऽपि निमित्तमिति चेत्—न, तिस्रादेशे विभक्तिसंज्ञाया अपि निमित्तत्वात्। न च 'स्वंरूप'सूत्रबलेनामसंज्ञाया अपि सत्त्वेन तदंशे साम्यं, तथापि तिस्रादेशे त्रिशब्दांशे उपस्थितस्यार्थस्याधिक्यम्। ननु तवापि त्रयादेशे त्रिशब्दांशे अर्थोपस्थितिस्तुल्येति चेत्, अत्रोच्यते—अर्थापेक्षमन्तरङ्गत्वं बहिरङ्गत्वं वदता नार्थगताल्पत्वाधिकत्वे अपेक्षणीये, अर्थव्यक्तीनामानन्त्यात् तयोर्निर्धारयितुमशक्यत्वात्। किन्त्वर्थगतधर्मे विषयत्वे वा न्यूनत्वाधिकत्वे अपेक्षणीये; तथा च आमंशे अर्थोपस्थितावपि तत्रत्यार्थत्वधर्मतस्त्रिशब्दांशे उपस्थितार्थत्वरूपधर्मस्य भेदाभावेनाधिकधर्मस्यानाश्रयणात् अवच्छेदकभेदेन विषयताभेदादर्थत्वावच्छिन्नविषयताया अप्येकत्वेनानाधिक्यात्। तथा च त्रयादेशे त्रित्वम् अर्थत्वम् आमसंज्ञा, तिस्रादेशे त्रित्वम् अर्थत्वं विभक्तिसंज्ञेति धर्मत्रयनिमित्तकत्वं समानम्, अधिकं स्त्रीत्वं निमित्तमिति तस्य बहिरङ्गत्वम्। अर्थस्य द्वैधाभानेऽप्यर्थस्यैक्येनार्थद्वयनिमित्तकत्वाभावादिति कश्चित्—तन्न, प्रकृत्यर्थप्रत्ययार्थयोरैक्यस्योपपादनासम्भवात्।

एतेन—अर्थकृतबहिरङ्गत्वस्यानाश्रयणेनेत्यर्थः। गौधेर इति।

---

1 इति बोध्यमिति। न च स्थानिवत्त्वेन त्रिशब्दत्वात् तिसृणामित्यत्र 'षट्त्रिचतुर्भ्यो हलादि'रिति सूत्रस्य वारणाय स्थानिवत्त्वनिषेधवार्तिकमावश्यकमिति वाच्यम्, वार्त्तिकेन त्रयादेश एव स्थानिवत्त्वनिषेधात्।

गोधाशब्दात् ढ्रकि 'आयनेयी'तिसूत्रेण ढकारस्यैयादेशे आकार-लोपे यलोपे गौधेर इति सिद्ध्यति। अर्थकृतान्तरङ्गत्वबहिरङ्गत्व-ग्रहणे प्रत्ययसंज्ञाङ्गसंज्ञाद्वयाश्रितत्वेन बहिरङ्गतया एयादेशस्य लोपं प्रत्यसिद्धत्वात् यलोपो न स्यात्। यलोपेऽपि वल्लोपसंज्ञा-द्वयाश्रयणेनोभयोः साम्यमेवेति चेत्—न, लोपसंज्ञाया विधेयकोटावाश्रयणेन निमित्तत्वाभाव इत्याशयात्, अतएवारुचेः पचेदि-त्यस्योपन्यासाच्च। पचेदित्यत्र हि इयादेशे अतसंज्ञा-सार्वधातुकसं-ज्ञायासंज्ञानां तिसृणामुपादानेन संज्ञाद्वयापेक्षलोपापेक्षयैकस्या आधिक्येन बहिरङ्गत्वम्।

ननु स्वमतेऽपि एयादेशयादेशयोर्निमित्तसमुदायो ढ्र इति अयात् इति, तदन्तर्भूतो य्र् इति यत् इति समुदायः, तन्निमित्त-कत्वेन वलि लोपस्यान्तरङ्गत्वेन तदपेक्षया तयोरसिद्धत्वं दुर्वारम्; न च यकारस्यादेशावयवत्वेन निमित्तसमुदायान्तर्भूतत्वाभावेन तद्घटितवर्णद्वयात्मकसमुदायस्य निमित्तसमुदायान्तर्भूतत्वाभाव इति न दोष इति वाच्यम्, स्थानिद्वारा यकारस्यापि तदन्तर्भूतत्वात्; अतएवाक्ष्यूरित्यादावूठो यणपेक्षया बहिरङ्गत्वेन 'नाजानन्तर्य' इत्यस्यावतरणं सङ्गतम्, अन्यथोकारस्योठ्शास्त्रीयनिमित्तसमुदा-यान्तर्भूतत्वाभावेन यणोऽन्तरङ्गत्वाभावात्तदसङ्गतिः; स्थानि-द्वारकान्तर्भूतत्वमादायैव ज्ञापकपरभाष्यसङ्गतिश्च; अन्यथा विश्वौह इत्यादौ सम्प्रसारणस्य 'वाह ऊठि'त्येतन्निमित्तसमुदा-यान्तर्भूतत्वाभावेन लघूपधगुणे लघ्वादिपदेन तस्याश्रयणेन तस्यान्तरङ्गत्वाभावेन ज्ञापितेऽपि स्वांशे चारितार्थ्याभावेनासंग-त्यापत्तेः, अङ्गपदेन सप्तम्यन्तपदेनाश्रीयमाणस्यैव ग्रहणस्य वक्ष्य-माणत्वेन षष्ठ्यन्तपदोपात्तयकारस्य बहिर्भूतत्वेऽपि क्षत्यभावाच्च; यकारस्य विधेयान्तर्गतत्वेन स्वघटकेतरानिमित्तकत्वसम्बन्ध-स्यापि निमित्तसमुदायवैशिष्ट्यनियामकतया प्रवेशेन लोपस्यान्त-रङ्गत्वाभाववर्णनं केषाञ्चित्तु न युक्तम्, उक्तावतरणज्ञापकभाष्य-

बहिरङ्गतयाऽसिद्धत्वाद्धलि लोपो न स्यादिति परास्तम्, एयादेशादेरपरनिमित्तकत्वेनान्तरङ्गत्वाच्च ।

---

योरसङ्गत्यापत्तेः, तद्वदत्रापि प्राप्तेश्च; परनिमित्तकत्वेन लोपस्य बहिरङ्गत्वन्न युक्तमियादेशस्यापि पूर्वनिमित्तकत्वेन साम्यादित्यपि कस्यचिदुक्तं हेयमेव, अपरनिमित्तकत्वेनान्तरङ्गत्वाच्चेतिमूलग्रन्थविरोधात्; ऊकाल इत्यत्र समाहारद्वन्द्वोपपादकत्वेन निपादस्थपत्यधिकरणोपन्यासोऽप्यनुपयुक्तोऽयुक्तश्च ।

अपरनिमित्तकत्वेनान्तरङ्गत्वाच्चेति । अयम्भावः—अन्तरङ्गत्वाभावविशिष्टबहिरङ्गस्यैवासिद्धत्वं परिभाषया बोध्यत इति गौधेरः पचेदित्यादिलक्ष्यानुरोधात् कल्प्यते । एयादेशेयादेशयोरुक्तरीत्या बहिरङ्गत्वेऽपि अपरनिमित्तकत्वरूपान्तरङ्गत्वस्यापि सत्त्वेनान्तरङ्गत्वाभावविशिष्टबहिरङ्गत्वाभावेन लोपदृष्ट्याऽसिद्धत्वाभाव इति । वस्तुतस्तु—अन्तर्भूतनिमित्तकत्वम् अपरनिमित्तकत्वं शीघ्रोपस्थितनिमित्तकत्वमित्याद्यनेकविधमन्तरङ्गत्वम् । बहिरङ्गत्वन्तु अन्तरङ्गत्वेन विवक्षितं यच्छास्त्रं तन्निरूपितान्तरङ्गत्वप्रयोजकधर्माभाववत्त्वरूपमेकविधमेव । प्रकृते अन्तरङ्गत्वप्रयोजकधर्मस्यापरनिमित्तकत्वरूपस्य सत्त्वेन बहिरङ्गत्वाभावात् न तयोरसिद्धत्वमिति बोध्यम् । अथापरनिमित्तकत्वरूपान्तरङ्गत्वे किं प्रमाणमिति चेत्, अत्रोच्यते—'अतोऽमि'तिसूत्रे तपरकरणमेव मानम्; तद्धि दीर्घव्यावृत्त्यर्थं, नपुंसके च ह्रस्वस्यैव सर्वत्र सत्त्वेन तद्व्यर्थं सत् अपरनिमित्तकत्वमन्तरङ्गत्वमिति ज्ञापयति । ततश्च अश्च आश्चेति समाहारद्वन्द्वे सुपो लुकि अआ इति स्थिते सवर्णदीर्घापेक्षया अपरनिमित्तकत्वरूपान्तरङ्गत्वेन पूर्वं ह्रस्वे ततो दीर्घे 'लक्ष्ये लक्षण'न्यायेन पुनर्ह्रस्वत्वाप्राप्तावत इति तपरकरणे सोरमादेशाभावेन सोर्लुकि आ इति सिद्ध्य-

ति, अन्यथा परत्वाद्दीर्घे ततो ह्रस्वे व्यावर्त्त्यालाभेन तस्य वैयर्थ्यं स्यादिति बोध्यम्। अतएव समाहारद्वन्द्वेन उकाल इति न कृतम्। स्वीकृते तु तस्मिन् उश्च ऊश्च उ३श्चेति समाहारद्वन्द्वेऽपरनिमित्तकत्वेनान्तरङ्गत्वात् पूर्वं ह्रस्वे ततो दीर्घे उक्तन्यायात्पुनर्ह्रस्वाप्राप्त्या उकाल इति न कृतमिति बोध्यम्। न च 'अदसोऽसेर्दादुदोम' इत्यत्र उश्च ऊश्चेति समाहारद्वन्द्व इति कौमुदीविरोधः उक्तरीत्यान्तरङ्गत्वात्पूर्वं ह्रस्वे ततो दीर्घे ह्रस्वरूपासिद्धेरिति वाच्यम्; तस्या एतद्दूषणेनैव दूपितत्वात्, 'भाव्यमानोप्युकारः सवर्णान् गृह्णाती'त्यनया ह्रस्वोकारमात्रोच्चारणेनैव ह्रस्वदीर्घयोर्विधानस्य शेखरकृता प्रतिपादनाच्च। 'विकरणेभ्यो नियमो बलीयानि'त्येतज्ज्ञापकेन विभाषा परस्मैपदविधानेनापरनिमित्तकत्वमन्तरङ्गत्वमित्यस्यैव ज्ञापनेन पचते इत्यादौ विकरणेभ्यः पूर्वमपरनिमित्तकत्वेनान्तरङ्गत्वादात्मनेपदसिद्धौ 'विकरणेभ्य' इत्यस्या अपि एतन्मूलकत्वमेवेति बोध्यम्। ननु ज्ञापितेऽपि तदन्तरङ्गत्वे उऊ इति स्थिते ह्रस्वस्यापरनिमित्तकत्वेनान्तरङ्गत्वं दीर्घस्यान्तर्भूतनिमित्तकत्वमन्तरङ्गत्वमित्युभयोः साम्यमेवेति चेत्—न, बहिरङ्गत्वेन विवक्षितशास्त्रघटकसप्तम्यन्तपदेनाश्रीयमाणसमुदायघटकवृत्तिविपयताप्रयोजकसप्तम्यन्तपदघटितत्वस्यैवान्तरङ्गत्वरूपत्वात् ह्रस्वविधायके चोपयुक्तसप्तम्यन्ताभावेन दीर्घस्यान्तरङ्गत्वाभावात्। न च 'वाह ऊठ्' इत्यत्र सप्तम्यन्तपदाभावेन 'पुगन्तलघूपधस्य चे'त्यस्य तं प्रत्यन्तरङ्गत्वाभावेन ज्ञापकतापरभाष्यविरोधापत्तिरिति वाच्यम, समकालप्राप्तिकान्तरङ्गत्वकुक्षावेवोभयत्र सप्तम्यन्तपदस्य प्रवेशनीयत्वात्। ज्ञापकपरभाष्यन्तु जातासिद्धत्वाभिप्रायकं, तत्र चान्त एव सप्तम्यन्तपदप्रवेश इत्यदोपात्। ननु समकालप्राप्तिकान्तरङ्गत्वलक्षणे उभयत्र सप्तम्यन्तपदप्रवेशे अन्तरङ्गत्वादियङ् रियति पियर्तीति भाष्यविरोधः, तत्र गुणशास्त्रीयसप्तम्यन्तपदेनाश्रीयमाणस्तिप् तदन्तर्भूतनिमित्तकत्वाभावात्, इ-

यङः रि अ इत्येतदन्तर्भूतनिमित्तकत्वेऽपि तस्य सप्तम्यन्तपदेनानाश्रयणादिति चेत्—न, शीघ्रोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्येयङः सत्त्वेनादोषात्। अतएव 'नन्वेवमलुलुवदित्यादौ लघूपधगुणादुवङोऽल्पनिमित्तकत्वाभावादुवङ् न स्यादि'तिशंकाग्रन्थ उपपद्यते, अन्यथा गुणशास्त्रीयाङ्गपदेनाश्रीयमाणः अलुलु अ इति समुदायस्तदन्तर्भूतोऽकारस्तन्निमित्तकत्वेनोवङोऽन्तरङ्गत्वात् शङ्काया उत्थानाभावात्। मम तु गुणशास्त्रीयसप्तम्यन्तपदेनाश्रीयमाणान्तर्भूतनिमित्तकत्वस्योवङोऽभावात् सोपपद्यते। शीघ्रोपस्थितनिमित्तकत्त्वेन च समाहितम। अतएव च 'स्योन इत्यत्र ऊनशब्दमाश्रित्य यणादेशः, नशब्दमाश्रित्य गुण'इतिभाष्ये सप्तम्यन्तपदेनाश्रीयमाणशब्दमादायैवान्तरङ्गत्वमुक्तम्। ननु तत्रैवान्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यत इतिसिद्धान्तभाष्यविरोधः यणशास्त्रे गुणशास्त्रीयसप्तम्यन्तं यत्तदाश्रीयमाणसमुदायान्तर्भूतनिमित्तकत्वरूपान्तरङ्गत्वाभावादिति चेत्—न, शीघ्रोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्य यणि सत्त्वात्। ननु उभयत्र सप्तम्यन्तपदघटितान्तरङ्गत्वस्य किम्फलं? कश्च इश्च ईशश्चेति द्वंद्वे क-इ-ईशेतिस्थिते परमपि सवर्णदीर्घं बाधित्वाऽन्तरङ्गत्वाद्गुणे अयादेशे कयीशा इति सिद्ध्यति, अन्यथा परत्वाद्दीर्घे गुणे केशा इति स्यात्, इति समकालप्राप्तिकबहिरङ्गासिद्धत्वस्य मूर्धाभिषिक्तोदाहरणस्यापि शीघ्रोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वेनैव सिद्धेरिति चेत्—नास्तीति गृहाण।

नन्वपरनिमित्तकत्वरूपान्तरङ्गत्वस्वीकारे 'नामी'त्यत्रासीति न्यासे राम आमिति स्थिते नित्यत्वाद्दीर्घे नुट् न स्यादित्येतत्प्रतिपादकभाष्यासङ्गतिः, अपरनिमित्तकत्वरूपान्तरङ्गत्वस्य नुटः सत्त्वेन तस्यैव पूर्वं प्रवृत्तेः; द्युपतीत्यादौ दिव् स इति स्थिते परमपि ऊठं बाधित्वाऽपरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं प्रवर्तमानो विसर्गस्यैव द्वित्वेऽप्यसि उकारश्रवणानापत्तिः; अर्थे-

त्यादौ गुणे औपदेशिकाजन्तत्वमादाय थल इटो निषेधाय 'अचस्तास्वत्थल्यनिटो नित्यमि'तिसूत्रे भाष्यकृत्कृतस्योपदेशपदानुवर्तनस्य वैयर्थ्यापत्तिश्च, अपरनिमित्तकत्वेन गुणापेक्षयान्तरङ्गत्वात् पूर्वमिटो निषेधसिद्धेः; इति चेत्—न, उक्तभाष्यादपरनिमित्तकादेशविधायकत्वमन्तरङ्गत्वमितिस्वीकारात् नुट्द्वित्वनिषेधानामनादेशत्वेनादोषात, जहर्थेत्यत्र गुणात्पूर्वं प्राप्तस्येटो निषेधे गुणे पुनः प्राप्तस्येटो निषेधायोपदेशपदानुवृत्तेरावश्यकत्वाच्च।

यदि च—'अतोऽमि'त्यादौ तपरत्वं मुखसुखार्थमेव, अश्च आश्चेति समाहारद्वन्द्वे अमित्येव रूपम्भवति, ऊकाल इत्यत्र समाहारद्वन्द्वेन ह्रस्वोकारोच्चारणे लाघवस्य सत्त्वेऽपीदृशलाघवस्य नादरः, अतएव लाघवात् समाहारद्वन्द्वेन षट्चतुर इति अस्थिदधिसक्थ्यक्ष्ण इति च न्यासं विहाय इतरेतरयोगेन 'षट्चतुर्भ्यः' 'अस्थिदधिसक्थ्यक्ष्णामि'ति गुरुन्यासः कृत इति मन्यते—तदा अपरनिमित्तकत्वमन्तरङ्गत्वं मास्तु, गौधेरः पचेदित्यादावन्तर्भूतनिमित्तकत्वेन लोपस्यान्तरङ्गत्वात्तं प्रति एयियादेशयोरसिद्धत्वेन वलि लोपो न स्यादिति तु न, वलि लोपे अन्तरङ्गपरिभाषाया अप्रवृत्तिकल्पनात्; वृश्चतीत्यादौ वलि लोपदृष्ट्या संप्रसारणासिद्धत्वप्रतिपादनपरभाष्यविरोधस्तु न, जातबहिरङ्गासिद्धत्वाभावस्यैव कल्पनात्; अतएव क्नोपयतीत्यादौ णिजपेक्षपुको यलोपदृष्ट्या नासिद्धत्वं, 'चे ले क्नोपे'रितिनिर्देशश्चोपपन्नः; यायावरः जातिरित्यादौ यङोऽकारलोपस्य प्रत्ययनिमित्तकस्य यलोपे नासिद्धत्वमिति केचित्।

नागेशानुयायिनस्तु—अजनिष्ठान्यानन्तर्यनिमित्तके कार्ये कर्त्तव्ये कृते च यदन्तरङ्गं प्राप्नोति तत्र कर्त्तव्ये बहिरङ्गासिद्धत्वन्नेत्यर्थकेन 'नाजानन्तर्य'इत्यनेनैवोक्तदोषाणां परिहार इति वदन्ति।

संज्ञाकृतबहिरङ्गत्वाश्रयणपरकैयटविरोधं स्वमते उपपाद्य

ननु 'येन विधिस्तदन्तस्ये'तिसूत्रे भाष्ये 'इको यणची'त्यादावपि तदन्तविधौ स्योन इत्यत्रान्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यते, तन्न सिद्ध्येत्, ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद्गुण एव स्यादित्युक्तम्; अत्र कैयटः—सिवेर्बाहुलकादौणादिके नप्रत्यये गुणवलोपोठां प्रसङ्गे ऊठ् अपवादत्वाद्वलि लोपं बाधते, गुणं त्वन्तरङ्गत्वाद्बाधते; गुणो ह्यङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्द्धधातुकं चाश्रयति, ऊठ् तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः; तत्र कृते यण्गुणौ प्राप्नुत इति; एवं च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत्—न, तदन्तविधावपि बहुपदार्था-

---

खण्डयति—नन्विति। इको यणचीत्यादावपि तदन्तविधाविति—'येन विधि'रितिसूत्रेण विशेषणमात्रस्य तदन्तसंज्ञकत्वे तदपवादभूतायां 'यस्मिन्विधिस्तदादावल्ग्रहणे'इतिपरिभाषायां अपि अकारमात्रपरसप्तम्यन्ते प्रवृत्त्यापत्तौ 'इको यणची'त्यादावचीतिपदस्यापि अजादावित्यर्थे इत्यर्थः। अपवादत्वादिति—अनुनासिकनिमित्तकस्योठोऽपवादत्वादित्यर्थः। एतेन दिव्धातोर्णिजन्तात् क्विपि णिलोपे तस्य स्थानिवद्भावाद्वलोपाप्राप्त्या तत्रोठश्चारितार्थ्येनापवादत्वाभावः, ऊठि तु न स्थानिवत्त्वं 'क्वौ विधिं प्रती'तिनिषेधादित्यपास्तम्। अन्तरङ्ग इति—पञ्चसंज्ञापेक्षगुणापेक्षया संज्ञात्रयापेक्षस्योठोऽन्तरङ्गत्वमिति भावः। तदन्तविधावपीति—'इको यणची'त्यादौ तदादिविधिनाऽजादावित्यर्थेऽपि सि ऊन इति समुदायस्योभयत्राश्रयणेऽपि संज्ञाद्वयापेक्षयणपेक्षया पञ्चसंज्ञासापेक्षगुणस्याधिकसंज्ञासापेक्षत्वेन त्वद्रीत्या बहिरङ्गत्वस्यैव सत्त्वेन

पेक्षत्वरूपबहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्या-सङ्गतेः, बहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्द-मर्यादयाऽलाभाच्च । तथा सत्यसिद्धं बह्वपेक्षमल्पापेक्ष इत्येव वदेत् । अतएव 'विप्रतिषेध'सूत्रे भाष्ये गुणाद्यणादेशोऽन्तरङ्ग-त्वादित्यस्य स्योन इत्युदाहरणं, न तु गुणादूठ् अन्तरङ्गत्वादि-त्युक्तम् । त्वद्रीत्या तदपि वक्तुमुचितम् । प्राथम्यात्तदेव वा वक्तुमुचितम् । मम त्वन्तरङ्गपरिभाषया तद्वारणासम्भवात्तन्नो-क्तम् । किञ्च सिद्धान्ते नित्यत्वात् गुणात् पूर्वमूठ्, गुणस्तु ऊठि यणा बाधितत्वादनित्यः । ऊनशब्दमाश्रित्येत्यादिभाष्येण च परिभाषायामङ्गशब्देन सप्तम्याद्यन्ततयोपात्तं शब्दरूपं निमि-

---

गुणस्यान्तरङ्गत्वप्रतिपादनपरभाष्यासङ्गत्यापत्त्या संज्ञाकृतं गुण-स्योठं प्रति बहिरङ्गत्वं न युक्तमिति भावः । शब्दमर्य्यादयेति—शब्दशक्त्येत्यर्थः । तथा सतीति—बहुपदार्थापेक्षत्वाल्पपदार्थापेक्ष-त्वयोरन्तरङ्गबहिरङ्गत्वप्रयोजकत्वे इत्यर्थः । वदेदिति—भाष्यकार इति शेषः । अतएवेति—गुणापेक्षयोठोऽन्तरङ्गत्वाभावादेवेत्यर्थः । त्वद्रीत्येति—संज्ञाकृतमपि बहिरङ्गत्वमितिरीत्येत्यर्थः । तदपीति—गुणादूठोऽन्तरङ्गत्वमपीत्यर्थः । ननु तद्विना गुणाद्यणादेशोऽन्त-रङ्गत्वादितिकथनासङ्गत्या तदपि कथितप्रायमित्यत आह—प्राथम्यादिति ।

ननु स्वमतेऽपि गुणाद्यणादेश इति भाष्यस्योपपत्तये गुणा-पेक्षया पूर्वमूठः प्रवृत्तिरावश्यकी, सा कथं स्यादित्यत आह—किञ्चेति, किन्त्वित्यर्थः । सिद्धान्ते—स्वमत इत्यर्थः । यणा बाधितत्वादिति—लक्ष्यानुरोधात् बाधकाबाधितकृताकृतप्रसङ्गित्व-

त्तमेव गृह्यत इति स्पष्टमेवोक्तम् ।

यत्तु कैयटेन तदन्तविधिपक्षे परत्वाद्गुणः प्राप्नोतीत्युक्तं तत्तूनशब्दमाश्रित्येत्यादिभाष्यासङ्गत्या चिन्त्यम् ।

---

रूपनित्यत्वस्याश्रयणादिति भावः । परिभाषायामङ्गशब्देनेति—परिभाषाघटकान्तरङ्गशब्दघटकाङ्गशब्देनेत्यर्थः । यथाश्रुतन्तु न युक्तं, 'वाह ऊठ्'सूत्रे सप्तम्यन्तपदाभावेन ज्ञापकतापरभाष्यासङ्गत्यापत्तेः । तथा च वहिरङ्गत्वेन विवक्षितं यच्छास्त्रं तद्घटकपदप्रयोज्यविषयताश्रयघटकवृत्तिविषयताप्रयोजकसप्तम्यन्तपञ्चम्यन्तान्यतरपदघटितत्वमन्तरङ्गत्वमिति लभ्यते । वहिरङ्गत्वेन विवक्षितं 'वाह ऊठ्'सूत्रं तद्घटकाङ्गभपदप्रयोज्यविषयताश्रयो विश्ववाह इति समुदायस्तद्घटको ण्विः तदन्तस्यैव शशाद्यव्यवहितपूर्वत्वेन भत्वात् तन्निष्ठविषयताप्रयोजकं सप्तम्यन्तपदमार्धधातुकपदं तद्घटितं 'पुगन्तलघूपधस्ये'तिसूत्रमिति तदन्तरङ्गम् । अन्तरङ्गत्वेन विवक्षितं यच्छास्त्रं तद्घटकसप्तम्यन्तपदप्रयोज्यविषयताश्रयघटितवृत्तिविषयताप्रयोजकपदघटितत्वं वहिरङ्गत्वम् । अन्तरङ्गत्वेन विवक्षितञ्च 'पुगन्तलघूपधस्य चे'ति शास्त्रं तद्घटकसप्तम्यन्तपदमार्धधातुकपदं तत्प्रयोज्यविषयताश्रयो ण्विः तद्घटितं विश्ववाहिति तन्निष्ठविषयताप्रयोजकमङ्गपदं तद्घटितं 'वाह ऊठ्'सूत्रं तद्वहिरङ्गमिति लक्षणसमन्वयः । कार्यकालपक्षेऽङ्गभसंज्ञाशास्त्रैकवाक्यतया 'वाह ऊठ्'सूत्रस्यापि प्रत्यये यचीत्यादिसप्तम्यन्तपदघटितत्वमस्त्येवेति तु न वाच्यम्, स्वमते संज्ञाशास्त्राणां विधिशास्त्रेणैकवाक्यतायाः शब्देन्दुशेखरे खण्डितत्वात्, तावतापि समन्वयासम्भवाच्च । परमिदं जातासिद्धत्वप्रयोजकान्तरङ्गवहिरङ्गभावस्थल एव । समकालप्राप्तासिद्धत्वस्थले तु उभयत्र सप्तम्याद्यन्ततयोपात्तमेवाङ्गपदेन गृह्यत इति पूर्वमुक्तम् ।

बलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्त्तते इति तु न युक्तम्, तत्सूत्रे भाष्य एव श्वादिषु लोपातिप्रसङ्गमाशङ्क्योपदेशसामर्थ्यान्न, न च वृश्चतीत्यादौ चारितार्थ्यं, बहिरङ्गतया संप्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्तेरितिभाष्योक्तेः।

यत्तु नलोपस्य पट्संज्ञायामसिद्धत्वात्पञ्चेत्यत्र 'न षट्' इति निषेध इति—तच्चिन्त्यम्; नलोपस्य हि पदसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वाच्यम्, तच्च न संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात्। पञ्चेत्यत्र निषेधस्तु स्त्रियां यत् प्राप्नोति तन्नेति व्याख्यान-

---

गौधेर इत्यादावेयादेशादेर्वलिलोपापेक्षयाऽसिद्धत्वाभावाय 'चेले क्नोपे'रितिनिर्देशेन 'वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्त्तत' इति ज्ञाप्यते, अन्यथा यलोपापेक्षया णिज्निमित्तकपुको बहिरङ्गत्वेनासिद्धत्वाद्यलोपाप्राप्त्या निर्देशासङ्गत्यापत्तेरितिप्राचीनोक्तं खण्डयति—वलिलोपइत्यादिना। अत्र यद्वक्तव्यन्तदुक्तम्। वृश्चतीत्यादावित्यादि। इदं यथा नोपपन्नं तथोक्तम्।

पञ्चेत्यत्र टापोऽभावाय षट्संज्ञा वक्तव्या, तदर्थञ्च कार्यकालपक्षे षट्संज्ञादृष्ट्या नलोपासिद्धत्वमवश्यं वक्तव्यम्, तच्च संज्ञाकृतबाहिरङ्गत्व एवोपपद्यत इति संज्ञाकृतमपि बहिरङ्गत्वं वक्तव्यमित्याशङ्क्य समाधत्ते—यत्त्वित्यादिना। पञ्चेत्यत्र निषेधस्त्वि-ति। ननु 'नलोपः सुप्'त्यादिना षट्संज्ञादृष्ट्या नलोपासिद्धत्वं किन्न स्यादिति चेत्—न, तत्र संज्ञापदेन घिसंज्ञाया एव ग्रहणस्य तत्सूत्रस्थभाष्यतो लाभात्। तत्र हि दत्तदण्डिनौ दण्डिदत्तावित्यादौ नलोपस्य घिसंज्ञादृष्ट्याऽसिद्धत्वेन घित्वाभावात् पूर्वनिपातानियमं फलमुक्त्वा यदा घित्वन्तदा पूर्वनिपातः, यदा पूर्वनिपात-

सामर्थ्येन भूतपूर्वषट्त्वमादायेति बोध्यम् । अतएव कृति तुग्ग्रहणं चरितार्थम्; वृत्रहभ्यामित्यादौ पदत्वनिमित्तकत्वेऽपि नलोपस्य बहिरङ्गत्वाभावात्, भ्यामः पदसंज्ञानिमित्तत्वेऽपि नलोपस्य तन्निमित्तकत्वाभावात् । परम्परया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे तु न मानम् । ध्वनितं चेदं 'नलोपः सुप्' इति सूत्रे भाष्ये इति तत्रैव भाष्यप्रदीपोद्योते निरूपितम् ।

---

एतदा नलोपे घित्वमित्यन्योऽन्याश्रयमाशङ्क्य संज्ञाग्रहणसामर्थ्याद् यस्य पूर्वपदत्वे घित्वं भावि तस्य पूर्वनिपात इत्यर्थेन समाहितम्; अन्यस्या अपि संज्ञाया ग्रहणे षट्संज्ञादृष्ट्या नलोपासिद्धत्वेन सार्थक्यसम्भवात् सामर्थ्योक्तेरसङ्गत्यापत्तेः । 'द्वन्द्वे घी'त्यस्यैतादृशार्थे फलं द्युतिह्नौ ग्रामणि राजानावित्यादि बोध्यम् । व्याख्यानसामर्थ्येनेति । अन्यथा षडादिभ्यष्टापोऽसम्भवात् ङीप् न स्यादित्येव वदेदिति भावः । वस्तुतस्तु व्याख्यानसामर्थ्येनेत्यस्य व्याख्यानबलेनेत्यर्थः । भूतपूर्वषट्त्वमादायेत्यस्य लुगर्थं पूर्वं भूतं जातं षट्त्वं संकेतसम्बन्धेन षट्पदवत्त्वरूपं तत् स्थानिवद्भावेनादायेत्यर्थः । यथाश्रुतन्तु न युक्तं, प्रियपञ्चा द्रौपदीत्यत्र डापोऽभावाय तादृशव्याख्यानस्यावश्यकत्वेन सामर्थ्यस्योपक्षीणत्वात् । अतएवेति—संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणादेवेत्यर्थः । 'नाजानन्तर्य'परिभाषा तु नास्त्येवेति भावः । वस्तुतस्तु नाजानन्तर्यपरिभाषाया अभावेऽपि तत्स्थले बहिरङ्गपरिभाषाया अनित्यत्वाश्रयणेन नेदं संज्ञाकृतबहिरङ्गत्वानाश्रयणे लिङ्गं, वृत्रहभ्यामित्यादावन्तर्भूतनिमित्तकत्वरूपान्तरङ्गत्वस्यापि सत्त्वाच्च । ध्वनितमिति—तत्र हि सन्निपातपरिभाषया वृत्रहभ्यामित्यादौ तुगभावमुपपाद्य कृति तुग्ग्रहणं प्रत्याख्यातं; न

अन्तरङ्गे कर्त्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमसिद्ध-मित्यर्थः। वृश्चत्यादिषु पदसंस्कारपक्षे समानकालत्वमेव द्वयो-रिति बोध्यम्। एतेनान्तरङ्गं बहिरङ्गाद्बलीय इति परिभाषान्त-रमित्यपास्तम्, एनामाश्रित्य विप्रतिषेधसूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च। अन्तरङ्गशास्त्रत्वमस्या लिङ्गम्।

इयञ्च त्रिपाद्यां न प्रवर्त्तते, त्रिपाद्या असिद्धत्वात्।

---

त्वन्तरङ्गपरिभाषया।

वाक्यार्थबोधे पदार्थज्ञानस्य हेतुत्वादन्तरङ्गादिपदं व्याख्याय वाक्यार्थमाह—अन्तरङ्ग इत्यादि। जातासिद्धत्वसमकालिकासि-द्धत्वयोः फले अन्ते निरूपयिष्येते। ननु वृश्चतीत्यादौ भविष्य-त्प्राप्तिकस्यापि सम्प्रसारणस्य वलोपदृष्ट्याऽसिद्धत्वोक्तिरसगता स्यादित्यत आह—वृश्चत्यादिष्विति। एतेनेति—अर्थद्वयस्या-प्यनयैव सङ्ग्रहेणेत्यर्थः। एनामिति—असिद्धं बहिरङ्गमित्येतत्प-रिभाषामित्यर्थः। तस्याः—अन्तरङ्गं बहिरङ्गाद्बलीय इत्यस्या इत्यर्थः। लिङ्गमिति—उपस्थितिप्रयोजकं चिह्नमित्यर्थः। अन्त-रङ्गशास्त्रं गत्वा प्रतिपादयति बहिरङ्गशास्त्रं नास्तीति त्वं जानी-हीति यावत्।

अन्तरङ्गशास्त्रत्वस्य लिङ्गत्वे फलमाह—त्रिपाद्यां न प्रवर्तते इति। अन्तरङ्गशास्त्रे त्रिपादीस्थे न प्रवर्त्तते इत्यर्थः। असिद्ध-त्वादिति—प्रतिपाद्याभावे प्रतिपादनासम्भव इति भावः। बहिर-ङ्गशास्त्रत्वं तु न लिंगं, तस्य जातत्वे कर्तव्यत्वाभावेन प्रतिपाद-नवैयर्थ्यात्, तस्य त्रिपादीस्थत्वेऽपि अन्तरङ्गस्य सापादिकत्वे आगच्छ हे पयोट् आगच्छ हे पयोद इत्येतत्सिद्ध्यर्थं परिभाषा-प्रवृत्तेरिष्टत्वाच्च। तथा हि—अटतीत्यट् पयस्यट् पयोट् तत्र

अस्याश्च 'वाह ऊठ्'सूत्रस्थमूठ्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था, अन्यथा संप्रसारणमात्रविधानेन लघूपधगुणे

---

सम्बोधनवाक्यनिमित्तकः प्लुतो 'दूराद्धूते चे'त्यनेनाटोऽकारस्य, पयोदेत्यत्र पर्यद इति स्थिते संयोगात्पूर्वाकारस्य गुरोः 'गुरोरनृत' इति प्लुतो वाक्यनिमित्तको बहिरङ्गस्त्रैपादिकः अन्तरङ्गोत्वदृष्ट्याऽसिद्ध इति 'अतो रोरप्लुतादप्लुत'इतिसूत्रविहितोत्वसिद्धिः। बहिरङ्गशास्त्रत्वस्य लिङ्गत्वे तु प्लुतस्य बहिरङ्गस्य त्रिपादीस्थत्वेन सापादिकपरिभाषां प्रत्यसिद्धत्वेनाभावादसिद्धत्वप्रतिपादनासम्भवेनोत्वानापत्तिः। 'पूर्वत्रासिद्धमि'त्यनेन तु नासिद्धत्वसिद्धिः, एहि सुश्रोता अत्रेत्यादिसकललक्ष्यप्राप्तस्य तस्याप्लुतादप्लुते इत्येतत्सामर्थ्येन बाधादिति तत्रैव शब्देन्दुशेखरे उक्तम। त्रिपाद्यामप्रवृत्तेरेवाभिषेणयत्यभिषिणोति राज्ञः सर्वेषामित्यादौ णत्वश्चुत्वषत्वेषु त्रिपादीस्थेषु अन्तरङ्गेषु कर्त्तव्येषु पत्वाल्लोपसुडादीनां बहिरङ्गाणां नानयाऽसिद्धत्वम्।

नन्वेतस्या अष्टाध्याय्यां पाठाभावेन कथमेतद्दृष्ट्या त्रिपाद्या असिद्धत्वमित्याह—अस्याश्चेत्यादि। परिभाषाया ज्ञापकबोध्यरूपत्वात् बोध्यस्य बोधकदेशस्थत्वौचित्यादिति भावः। **लघूपधगुण** इति। लोकसिद्धेन 'अन्तरङ्गं बहिरङ्गाद्बलीय'इति न्यायेन लघूपधगुणात्पूर्वमाद्गुणे विश्वौहोऽसिद्धिरिति न वाच्यं; तस्याप्येतस्यामेवान्तर्भावेणास्यामवस्थायामभावात्, लघूपधगुणस्यैवान्तरङ्गत्वाच्च।

न च 'ऊडिदंपदाद्यप्पुम्रैद्युभ्य'इतिसूत्रेण प्रष्ठौह इत्यादौ स्वरो न स्यादूठोऽग्रहण इति ज्ञापकत्वासिद्धिरिति वाच्यम, ऊठ्युपधाग्रहणं कर्त्तव्यमिति तत्सूत्रस्थवार्त्तिकादत्र स्वरस्यानिष्टत्वात प्रतिपदोक्तपरिभाषासहकारेणोक्तवार्त्तिकस्योपधापदमुच्चार्य विहितस्यै-

वोठो ग्रहणं कर्त्तव्यमित्यर्थात् । कौमुद्यां प्रष्ठौह इति तत्सूत्रोदाहरणन्तु वृत्तिकारानुसारेण, वस्तुतोऽयुक्तमेव, जूरा तूरेत्यादेरेव तदुदाहरणात् । अतएव भाष्ये शेखरे च ज्ञापकत्वविचारावसरे एतद्दूपणन्नोपन्यस्तमिति केचित् ।

'उपधाग्रहणमन्त्यप्रतिपेधार्थम्, अन्त्यस्य माभूत्, अक्षद्युवे' इतिभाष्येणान्त्यव्यावृत्तिरेवोपधाग्रहणस्य प्रयोजनं लभ्यते, अप्रतिपदोक्त विश्वौह इत्यस्यापि व्यावर्त्यत्वे तत्साधारण्येनानुपधाभूतव्यावृत्त्यर्थमित्येव वदेत्, शेखरे ज्ञापकविचारसमये एतद्दोपानुपन्यासमात्रेण वृत्तौ कौमुद्याञ्च प्रष्ठौह इत्युपन्यासस्यायुक्तत्वबोधनानौचित्यात् । उद्देश्यविधेयभावसम्वन्धेनान्वितार्थकपदद्वयघटितसमुदायोपादाने 'विभाषा दिक्समासे' 'तत्पुरुषे तुल्यार्थ तृतीये'त्यादावेव प्रतिपदोक्तपरिभाषाया ग्रन्थकृता प्रवर्त्तनेन तत्रैव प्रवृत्तेरौचित्येनानित्यत्वेन चाभेदेनोपधान्वितोठ वोधकोपधापदोठ्पदघटित ऊठ्युपधेतिसमुदाये तस्याप्रवृत्तेः प्रष्ठौह इत्यादावपिष्ट एव स्वर इति परे ।

तर्हि ज्ञापकत्वं कथमिति चेत्, उच्यते—स्वरविधायके 'वाह ऊठि'त्यत्र च ह्रस्व एव कर्त्तव्ये दीर्घस्य विधानं ज्ञापकमेव । तद्धि 'एत्येधत्यूठ्सु' इत्येतत्प्रवृत्त्यर्थमिदानीं लघूपधगुणे 'वृद्धिरेची'त्येव सिद्धम् । ज्ञापितायाञ्चास्यां 'वाह उडि'त्यस्यासिद्धत्वेन लघूपधगुणाभावे 'वृद्धिरेची'त्यस्याप्रवृत्तौ वृद्ध्यनापत्त्या दीर्घग्रहणमेत्येधत्यूठ्स्वित्येतत्प्रवृत्तिसम्पादनेन चरितार्थम । न च तत्रापि ह्रस्वकरणेन वृद्धेः सिद्धौ दीर्घग्रहणं न स्वांशे चरितार्थमिति वाच्यम्, अवतीत्यः जनस्य ऊः जनौरित्यादौ 'ज्वरत्वरे'तिदीर्घे ऊठि वृद्ध्यनापत्तेः । तत्रापि ह्रस्वकरणे जूरावित्यादौ दीर्घश्रवणानापत्तेः । न च स्वरविधायके ह्रस्वकरणे जूरेत्यादौ स्वरानापत्तेर्न दीर्घग्रहणं ज्ञापकमिति वाच्यम्, स्वरविधायके वार्त्तिके च ठित्करणेनादोपात् ।

'वृद्धिरेचि'इतिवृद्धौ विश्वौह इत्यादिसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। सत्यां ह्येतस्यां बहिरङ्गसम्प्रसारणस्यासिद्धत्वाल्लघूपधगुणो न

---

ननु स्वरविधौ तद्वार्त्तिके च ठिदितिकरणे पदद्वयाधिक्येन बहुव्रीह्याश्रयणेन च गौरवमिति चेत्, अत्र चन्द्रिकाकाराः—स्वरविधायके वार्त्तिके च ऊठित्यत्र दीर्घेणोकारोऽपि प्रश्लिष्यते, ऊठ्साहचर्य्याच्च स वकारस्थानिक उपधाभूतो धातुस्थो गृह्यते, तेन सोमसुतः अक्षद्युवा तस्थुषः यून इत्यादौ न स्वरापत्तिः, इत्थञ्च सम्प्रसारणमात्रविधानेन सिद्धे ऊठ्ग्रहणं ज्ञापकमित्याहुः।

अस्तु वा ज्ञापकतापरभाष्यप्रामाण्यात् प्रतिपदोक्तपरिभाषाश्रयणाच्च स्वराभाव एवेष्टः ; प्रष्ठौह इति स्वरोदाहरणं कौमुदीकारस्य प्रमाद एवेति यथान्यासेनैवोठ्ग्रहणं ज्ञापकमिति परे।

दीर्घविधानमेव ज्ञापकमित्यपरे; तथा हि—ह्रस्व उठ् एव विधीयतां, स्वरेऽपि ह्रस्व एव, 'ज्वरत्वर'-'च्छ्वोः शूडि'तिसूत्रद्वयेनापि ह्रस्व एव विधातव्यः, वृद्धावपि तथैव, जूरावित्यादौ दीर्घश्रवणन्तु उउठित्यादेशद्वयविधानपूर्वकसवर्णदीर्घकरणेनोपपन्नं भविष्यतीति—तन्न, ज्ञापितेऽपि दीर्घोच्चारणस्य चरितार्थत्वासम्भवात्, आवयतीत्योरित्यादौ ण्यन्तादवेः क्विपि णिलोपे आङ्गत्वात्सवर्णदीर्घं बाधित्वा वृद्धौ यणि वौरित्यापत्त्या आदेशद्वयविधानासम्भवाच्चेति दिक्।

बहिरङ्गसम्प्रसारणस्यासिद्धत्वादिति। ननु सम्प्रसारणस्य बहिरङ्गत्वेऽपि तस्य पूर्वरूपेणापहारात् पूर्वरूपस्य च बहिरङ्गत्वाभावाद्गुणो निराबाध इति चेत्, अत्र केचित्—पूर्वरूपे सम्प्रसारणतुल्यत्वं 'हल'इतिसूत्राज्ज्ञाप्यते, अन्यथा हूतमित्यादौ पूर्वरूपस्यैव सत्त्वेन तस्य वैयर्थ्यापत्तेः ; स्थानिवद्भावेन तु न निर्वाहः, सम्प्रसारणत्वस्याल्मात्रवृत्तित्वात्, स्थान्येकदेश-

स्यात् । न च 'पुगन्ते'तिसूत्रे निमित्तमिको विशेषणम्,

वृत्तित्वाच्च; अचः परस्मिन्नित्यपि न, स्वविधित्वात् दीर्घविधौ तन्निषेधाच्च; इत्थं च सम्प्रसारणनिष्ठं बहिरङ्गत्वमपि पूर्वरूपस्येति न दोषः; अतएव ज्ञापकतापरभाष्यमप्युपपद्यते; जागृढ इत्यादौ ग्रहेर्यङ्लुगन्तात् तसि उत्तरखण्डे सम्प्रसारणपूर्वरूपाभ्यां ऋदुपधत्वे यङ्लुग्निमित्तको रिगागमो न, सम्प्रसारणस्थानिकपूर्वरूपस्यापि बहिरङ्गत्वातिदेशेन रिगागमापेक्षयाऽसिद्धत्वादित्याहुः ।

परे तु—'सम्प्रसारणाच्चे'तिसूत्रेण सम्प्रसारणात्परस्याचो निवृत्तिमात्रमुच्यते, पूर्वपरयोर्निवृत्तिं कृत्वाऽपूर्वस्यैकस्यानयने गौरवात् । तथा च सम्प्रसारणमेव वर्त्तते इति सर्वमुपपन्नं, हलश्चेति सूत्रञ्च चरितार्थम् । न च जागृढ इत्यादौ परनिवृत्तिरूपादेशस्य स्थानिवत्त्वेन ऋकारस्य यणापत्तिरिति वाच्यम, तस्यानादेशत्वात् सम्प्रसारणस्यैव पूर्वरूपात्मकस्यादेशत्वात् । नन्वेवं राममित्यादावुक्तयुक्त्या 'अमि पूर्व'इतिपूर्वरूपेणापि परस्याकारस्य निवृत्तौ मकारात्मके सुपि 'सुपि चे'तिदीर्घः स्यादिति चेत्—न, मकारस्य सुप्त्वाभावात्, अर्थाधिकविकारेणैकदेशविकृतन्यायाप्रवृत्तेः, मकारस्यानादेशत्वेन स्थानिवद्भावाप्रवृत्तेश्च । न च द्वयोः स्थाने एकादेशेन द्वयोर्निवृत्तिरपूर्वस्य स्थितिर्लभ्यते, न परस्य निवृत्तिरिति वाच्यम; एकस्य सत्त्वेऽपि द्वित्वावच्छिन्नप्रतियोगिताकाभावस्य सत्त्वात् घटसत्त्वे घटपटौ न स्त इतिवत्, अन्यसहायेन स्थितस्यान्यासहायेन स्थितावपूर्वत्वोपपत्तेश्च ।

निमित्तमिको विशेषणमिति—अङ्गविशेषणत्वे हि सार्वधातुकाद्यव्यवहितपूर्वाङ्गावयवस्येको गुण इत्यर्थे भिनत्तीत्यादौ भिनद्-ति इतिस्थिते सार्वधातुकाव्यवहितपूर्वाङ्गं भिनद् तदवयवस्येकारस्य गुणापत्तिः, इको विशेषणे तु 'येन नाव्यवधान'न्यायेन

अतएव भिनत्तीत्यादौ न गुणः, एवञ्च 'नाजानन्तर्य' इति निषेधात् कथं परिभाषाप्रवृत्तिरिति वाच्यम्; प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तत्रैवान्वयात्, 'पुगन्ते'त्यादौ कर्मधारयाश्रयणेन प्रत्ययपराङ्गावयवलघूपधारूपेको गुण इति 'इको गुणवृद्धी' इतिसूत्रभाष्यसम्मतेऽर्थे भिनत्तीत्यादावदोषाच्च। अकारान्तोपसर्गेऽनकारान्ते चोपपदे वहेर्वाहेर्वा ण्विविचावनभिधानान्न स्त

---

भेत्तेत्यादावेकवर्णव्यवधाने चरितार्थत्वादनेकव्यवधानादत्र न गुण इति भावः। एवञ्चेति—अज्निष्ठं यत्प्रत्ययनिरूपितमानन्तर्यं तन्निमित्तकत्वेनेत्यर्थः। वस्तुतस्तु—नेदं युक्तं, सामर्थ्यादेकवर्णव्यवहितस्येको गुणविधानेनाज्निष्ठान्यनिरूपिताव्यवहितत्वरूपाजानन्तर्यनिमित्तकत्वाभावेन नाजानन्तर्यपरिभाषाया अप्रवृत्तेः तत्राप्येकवर्णव्यवधानसहने मानाभावात्। प्रत्ययास्याङ्गांशे उत्थिताकाङ्क्षत्वेनेति। इदन्न युक्तं, संकेतसम्बन्धेन प्रत्ययपदवत्त्वस्यैव प्रत्ययपदार्थत्वेन घटत्वादिवदुत्थिताकाङ्क्षत्वाभावात्, पुत्रादिपदार्थे आकाङ्क्षोत्थापकजन्यत्वादिवदत्र ससम्बन्धिकस्य कस्यचिदर्थस्याभावात्। पुगन्तेत्यादौ कर्मधारयाश्रयणेनेति—लघ्वी चासावुपधा च लघूपधा पुकि अन्तः पुगन्तः पुगन्तश्च लघूपधा च पुगन्तलघूपधमितिसमाहारस्तस्य पुगन्तलघूपधस्येत्यस्याश्रयणेनेत्यर्थः। अदोषादिति—इक उपधात्वाभावादिति भावः। ननूठ्ग्रहणन्न ज्ञापकम्, अकारान्तोपसर्गे प्रौह इत्यत्र लघूपधगुणे 'वृद्धिरेचो'स्येतद्बाधित्वा 'एङि पररूपमि'ति पररूपे इष्टवृद्धेरसिद्ध्यापत्तेः, अनकारान्ते वार्यूह इत्यादौ लघूपधगुणे ऊकारश्रवणानापत्तेश्चेत्यत आह—अकारान्तोपसर्गे इत्यादि। वहेर्वाहेर्वेति—वहेर्ण्विः, णिजन्ताद् वाहेर्विजित्यर्थः। ननु णिजन्ताद्वाहेर्विरिति न

एव । वार्यूहेत्यादि तूहतेः क्विपि बोध्यम् । धातूनामनेकार्थत्वा-न्नार्थसंगतिः । प्रौह इत्याद्यसाध्वेव, वृद्धेरप्राप्तेः । अस्योहस्या-नर्थक्यान्न 'प्रादूहोढो' इत्यस्यापि प्रवृत्तिः ।

न च कार्य्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम्, पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपित-

---

युक्तं, णिजन्ताद्विजितिप्रतीकमुपादाय 'अनेन लोके विश्ववाट्-शब्दस्य साधुत्वमात्रमुच्यते न त्वस्योठ् अङ्गभसंज्ञाक्षिप्तप्रत्ययेन वाहो विशेषणात् णिलोपस्य स्थानिवत्त्वेन व्यवधानादिति शब्दे-न्दुशेखरोक्तेन विरोधादिति चेत्—न, आक्षिप्तस्य शाब्दबोधे भानाभावात् कार्यकालपक्षेऽपि संज्ञाशास्त्राणां विध्येकवाक्यताया असम्भवाच्च तस्य ग्रन्थस्य खण्डनीयत्वात् वाहप्रयत्न एतदभि-प्रायेणैतद्ग्रन्थस्य सत्त्वाच्च ।

न च कार्यकालपक्ष इति । पूर्वं प्रति अन्तरङ्गपरिभाषां प्रती-त्यर्थः, परस्य त्रिपादीस्थान्तरङ्गशास्त्रस्य, पूर्वस्य सापादिकबहिरङ्ग-स्येति कस्यचिद्व्याख्यानन्तु अविचारितरमणीयम्; यतोऽस्य ग्रन्थस्यैतादृशार्थकत्वे परिभाषादृष्ट्या त्रैपादिकान्तरङ्गस्यासिद्धत्व-मात्रप्रतिपादनेन परिभाषायास्तत्राप्रवृत्त्युपपत्तौ पूर्वस्य तन्निरूपित-बहिरङ्गत्वाभावादित्येतत्पर्यन्तानुधावनस्य वैयर्थ्यापत्तेः, त्रिपाद्या असिद्धत्वहेतुनैव त्रिपाद्यामप्रवृत्तिमुक्त्वा तद्धेतुनैव पुनस्तत्राप्रवृ-त्त्युक्तेः पुनरुक्तत्वापत्तेश्च, उत्तरस्य पक्षद्वयसाधारण्यात् शङ्कादले कार्यकाल इति विशेषोक्तेरसङ्गत्यापत्तेश्च, त्रिपाद्यसिद्धत्वहेतोरस्या-मिव परिभाषान्तरेऽपि समानत्वात् कार्यकालेऽन्यासां प्रवृत्तिर्भवति अस्या नेति वैषम्ये बीजाभावाच्च । तस्मादयमाशयः—यथोद्देशे परिभाषाणां ज्ञापकदेशस्थत्वेन सापादिकत्वात् त्रिपाद्यामसिद्धत्वे-नाप्रवृत्तावपि कार्यकाले विधिदेशस्थत्वेन परिभाषाणां विधिशा-

बहिरङ्गत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासम्भवात् । न चानया पूर्वस्यासिद्धत्वात्तदभावेन तं प्रति परासिद्धत्वं पूर्वत्र इत्यनेन वक्तुमशक्यमिति वाच्यम्, एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः । किञ्च पूर्वत्रेत्यस्य प्रत्यक्षत्वेन तेनानु-

---

न्नस्य च समानदेशस्थत्वेन 'पूर्वत्रासिद्धमि'त्यस्याप्रवृत्त्याऽसिद्धत्वाभावेन त्रिपाद्यां प्रवृत्तिरव्याहतेति । तदेवाह कार्यकालपक्ष इति। उत्तरन्तु परिभाषां प्रत्यन्तरङ्गस्यासिद्धत्वाभावेऽपि सापादिकबहिरङ्गं प्रति त्रैपादिकान्तरङ्गस्य 'पूर्वत्रासिद्धमि'त्यनेनासिद्धत्वादन्तरङ्गाभावे तन्निरूपितबहिरङ्गत्वस्याप्यभावः, 'सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गेऽन्तरङ्गमि'तिभाष्यात्, तथा च परस्परसापेक्षान्तरङ्गत्वबहिरङ्गत्वयोरभावेन परिभाषाया अप्रवृत्तिरिति। न च 'पूर्वत्रासिद्धमि'त्यतः प्रागेव परिभाषा त्रैपादिकान्तरङ्गे प्रवर्त्ततां, तदानीमन्तरङ्गबहिरङ्गयोस्सत्त्वात्; न च पश्चात्पूर्वत्रासिद्धमित्यस्य प्रवृत्त्या परिभाषाबोधितस्याप्रामाण्यं स्यादिति वाच्यम्, अन्तरङ्गैकवाक्यतापन्नपूर्वत्रासिद्धमित्यस्याप्यन्तरङ्गत्वेन परिभाषया तद्दृष्ट्यापि पूर्वस्यासिद्धत्वेन पूर्वत्रासिद्धमित्यस्य पूर्वशास्त्रज्ञानाभावात् तन्निरूपितासिद्धत्वमन्तरङ्गस्य बोधयितुमसामर्थ्यादिति परिभाषाबोधितस्याप्रामाण्याप्रसक्तेरित्याह—न चानयेत्यादि वाच्यमित्यन्तेन । एवं हीति—पूर्वापरीभावे नियामकाभावे हीत्यर्थः ।

प्रत्यक्षत्वेनेति—प्रत्यक्षप्रमाणस्य सर्वतो बलवत्त्वादितिभावः। गुरुवरबालशास्त्रिणस्तु—ग्रन्थकारोक्तयुक्तौ सर्वथाऽपरितुष्यन्तोऽन्यां व्यवस्थां वर्णयन्ति। तथाहि परिभाषा द्विविधा—शास्त्रत्वसंपादिका शास्त्रत्वावच्छिन्नोद्देश्यिका च। तत्र यया विना अप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधजनकत्वरूपशास्त्रत्वमेव न तां

मानित्वया अस्या बाध एवोचितः। अतः कार्यकालपक्षेऽपि त्रिपाद्यामस्या अनुपस्थितिरेव। अतएव कार्यकालपक्षमेवोपक्रम्योक्तयुक्तीरुक्त्वा 'अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वादि'त्युक्तं 'विसर्जनीय'सूत्रे भाष्ये सिद्धान्तिना। त्रिपादीस्थेऽन्तरङ्गे कर्त्तव्येऽयं परिहारो न युक्त इति तदर्थः। किन्तु

प्रति परं शास्त्रमसिद्धमित्यर्थकपूर्वत्रासिद्धमित्यनेन त्रैपादिकस्यासिद्धत्वाभावेन सा त्रिपाद्यां प्रवर्तते, यथा 'तस्मिन्नि'त्यादि। यया विनापि उक्तशास्त्रत्वमस्ति तां प्रति निरुक्तार्थकपूर्वत्रासिद्धमित्यनेनासिद्धत्वात् सा त्रिपाद्यां न प्रवर्तते, यथा 'असिद्धं बहिरङ्गमि'ति सर्वमुपपन्नम्। अस्या बाध इति—परिभाषातः पूर्वं प्रवृत्तिरिति यावत्।

किन्तु वचनमेवारब्धव्यमिति। सुध्युपास्य इत्यत्र संयोगान्तलोपाभावाय 'यणः प्रतिषेधो वक्तव्यः', चक्रयत्रेत्यत्र संयोगादिलोपाभावार्थं निगाल्यत इत्यत्र 'अचि विभाषे'तिलत्वार्थं व्रीहिवापाणीत्यादौ णत्वार्थं 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु,' कृतस्यापत्यं कार्त्तिरित्यादौ 'रदाभ्यामि'तिनत्वाभावाय 'निष्ठा नत्वमवृद्धेः', नृमतोऽपत्यं नार्म्मतमित्यादौ 'मादुपधाया'इतिवत्वाभावार्थं 'नृमतो वप्रतिषेधः', नार्कुटः नार्पत्य इत्यत्र विसर्गप्रतिषेधाय 'विसर्जनीयोऽनुत्तरपदे' इत्यादिवचनानि कर्त्तव्यानीत्यर्थः।

ननु त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तिमभ्युपगच्छतामस्माकमन्तरङ्गपरिभाषयैव सर्वदोषोपशमात् वचनानि न वक्तव्यानीति लाघवात् त्रिपाद्यां प्रवृत्तिरेवास्तु, अतिप्रसङ्गस्तु यथोद्देशपक्षाश्रयणेन परिहरणीय इति चेत्—न, लाघवेन युक्तिसिद्धस्य बाधायोगात्। अतएव व्यक्तिशक्तिस्वीकारापेक्षया जातिशक्तिपक्षे सत्यपि लाघवे व्यक्तिशक्तिः स्वीकृता तार्किकैः। किञ्च ममापि

संयोगान्तलोपे झलोऽपकर्षणेन यणः प्रतिषेधवचनाभाव एव। चक्रय्यत्रेत्यत्र यणः पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेनैन बहिरङ्गत्वं वाच्यं चक्रय्यकैदित्यत्र तन्नास्तीति तदर्थं संयोगादिलोपग्रहणम् कर्त्तव्यमेव तवापि, तत्र हि इण्धातोर्लङि 'तिङश्चे'त्यकचि अकै-दितिरूपम् तत्राकचस्तन्मध्यपतितत्वाभावेन तन्मध्यपतितन्याया-प्रवृत्त्या तिङन्ततद्ग्रादित्वाभावेन अकैदित्यस्य पदत्वाभावात्। तक्षधातोर्ण्यन्तात् क्विपि णिलोपे सुपि पदत्वे संयोगान्तलोपे तगिति रूपं, संयोगादिलोपस्तु न, णिलोपस्य स्थानिवद्भावात्; तत्र 'पूर्वत्रासिद्धीये न स्थानिवदि'त्यस्याप्रवृत्त्यर्थं च संयोगादि-लोपग्रहणम्। णिलोपस्य बहिरङ्गत्वाभावेन न परिभाषया सिद्धिः। प्लायते इत्यत्र प्रअयते इति स्थिते पदद्वयापेक्षेण 'उपसर्गस्यायता-वि'तिसूत्रेण लत्वार्थमावश्यकस्य दीर्घरूपैकादेशस्थानिवत्त्वस्य प्र-तिबन्धकीभूत'पूर्वत्रासिद्धीये न स्थानिवदि'तिवचनस्याप्रवृत्तये ल-त्वग्रहणं तवाप्यावश्यकमेव। परिभाषया च न निर्वाहः, दीर्घस्या-न्तरङ्गत्वात्। प्राहिणोदित्यत्र पूर्वं धातोः साधनेनैव योगस्य सिद्धा-न्ततया पश्चादुपसर्गयोगे अन्तरङ्गत्वाद्गुणे हिनुशब्दनिमित्तक-'हिनुमीने'तिणत्वप्रवृत्तये गुणस्थानिवद्भावस्यैव शरणीकर्त्तव्यतया णत्वग्रहणमपि तवावश्यकम्। णत्वस्यैव बहिरङ्गतया न तत्राभीष्ट-सिद्धिकरी परिभाषा। ऋधातोः क्तप्रत्यये निष्पन्नादृतशब्दादाचा-रक्विबन्तात् लङि आर्तादित्यत्र निष्ठानत्वाभावाय वार्त्तिकाश्रयण-मेव तवापि। न बहिरङ्गपरिभाषा कल्याणाय, वृद्धेर्बहिरङ्गत्वात्। एवं ऋशब्दान्मतुबन्तादाचारक्विबन्तात् लङि आर्मतादित्यत्र वत्वा-भावार्थं वचनारम्भ एव तवापि युक्तः, वृद्धेरन्तरङ्गत्वात्। ऋशब्द-प्रकृतिककल्पप्प्रत्ययान्तात् ऋकल्पशब्दाल्लङि आर्कल्पादित्यर्थं 'विसर्जनीयोऽनुत्तरपदे' इत्यप्यावश्यकमेवेत्यलं भाष्यसम्मतयु-क्त्युल्लंघनेन।

प्रसङ्गात् 'विसर्जनीयोऽनुत्तरपदे' इत्यस्यार्थो विचार्यते।

उत्तरपदशब्देन वृत्तिचरमावयवो गृह्यते इति रामः करोति नार्कलिपिरित्यादौ नातिव्याप्त्यव्याप्ती। दास्याः पुत्र इत्यादौ समासेऽलुकि विसर्गोपपत्तये रत्वावच्छिन्नविधेयताश्रयरेफस्य वृत्तिचरमावयवे परे न विसर्ग इत्यर्थेऽपि गीःपतिरित्यादौ दोष इति न वाच्यम्; वृत्तिचरमावयवनिमित्तको यो रेफस्तस्य न विसर्ग इत्यर्थः। गीःपतिरित्यादौ च न रेफस्तथाभूतः। निमित्तता च यथाकथञ्चिदेव, तेन नार्कूटः नार्कलिपिरित्यादौ न दोषः, रेफनिमित्तवृद्धिनिमित्तप्रातिपदिकावयवकूटकल्पादेरपि अपर्याप्त्या वृद्धिनिमित्तताद्वारा रेफनिमित्तत्वात्। न चोपार्च्छतीत्यादौ दोषः, वृत्तिचरमावयवस्थानेऽर्थवतो निवेशात्। न च राम इत्यादावपि सुरूपार्थवन्निमित्तकत्वेन रेफस्य विसर्गानापत्तिरिति वाच्यम्, खर्विशिष्टो विसर्गोऽसाधुरित्यर्थात्। वैशिष्ट्यञ्च स्वघटितार्थवदव्यवहितपूर्वस्थानिकरेफस्थानिकत्व-स्वनिमित्तकत्वोभयसम्बधेन। उपार्च्छति परमर्त्त इत्यादौ खर् छकारादिस्तद्घटितोऽर्थवान् ऋच्छादिः तदवधिकपूर्वोऽकारस्तत्स्थानिको वृद्ध्यादिद्वारा रेफः तत्स्थानिकत्वं छकारादिनिमित्तकत्वं च जायमानविसर्गे स्यादिति तस्यासाधुत्वोपपत्तिः। न च दास्याः पुत्र इत्यादौ नॄँः पाहीत्यादौ च विसर्गस्यासाधुत्वापत्तिः, पकाररूपखरः वैशिष्ट्यनियामकं स्वनिमित्तकत्वमस्ति, स्वघटितोऽर्थवान् पुत्रशब्दः पाहिशब्दश्च तदव्यवहितपूर्वः सकारो नकारश्च तत्स्थानिकरेफस्थानिकत्वमप्यस्ति विसर्गस्येति खर्विशिष्टत्वादिति वाच्यम्; रेफे रत्वावच्छिन्नविधेयताश्रयत्वस्यापि निवेशेनादोषात्। वस्तुतस्तु—स्वनिष्ठनिमित्ततानिरूपितरत्वावच्छिन्नविधेयताश्रयत्व-स्वाव्यवहितपूर्वस्थानिकत्वोभयसम्बन्धेन यत्किञ्चिद्विशिष्टस्य रेफस्य न विसर्गः। उपार्च्छतीत्यादौ ऋच्छमादाय परमर्त्त इत्यादौ ऋकारमादाय समन्वयः। रत्वावच्छिन्नविधेयतानिवेशान्न नॄँःपाहीत्यादौ दोषः। निमित्ततानिवेशान् गीःपतिरित्यादौ न दोषः,

वचनमेवारब्धव्यमिति तदाशयः। अतएव निगाल्यत इत्यादौ ल्त्वार्थं 'तस्य दोष'इतिवचनमेवारब्धम्, अन्यथान्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकल्त्वे तद्वैयर्थ्यं स्पष्टमेव। येऽपि लक्ष्यानुरोधादानुमानिक्याप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रेत्यस्य बाधं वदन्ति तेऽपि लक्षणैकचक्षुर्भिर्नादर्तव्या इति दिक्।

अतएव 'ओमाङोश्च'इत्याङ्ग्रहणं चरितार्थम्, तद्धि खट्वा आ ऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वा-

---

उद्देश्यदलप्रविष्टविषयतामात्रस्य निमित्ततापदेन ग्रहणात्। नार्कूटः नार्कल्पिरित्यादौ न दोषः, प्रातिपदिकत्वावच्छिन्नविषयताया अपर्याप्त्या कूटादौ सत्त्वादित्यलम्।

अतएव निगाल्यत इति—कार्यकालपक्षेऽप्यन्तरङ्गपरिभाषायास्त्रिपाद्यामप्रवृत्तत्वादेवेत्यर्थः। पूर्वत्रेत्यस्य बाधमिति—तथा सति त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तिप्रतिबन्धकासिद्धत्वस्याभावेन त्रिपाद्यामस्याः प्रवृत्तिर्निराबाधेति भावः। लक्षणैकचक्षुर्भिरिति—लक्षणद्वारैव लक्ष्यसाधुत्वं जानतां लक्षणैकचक्षुषां लक्ष्यानुरोधेन लक्षणं व्यवस्थापयतां दुस्तरोऽन्योऽन्याश्रय इति भावः।

धर्मिग्राहकमानेन जातबहिरङ्गासिद्धत्वबोधकत्वमेवास्या न समकालप्राप्तबहिरङ्गासिद्धत्वबोधकत्वमितिभ्रमनिरासाय तदंशेऽपि मानमाह—अतएवेति, समकालप्राप्तबहिरङ्गासिद्धत्वबोधकत्वादेवेत्यर्थः। न च खट्वा आ ऊढा इतिस्थिते परमपि सवर्णदीर्घं बाधित्वा नित्यत्वाद्गुणे दोर्घाप्राप्त्या प्राप्तवृद्धिबाधनार्थमाङ्ग्रहणं चरितार्थं नोक्तार्थज्ञापकं स्यादिति वाच्यं, नित्यापेक्षयाऽप्यपवादस्य बलीयस्त्वेन पूर्वं दीर्घस्यैव प्रवृत्तौ ततो गुणे रूपसिद्धौ व्यर्थस्य तस्य ज्ञापकत्वसम्भवात्। न च ज्ञापनोत्तरमपि व्यर्थमे-

'द्गुणे कृते वृद्धिप्राप्तौ पररूपार्थम् । साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात् खट्वाशब्दस्य समुदायेन योगाद्गुणस्यान्तरङ्गत्वमिति 'सम्प्रसारणाच्चे'तिसूत्रे भाष्ये स्पष्टम् । एहीत्यनुकरणस्य शिवादिशब्दसम्बन्धे तु नास्य प्रवृ-

---

वान्तरङ्गापेक्षयाप्यपवादस्य बलीयस्त्वादिति वाच्यम्, अपवादस्याप्यस्यान्तरङ्गबहिरङ्गभावाभावविषये दैत्यारिरित्यादौ चरितार्थस्य प्रकृतेऽन्तरङ्गेण गुणेन बाधसम्भवात् । तदुक्तम्—'अपवादो यद्यन्यत्र चरितार्थः तर्ह्यन्तरङ्गेण बाध्यत' इति । पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वस्योभयोः साम्येन 'अचः परस्मिन्नि'तिभाष्योदाहृते मृद्व्या-पट्व्येत्यत्र पूर्वयण इव पूर्वोच्चरितनिमित्तकत्वरूपान्तरङ्गत्वस्य दीर्घे एव सत्त्वेन च अन्तरङ्गत्वं गुणस्य कथमित्यत आह—साधनबोधकेत्यादि । एवं रूपेण योगे हेतुरग्रे वक्ष्यते क्रियायाः साध्यत्वेनेत्यादिना । नन्वेवं रीत्या गुणस्यान्तरङ्गत्वेऽप्यचः परस्मिन्निति भाष्यरीत्या दीर्घस्याप्यन्तरङ्गत्वमित्यव्यवस्थेति चेत्—न, स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमेणैव बोधविषयत्वेन तत्क्रमेणैव तद्बोधकशब्दयोगेन तद्रीत्यैव मृद्व्यापट्व्येत्यादावपि पूर्वयणोऽन्तरङ्गत्वात्, एतज्ज्ञापकतापरभाष्यप्रामाण्यात् पूर्वोच्चरितनिमित्तकत्वस्य निमित्तानामेकपदघटकत्वे एवान्तरङ्गत्वप्रयोजकत्वाभ्युपगमाच्च। एतदभिप्रायेणैवोच्यते—भाष्ये स्पष्टमिति ।

ननु आङ्पूर्वकेण धातोरेहीतिरूपं तदनुकरणे एहिशब्देऽनुकार्यघटकैकारे पूर्वान्तवद्भावेनाङ्त्वात् 'अनुकरणं प्रकृतिवदि'त्यतिदेशेन लब्धाङ्त्वे अनुकरणैकदेशभूतैकारे शिवादिशब्दयोगे प्राप्तवृद्धिबाधपुरस्सरं पररूपार्थमाङ्ग्रहणं न ज्ञापकं स्यादित्यत आह—एहीत्यनुकरण इत्यादि । अनेन च प्रकृत्येकदेशपर्याप्तधर्मस्यानुकरणैकदेशेऽप्यतिदेशः, अतएवाप्सुमन्तावाज्यभागावित्या-

त्तिः, ज्ञापकपरसम्प्रसारणाच्चेतिसूत्रस्थभाष्यप्रामाण्येनानित्यं प्रकृतिवदनुकरणमित्यतिदेशमादाय लब्धाङ्त्वे एतदप्रवृत्तेः ।

यत्तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन, उपसर्गेण तत्संज्ञकशब्देन साधनेन कारकेण तत्प्रयुक्तकार्येण, अतएवानुभूयत इत्यादौ सकर्म्मकत्वात् कर्म्मणि लकारसिद्धिरिति—तन्न । क्रियायाः साध्यत्वेन बोधात्साध्यस्य च साधनाकाङ्क्षतया तत्सम्बन्धोत्तरमेव निश्चितक्रियाबोधेन साधनकार्यप्रवृत्त्युत्तरमेव क्रियायोगनिमित्तोपसर्गसंज्ञकस्य सम्बन्धौचित्यात् । अतएव 'सुट्कात्पूर्व'इतिसूत्रे पूर्वं धातुरुपसर्गेणेत्युक्त्वा

दावनुकरणभूताप्सुघटके सुशब्दे अनुकार्यसप्तम्यन्तैकदेशसुशब्दगतसुप्त्वमादाय प्राप्तलुकोऽभावाय 'अपो योनियन्मतुष्वि'ति मतुप्यलुक्चरितार्थः । आ-इहीत्यनयोरनुकरणद्वयमित्यन्ये । न च पदसंस्कारपक्षे एहीति रूपं संसाध्य पश्चाच्छिवादिसम्बन्धे पूर्वान्तवद्भावेन लब्धाङ्त्वे एकारे पररूपार्थमाङ्ग्रहणं चरितार्थमिति वाच्यम्, एवं रीत्यापि प्रयोगो न भवति ज्ञापकतापरभाष्यप्रामाण्यादेव ।

धातूपसर्गनिमित्तकगुणस्यान्तरङ्गत्वोपपादनेन पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन धातूपसर्गनिमित्तकं कार्यमन्तरङ्गमिति प्राचां सिद्धान्तो नागेशस्य सम्मत इतिभ्रमवारणाय प्राचीनमतमुपपाद्य खण्डयति -यत्त्वित्यादिना। अतएवानुभूयत इति । अनुसमभिव्याहारेण भूधातोर्ज्ञानार्थकत्वमित्यभिमानः । निश्चितक्रियेति । साध्यशरीरिण्याः साधनसम्बन्धोत्तरमेव स्वरूपनिष्पादादिति भावः। साधनकार्येति। येन क्रमेणार्थस्य ज्ञानगोचरता तेनैव क्रमेण शब्दाभियोगः, शब्दाभियोगक्रमेणैव शब्दनिमित्तककार्याणां प्रवृत्त्यौचित्यमिति भावः । अतएव—साधनयोगस्य प्राथम्यादेवेत्यर्थः ।

नैतत् सारं पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्युक्त्वो-क्तयुक्त्या अस्यैव युक्तत्वमुक्तं साधनं हि क्रियां निर्वर्त्तयती-त्यादिना भाष्ये। उपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधा-नादुक्तेषु कर्मणि लकारादिसिद्धिः। पश्चाच्छ्रोतुर्बोधाय द्योतको-पसर्गसम्बन्धः। एवञ्च अन्तरङ्गतरार्थकोपसर्गनिमित्तः सुट् संकृतीत्यवस्थायां द्वित्वादितः पूर्वं प्रवर्त्तते ततो द्वित्वादि। अतएव प्रणिदापयतीत्यादौ णत्वं 'यदागमा'इतिन्यायेन

---

उक्तयुक्त्या—क्रियायास्साध्यत्वेनेत्यादियुक्त्येत्यर्थः। निर्वर्त्तयति-उत्पादयतीत्यर्थः। धातुनैवार्थाभिधानादिति। शब्दार्थसम्बन्धस्या-नादित्वात् भूधातोर्ज्ञानार्थत्वस्यानुसम्बन्धात्प्रागपि सत्त्वेन सकर्म-कत्वात्कर्मणि लकारे बाधकाभावः; अनुः केवलं प्रयोक्तुर्ज्ञानार्थ-तात्पर्यं श्रोतारं ग्राहयति; अतएव श्रोतुर्ज्ञानार्थबोधोऽनुसम्बन्धो-त्तरमेव; नहि श्रोतृबोधः कर्मसंज्ञायां लकारे वा कारणं येन पूर्वं कर्मणि लकारो न स्यादिति सर्वमभिसन्धायाह—पश्चाच्छ्रोतुर्बो-धायेति। बुद्ध्यारूढानामेवार्थानां बोधनाय शब्दोच्चारणात् सर्वे-षामर्थानां तत्तदर्थबोधकशब्दप्रादुर्भावात्प्रागेवोपस्थितत्वात् साध-नबोधकशब्दनिमित्तककार्यापेक्षयोपसर्गार्थनिमित्तककार्यस्य शीघ्रो-पस्थितनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वमेवोत्पत्तिः, तेन संचस्कारे-त्यादौ लिडपेक्षया भूषणरूपोपसर्गार्थस्य प्रथमतरमेवोपस्थितत्वेन तन्निमित्तकसुट् लिड्निमित्तकद्वित्वतोऽन्तरङ्गतर इत्याह—एवञ्चे-त्यादिना। अतएवेति—साधनबोधकप्रत्ययनिमित्तककार्याणामुप-सर्गसंज्ञकशब्दमात्रनिमित्तककार्यापेक्षया पूर्वोत्पन्नत्वादेवेत्यर्थः। यदागमा इति। णुकः पूर्वमेव णत्वे परिभाषाया अनुपयोग एव स्यादिति भावः। वस्तुतस्तु पूर्वमुपसर्गयोगेऽपि परिभाषोप-

समाहितं भाष्ये । अतएव प्रत्येति प्रत्यय इत्यादिसिद्धिः, अन्यथान्तरङ्गत्वात् सवर्णदीर्घे रूपासिद्धिः । यदुपसर्गनिमित्तकं कार्यमुपसर्गार्थाश्रितं विशिष्टोपसर्गनिमित्तकत्वात् तदन्तरङ्गम्, यत्तु न तथा तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम् । अतएव 'न धातुरि'तिसूत्रे प्रेद्ध इत्यत्र गुणो बहिरङ्ग इति भाष्य उक्तम् । किञ्च पूर्वमुपसर्गयोगे धातूपसर्गयोः समास एक

---

योग इति तदवतरणे प्रतिपादितम् । अतएवेति—साधनबोधकप्रत्ययस्य पूर्वमुत्पत्त्या तन्निमित्तककार्यस्य प्रथमप्रवृत्तेरेवेत्यर्थः, अध्यैयातामित्यादौ पूर्वं प्राप्ताया अपि 'आटश्चे'तिवृद्धयाः पूर्वमातामादेशोत्तरप्रवर्तमानस्यापीयङ आङ्गत्वेन प्रवृत्तिरिवात्रापि गुणस्यैव पूर्वागतोपसर्गसापेक्षदीर्घापेक्षयाऽङ्गत्वेन पूर्वप्रवृत्तौ नेदं फलमिति केचित् । अन्यथेति—पूर्वमुपसर्गयोग इत्यर्थः । पूर्वोक्तमेव स्पष्टयति—यदुपसर्गनिमित्तकमित्यादिना । यत्तु न तथेति—नोपसर्गार्थनिमित्तकमित्यर्थः । भाष्य उक्तमिति । धात्वंशलोपनिमित्त आर्धधातुके सति गुणो नेत्यर्थे प्रेद्ध इत्यत्र नकारलोपे क्तप्रत्ययनिमित्तके सति 'आद्गुण'इतिगुणस्यापि निषेधापत्तिमाशंक्य 'न धातुलोप'इतिनिषेधापेक्षयोपसर्गसापेक्षगुणस्य बहिरङ्गत्वेनासिद्धत्वान्निषेध्याभावेन निषेधाप्रवृत्तिरिति तत्रोक्तं, पूर्वमुपसर्गयोगे तु क्तप्रत्ययसापेक्षनिषेधस्यैव बहिरङ्गत्वेन भाष्यविरोधः स्यादिति भावः । किञ्च पूर्वमुपसर्गयोग इति—साधनबोधकलकारात्पूर्वमुपसर्गसंज्ञकशब्दयोगे 'कुगतिप्रादय'इत्यनेन प्रभवतीत्यादौ प्रभु इत्यस्यैव समासे सोपसर्गधातोः सामासिकस्वरेणैकस्वर्यापत्तिरित्यर्थः । अन्वभवदित्यादावनुभू इत्यस्य समासे पाक्षिकस्यैकस्य प्रकृतिभावस्य 'न समास'इतिनिषेधापत्तिरपि बोध्या । पूर्वं

स्वर्याद्यापत्तिरिति 'उपपदमतिङ्'इतिसूत्रे भाष्ये स्पष्टम्, भावार्थकप्रत्ययस्यापि पूर्वमेवोत्पत्तेः। अतएव 'गोरध्ययन' इति निर्देशः सङ्गच्छते। इदं च सामान्यापेक्षं ज्ञापकं, भावतिङोऽपि पूर्वमुत्पत्तेः; अन्यथा तत्र समासापत्तिः। तिङि तु अतिङितिनिषेधान्न दोषो यदि भावतिङ्युपसर्गयोगोऽस्तीत्यलम्।

यत्तु—विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गं विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्तत्वात्; यथा रुदादिभ्यः सार्वधातुके इत्यत्र रुदादित्वं सार्वधातुकत्वञ्च, तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानञ्चावश्यकमिति यासुडन्तरङ्गः; एतेन यत् 'अनुदात्तङित'इतिसूत्रे कैयटेनोक्तं

---

लकारयोगे 'अतिङि'तिनिषेधात्तिङन्तस्यासामर्थ्याद्धात्वन्तस्य च समासाभाव इति बोध्यम्। भावार्थकप्रत्ययस्यापीति—पूर्वोत्पत्तिप्रयोजकयुक्तेस्तुल्यत्वादिति भावः। न्यायसिद्धेऽर्थे ज्ञापकमप्याह—अतएव गोरध्ययन इति। सामान्यापेक्षमिति। न तु ल्युट एव पूर्वोत्पत्ताविति भावः। तत्रेति—भावतिङीत्यर्थः। यदि भावेति। भावतिङ्युपसर्गयोगाभावे तु सामान्यापेक्षस्य नोपयोगः, परन्तु नैवं, विक्रियते इत्यादौ तत्राप्युपसर्गयोगोपलम्भात्।

विशेषापेक्षे विशेषधर्मस्याधिकस्येति—विशेषस्य व्याप्यस्य ज्ञानात् सामान्यस्य व्यापकस्य धूमज्ञानाद्वह्नेरिवानुमानं, सामान्यधर्मज्ञानाधीनज्ञानविषयस्य विशेषधर्मस्य ज्ञाने सामान्यज्ञानमावश्यकमितिरीत्या वा सामान्यज्ञानं, ततश्च विशेषस्य श्रुतत्वात् सामान्यस्यानुमितत्वादुपस्थितयोर्द्वयोर्निमित्तत्वमित्यभिमानादिति बोध्यम्। तदेवोपपादयति—यथेत्यादिना। एतेनेति—विशेषापेक्षस्य

लमात्रापेक्षयान्तरङ्गास्तिबादयो लकारविशेषापेक्षत्वाद्बहिरङ्गाः स्यादय इति तदप्यपास्तम्, विशेषापेक्षत्वेऽपि तस्य सामान्यधर्मनिमित्तकत्वाभावेन तत्त्वस्य दुरूपपादत्वात्, परनिमित्तकत्वेन स्यादीनां बहिरङ्गत्वाच्चेति—तन्न, विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्म्मनिमित्तकत्वानुपपादनात्, भाष्ये एवं विधान्तरङ्गबहिरङ्गभावस्य क्वाप्यनुल्लेखाच्च ।

---

विशेषधर्मरूपाधिकनिमित्तकत्वादेव बहिरङ्गत्वस्योपपादनेनेत्यर्थः । बुद्धिस्थहेतुमुपपादयति—विशेषेति । **सामान्यधर्मनिमित्तकत्वाभावेनेति** । न हि शास्त्रप्रमाणसिद्धस्य सार्वधातुकत्वस्य प्रत्ययत्वधातुत्वज्ञानमन्तराऽज्ञातत्वमिव प्रत्यक्षप्रमाणसिद्धस्य लट्त्वस्य लत्वज्ञानं विनाऽज्ञातत्वं, येन लट्त्वज्ञाने लत्वज्ञानमावश्यकं स्यादिति भावः । लृट्त्वज्ञानाय कथंचिल्लत्वज्ञानापेक्षायामपि स्यादिकार्ये घटे कुलालपितुरिवान्यथासिद्धत्वेन लत्वस्यानिमित्तत्वादधिकनिमित्तकत्वप्रयुक्तस्य बहिरङ्गत्वस्य दुरूपपादत्वात् तत्राभीष्टस्य स्यादीनां बहिरङ्गत्वस्य प्रकारान्तरेणाप्युपपत्तावसदर्थावलम्बनन्तव वृथेत्याह—**परनिमित्तकत्वेनेत्यादि** । इदानीं 'कृदादिभ्य' इतिविहितस्येटोऽपि बहिरङ्गत्वं न सम्भवतीत्याह—**तन्नेत्यादिना** । **निमित्तत्वे मानाभावेनेति** । प्रकृते शाब्दबोधीयविषयताया एव निमित्ततापदेन ग्रहणादनुमित्युपस्थितेऽपि धर्मे शब्दजन्योपस्थितीयविषयतासमनियतायास्तस्या दुरूपपादत्वमिति बोध्यम् । ननु अर्थापत्त्योपस्थितस्यापि क्वचिच्छाब्दबोधे भानदर्शनादत्रापि सार्वधातुकत्वज्ञानान्यथानुपपत्त्योपस्थितस्य धातुत्वादेर्भानसम्भवेन निमित्तत्वं स्यादित्यत आह—**एवंविधेत्यादि** । सार्वधातुकत्वे तस्यापेक्षितत्वे-

यत्तु मतुप्सूत्रे भाष्ये पञ्च गावो यस्य सन्ति स पञ्चगु-रित्यत्र मतुप्प्राप्तिमाशङ्क्य 'प्रत्येकमसामर्थ्यात् समुदायादप्रातिपदिकत्वात् समासात् समासेनोक्तत्वादि'ति सिद्धान्तिनोक्ते 'नैतत्सारम् उक्तेऽपि हि प्रत्ययार्थ उत्पद्यते द्विगोस्तद्धितो यथा पाञ्चनापिति'रिति पूर्वपक्ष्युक्तिर्भाष्ये। 'द्विगोर्लुगनपत्ये' इतिलुग्विधानात्तद्धितार्थद्विगोस्तद्धितो भवति पञ्चगुशब्दश्च द्विगुरिति तदाशयं कैयटः। ततो द्वैमातुरः पाञ्चनापितिः पञ्चसु कपालेषु संस्कृत इत्यादौ सावकाशद्विगोर्बहुव्रीहिणा

---

ऽपि इटि घटे कुलालपितुरिवान्यथासिद्धत्वेनानिमित्तत्वमित्यपि बोध्यम्।

भाष्ये दृश्यमानं विशेषापेक्षस्य बहिरङ्गत्वमेकदेशिनोक्तमिति बोधनाय भाष्यमुपपादयति—यत्त्वित्यादिना। प्रत्येकमसामर्थ्यादिति—नेत्यध्याहृत्य सर्वत्रान्वयः, प्रत्येकं पञ्चअस्शब्दात् गोअस्शब्दादित्यर्थः, असामर्थ्यात् पञ्चशब्दार्थस्य गोपदार्थे नान्वयान्मत्वर्थेऽन्वयासम्भवेनेति भावः। समुदायात्—पञ्चअस्गोअस्रूपात्। समासात्—पञ्चगुशब्दादित्यर्थः। यथा पाञ्चनापितिरिति। पञ्चानां नापितानामपत्यमित्यर्थे तद्धितार्थे विहितेन द्विगुसमासेनोक्तेऽप्यपत्यरूपार्थे इञ्प्रत्ययः। द्विगोर्लुगनपत्ये इति। द्विगुनिमित्ततद्धितस्यानपत्यार्थकस्य लुगनेन विधीयते, द्विगुसमासेनोक्ते तद्धितार्थे तद्धितानुत्पत्तौ हि सूत्रं व्यर्थं स्यादिति बोध्यम्। पञ्चगुशब्दश्च द्विगुरिति। तथा सत्यपि टच् न, समासान्तविधेरनित्यत्वात्। सावकाशद्विगोरिति। निरुक्तलक्ष्ये न बहुव्रीहेः प्रसक्तिः प्रथमान्तत्वाभावादिति

प्रकृते परत्वाद्बाध इत्याशयेन 'नैष द्विगुः कस्तर्हि बहुव्रीहि'रिति सिद्धान्तिनोक्ते तमवकाशमजानानो 'अपवादत्वाद् द्विगुः प्राप्नोती'ति पूर्वपक्षी। अन्यपदार्थे सुबन्तमात्रस्य विधीयमानबहुव्रीहेः संख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद्बाधकः प्राप्नोतीति कैयटः। ततः सिद्धान्त्येकदेश्याह—'अन्तरङ्गत्वाद् बहुव्रीहिः। कान्तरङ्गता ? अन्यपदार्थे बहुव्रीहिर्विशिष्टेऽन्यपदार्थे द्विगुस्तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियत' इति। अधिकास्त्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरङ्ग इति कैयटः।

नैषा सिद्धान्त्युक्तिः, एतावताप्यपवादत्वाहानेः, अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाधदर्शनात्। किञ्च उक्तरीत्या परत्वेनैव बाधसिद्धेः, किञ्च अत्राधिकापेक्षत्वेनैव बहिरङ्गत्वम् न केवलविशेषापेक्षत्वेनेति नैतद्भाष्यारूढं

---

भावः। तमवकाशमिति—पाञ्चनापितिरित्यादौ विद्यमानमित्यर्थः। सिद्धान्त्येकदेश्याहेति—साध्यांशस्य युक्तत्वात्सिद्धान्तित्वं, हेतोरयुक्तत्वादेकदेशित्वम्। अन्तरङ्गत्वमुपपादयति—अन्यपदार्थ इत्यादि। तस्मिंश्चास्य तद्धित इति—अस्य द्विगोरर्थद्वारा निमित्तभूते तस्मिन् मतुपि तद्धित इत्यर्थः। अन्यपदार्थे बहुव्रीहिरित्यन्तरङ्गत्वोपपादनपरभाष्येण विशेषापेक्षस्य बहिरङ्गत्वलाभेऽप्येकदेश्युक्तत्वेनानादर इति बोध्यम्।

अपवादत्वाहानेरिति—अन्तरङ्गादप्यपवादस्य बलवत्त्वादित्यर्थः। विशिष्टसवर्णेति। विशिष्टत्वमेवाह सवर्णेति। उक्तरीत्ये-

विशेषापेक्षस्य बहिरङ्गत्वम् । अतएव सुबन्तसामान्यापेक्षो बहुव्रीहिस्तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये । न चार्थकृतबहिरङ्गत्वस्य अनाश्रयणादिदमयुक्तम्, एकदेश्युक्तित्वेनादोषात् । अतएवास्तिग्रहणं नोपाध्यर्थं किन्तु अस्तिशब्दान्मतुबर्थमिति त्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति प्रतिपाद्य सिद्धान्तिना 'मत्वर्थे द्विगोः प्रतिषेधो वक्तव्य'इतिवचनेनैतत्सिद्धमित्युक्तम् । अतएव 'तदोः सः सौ'इतिसूत्रेऽनन्त्ययोरिति चरितार्थम्, अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरङ्गत्वादन्त्यात्वेऽनन्त्यस्यैव सत्त्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । 'पादः पत्'इति सूत्रे भाष्यकैयटयोरप्येतदन्तरङ्गत्वाभाव एव सूचित इति सुधियो विभावयन्तु ।

नन्वेवमसुश्रुवदित्यत्र लघूपधगुणादुवङोऽल्पनिमित्तत्वाभावादुवङ् न स्यादिति चेत्—न, तत्रान्तःकार्यत्वरूपान्तरङ्ग-

---

ति—अवकाशत्वरीत्येत्यर्थः । नोपाध्यर्थमिति—न मतुपो निमित्तत्वार्थमित्यर्थः; बहुव्रीहिवन्मतुपोऽपि शब्दशक्तिस्वाभाव्यादस्त्यर्थविषयता स्यादित्याशयः । सिद्धान्तिना—सिद्धान्त्येकदेशिनेत्यर्थः । परमसिद्धान्ती तु परत्वादेव बहुव्रीहिमाह ।

नन्वेवमसुस्रुवदित्यत्र लघूपधगुणादुवङोऽल्पेति । स्रुधातोर्लुङि चङि द्वित्वे असुस्रुअदितिस्थिते सार्वधातुकनिमित्तकलघूपधगुणस्य चङ्निमित्तकस्योवङश्च प्राप्तौ अन्तरङ्गत्वादुवङ् भवति, तन्न सिद्ध्येत्, उभयोः परनिमित्तकत्वाविशेषादित्यर्थः । न च गुणशास्त्रघटकाङ्गपदप्रयोज्यविषयताश्रयः असुस्रुअ इति तद्घटका-

त्वसत्त्वात् । अन्तःकार्यत्वं च पूर्वोपस्थितनिमित्तकत्वम्, अङ्गशब्दस्य निमित्तपरत्वात् । इदमन्तरङ्गत्वं लोकन्यायसिद्धमिति । मनुष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदां ततः सम्बन्धिनाम् ; अर्थानामपि जातिव्यक्तिलिङ्गसंख्याकारकाणां बोधक्रमः शास्त्रकृत्कल्पितः तत्क्रमेणैव च तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव तत् कार्याणीति पट्व्येत्यादावन्तरङ्गत्वात् पूर्वं पूर्वयणादेशः परयणादेशस्य बहिरङ्गतयाऽसिद्धत्वादित्यादिना 'अचः परस्मिन्नि'तिसूत्रे भाष्ये स्पष्टम् । तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव,

---

कार्यनिष्ठविषयता प्रयोजकसप्तम्यन्ताघटितपदघटितत्वरूपान्तर्भूतनिमित्तकत्वरूपान्तरङ्गत्वस्य उवङि सत्त्वाच्छङ्कोदयाभाव इति वाच्यम्, समकालप्राप्तिकबहिरङ्गासिद्धत्वस्थले 'ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण'इतिभाष्यात् सप्तम्यन्तपदेनोपात्तस्यैवाङ्गपदेन ग्रहणस्योक्तत्वात् । पूर्वोपस्थितेति—पूर्वोच्चरितेत्यर्थः । नन्वेवं खट्वा आ ऊढेत्यत्राङः पूर्वोपस्थितिमादाय गुणस्योक्तान्तरङ्गत्वमनुपपन्नं तदपेक्षया खट्वाकारस्यैव प्रथमोच्चरितत्वादिति चेत्—न, सति सम्भवेऽर्थकृतस्यैव पूर्वोपस्थितत्वस्य ग्रहणं, तदसम्भवे उच्चारणकृतस्येति व्यवस्थयाऽदोषात् चकारोऽनर्थकत्वात् । प्रथमं शरीरकार्याणीति । सर्वापेक्षया शरीरस्य प्रथममुपस्थितत्वादिति भावः । जातिव्यक्तीत्यादि । शब्दश्रवणानन्तरं प्रथमं जातिबुद्ध्यारूढा भवति, जातिपदं धर्ममात्रपरं, ततस्तत्पुरस्कारेण व्यक्तिः, ततो जातिविशिष्टव्यक्तौ विशेषप्रणिधाने लिङ्गं, ततस्सजातीयपदार्थान्तरसापेक्षापेक्षाबुद्ध्या संख्या, ततो विजातीयक्रियापेक्षं कारकं बुद्ध्यारूढं भवति, तेनैव क्रमेण तत्तदर्थबोधकशब्दप्रादु-

यथा पट्व्येत्यत्र पदस्य विभज्यान्वाख्याने, न तु जातस्य बहिरङ्गस्यैतादृशेऽन्तरङ्गेऽसिद्धतानियामकम्, प्रागुक्तलोकन्यायेन तथैव लाभात्, इति 'वाह ऊठ्'सूत्रे कैयटे स्पष्टम् । अतएव वाय्वोरित्यादौ वलि लोपो यणः स्थानिवत्त्वेन वारितः 'अचः परस्मिन्नि'त्यत्र भाष्यकृता । क्रमेणान्वाख्याने तु उक्तोदाहरणे पूर्वप्रवृत्तिकत्वमप्यन्तरङ्गत्वं, बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम् ।

यत्तु—एवं रीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति—तच्चिन्त्यम्; स्रजिष्ठ इत्यादौ विन्मतोर्लुकि टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणेन वारणप्रयासस्य 'प्रकृत्यैकाच'इतिसूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य नैष्फल्यापत्तेः, त्वदुक्तरीत्या विमन्तोर्लुको बहिरङ्गासिद्धत्वेन अनायासतस्तद्वारणात्,

भाव इत्यर्थः । तदपीति—अन्तःकार्यत्वरूपान्तरङ्गत्वमपीत्यर्थः । अतएवेति—जातबहिरङ्गासिद्धत्वानियामकत्वादेवेत्यर्थः । यणः स्थानिवत्त्वेनेति । जातासिद्धत्वनियामकत्वे तु विलम्बोपस्थितौकारनिमित्तकस्य यणोऽनयैव लोकसिद्ध्याऽसिद्धत्वेन यलोपवारणसम्भवात्स्थानिवद्भावपर्यन्तानुधावनस्य वैयर्थ्यापत्तेः । उक्तोदाहरण इति—मृद्व्या पट्व्येत्यादावित्यर्थः । पूर्वप्रवृत्तिकत्वमिति । परिभाषाया नोपयोग इति भावः ।

स्रजिष्ठ इत्यादाविति— विनो लुकि प्राप्तस्य स्रज्‌घटकाजुद्देश्यकस्य लोपस्येत्यर्थः । त्वदुक्तरीत्येति—पूर्वस्थानिकत्वमन्तरङ्गत्वमितिस्वीकारेणेत्यर्थः । वस्तुतो नेदं भाष्यं सिद्धान्तभूतं, तक-

भाष्ये ईदृशरीत्या बहिरङ्गासिद्धत्वस्य क्वाप्यनाश्रयणाच्च, परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्च।

इयं चोत्तरपदाधिकारस्थबहिरङ्गस्य नासिद्धत्वबोधिकेति 'इच एकाचोऽमि'तिसूत्रे भाष्ये पूर्वपक्ष्युक्तिरिति सा नादर्त्तव्या। परन्तप इत्यादावनुस्वारे नासिद्धत्वं मुमः, त्रिपाद्यां तदप्रवृत्तेः। नव्यमतेऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तित्वमावश्यकमित्याहुः। आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्य नानेनासिद्धत्वम्, असि-

---

-न्यायेन बाधके प्रवृत्ते उत्सर्गस्याप्रवृत्तेष्टिलोपाप्रवृत्तेः।

नादर्त्तव्येति। ननु तर्हि तत्फलस्यानुस्वारे कर्त्तव्ये मुमोऽसिद्धत्वाभावस्य कथं सिद्धिरत आह—परन्तप इत्यादि। इदमुपलक्षणम् अरुन्तुद इत्यत्र संयोगान्तलोपेऽसिद्धत्वाभावस्य। नव्यमतेऽपीति—दीक्षितमतेऽपीत्यर्थः। फलस्यान्यथासिद्धत्या तद्भाष्यस्यैकदेश्युक्तत्वं स्पष्टमेवेति बोध्यम्।

आभीये अन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्येति। इयं पंक्तिर्न समीचीनतया योजयितुं शक्यते। तथाहि—पपुष इत्यादौ वसोः संप्रसारणे पपा उस् अस् इति स्थिते 'आतो लोप' इत्येतद्दृष्ट्या संप्रसारणस्य बहिरङ्गासिद्धत्वादाभीयासिद्धत्वाच्चालोपो न स्यादित्याशंक्य व्याश्रयत्वेनाभीयासिद्धत्वं परिहृत्य 'बहिरङ्गमन्तरङ्ग'मिति च प्रतिद्वन्द्वभाविनावेतावर्थौ, कथं सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गे अन्तरङ्गम्? न चात्रान्तरङ्गबहिरङ्गयोर्युगपत्समवस्थानमस्ति, नानभिनिर्वृत्ते बहिरङ्गे अन्तरङ्गं प्राप्नोति, तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्ये'तिग्रन्थेन बहिरङ्गासिद्धत्वमपि भाष्ये परिहृतम्। यथा स्योन इत्यादौ यण्गुणयोर्युगपत्प्रासिरस्ति

ङ्गत्वात्, इति 'असिद्धवत्'सूत्रे भाष्ये स्पष्टम् । एवं सिचिवृद्धेः 'येन नाप्राप्त'न्यायेनान्तरङ्गबाधकत्वमूलकं न सिच्यन्तरङ्गमस्तीति 'इको गुण'इतिसूत्रे भाष्ये स्पष्टम् ॥ ५० ॥

न तथा पपुप इत्यादौ, संप्रसारणप्रवृत्तिकाले आलोपादीनां निमित्ताभावादप्रसङ्गः, आलोपप्रवृत्तिकाले च निर्वृत्तं संप्रसारणं ततश्च निमित्तमेवालोपादीनां संप्रसारणमिति नास्ति परिभाषोपस्थानमित्यर्थः कैयटेनोक्तः । तेनैव च पचावेदमित्यत्राप्येवं सति जातासिद्धत्वं न स्यादित्याशंक्य भाष्यमन्यथा व्याख्यातम् । तथाहि—इयं परिभाषा 'वाहऊठ्'इत्येतज्ज्ञापितत्वादाभीया आभीयेष्वालोपादिषु कर्त्तव्येषु असिद्धेति न प्रवर्तते, असिद्धत्वमभावप्रतियोगित्वम्, नैवास्ति परिभाषेत्यर्थः, तदप्रवृत्तौ चाऽऽलोपादीनि भवन्तीति भाष्यस्थपदान्यस्मिन्नर्थे एवं योजितानि—सत्यन्तरङ्ग इति विध्यपेक्षित इत्यर्थः, तत्र निमित्तमेवेति परिभाषाया असिद्धत्वादप्रवृत्ताविति भावः, वसुसम्प्रसारणञ्चैकं परिभाषाया आलोपादीनाञ्च आश्रय इति समानाश्रयत्वाद्भवत्येवासिद्धत्वम्परिभाषया इति । स्वस्या असिद्धत्वेऽप्यहृष्टपिशाचन्यायेनासिद्धयाप्यनयाऽन्तरङ्गं प्रति बहिरङ्गासिद्धत्वप्रतिपादने बाधकाभावः, समानाश्रयत्वमप्यन्यूनाधिकनिमित्तकत्वमेवाऽन्यथाऽतिप्रसङ्गात् चिन्त्यं कैयटोक्तम्, किन्तु अन्तरङ्गस्याभीयस्याभीयां परिभाषाम्प्रत्यसिद्धत्वात्परिभाषया प्रतिपाद्याभाव इव तस्यासिद्धत्वप्रतिपादनासम्भवः । अन्तरङ्गशास्त्रत्वस्य लिङ्गत्वेन परिभाषाया अन्तरङ्गशास्त्रस्थत्वेन समानाश्रयत्वमिति परे । परन्तु मूले बहिरङ्गे समानाश्रयत्वमाभीयत्वमिति विशेषणमनुपयुक्तमेवेति विभावयन्तु ।

येन नाप्राप्तन्यायेनान्तरङ्गबाधकत्वमूलकमिति । एतेन न

सिच्यन्तरङ्गमस्तीति नापूर्वमिति बोध्यम् ।

अथ जातबहिरङ्गासिद्धत्वस्य किम्फलमिति चेत्, अत्रोच्यते—पचावेदमित्यत्र लोडुत्तमद्विवचनान्तस्येदमूशब्देन सहैकादेशे पूर्वान्तवद्भावेन लोडुत्तमसम्बन्धित्वस्य, स्वत एत्वस्य च सत्त्वेन 'एत् ऐ'रितिप्राप्तन्तद्रूपेऽन्तरङ्गे कर्त्तव्ये पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्य गुणस्यासिद्धत्वादेतऐरित्यस्याप्रवृत्तिरिति फलम् । यदि च इतएैरितिन्यासेनापि पचावेदमित्यत्र वारणसम्भवः, भवानीत्यादावायादेशः स्यादिति तु न भ्रमितव्यम् , तक्रन्यायेन न्यादेशेन इताएरित्यस्य बाधसम्भवादित्युच्यते—तदा पचावेदमित्यत्र 'आमेत'इत्यामादेशवारणमेव फलमिति कश्चित्, तदपि न युक्तम्, प्रतिपदोक्तस्यैकारस्य ग्रहणेनादोषात । एधस्व पचस्वेति सततं यत्राभिधीयत इत्यर्थे 'आख्यातमाख्यातेने'तिसमासे 'बहुवचने झल्येदि'त्येत्वे एधस्वपचस्वेभ्य इत्यत्र प्रतिपदोक्तस्यैकारस्यामादेशापत्तेस्तादवस्थ्यात् तद्वारणायैव परिभाषा मन्तव्येत्यपि न, 'टित आत्मनेपदानामि'त्यत आत्मनेपदानुवृत्त्या प्रतिपदोक्तपरिभाषाङ्गाश्रित्यात्मनेपदमुच्चार्य्य विहितस्य लोट एकारस्यामादेश इत्यर्थकरणेन पचावेदमित्यादावामादेशवारणसिद्धेरैविधायके आत्मनेपदसम्बन्धेनापि पचावेदमित्यत्रायादेशवारणं सम्यगेव । न च 'सवाभ्यां वामा'वित्यस्यात्मनेपदमुच्चार्य्य विहितकारस्येत्यर्थो न कर्त्तव्यः, एधस्वेत्यत्रादेशानापत्तेः, एवञ्च एधस्वेदमित्यत्रामादेशाभावाय जातासिद्धत्वं वक्तव्यम् । न चैधस्वेत्यत्रापि मेघदकैकारस्य पर्जन्यन्यायेन 'टित आत्मन'इत्यनेनैत्वे आत्मनेपदमुच्चार्य्य विहितैकारस्य सत्त्वेन प्रतिपदोक्तपरिभाषाप्रवृत्तौ बाधकाभावेनैधस्वेदमित्यादौ न दोष इति वाच्यम्, तत्रादेशानां टेरेत्वेनैत्वस्य एकारोच्चारणसामर्थ्येन ज्ञापनान्मेघदकैकारस्यैत्वाप्रवृत्तेः, तदा समाहृत्यान्तस्याभ्यामित्यनेन विहितानन्यवस्य एकारस्यामादेश इत्यर्थकरणेनादोषात् । ननु आम्पुरुदित्यत्र ग्रहणार्थक-

सूदधातोर्णिजन्तात् लुङि चङि द्वित्वे उपधाह्रस्वे सन्वद्भावेऽभ्यासस्य दीर्घे णिचि प्राप्तलघूपधगुणे बहिरङ्गस्योपधाह्रस्वस्यासिद्धत्वं मन्तव्यम्; 'नाजानन्तर्य्य'इत्यस्य तु न विषयः, गुणस्याजानन्तर्य्यनिमित्तकत्वाभावात्, एकवर्णव्यवधाने येन नाव्यवधानन्यायेन गुणप्राप्तावपि नाजानन्तर्य्यप्रवृत्तौ मानाभावात्। क्नोः कित्त्वेनार्द्धधातुकविशिष्टस्यैवेको गुणो विधीयते। वैशिष्ट्यञ्च स्वपूर्वत्व-स्वोपदेशकालिकलघुत्ववत्त्वोभयसम्बन्धेन। एवञ्चेको णिजुपदेशकालिकलघुत्वाभावाद् गुणाप्रवृत्तेर्नेदं फलमिति तु न युक्तम्, तोतोर्त्तीत्यादौ वलोपोत्तरजातलघुत्वकेऽपि गुणदर्शनेनोक्तार्थस्य कल्पयितुमशक्यत्वात्। यदि च यङ्लुकश्छान्दसत्वेन छन्दसि दृष्टानुविधानस्यैव सत्त्वेन न तत् प्रकृतार्थप्रतिबन्धकम्, तुर्वीधातोर्वनिपि तोर्वेत्यत्र गुणानुपपत्तिरपि न प्रकृतार्थप्रतिबन्धिका, 'न धातु'तिनिषेधेन तत्र गुणस्यानिष्टत्वात् तत्प्रत्याख्यानेऽपि फलैक्याय तदनभिधानस्यैवौचित्याच्चेत्युच्यते— तदा नेदं फलम्। यत्तु केनचित्—अन्ये तु पुगन्तसाहचर्यात्सार्वधातुकसाहचर्य्याच्चार्द्धधातुकपरेऽपि स्वोत्तरप्रत्ययानिमित्तकस्यैवेको गुणविधानान्न दोष इति प्राहुरित्युक्तम्—तन्न युक्तम्; साहश्ये प्रतियोग्यनुयोगिवृत्त्येकधर्मस्यापेक्षिततया स्वत्वस्याननुगतत्वेन तद्घटितैकधर्मस्योभयवृत्तित्वासम्भवात्, पुगन्तप्रतियोगिकस्य सार्वधातुकप्रतियोगिकस्य वा सादृश्यस्यैकि निरुक्तधर्मेण प्रतिपादयितुमशक्यत्वाच्च; ह्रीधातोः क्विबन्तादाचष्टे णिचि पुकि ततो हेतुमण्णिचि लुङि चङि णिचो लोपेऽजिह्रिपदित्यत्र स्वोत्तरप्रत्ययनिमित्तकस्यापीकः सत्त्वाच्च, वेञ्धातोः क्विपि सम्प्रसारणे तुकि निष्पन्नादुत्प्रातिपदिकादाचारक्विपि ओततीत्यादौ स्वोत्तरप्रत्ययनिमित्तस्यैवेकः सत्त्वाच्च। गुरुसंज्ञायां संयोगपदेन प्रत्ययावयवानिमित्तकसंयोगस्यैव क्नोः कित्त्वसामर्थ्यात् लाघवाद् ग्रहणे तु फलं सम्यगेव, सार्वधातुकसाहचर्यात्। लघुत्वानिमित्त-

स्यैवार्द्धधातुकस्य ग्रहणे तु न फलं, णिचो लघुत्वनिमित्तत्वात् । क्नोः कित्त्वेन भेत्तेत्यादिलक्ष्यानुरोधेन च लघूपधविहितप्रत्ययाव्यवहितपूर्वस्येको गुण इत्यर्थेनासूपुददित्यादौ णिचो लघूपधविहितत्वाभावेन गुणाप्रवृत्त्या नेदं फलं सम्यगित्यपि कश्चित् । एतन्मते असुस्रुवत् रियतीत्यादौ गुणस्याप्राप्त्या तदपेक्षयान्तरङ्गत्वादुवङादिप्रतिपादकभाष्यविरोधो न, उपायस्योपायान्तरादूषकत्वात् । नाप्यदिद्रपदित्यादौ द्राधातोर्णिजन्ताल्लुङि चङि पुकि द्वित्वे उपधाह्रस्वत्वे अदिद्रपदितिनिष्पन्ने णिङ्निमित्तकोपधावृद्धौ कर्त्तव्यायां बहिरङ्गोपधाह्रस्वस्यासिद्धत्वसम्पादनेन सफला 'असिद्धं बहिरङ्गमि'तिपरिभाषा,ञित्साहचर्येण अद्घटितप्रकृतिकस्यैव णितो ग्रहणेनादोषात् । रजयति मृगानित्यादौ 'संज्ञापूर्वको विधिरनित्य' इत्यनेन वृद्धेरनित्यत्वान्न दोषः । शास्धातोर्णिजन्ताल्लुङि अशशासदित्यत्र 'णौ चङी'तिह्रस्वे ऽपि वृद्ध्या लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाप्रवृत्त्या च रूपसिद्धौ शास्धातौ 'नाग्लोपी'तिनिषेधसामर्थ्येन ह्रस्वोत्तरं वृद्ध्यप्रवृत्तिज्ञापनान्नेदं फलमिति केचित्— तन्न, तेन शास्त्रबाधापेक्षया परिभाषाकल्पन एव लाघवात् । ग्रह्धातोर्यङ्लुगन्तात्तसि सम्प्रसारणे जागृढ इत्यादौ ऋदुपधत्वसम्पादकस्य तन्निमित्तकसम्प्रसारणस्य रुगादौ कर्त्तव्ये असिद्धत्वाय न परिभाषावश्यकता, यङ्लुकश्छान्दसत्वात्, अभ्यास एव ऋदुपधत्वस्यान्वयाच्च । नाप्यतिखट्वा वटकखट्वशब्दाट्टापोऽभावो ह्रस्वासिद्धत्वेन फलम्, लक्ष्ये लक्षणन्यायेन तत्सिद्धेः । अनिनिष्टिपदित्यत्रापीकारस्यासिद्धत्वेन गुणाभावोऽपि न फलम्, औपदेशिकलघूपधस्यैव गुणविधानस्योक्तत्वादिकारोच्चारणसामर्थ्याच्च । न च जगदम्बेत्यादौ टापोऽभावाय बहिरङ्गह्रस्वासिद्धत्वार्थं सा, तदन्यन्ताट्टापो वारणस्याशक्यं, प्रथमप्रवृत्तगुणेदुत्वेनाश्रीयमाणमनुदात्तविशिष्टं जगदिति तद्घटितस्यैव सत्त्वेन स्वापेक्षकत्वस्वघटकत्वापेक्षकविकारातिरिक्तत्वोभयसम्बन्धेन स्त्रीप्रत्यय-

प्रवृत्त्युद्देश्यत्वेनाश्रीयमाणसमुदायविशिष्टाघटितत्वरूपतल्लक्ष्यत्वविरहादिति वाच्यम्, पुनर्ह्रस्वेनेष्टसिद्धेः। न च लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वासम्भवः, समुदायोद्देश्यकटापा सहैकादेशस्य ह्रस्वशास्त्रीयप्रथमप्रवृत्त्युद्देश्यसमुदायविशिष्टत्वेन तद्घटितस्य जगदम्बेत्यस्य तल्लक्ष्यत्वाभावात् पुनष्टाप् तु न, तल्लक्ष्यत्वात्। तथाहि—स्वीयप्रथमप्रवृत्तिर्जगदम्बशब्दाट्टापः प्रवृत्तिस्तदुद्देश्यत्वेनाश्रीयमाणो जगदम्बसमुदायस्तत्त्वं लिङ्गविशिष्टपरिभाषया जगदम्बाशब्देऽपि तद्विशिष्टत्वमन्तिमह्रस्वस्य नास्ति, तस्य तद्घटकमात्रोद्देश्यकत्वेन स्वघटकमात्रोद्देश्यकविकारातिरिक्तत्वाभावात्, अपि तूदासीनस्य कस्यचित् तद्घटितत्वस्य जगदम्बशब्देऽसत्त्वात्। न च ह्रस्वे कर्त्तव्ये जगदम्बाशब्दे यत्तल्लक्ष्यत्वन्तदेकदेशविकृतन्यायेन जगदम्बशब्दे आनीय पुनर्लिङ्गविशिष्टपरिभाषया जगदम्बाशब्दे आनीयत इति तल्लक्ष्यत्वान्नात्र ह्रस्वत्वेनेष्टसिद्धिरिति वाच्यम्, ह्रस्वस्य विभक्तिनिमित्तकत्वेन विभक्तौ लिङ्गविशिष्टाग्रहणमितिपरिभाषया लिङ्गविशिष्टन्यायेन जगदम्बाशब्दे तल्लक्ष्यत्वाभावात्। न च यासाशब्दे पुनरत्ववारणाय तल्लक्ष्यत्वं लिङ्गविशिष्टपरिभाषया विभक्तिनिमित्तककार्येऽप्यानेतव्यमेवेति वाच्यम्, 'न यासयो'रितिनिर्देशेन पुनरत्वाप्रवृत्तेरेव कल्पनात्, तत्रैव 'विभक्तौ लिङ्गे'तिपरिभाषाया अप्रवृत्तिकल्पनाच्च। हे जगदम्बेत्यादौ सम्बुद्ध्यव्यवहितपूर्वत्वं निमित्तीकृत्य जायमानो ह्रस्वस्तन्निमित्तविनाशकटापं प्रत्यनिमित्तं स्यादिति रीत्यापि टापोऽभावः परिभाषां विनापि सिद्धः, अतएव वृद्धावित्यादावपि न टाप् इति न फलं जातासिद्धत्वस्य। यासेत्यादौ तु 'न यासयो'रितिनिर्देशाट्टाप्। हे लक्ष्मीत्याद्यनुरोधेन सम्बुद्धौ सन्निपातपरिभाषा न प्रवर्त्तत इति न भ्रमितव्यं, नदीह्रस्वत्वस्यैव विशिष्य भाष्योक्तेः। यत्तु—अम्बात्रेत्यादौ ह्रस्वोत्तरैकादेशे पूर्वान्तवद्भावेनैकादेशविशिष्टे अम्बार्थकत्वेऽपि न ह्रस्वः, पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहि-

रङ्गस्यैकादेशस्यासिद्धत्वादित्येव फलम्;—तन्न उत्तराकारपूर्वभूतसम्बुद्ध्यपेक्षया उत्तराकारपर्यन्तैकादेशविशिष्टस्य पूर्वत्वबुद्ध्यभावेन ह्रस्वत्वाप्राप्तेः। स्वयं भवतीति स्वयम्भूस्तस्मै स्वयम्भुवे इत्यत्र प्रत्ययलक्षणेन क्विप्परत्वमादाय प्राप्ते ऊठि विभक्तिनिमित्तकत्वेन बहिरङ्गस्योवङोऽसिद्धत्वं परिभाषाफलमित्यपि न, छकारसाहचर्येण विभक्त्यनिमित्तकस्यैव वस्य ग्रहणेनादोषात्। न चोक्तस्वयम्भूशब्दादाचारक्विवन्तात् घञर्थे कप्रत्यये स्वयम्भुव इत्यादौ वकारस्योठोऽभावायासिद्धत्वं वकारस्य विभक्त्यनिमित्तकत्वेनोक्तसाहचर्येणाशक्यवारणत्वादिति वाच्यं, साहचर्येण यगितरप्रत्ययानिमित्तकस्यैव वस्य ग्रहणेनादोषात्; यगितरत्वनिवेशेन ब्राह्मणकण्डूतिरितिभाष्यप्रयोगे कण्डूयतेर्यगन्तात् क्तिचि अल्लोपयलोपयोः स्थानिवद्भावेन यगकारनिमित्तकोवङवयववकारस्योठ्यप्यदोषात्। न च इष्धातोः कर्तृक्विबन्तप्रकृतिकाचारक्विबन्तात् कर्तृक्विबन्तेषशब्दस्याशब्देन समासाद्वा आचारक्विबन्ताल्लटि तिपि शपि पररूपे छत्वे इच्छतीत्यादौ छकारस्य क्विपमादाय शत्वप्रवृत्तेस्तादृशसाहचर्यस्य वक्तुमशक्यत्वात् पूर्वोक्तं फलं युक्तमेवेति वाच्यम्, इष्टसिद्धेः। तत्रापि छत्वस्यासिद्धत्वेन शत्वाप्रवृत्त्यर्थं ह्यन्तरङ्गपरिभाषा मन्तव्येति बोध्यम्। कर्तृक्विबन्तप्रकृतिकाचारक्विबन्तभूधातोर्यति भव्यमित्यादावुठोऽभावाय सा। दिव्धातोः कप्रत्यये दिवः, मन्धातोः क्विपि नलोपे तुकि मत्, तयोस्समासे ततो णिचि टिलोपे णिलोपे दिवमितिमान्तस्य मशब्देन समासे णिचि टिलोपे देवयतीत्यादावुठोऽभावाय सा। नौशब्दस्याशब्देन समासे नावशब्दादाचारक्विबन्ताण्णावल्लोपे नावयतीत्यत्रोठोऽभावायापि सा। अल्लोपस्य स्थानिवत्त्वन्तु न, क्वौ विधिं प्रति निषेधात्। दीव्यो घञर्थे के दिवशब्दादाचारक्विबन्ताण्णावल्लोपे दिवयतीत्यादौ क्विपो वकारमादाय यलोपस्याभावायापि सा बोध्या।

समकालप्राप्तबहिरङ्गासिद्धत्वफलमथ विचार्यते। रियति पियति

असुस्रवत अयजे इन्द्रं मृद्व्या पट्व्या एषु प्रयोगेषु लघूपध-गुणापेक्षया इयङुवङोः, अयज-इ-इन्द्रमित्यवस्थायां दीर्घापेक्षया गुणस्य, मृदु-ई-आ पटु-ई-आइत्यवस्थायां परयणपेक्षया पूर्वयणश्च शीघ्रोपस्थितिनिमित्तकत्वरूपान्तरङ्गत्वेन पूर्वं प्रवृत्तिः समकालप्राप्तिकबहिरङ्गासिद्धत्वफलम्, अन्यथा आद्येषु गुणस्य चतुर्थे दीर्घस्य परत्वादापत्तिः,अन्त्ययोश्शब्दपरविप्रतिषेधेन परयणश्च प्रवृत्तिः स्यात् पूर्वस्य यण् न स्यादिति केचित्—तन्न, 'येन नाव्यवधान'न्यायेन पुगन्तसाहचर्येण चार्धमात्रिकवर्णव्यवधानस्यैव सहनेन मात्रिक-व्यवधाने प्रवृत्तौ मानाभावेन गुणस्याप्राप्तेः। न च भीधातोर्घञर्थे कप्रत्यये तदन्ताचारक्विबन्तात्कर्त्तरि क्विपि अलोपयलोपयोराचार-क्विबन्ताल्लटि भयति वनिपि भेवेत्यादावल्लोपस्य स्थानिवद्भावात् 'सार्वधातुकार्धधातुकयो'रिति गुणो न स्यात्, मम तु अन्तरङ्गत्वादि-यङ्रियतीत्यादिभाष्यप्रामाण्यान्मात्रिकवर्णव्यवधानेऽपि लघूपध-गुणप्रवृत्त्या लघूपधत्वादेव गुणसिद्धिरित्यर्धमात्रिकव्यवधानमेव सह्यत इति न युक्तमिति वाच्यम्, अर्धमात्राधिककालिकं यच्छ्रू-यमाणं तदतिरिक्तव्यवधानस्यैव सहनेनादोषात्। यत्तु—रियती-त्यादौ,सत्यपि गुणे जातस्य बहिरङ्गस्यासिद्धत्वादियङादिः स्यादि-ति—तन्न, 'नाजानन्तर्य'इतिनिषेधात्; अयजे इन्द्रमित्यत्र पदसं-स्कारपक्षे गुणप्रवृत्तिसमये दीर्घस्याप्राप्त्या गुणप्रवृत्तेरव्याहतत्वात् नित्यत्वाच्च। अपवादत्वाद्दीर्घस्तु न वाच्यः; यणगुणशास्त्रीयाच्पदप्र-योज्यविषयतायास्सवर्णाच्त्वावच्छिन्नविषयतां प्रत्येव व्यापकत्वात् तत्र सवर्णाच्त्वावच्छिन्नविषयताश्रयाभिन्नवृत्तित्वं स्यादिति पूर्वे-कारस्य तादृशविषयताश्रयभिन्नत्वेनाच्पदेन तस्य ग्रहणे बाधकाभा-वात्,मृड्व्येत्यादावपि क्रमिकान्वाख्यानपक्षे पूर्वयणसमये तृतीया-या,अभावेन परयणोऽप्राप्तेः शब्दपरविप्रतिषेधेन जातेऽपि परयणा-देशे तस्य स्थानिवद्भावेन पूर्वयणः प्रवृत्तेश्च। न च इउआ एषां समासे परयणादेशे पदान्तविधित्वेन स्थानिवद्भावाभावेन पूर्वयणादेशो न

नन्वेवमक्षद्यूरित्यादौ बहिरङ्गस्योठोऽसिद्धत्वादन्तरङ्गो यण् न स्यादत आह—

## नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५१ ॥

---

स्यादित्यन्तरङ्गत्वात्पूर्वं पूर्वयणादेश इतिफलमिति वाच्यं, जातबहिरङ्गासिद्धत्वेन परयणादेशस्यासिद्धत्वेन पूर्वयणादेशप्राप्तेः। 'नाजानन्तर्य'इतिनिषेधादसिद्धत्वाभावे तु फलं युक्तमेव, अन्तरङ्गत्वात्पूर्वयण एव पूर्वं प्रवृत्तेर्ध्वौ इति सिद्धेः। यल्लोपस्तु न, परयणो बहिरङ्गत्वेनासिद्धत्वात् स्थानिवद्भावाच्च। यलोपे निषेधस्तु न, लोपाजादेशस्यैव निषेधविषयत्वात्। रुद्यादित्यादौ प्रकृतिप्रत्ययापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुडिति तु न फलं, परस्मैपदेष्विति विषयसप्तम्या लावस्थायामेव यासुटः प्रवृत्तेस्तस्य नित्यत्वाच्च। अभवकादित्यत्र नित्यमकचं बाधित्वाऽन्तरङ्गत्वादितश्चेतीकारलोपः पूर्वमकचि तु अभवतकीति स्यादिति बोध्यम्। कश्च अश्च ईशश्च केशा इत्यत्र नित्यमपि गुणं बाधित्वाऽन्तरङ्गत्वाद्दीर्घ इत्यपि फलम्। अपवादत्वाद्दीर्घ इति तु न युक्तम्, अकारद्वयनिमित्तकगुणं प्रत्यपवादत्वेऽप्यकारेकारनिमित्तकगुणं प्रति तत्त्वाभावात्। इच्छतीत्यादौ छत्वे कृतेऽन्तरङ्गत्वात्पूर्वं तुकि लघूपधत्वाभावान्न गुण इत्यपि फलं सम्यगेव। अविभयमित्यत्र भी-अभ इति स्थिते परमपि गुणं बाधित्वा श्लुनिमित्तके द्वित्वेऽन्तरङ्गत्वात्पूर्वं कृतेऽभ्यासे इकारश्रवणम्। जन् अतीति स्थिते परमप्युपधालोपं बाधित्वाऽन्तरङ्गत्वात् 'श्लावि'तिद्वित्वे जज्ञतीतिसिद्धिः, पूर्वमल्लोपे द्वित्वानापत्तेरिति दिक्॥ ५० ॥

नन्वेवमिति—बहिरङ्गपरिभाषायाः स्वीकार इत्यर्थः। अन्तरङ्गो यण् न स्यादिति बहिरङ्गत्वेन विवक्षितमूठ्शास्त्रं तद्घटकाङ्गपदद्वयान्यविषयताश्रयो दिविति तद्घटकः स्थानिद्वारा वकारः

अत्र 'षत्वतुको'रितिसूत्रस्थं तुग्ग्रहणं ज्ञापकम् । अन्यथा अधीत्य प्रेत्येत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया नित्यत्वाल्ल्यबुत्पत्तिपर्य्यन्तमप्यसंहितयाऽवस्थानासम्भवेनैकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतया असिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव। पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गत्वमिति प्रेद्ध इत्यादौ गुणो बहिरङ्ग इति ग्रन्थेन 'न धातुलोप'इतिसूत्रे

---

तन्निष्ठविषयताप्रयोजकमच्पदं तद्घटितत्वेन यणोऽन्तरङ्गत्वमिति भावः। 'षत्वतुकोरसिद्ध'इत्यस्य षत्वे तुकि च कर्त्तव्ये एकादेशशास्त्रमसिद्धमित्यर्थः । समासोत्तरमिति । ल्यपस्तन्निमित्तकत्वादिति भावः। अधि-इ-त्वा इति स्थिते समासे तत्र संहितायाः 'संहितैकपदे नित्ये'त्यभियुक्तोक्त्या नित्यत्वात् युगपदेकादेशल्यपोः प्रवृत्तौ तुकि कर्त्तव्ये 'षत्वतुको'रित्यनेन एकादेशस्यासिद्धत्वात्तुग् भवति, नाजानन्तर्यपरिभाषाया अभावे तु बहिरङ्गत्वादेवैकादेशस्यासिद्धत्वेन तुक्सिद्धौ तुको ग्रहणं व्यर्थं सदस्या ज्ञापकम्। ज्ञापितायान्त्वस्यामश्लिष्टल्यब्निरूपितानन्तर्यनिमित्तकतुगपेक्षैकादेशस्य बहिरङ्गपरिभाषयाऽसिद्धत्वाभावेन तुग्ग्रहणं चरितार्थम्। प्रेद्ध इत्यादाविति—'न धातुलोप आर्द्धधातुक'इत्यस्य धात्वंशलोपनिमित्त आर्द्धधातुके सति गुणो नेत्यर्थे प्रेद्ध इत्यादौ धात्वंशनकारलोपनिमित्ते क्तप्रत्ययरूपे आर्द्धधातुके सति 'आद्गुण'इतिगुणो न स्यादित्याशंक्य गुणो बहिरङ्गो निषेधोऽन्तरङ्ग इति निषेध्यस्यासिद्धत्वेनादर्शनान्निषेधो न स्यादिति समाहितं, तत्र गुणस्य पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपमेव बहिरङ्गत्वं भाष्याभिप्रेतमिति भावः। तद्भाष्यस्यैकदेश्युक्तत्वेनाप्रामा-

'संयोगान्तस्य लोपः' इति सूत्रे च भाष्ये स्पष्टम् ।

यत्तु–षत्वग्रहणमपि ज्ञापकम्, अन्यथा कोऽसिचदित्यादौ पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति—तन्न, इणः पूर्वपदसम्बन्धित्वेन षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन उभयोः समत्वात्, एका-

ण्यमिति चेत्तदाह—संयोगान्तस्य लोप इति । तत्र हि 'यणः प्रतिषेधो वाच्यो न वा बहिरङ्गलक्षणत्वादि'त्युक्तम् । सुद्ध्युपास्य इत्यादौ यणः पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेनैव बहिरङ्गत्वं वाच्यमिति भावः । ननु वृक्षे छत्रमित्यत्र 'पदान्ताद्वे'ति तुकि कर्त्तव्ये एकादेशस्यासिद्धत्वार्थं तुक् चरितार्थम्, तत्रैकादेशस्यान्तरङ्गत्वेन बहिरङ्गपरिभाषयाऽनिर्वाहात्; न चासिद्धत्वेऽपि 'छे चे'तितुक्प्रवृत्त्या न विशेष इति वाच्यम्, तथापि वैकल्पिकत्वासिद्धेरिति चेत्—न, 'पदान्तपदाद्योरितिवक्तव्यमि'तिवार्त्तिकेन पदान्तपदाद्योरेकादेशस्यैव तुक्यसिद्धत्वात् । नन्वेवमपि वृक्षस्य इः वृक्षेः तस्य छत्रं वृक्षे छत्रमित्यादावेकादेशस्य तथाभूतस्यासिद्धत्वार्थं तुग्ग्रहणमस्त्विति चेत्—न, सेरित्यादिवत् 'न चैङः पदान्तादपरोऽस्ती'तिभाष्यात् ज्ञापकपरभक्तभाष्याच्च तस्यानभिधानात् ।

कोऽसिचदित्यादाविति—कोइत्येकादेशविशिष्टस्य पूर्वान्तवद्भावेन पदत्वमोसिचदित्यस्य परादिवद्भावेन, सिचदित्येतन्मात्रस्यैकदेशविकृतन्यायेन वा पदत्वादेकपदसम्बन्धित्वमिणः, द्वितीयपदसम्बन्धित्वं सकारस्येति षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वम् । एकादेशस्य तत्त्वन्तु स्पष्टमेव । न च 'अन्तादिवच्चे'त्यस्य शास्त्रीयकार्ये एव प्रवृत्त्या बहिरङ्गपरिभाषाया अप्रवृत्त्यर्थं कथन्तत्प्रवृत्तिरिति वाच्यम्, परिभाषाया अप्रवृत्तिद्वारा षत्वप्रवृत्त्यर्थत्वेन शास्त्रीयकार्यार्थत्वात् । प्रसङ्गात् षत्वग्रहणस्य चारिता-

देशस्य परादिवत्त्वेनौसिचदित्यस्य पदत्वेन सस्य पदादित्वाभावान्न 'सात्पदाद्यो'रित्यनेन निषेधः, त्रैपादिकेऽन्तरङ्गे कार्य्यकालपक्षेऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वाच्च ।

परिभाषार्थस्तु अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिर्न, बहिष्पदेन बहिरङ्गम्, तस्य भावो बहिष्ट्वं बहिरङ्गत्वं, तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः, न प्राप्तिरिति, असिद्धं बहिरङ्गमित्युक्त्वा नाजानन्तर्य्य इति वक्ष्यामीति भाष्योक्त्या तत्रत्यस्यान्तरङ्ग इत्यस्यानुवृत्तिसूचनात् ।

---

...र्थ्याय 'सात्पदाद्यो'रित्यस्याप्राप्तिरुच्यते—ओसिचदित्यस्य पदत्वेनेति । तथा चौकारस्य पदादित्वं न तु सकारस्येति न 'सात्पदाद्यो'रित्यस्य प्रवृत्तिः । न च तदप्रवृत्तेरशास्त्रीयत्वात् कथं परादिवद्भावः, षत्वनिषेधाप्रवृत्तेः षत्वरूपत्वेन शास्त्रीयत्वात् । यत्तु—कोइत्यस्य पूर्वान्तवद्भावेन पदत्वेऽपि 'उभयत आश्रयणे नान्तादिवद्भाव'इतिनिषेधेनौसिचदित्यस्य पदत्वाभावात्पदादादिरितिपञ्चमीसमासेन 'सात्पदाद्ययो'रितिषत्वनिषेधसिद्धिरित्युक्तम्—तन्न, ओसिचदित्यस्य पदत्वेऽपि सकारस्य पदात्परत्वविशिष्टस्यादित्वस्याक्षतेः, उभयत आश्रयण इत्यस्य स्वमते अभावाच्च । त्रैपादिकेऽन्तरङ्ग इति । तथा च न षत्वदृष्ट्यैकादेशस्यासिद्धत्वेन सिद्धिरिति भावः ।

---

१ इति भाव इति । इद मूलाशयवर्णनमात्रम् । वस्तुतस्तु अन्तरङ्गपरिभाषाया 'वाह ऊठ्'सूत्रदेशत्वात् प्रथमपादस्यतुगग्रहणज्ञापितायामस्यां ततोऽनुवृत्तिर्न युज्यते, किन्तु बहिष्ट्वपदार्थस्य नित्यसाकाङ्क्षत्वादन्तरङ्गलाभ इति ध्येयम् ।

तेन पचावेदमित्यादौ न दोषः, अन्तरङ्गस्याच्स्थानिककार्यस्यैत्वस्यान्यानन्तर्यनिमित्तकत्वाभावात् । जातस्य बहिरङ्गस्येत्युक्त्या अयजे इन्द्रः धियतीत्यादौ बहिरङ्गदीर्घगुणादेर-

---

अनुवृत्तिसूचनादिति—'असिद्धं बहिरङ्गमन्तरङ्गे' 'नाजानन्तर्ये' इति भाष्योक्तौ नाजानन्तर्ये इत्युत्तरार्द्धे पूर्वस्यान्तरङ्ग इत्यस्यानुवृत्तिरिति भावः । तेन—अज्निष्ठान्यानन्तर्यनिमित्तकत्वस्यान्तरङ्गविशेषणत्वेनेत्यर्थः । अन्तरङ्गबहिरङ्गयोर्मध्ये कस्याप्यज्निष्ठान्यानन्तर्यविशेषणत्वे तु प्रकृते बहिरङ्गगुणस्य तथात्वेनासिद्धत्वानापत्तिः । जातस्य बहिरङ्गस्येति । नन्वेवमधीत्येत्यादौ 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधत' इतिपरिभाषयैकादेशात्पूर्वमधि-इ-त्वेति स्थिते ल्यपि अधिइयेत्यत्र समकालमेवैकादेशतुकोर्बहिरङ्गान्तरङ्गयोः प्राप्तौ जातबहिरङ्गाभावेन परिभाषाया अप्राप्तौ तुकः स्वांशे चारितार्थ्याभाव इति चेत्—न, अन्तरङ्गनिमित्तविनाशकस्यैव ल्यपः प्राबल्यस्य तया बोधनेन प्रकृते ल्यबुत्तरमपि दीर्घप्रवृत्त्या ल्यपस्तन्निमित्तविनाशकत्वाभावेन प्राबल्याबोधनात् । अतएव निरेप्य दुरेप्येत्यादौ निर्दुर्पूर्वकात् ण्यन्तादिपः क्त्वाप्रत्यये अन्तरङ्गानपीतिन्यायेन ल्यप्प्रयोजकसमासे ल्यपि च गुणात् पूर्वं कृते प्रतिपदोक्तत्वेन गुणात् पूर्वं 'ल्यपि लघुपूर्वादि'त्यनेन णेरयादेशे गुणे निरेपय्य दुरेपय्य इति न, किन्तु ल्यबुत्तरमपि गुणादेशप्रवृत्त्या ल्यपो गुणनिमित्तविनाशकत्वाभावेन प्राबल्याभावादन्तरङ्गत्वाद्गुणे ल्यपि लघुपूर्वकत्वाभावेनायादेशाप्राप्तौ णिलोपे निरेप्य दुरेप्येत्यस्य सिद्धिः । नन्वेवं पराजय्येत्यादौ परा-अज्-क्त्वा इति स्थिते ल्यप एकादेशनिमित्तविनाशकत्वाभावेनाप्राबल्यात् तत्पूर्वं समकालमेव वा दीर्घे परादिवद्भावेन जय्यादेशे पराजय्येति स्यादिति चेत्—न, जय्यादेश-

सिद्धत्वम्। अतएव 'इण् ङिशीनामाद्गुणः सवर्णदीर्घत्वाच्छ्रचङन्तस्यान्तरङ्गलक्षणत्वादि'त्यादि संगच्छते। अतएव 'ओमाङोश्च' इत्याङ्ग्रहणं चरितार्थम्। तद्धि शिव-आ-इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद्गुणे वृद्धिबाधनार्थम्। न चाक्षधूरित्यत्र कृते ऊठोऽसिद्धत्वाद्वलि लोपापत्तिरिति वाच्यम्, अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये, कृते च तस्मिन् यदन्तरङ्गं प्राप्नोति, तत्र च कर्त्तव्ये नासिद्धत्वमित्येतदर्थात्; असिद्धपरिभाषाया अनित्यत्वेन तद्वारणे त्वस्या वैयर्थ्यं तेनैव सिद्धेः। अतएव 'नलोपः सुप्'इतिसूत्रे कृति तुग्ग्रहणं चरितार्थम्, अन्यथा वृत्रहभ्यामित्यादौ बहिर्भूतभ्याम्निमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया नलोपस्यासिद्धत्वेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव। मम तु तुक्यजानन्तर्यसत्त्वान्न

---

द्वारा परम्परया दीर्घनिमित्तविनाशकत्वस्य सत्त्वेनादोषात्। अतएवेति—जातस्यैवासिद्धत्वाभावबोधनादेवेत्यर्थः। परमपि सवर्णदीर्घमिति। समकालस्थलेऽपि प्रवृत्तावन्तरङ्गपरिभाषाया निषेधे परत्वाद्दीर्घे गुणे शिवेहीतिसिद्धौ तद्वैयर्थ्यं स्पष्टमेव। ऊठोऽसिद्धत्वादिति—वलि लोपापेक्षया बहिरङ्गत्वेनोठोऽसिद्धत्वादिति भावः। अस्या वैयर्थ्यमिति—नाजानान्तर्यपरिभाषाया वैयर्थ्यमित्यर्थः। तेनैव—अन्तरङ्गपरिभाषाया अनित्यत्वेनैवेत्यर्थः। अतएव नलोप इति—नाजानन्तर्यपरिभाषायास्सत्त्वादेवेत्यर्थः। अन्यथा—अनित्यत्वे प्रकृते प्रवृत्त्यैवेष्टसिद्धौ तद्वैयर्थ्यं स्यादिति भावः। मम तु—नाजानन्तर्यपरिभाषावादिनस्तु। अतएवे-

दोषः । न चैवं सति 'ह्रस्वस्य पिती'तिसूत्रस्थभाष्यविरोधः, तत्र हि ग्रामणिपुत्र इत्यत्र 'इको ह्रस्वोऽङ्यो'इतिह्रस्वे कृते तुक-माशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम्, नाजानन्तर्य्य इत्यस्य सत्त्वे तत्र तदप्राप्तेरसङ्गतिः स्पष्टैवेति वाच्यम्, तेन भाष्येणास्या अनावश्यकत्वबोधनात् । एतज्ज्ञापकेनान्तरङ्ग-परिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात् । अतएव 'अचः

---

ति—नाजानन्तर्य्यपरिभाषाया अभावादेवेत्यर्थः । नन्वत्र तस्या-स्सत्त्वेऽपि न दोषः, समकालप्राप्तत्वादिति चेत्—न, परिभाषा-स्वीकारस्तत्र जातत्वनिवेशः, तदपेक्षया बहिरङ्गपरिभाषाया अनि-त्यत्वेनैव सकलातिप्रसङ्गभङ्ग इत्येव युक्तमिति भावः ।

अत्रेदं बोध्यम्—ग्रामणिपुत्र इत्यत्र बहिरङ्गपरिभाषया तुग्वा-रणपरभाष्यान्नाजानन्तर्य्ये इति नास्तीति कल्प्यतेऽन्यथाऽनया बहिरङ्गपरिभाषाया अप्रवृत्त्यापत्त्या भाष्यासङ्गतिः । तुक्ग्रहणेन च बहिरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यते । तेनैवाक्षद्यूरि-त्यादौ यण्वलिलोपाभावौ सिद्धौ, रामयोरित्यादावयादेशापेक्षया 'ओसि चे'त्यस्यासिद्धत्वाभावः, रामेणेत्यादौ गुणापेक्षयेनादेश-स्यासिद्धत्वाभावश्च सिद्धः । श्रयाते इत्यत्रायादेशापेक्षया बहिरङ्ग-स्यापि गुणस्यासिद्धत्वाभावः । एषु प्रयोगेषु नाजानन्तर्य्यपरिभा-षया वारणसम्भवेऽपि अयजे इन्द्रमित्यादौ मृद्व्या-पट्व्येत्यादौ चैतस्या अप्रवृत्तेर्जातबहिरङ्गत्वविषयकत्वमपि वक्तव्यम्, तदपि गौरवमेव । अक्षद्यूरित्यत्र वलिलोपवारणायाजानन्तर्य्ये अन्त-

---

१ तत्र तदप्राप्तेरिति । श्रीमन्नाजानन्तर्यस्य ग्रहणे तु न भाष्यविरोध इति भाष्यविरोधोद्भावनं विचारणीयम् ।

परस्मिन्नि'तिसूत्रे भाष्ये पटु-ई-आ[1] इत्यत्र परयणादेशस्यानयाऽसिद्धत्वात्पूर्वयणादेशः साधितः । अतएवैषा परिभाषा भाष्ये पुनः क्वापि नोल्लिखिता । अतएवान्तरङ्गपरिभाषामुपक्रम्य विप्रतिषेधसूत्रेऽस्या बहूनि प्रयोजनानि सन्ति, तदर्थमेषा परिभाषा कर्त्तव्या, प्रतिविधेयं दोषेषु इत्युक्तं 'सम्प्र-

---

रङ्गे कृते चेत्यर्थान्तरकरणापत्तिश्च स्यात् । तथापि दीङ्धातोर्विचि 'मीनाती'त्यात्वे विचो लोपे शसि 'आतो धातो'रित्याकारलोपे दः, अस्य अः आः, शसि आलोपे अः, पशुं सनोतीति पशुसाः, पन्धातोर्विटि 'विड्वनोरनुनासिकस्याऽऽदि'तिनकारस्यात्वे शसि आलोपे पशुसः, यायावरः, यातिः इत्याद्यर्थमन्तरङ्गपरिभाषाया अनित्यत्वमपि वक्तव्यमेव; अन्यथाऽनैमित्तिकत्वेनान्तरङ्गस्यालोपस्य वलमात्रनिमित्तकत्वेनान्तरङ्गस्य यलोपस्य च कर्त्तव्ये वहिरङ्गस्यात्वस्याकारलोपस्य चासिद्धत्वेनातो लोपस्य यलोपस्य चाभावापत्तिः । नाजानन्तर्य्यपरिभाषया तु न निर्वाहः, अन्तरङ्गस्याज्निष्ठान्यानन्तर्य्यनिमित्तकत्वाभावात् । इत्थञ्चावश्याश्रयणीयेनानित्यत्वेनैव सर्वत्र निर्वाहे नाजानन्तर्य्यपरिभाषा नाश्रयणीयेत्येव युक्तमिति तत्त्वम् ।

अनित्यत्वेन वहिरङ्गपरिभाषाया अप्रवृत्तियोग्यानां केषाञ्चित्स्थलानामनुगमरूपैव नाजानन्तर्य्यपरिभाषा; ग्रामणि पुत्र इत्यत्र सन्निपातपरिभाषयाऽपि तुग्वारणस्य भाष्ये सत्त्वेन वहिरङ्गपरिभाषया वारणस्य भाष्यकारेणावहेलनात्, पशुस इत्यादावननुगतानित्यत्वस्वीकारेऽपि वहुषु स्थलेषु अनुगतानित्यत्वस्वीकारे

---

१ पटु ई आ इति । अनया जातस्यैवासिद्धत्वाद्धीकारादिदमपि विभावनीयम् ।

स्मारणाच्च' इति सूत्रे भाष्ये, प्रतिविधानं च परिभाषाविषयेऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम् ॥ ५१ ॥

नन्वेवं गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्गं लुकं बाधित्वा अन्तरङ्गत्वाद्धल्ङ्यादिलोपे नुमादयः स्युरत आह—

**अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते ॥ ५२ ॥**

---

बाधकाभावात्, 'नासूया तत्र कर्तव्या यत्रानुगमः क्रियत इत्युक्ते'रिति परे ॥ ५१ ॥

नन्वेवमिति—अन्तरङ्गपरिभाषायाः स्वीकार इत्यर्थः। बहिरङ्गं लुकमिति। ननु गोमत्सु प्रियसु इति दशायां हल्ङ्यादिलोपसमयं लुकोऽप्राप्त्या बहिरङ्गं लुकं बाधित्वा अन्तरङ्गत्वादित्युक्तिरसंगता, जातस्य समकालप्राप्तस्य वा बहिरङ्गस्यैवासिद्धताबोधनात; न च लुक्पदं तत्प्रयोजकसमासस्योपलक्षकम् तस्य लोपसमकालप्राप्तत्वादिति वाच्यं, तस्याप्यन्यपदार्थान्तर्भावेण वृत्तिकल्पनोत्तरमेव प्रवृत्तेरिति चेत्—न, अप्राप्तिमत्त्वरूपबहिरङ्गत्वस्य सत्त्वेनादोषात। हल्ङ्यादिलोप इति। नन्वेतदपेक्षया नुमः परत्वादिदमयुक्तमिति चेत्—न, अपरनिमित्तकत्वेन लोपस्यान्तरङ्गत्वात्, पूर्वं नुम्यपि दोषस्यैव सत्त्वेनापाद्यमानेऽर्थे न्यायानादराच्च। नुमादयः स्युरिति। ननु पूर्वं नुम्यच उपधात्वाभावेन निरवकाशत्वापूर्वं दीर्घ एव स्यादिति नुमादय इत्ययुक्तमिति चेत्—न, उपधापदस्य पूर्वमात्रोपलक्षकत्वेन नुमुत्तरं दीर्घस्य सावकाशत्वेन परत्वान्नित्यत्वाच्च नुम एव पूर्वं प्रवृत्तिरित्याशयात, आपाद्यमाने अर्थे न्यायानादरणाच्च।

अन्तरङ्गानपीति। अपिशब्देन अन्तरङ्गबाधकत्वान्तरङ्गा-

अत्र च 'प्रत्ययोत्तरपदयोश्च'इतिसूत्रं ज्ञापकम् । त्वत्कृ-

पेक्षया दुर्बलयोः परनित्ययोर्बाधकत्वं लोकसिद्धं संगृह्यते, न त्वप-वादबाधकत्वम्, तस्य निरवकाशत्वेन प्राबल्यात् । तेन ह्यः श्वः आदितः मध्यत इत्यादौ परमपि 'अत्वसन्तस्ये'तिदीर्घं बाधित्वा 'अव्ययादि'तिलुक् । ब्रह्मिष्ठा इत्यादौ ब्रह्मन्-अस्-इष्ठ इति दशायां परमपि टिलोपं बाधित्वा सुपो लुकि अनरूपटेर्लोपे ब्रह्मिष्ठा इति सिद्ध्यति, परस्य लुकाऽबाधे अनरूपटेः परत्वाल्लोपे तस्याभीया-सिद्धत्वेन अनरूपटेः पुनर्लोपाभावे असिद्ध्यापत्तेः । शोभना आपो यस्मिन् तत् स्वप्कुलमित्यादौ सुपथिवनमित्यादौ च प्रति-पदोक्तरूपान्तरङ्गमपि 'अप्तृन्नि'तिदीर्घं 'पथिमथी'त्यात्वं च बाधित्वा लुक् । नन्वपिघटितपाठे तत्कुलमित्यादौ लुगर्थं कृतस्य 'त्यदादिभ्यश्च वक्तव्य'इतिवार्त्तिकस्य वैयर्थ्यम् , अनेनैव न्या-येन परमपि त्यदाद्यत्वं बाधित्वा 'स्वमोर्नपुंसकादि'त्यनेन लुक्-सिद्धेः; अपिघटितपाठाभावे तु अत्वस्यान्तरङ्गत्वाभावेन न्यायेन तद्बाधासिद्धेर्वार्त्तिकं सार्थकम; एवं लुकः परबाधकत्वे भवतादि-त्यादौ परमपि तातङादेशं बाधित्वा 'अतो हे'रितिलुक् स्यादिति चेत्—न, तत्कुलमित्यादौ उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयो-ज्यापवादशास्त्रप्रवृत्तिसम्भावनायां पूर्वमुत्सर्गशास्त्रं न प्रवर्त्तत इत्य-र्थकोपसंजनिष्यमाणनिमित्तन्यायेन लुकोऽप्रवृत्त्या वार्त्तिकस्याव-श्यकत्वात्, यदि पूर्वं लुक् न स्यात्तर्हि त्यदाद्यत्वे 'अतोऽमि'ति स्यादितिसंभावनायाः प्रकृते सत्त्वात । भवतादित्यादौ लुकोऽन्त-रङ्गमात्रबाधकत्वेऽप्यनिमित्तकत्वेन तातङोऽन्तरङ्गत्वात् प्रकारा-न्तरेणैवोभयोस्समाधेयत्वेनादोषात् । कोऽसौ प्रकार इति चेत—'ज्ञापकसिद्धन्न सर्वत्रे'ति गृहाण ।

अत्र चेति—प्रकृतपरिभाषायामित्यर्थः । लुगपेक्षयाऽन्तरङ्ग-

तमित्यादौ लुगपेक्षयान्तरङ्गत्वाद्विभक्तिनिमित्तकेन 'त्वमावेक-वचने' इत्यनेन सिद्धे इदं व्यर्थं सदेतज्ज्ञापकम् । ननु तव पुत्रः त्वत्पुत्र इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत्, एवं

---

त्वादिति—लुकः पदद्वयापेक्षसमाससापेक्षत्वात् त्वमयोः पूर्वप-दमात्रापेक्षत्वादिति भावः ।

तवममादिबाधनार्थमिति—त्वत्पुत्रइत्यादौ तवममौ त्वद्धित-मित्यादौ तुभ्यमह्यौ च 'त्वमावेकवचन' इत्यस्य निरवकाशत्वेन बाधकौ प्राप्तौ, तेषां बाधनार्थं 'प्रत्ययोत्तरपदयोश्चे'ति चरितार्थ-मित्यर्थः । ननु समासात्प्रागेवालौकिकप्रक्रियावाक्ये युष्मद्-अस् अस्मद्-असित्यादौ बाधकस्यापि 'प्रत्ययोत्तरपदयोश्चे'तिसूत्रस्य विभक्त्या व्यवधानेनाप्राप्त्या तवममादिप्रवृत्तिरव्याहतैव; न च विभक्तेरपि प्रत्ययत्वात्तामादायैव 'प्रत्ययोत्तरपदयो'रितिसूत्रं प्रव-र्त्तेतेति वाच्यम्, उत्तरपदसाहचर्येण वृत्तिचरमावयवप्रत्ययस्यैव ग्रहणेन विभक्तिमादाय प्रवृत्तेरसम्भवात्, अन्यथा त्वया मये-त्यादावप्यनेनैव सिद्धे त्वमामेकवचनमित्यस्य वैयर्थ्यापत्तेरिति चेन्—न, 'उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्त-मप्युत्सर्गं बाधत'इतिन्यायेन प्रक्रियादशायामपि 'प्रत्ययोत्तरपद-योश्चे'त्यस्य तवममादिबाधकत्वसम्भवात् । अस्ति हि यदि तवममादिशास्त्रं न प्रवर्त्तेत तदा समासे सुब्लुकि 'प्रत्ययोत्तरपद-योश्चे'तिसूत्रं प्रवर्त्तेतेतिसम्भावना । न च सामर्थ्यादेव तन्न्याय-माश्रित्य तवममादिबाधकत्वं वक्तव्यम्, ततो वरं परिभाषाकल्प-नम्, तथा सति हि न साक्षाच्छास्त्रबाध इति वाच्यम्, दधतीत्या-दौ 'अदभ्यस्तादि'त्यादिना तथा बाधकस्य कल्पनया तदाश्रयणे-नैव चारितार्थ्यसम्भवे अक्लृप्तपरिभाषाकल्पनाया अन्याय्य-त्वात् । न च तवममादिबाधमात्रप्रयोजनकत्वे तवममौ ङस्युना-

तर्ह्यत्रत्यमपर्यन्तग्रहणानुवृत्तिस्तज्ज्ञापिकेति भाष्यकृतः । युष्म-

वित्येव वक्तव्यं, तावतैव त्वत्पुत्रइत्यादौ तवादीनामप्राप्त्या 'त्वमावेकवचने' इत्यनेनैव सिद्धेरिदं सूत्रं व्यर्थं सदस्या ज्ञापकमिति वाच्यम, आक्रोशविवक्षायां 'षष्ठ्या आक्रोश'इत्यलुकि तव पुत्र इतिवृत्तौ तवादेशानापत्तेः, सूत्रसत्त्वे विभक्त्या व्यवधानेन तवादेशस्य सुलभत्वाच्च । न च तवममौ ङस्यलुकीत्येवास्तु लुक्विषये-नेत्यर्थेनोक्तदोषाभावादिति वाच्यम्, तव सुन्दरः पुत्रो यस्येति त्रिपदबहुव्रीहौ मध्यमपदेन व्यवधानादुत्तरपदपरत्वाभावेन सूत्राप्राप्त्या परिभाषाया इदानीमभावेन ङस्परे तवादेशप्रवृत्तेरलुक्यप्रवृत्त्या फलभेदात् । न च ज्ञापकसाजात्येन सप्तम्यन्तस्यैव व्यधिकरणबहुव्रीहिर्न षष्ठ्यन्तस्येति वाच्यम, 'असति बाधके प्रमाणानां सामान्ये पक्षपात' इति न्यायाद्बाधकबाधनार्थत्वकथनपरभाष्याच्च व्यधिकरणबहुव्रीहिसामान्यस्य कल्पनात् । न च सूत्रं मपर्यन्तानुवृत्तिर्वा न ज्ञापिते चरितार्थम, 'त्वमावेकवचन'इत्यत्र विभक्तेरननुवृत्त्यैव त्वत्कृतमित्यादौ परिभाषया पूर्वमेव ङसो लुकि बाधकस्यापि तवममादेशशास्त्रस्याप्रवृत्त्या त्वत्पुत्रइत्यादौ च त्वमादेशसिद्धेरिति वाच्यम, त्वं सुन्दरः पुत्रो यस्येति त्रिपदबहुव्रीहौ युष्मत्सुन्दरपुत्रइत्यादौ त्वमादेशापत्तेः । सिद्धान्ते तु विभक्तिपरत्वाभावेन 'त्वमावेकवचन'इत्यस्य मध्यमपदेन व्यवधानादुत्तरपदपरत्वाभावेन 'प्रत्ययोत्तरपदयोश्चे'तिसूत्रस्य चाप्रवृत्त्या दोषाभावात् ।

मपर्यन्तानुवृत्तिस्तज्ज्ञापिकेति – युष्मदस्मदोरनादेशेऽपि

१. मपर्यन्तानुवृत्तिस्तज्ज्ञापिकेति । [illegible]
[illegible]

दादिभ्य आचारक्विप् तु न, सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात्, 'ह्रस्वनद्याप'इतिनुड्विधायकसूत्रस्थभाष्यप्रामाण्ये-

---

आचक्षाणणिचि च विभक्तिपरत्वाभावेन 'त्वमावेकवचन'इत्यस्याप्रवृत्त्या प्रत्ययनिमित्तकत्वमादेशाय प्रत्ययांशे चारितार्थ्येन तदंशेऽपवादत्वाभावेन 'हृदयस्थोत्सर्गसमानदेशा' इतिन्यायस्याभावेन तत्र सर्वादेशवारणाय मपर्यन्तानुवृत्तेश्चारितार्थ्यान्न ज्ञापकत्वमित्यत आह—युष्मदादिभ्य इत्यादि। सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यादिति। नन्विदं न युक्तं, संपूर्णसूत्रज्ञापकताया बाधकबाधनार्थत्वव्यवस्थापनेन खण्डितत्वात्। तत्खण्डनेऽत्र चारितार्थ्यमपि हेतुरिति चेत्—न, तद्भाष्यघटितघटकमपर्यन्तानुवृत्तिज्ञापकतापरभाष्यप्रामाण्यादित्यर्थे ग्रन्थकर्तुस्तात्पर्यात्। नुड्विधायकसूत्रस्थेति—तत्र हि काऽप्रत्ययादितिविहितस्यामो नुट् कस्मान्नेत्याशंक्याकारानुबन्धेन सानुबन्धकत्वात् 'निरनुबन्ध-

---

सिद्धे तदनुवृत्तिर्व्यर्था। न चानुवृत्तिर्मास्तु वैयर्थ्यात् इति शङ्क्यम्, अनुवृत्तिकारणपरभाष्यप्रामाण्येन अनुमितस्वरितत्वप्रतिज्ञावैयर्थ्यात्। ननु वार्तिककारमते तन्न्यायाभावेन 'प्रत्ययोत्तरे'तिसूत्रस्यापवादत्वाभाव एव, तन्न्यायवादिभाष्यमते च 'उत्सर्गसमानदेशा अपवादा' इति न्यायस्यैवाभावः, तस्मात्सर्वादेशत्ववारणाय मपर्यन्तानुवृत्तिः कार्येति चेत्—न, यत्रापवादशास्त्रीयस्थानिताया अवच्छेदकं साक्षात्परम्परया वा उत्सर्गशास्त्रीयस्थानितावच्छेदकं तत्र 'उत्सर्गसमानदेशा' इति न्यायस्य भाष्यकृताप्यभ्युपगमात्। न च 'प्रत्ययोत्तरे'तिसूत्रस्य 'तवममौङसी'तिसूत्रमात्रं नोत्सर्गः, किन्तु वाध्यसामान्यचिन्तापक्षे आत्वयत्वादयोऽपि, एवञ्च तदनुवृत्त्यभावे कदाचिदन्त्यस्यापि तदादेशापत्तिरिति वाच्यम्; ज्ञापकतापरभाष्यप्रामाण्येन 'प्रत्ययोत्तरपदयोश्चे'तिसूत्रविषये बाध्यविशेषचिन्ताया एवाभ्युपगमादिति दिक्।

न हलन्तेभ्य आचारक्विबभावाच्च। एवमेवैकार्थकाभ्यां प्रातिपदिकप्रकृतिकणिचोऽपि अनभिधानं बोध्यम्। एतेन तत्रादेशार्थं

---

कग्रहणे न सानुबन्धकस्ये'ति समाधायोक्तम्—तर्ह्यकारानुबन्धः कर्त्तव्योऽवश्यं कर्त्तव्योऽन्यथा मकारस्येत्संज्ञापत्तिः, न चेत्संज्ञकत्वे मकारोच्चारणं व्यर्थम्, न च 'मिदचोऽन्त्यात्पर' इत्यस्य प्रवृत्त्यर्थं, काशधातोर्विधीयमानस्यामोऽन्त्यादचः परत्वे फलाभावात्प्रत्यया-न्ताद्विधीयमानस्यान्त्यादचः परत्वे परश्चेत्यनेन प्रत्ययपरत्वे वा विशेषाभावादिति मकारोच्चारणसामर्थ्यान्नेत्संज्ञेत्यर्थकं भाष्य-मुक्तम्। हलन्तेभ्यो युष्मदादिशब्देभ्य आचारक्विबन्तेभ्य आमि प्रत्ययपरत्वेऽन्त्यादचः परत्वे विशेषसम्भवेन भाष्यासङ्गत्या हलन्तेभ्य आचारक्विपोऽनभिधानमिति बोध्यम्। एवमेवैकार्थ-काभ्यां प्रातिपदिकप्रकृतिकणिचोऽप्यनभिधानमिति। ज्ञापकता-परभाष्यप्रामाण्यादिति शेषः।

न च 'मपर्यन्तस्ये'तिसूत्रे परिग्रहणाभावे 'यत्रैव मान्ते युष्म-दस्मदी तत्रैव स्यात्, क्व च मान्ते, युष्मयतेरस्मयतेरप्रत्यय' इति भाष्ये युष्मदस्मच्छब्दाभ्यां णिच उक्तत्वादिदमसङ्गतमिति वाच्यम्, तद्भाष्यस्य बहुत्वार्थकयुष्मदस्मच्छब्दविषयकत्वेन तद्वि-रोधाभावात्।

वस्तुतस्तु—'प्रत्ययोत्तरपदयोश्चे'त्यत्र विभक्तावित्यनुवर्त्त्य प्रत्ययोत्तरपदयोर्या विभक्तिस्तदव्यवहितपूर्वयोर्युष्मदस्मदोस्त्व-मावित्यर्थः कर्त्तव्यः; त्वत्पुत्रः त्वदीय इत्यत्रालौकिकप्रक्रियावाक्ये लुकः प्रागेव सामर्थ्यात् प्रवर्त्तते। न च आक्रोशे विवक्षिते 'षष्ठ्या आक्रोशे' इत्यलुकि तव पुत्र इत्यादौ चारितार्थ्येन त्वत्पुत्रइत्यादौ पूर्वं लुकि 'न लुमताङ्गस्ये'तिनिषेधेन प्रत्ययलक्षणाप्रवृत्तौ विभक्ति-परत्वाभावेनादेशो न स्यादिति वाच्यम्, एकत्र द्वयमितिरीत्या युष्मदस्मदोरेव 'प्रत्ययोत्तरपदयो'श्च सम्बन्धेन विभक्त्यव्यवहित-

प्रत्ययग्रहणं चरितार्थमित्यपास्तम्। ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था; न च 'उत्सर्गसमानदेशा अपवादा' इतिन्यायेनासिद्धवत्सूत्रस्थभाष्यसम्मतेन मपर्यन्तस्यैवादेशे सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यम्, तस्य श्नमकजादौ व्यभिचारादिति चेत्—न, श्नमि मित्त्वेन वहुचि पुरस्ताद्ग्रहणेनाकचि प्राक्टेर्ग्रहणेन तस्य बाधेऽपि अत्रोत्सर्गस्य त्यागे मानाभा-

---

पूर्वयोस्सतोः प्रत्ययाव्यवहितपूर्वयोरुत्तरपदाव्यवहितपूर्वयोर्युष्मदस्मदोस्त्वमावित्यर्थे आक्रोशे अलुकि विभक्त्या व्यवधानादप्राप्त्या सामर्थ्यात् 'न लुमते'तिनिषेधाप्रवृत्त्या प्रत्ययलक्षणेन त्वत्पुत्र इत्यादौ दोषाभावात्। न च विभक्त्या व्यवधानादुत्तरपदपरत्वासम्भवः, शास्त्राप्रवृत्तये प्रत्ययलक्षणाप्रवृत्तेः। युष्मदस्मदोराचारक्विपि णिचि वा प्रत्ययाव्यवहितपूर्वत्वेऽपि विभक्त्यव्यवहितपूर्वत्वाभावेनादेशाप्राप्त्याऽनभिधाने प्रमाणाभाव इति बोध्यम्। विभक्तावित्यस्याननुवृत्तौ तु प्रत्ययपदेन प्रत्ययमात्रस्य ग्रहणेन 'त्वमावेकवचने' 'प्रत्ययोत्तरपदयो'रित्येकवाक्यकरणेनैव सिद्धे वाक्यभेदो व्यर्थः स्यादिति बोध्यम्। न चास्तु एकवाक्यता, मास्तु विभक्तावित्यस्यानुवृत्तिः, प्रत्ययपदञ्च प्रत्ययत्वावच्छिन्नबोधकमस्त्विति वाच्यम्, आचारक्विवादावादेशापत्तेः; आचारक्विपोऽनभिधानेऽपि णिचोऽनभिधाने मानाभावात्। युष्मयतेरितिभाष्यमपि स्वरसत एव तथासति संगच्छत इति परे।

तदनुवृत्तिरिति—मपर्यन्तानुवृत्तिरित्यर्थः। श्नमकजादाविति। श्नम् शपोऽपवादोऽपि अन्त्याचः परो भवति, शप् तु धातोः परः, अकच् टेः प्राग्भवति, कस्तु प्रातिपदिकात् पर इति समानदेशत्वस्य व्यभिचारः। मानाभावादिति—मित्त्वादिरूपविशेषकारणबलात्तत्र तत्रोत्सर्गसमानदेशा इति न्यायस्य बाधेऽपि ततोऽन्यत्राप्रवृत्तौ

वात्। अतएव 'तस्मिन्नणि च' इत्यनेन युष्माकाद्यादेश-

मानाभावादित्यर्थः। न च 'असति बाधके प्रमाणानां सामान्ये पक्षपात' इतिन्यायेनात्र शास्त्रे उत्सर्गसमानदेशा इति न्यायाभाव एव मित्त्वादिना किन्न कल्प्यत इति वाच्यं, मपर्यन्तानुवृत्तेर्ज्ञापकतापरभाष्यस्यैव बाधकत्वात्।

युष्माकास्माकादेशावपि तन्न्यायसत्त्वे एव चरितार्थौ सामान्यतः तदभावकल्पने बाधकावित्याह—अतएवेति—'उत्सर्गसमानदेशा' इति न्यायस्य सत्त्वादेवेत्यर्थः। 'तस्मिन्नणि च युष्माकास्माकावि'तिसूत्रेण युवयोर्युष्माकं वा अयं यौष्माक यौष्माकीण इत्यादावणि खञि च युष्मदस्मदोः युष्माकास्माकावादेशौ भवतः। तवायं तावकीनः तावकः, मामकीनः मामकः इत्यत्र 'तवकममकावेकवचने'इतिसूत्रेण युष्माकास्माकयोर्द्वित्वबहुत्वविवक्षायां सावकाशयोरेकत्वविवक्षायां बाधकौ तवकममकादेशौ भवतः। यदि चाकङादेशमेव विदध्यात् तर्हि 'ङिच्चे'त्यनेन दकारस्यादेशे यौष्माक इत्यादेस्सिद्धावपि 'उत्सर्गसमानदेशा अपवादा' इतिन्यायेनाकङादेशस्यापवादभूतौ तवकममकादेशावप्यन्तस्यैव स्यातामिति तावकइत्यादेरसिद्ध्यापत्तिः। अतो युष्माकास्माकावादेशौ कृतौ। तन्न्यायाभावे तु तवकादेरनेकाल्त्वात् सर्वादेशत्वे दोषाभावात् तौ व्यर्थावित्युक्तन्यायज्ञापकाविति भावः। ननु 'उत्सर्गसमाने'तिन्यायज्ञापनात्पूर्वं मपर्यन्तानुवृत्तिवैयर्थ्याभावेनान्तरङ्गानपीतिन्यायाभावेन युवयोरयमितिविग्रहे युष्मद्-ओस्-ङेन इतिस्थिते विभक्तिव्यवधानेन युष्माकादेशाप्रवृत्त्याऽन्तरङ्गत्वाद्विभक्तिनिमित्तकयुवादेशे विभक्तिलुकि स्थानिवद्भावेन युष्माकादेशे यौष्माकीणः, आकङि तु यौवाकीन इति फलभेदात्कथं ज्ञापकम्? एवं फलभेदाभावे युष्माकादेशस्य वैयर्थ्यं, वैयर्थ्ये न्यायः, न्याये च विभक्तिलुकि युवादेशाभावे आकङादेशेन सिद्धे फलभेदाभावा-

विधानं चरितार्थम्, अन्यथा आकङादेशमेव विदध्यात् ।

वैयर्थ्यमिति चक्रकापत्तिरिति चेत्, अत्रोच्यते—'स्वार्थे परिपूर्णं पदमर्थान्तरेऽभिसम्बध्यत' इतिन्यायेन स्वार्थोपस्थित्युत्तरमेव बहिर्भूतापत्याद्यर्थसम्बन्धेनान्तरङ्गत्वात्स्वार्थनिमित्तकविभक्तेरेव पूर्वमुत्पत्तिः । ततश्च विभक्त्या व्यवधानात्प्रातिपदिकाव्यवहितोत्तरत्वविशिष्टस्तद्धितोऽनुपपन्नः । तथा च पूर्वाह्णेतर इत्यादौ तरबव्यवहितपूर्वत्वविशिष्टसप्तम्यभावेन घसंज्ञकनिमित्तकसप्तम्यलुग्विधायकघकालतनेत्यस्य वैयर्थ्यात् तद्धितनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकधर्म्मावच्छिन्नोद्देश्यताककार्य्ये कर्त्तव्ये विभक्तेरविद्यमानवद्भावः कल्प्यते । सा च विभक्तिस्तद्धितपरकत्वेन सम्भाविता गृह्यते धर्मिग्राहकमानात् । तथा च तद्धितनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकं प्रातिपदिकत्वं, तदवच्छिन्नोद्देश्यताकतद्धितप्रत्ययरूपकार्यं, तत्र कर्त्तव्ये विभक्तेरविद्यमानत्वाद्विभक्तिव्यवधानेऽपि तद्धितोत्पत्त्या औपगवादिसिद्धिः, लुग्विधानञ्च चरितार्थम् । एवञ्च तद्धितनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकं युष्मच्छब्दत्वमस्मच्छब्दत्वं, तदवच्छिन्नोद्देश्यताकं 'युवावौ द्विवचने' इतिसूत्रं, तस्मिन् कर्त्तव्ये ओस्विभक्तेरविद्यमानवद्भावान्न यौष्माकीण इत्यादौ युवाद्यादेशः; तद्धितपरत्वेन सम्भावितत्वस्य दानान्न युवयोरित्यादावविद्यमानवद्भावः । तथा च न फलभेद इति बोध्यम् ।

नन्वेवमपि युष्मकदिति स्थिते 'अकज्विपये नायन्न्याय' इत्युक्तेः साकचो युष्माकादेशे यौष्माकीणः दकारस्याकङि यौष्मकाकीणः इति फलभेद इति चेत्—न, 'अनाप्यक' इति धर्म्मिग्राहकमानेन साकच्कानपहारके निर्दिश्यमानपरिभाषा न प्रवर्तते इत्येव कल्प्यते । युष्माकादेशस्तु न तथेति तत्र न्यायप्रवृत्त्या न साकचो युष्माकादेश इति—तदपि न, तावतापि युष्माकादेशाप्रवृत्तेराकङादेशस्य साकचोऽनपहारकत्वेन प्रवृत्त्या फलभेदस्य तदवस्थत्वात् ।

आकङि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेनान्त्यादेशत्वापत्तिः, अतस्तद्विधानम्, इदमेव च तज्ज्ञापकम्। यद्यपि

---

अत्र केचित्—धर्म्मिग्राहकमानादिदमुशब्दे एवाकज्विषये नायं न्याय इतिकल्पनेन युष्माकादेशस्याकङादेशस्य चानिर्दिश्यमाने साकचि प्रवृत्त्यभावेन फलभेदाभावः, अतएव 'भिन्धकीत्यत्राकचि धित्वं न प्राप्नोती'तिभाष्यमुपपन्नं, साकचो निर्दिश्यमानत्वाभावात्; किमः क इत्यस्यावृत्त्याककिमः साकचः कादेश इत्यर्थकशब्देन्दुशेखरोऽप्युपपद्यते इत्याहुः—तदपि न, परमयुवकाभ्यामित्यादौ कृताकचा समासे युवादेशानापत्तेः सामान्यतोऽकज्विषये निर्दिश्यमानपरिभाषाया अप्रवृत्तेरेव कल्पनात्। भिन्धकीत्यत्रेतिभाष्यादिविरोधस्तु परिहृतः पूर्वम्।

अत्र गुरुचरणाः—युष्मदस्मदवयवमकारात्परस्याकआदेश इत्यर्थकमादाक इति न्यासेनैव सिद्धौ युष्माकास्माकादेशयोर्वैयर्थ्येन ज्ञापकत्वं बोध्यम्, साकचोऽपि पक्षद्वयेऽपि यौष्माक इत्यादिसिद्धेरित्याहुः।

ननु 'अजादेर्द्वितीयस्ये'त्यस्य 'एकाचो द्वे प्रथमस्ये'त्येतदपवादत्वेऽपि तत्समानदेशत्वाभावेन नात्र शास्त्रे 'उत्सर्गसमानदेशा' इति न्यायाश्रयणमिति चेत्—न, मपर्यन्तानुवृत्तिज्ञापकतापरभाष्यप्रामाण्येन तन्न्यायस्यावश्याश्रयणीयत्वात्। उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकाधिकरणपर्य्याप्तोद्देश्यतावच्छेदककत्वं यत्रापवादशास्त्रे तद्विषयकत्वस्य धर्म्मिग्राहकमानेन न्याये कल्पनेनादोषात्। उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकप्रथमैकाच्त्वाधिकरणपर्याप्तत्वस्य द्वितीयैकाच्त्वेऽभावात्।

इदमेव च तज्ज्ञापकमिति—युष्माकास्माकादेशविधानमेवोत्सर्गसमानदेशा अपवादा इत्येतज्ज्ञापकमित्यर्थः। विरोधे बाधक-

विरोधे बाधकत्वमिति वार्त्तिकमतेऽयं न्यायः, भाष्यकारस्तु विनापि विरोधं सत्यपि सम्भवे बाधकत्वमिच्छतीत्यनभिहित-सूत्रस्थकैयटरीत्या नायं नियमः, तथापि युष्माकाद्यादेशविधान-ज्ञापित उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः। एतद्भाष्य-मपि तत्स्वीकारे मानम्। एवञ्च मपर्यन्तानुवृत्तिस्त्वत्कृतमित्या-दौ मपर्यन्तस्यादेशविधानार्था। तत्र चान्तरङ्गत्वात्त्वमावित्येव सिद्धे व्यर्था सैतज्ज्ञापिका। ज्ञापिते त्वस्मिन्नेतद्विषये त्वादी-नामप्राप्त्या तदपवादत्वाभावेन मपर्य्यन्तस्यैवादेशार्थं सा चरि-तार्थेति तदाशयः।

---

त्वमिति—एकस्य द्विकार्ययोगरूपविरोध इत्यर्थः। अयन्न्याय इति—उत्सर्गसमानदेशा अपवादा इत्यर्थः। विनापि विरोधमि-ति—एकस्य द्विकार्ययुक्तत्वरूपविरोधं विनापीत्यर्थः। सत्यपि सम्भव इति—उक्तविरोधाभावेऽपीत्यर्थः। अतएव भवेदित्यादा-वियादेशस्य परदीर्घबाधकत्वं, द्वितीयैकाचो द्विर्वचनं प्रथमैकाचो द्विर्वचनस्य बाधकं, सर्वेषामित्यादौ सुटो नुड्बाधकत्वम्। नाय-न्नियम इति—फलितो नास्तीत्यर्थः। तथापीति—फलितत्वाभा-वेऽपीत्यर्थः। उत्सर्ग इति—उत्सर्गसमानदेशा अपवादा इत्यर्थः। स्वीक्रियत एवेति। भवेदित्यादौ व्यभिचारवारणन्तूक्तरीत्या बोध्यम्। प्रकृते न दोष इति—न मपर्यन्तानुवृत्तिज्ञापकत्वासङ्गति-रित्यर्थः। एतद्भाष्यमपीति—मपर्यन्तानुवृत्तिज्ञापकतापरभाष्यम-पीत्यर्थः। अपिशब्दाद्युष्माकाद्यादेशः। एवञ्चेति—उत्सर्गसमान-देशा इत्यस्य स्वीकारे चेत्यर्थः। त्वत्कृतमित्यादाविति—पूर्वं वि-भक्तिलुकि त्वमावेकेत्यस्याप्रवृत्तेरिति भावः।

यत्तु हरदत्तेनान्तरङ्गप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्यन्तासम्भवेन तदनुवृत्तिर्व्यर्था सती ज्ञापिकेत्युक्तम्—तन्न, अन्तरङ्गाणामप्यपवादबाध्यत्वेन तद्विषये तदप्रवृत्तेः।

वस्तुत इदं ज्ञापकं वार्त्तिकरीत्यैव, भाष्यरीत्या तु वाचनिक एवायमर्थ इत्याहुः।

इयं 'सुपो धातु'इति लुग्विषयैवेति केचित्। 'एङ्ह्रस्वात्सम्बुद्धेः'-'न यासयो'रितिसूत्रस्थाकरप्रामाण्येन लुङ्मात्र-

अन्तरङ्गप्रवृत्ताविति—त्वमसयोः प्रवृत्तावित्यर्थः। व्यर्था सतीति—त्वादेशे मपर्यन्तासम्भवात् ममादेशे व्यावर्त्याभावाच्चेति भावः। तद्विषये तदप्रवृत्तेरिति—'प्रत्ययोत्तरपदयोश्चे'त्येतद्विषये 'त्वममौङसी'त्यस्याप्रवृत्तेरित्यर्थः। युष्माकास्माकादेशविधानं न ज्ञापकं, ज्ञापितेऽपि स्वांशे चारितार्थ्याभावात् तस्मिन्नणि चाकञ्नेकवचन इतिन्यासेनैव सिद्धेरिति न युक्तं, यथास्थितन्यासापेक्षयाऽस्य न्यासस्यालघुत्वात्।

वस्तुत इति। वार्त्तिकमते एकस्य द्विकार्ययोगरूपविरोधे एव बाध्यबाधकभावादुत्सर्गसमानदेशा इत्यस्य फलितत्वेऽपि भाष्यमते तादृशविरोधाभावेऽपि बाध्यबाधकभावाभ्युपगमेन फलितत्वाभाव इति। यदि चोक्तन्यासस्य गुरुत्वान्न तेन स्वांशे चारितार्थ्याभाव इति विभाव्यते, तर्हि ज्ञापकसिद्ध एवायमन्तरङ्गानपीति न्यायः। अतएव भवतादित्यत्रानेन न्यायेन तातङादेशं बाधित्वा हेर्लुकमाशंक्य ज्ञापकसिद्धस्यासार्वत्रिकत्वेन समाहितं शब्देन्दुशेखरे। अतएवारुचेराहुरित्युक्तम्।

इयं सुपो धात्विति। धर्मिग्राहकमानादिति तद्भावः। आकरेति—भाष्यकैयटेत्यर्थः। तथा च ज्ञापकं सामान्यापेक्षमेवेति

विषया । आद्ये हे त्रपु इत्यादावनेन न्यायेन लोपं बाधित्वा लुग्भवतीति भाष्ये उक्तम् । अन्त्येऽन्तरङ्गांश्च विधीन् सर्वोऽपि लुग्बाधते न तु सुब्लुगेव । अतएव 'सनीस्रंस' इत्यादौ न-लोपो न भवति । पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादावेकादेशात् प्रागेव टापो लुक्, अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयट उक्तम् । एतद्विरोधात् 'तद्राजस्ये'तिसूत्रे कैयटेनोक्तम्—अङ्गानतिक्रान्तोऽत्यङ्ग इत्यत्र सुपो लुकि बहुवचनपरत्वाभावात 'तद्राजस्ये'तिलुक् न स्यादिति-

---

बोध्यम् । अनेन न्यायेनेति—अन्तरङ्गानपीतिन्यायेनेत्यर्थः । एतद्भाष्यमप्यपिशब्दघटितपाठे मानम् । अतएव सनीस्रंस इति—अन्तरङ्गमपि नलोपमनेन न्यायेन बाधित्वाऽचियङोलुक् ततो 'नलुमते'तिनिषेधान्नलोपो नेत्यर्थः । अन्यथेति—सुब्लुक एव बलवत्त्वबोधने इत्यर्थः । कृतैकादेशस्येति—अस्य अन्तरङ्गत्वादित्यादिः । एतद्विरोधादिति—प्रदर्शितेन टाब्लुको बलवत्त्वबोधनतात्पर्यकेण कैयटेन विरोधादित्यर्थः । लुग् न स्यादिति । अयम्भावः—'तद्राजस्य बहुषु तेनैवास्त्रियामि'तिसूत्रस्य बहुष्वर्थेषु विद्यमानस्य तद्राजसंज्ञकप्रत्ययस्य लुक्, न तु स्त्रियामित्यर्थः । तत्र बहुषु इत्यस्य बहुवचने परे इत्यर्थे भाष्यकारेणोक्तं अङ्गान् अतिक्रान्तोऽत्यङ्ग इत्यत्र पदावधिकान्वाख्याने अति सु अङ्ग अण् अस् इति स्थिते तद्राजलुक एकपदापेक्षत्वेनान्तरङ्गत्वम्, अपरनिमित्तकत्वेन सामासिकलुकोऽप्यन्तरङ्गत्वमित्यन्तरङ्गत्वे समाने परत्वान् सामासिकलुकि 'न लुमते'तिनिषेधेन प्रत्ययलक्षणाभावेन बहुवचनपरत्वाभावात्तद्राजलुग्न स्यादिति । तत्र कैयटेन इदमा-

शङ्कापरभाष्यव्याख्यावसरे अन्तरङ्गानपीतिन्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्क्य सुब्लुक एवानेन बलवत्त्वं बोध्यत इति तत् प्रौढ्येति द्रष्टव्यम् । लुगपेक्षया लुको बलवत्त्वस्य वक्तुमशक्यत्वादिति तदाशङ्कासमाधानं वक्तुं युक्तम् ।

अनेन न्यायेनान्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजक-

---

शङ्कितम्—अन्तरङ्गानपीत्यादि । अयं लुगिति—तद्राजलुगित्यर्थः । तथा च बहुवचने परे इत्यर्थेऽपि न दोष इति भावः । पुनस्तेनैव समाहितं—सुब्लुक एवेति, न तु लुग्मात्रस्येत्यर्थः, धर्म्मिग्राहकमानादिति तद्भावः । इयमुक्तिः पूर्वोक्तात् पञ्चखट्व इत्यत्रत्यकैयटाद्विरुद्धा, अतएवायं प्रौढिवादः, तदेतदुच्यते—प्रौढ्येति, अशुद्धमिति यावत् । नन्वेतत्समाधानस्यायुक्तत्वे शंका तिष्ठत्येव कैयटस्य, तस्याः किं समाधानमितिचेदाह नागेशः—लुगपेक्षयेति । धर्म्मिग्राहकमानात् लुगितरकार्यापेक्षयैव लुको बलवत्त्वमनया बोध्यते न तु लुगपेक्षयापीति तद्भावः । अन्तरङ्गनिमित्तविनाशकस्यैव लुको बलवत्त्वमित्यस्य वक्ष्यमाणत्वात् तद्राजलुकस्सामासिकलुग्निमित्तविनाशकत्वाभावेन लुगपेक्षया सामासिकलुगपेक्षया लुकः तद्राजलुकः बलवत्त्वमशक्यं वक्तुमित्यर्थ इति परे । तदाशंकासमाधानमिति—तस्य कैयटस्य आशंकायाः समाधानमित्यर्थः ।

अनेन न्यायेनेत्यादि । तत्र फलम्—अर्णुहि इत्यत्र तानादिकात्रण्धातोर्लोटस्सिपोह्यादेशे मध्ये उप्रत्यये तन्निमित्तकगुणात्पूर्वम् 'उतश्च प्रत्ययातसंयोगपूर्वादि'त्यनेन हेर्लुगनेन न्यायेन न, तत्र लुको गुणनिमित्तविनाशकत्वाभावात् । अन्तरङ्गत्वाद्गुणे कृते तु असंयोगपूर्वत्वाभावान्न हेर्लुगिति बोध्यम् । ननु गोमत्प्रिय इत्यादौ समासोत्तरं लुकः प्रवृत्त्या समासान्त प्रातिपदिकत्वाश्रयक-

समासादीनां च प्राबल्यं बोध्यत इति अन्यत्र विस्तरः ॥५२॥

नन्वेवं सोमेन्द्रेऽन्तरङ्गत्वादाद्गुणे पूर्वपदात् परेन्द्रशब्दाभावेन 'नेन्द्रस्य'इतिवृद्धिनिषेधो व्यर्थः, अन्तादिवद्भावस्तूभयत आश्रयणे निषिद्धः। किञ्च वृद्धिरप्यत्र न प्राप्नोति, अन्तादिवत्त्वोभयाभावेऽपि पूर्वान्तवत्त्वेन न्द्रशब्दस्यैकदेशविकृतन्यायेनोभयत आश्रयणे नान्तादिवदित्यस्याभावेन तदाश्रयणे चोत्तरपदत्वेऽपि

---

पदापेक्षत्वेनान्तरङ्गत्वाद्धलङ्यादिलोपः पूर्वं कस्मान्नेत्यत आह—तत्प्रयोजकसमासादीनाञ्चेति'। आदिना प्रातिपदिकत्वस्येति दिक् ॥ ५२ ॥

पूर्वपदात्परेन्द्रशब्दाभावेनेति—सोमेन्द्रशब्दयोस्समासे गुणे पूर्वपदस्य सोमशब्दस्येन्द्रशब्दस्य चाभावेन पूर्वपदात्परेन्द्रशब्दस्य वृद्धिर्नेत्यर्थकस्य 'नेन्द्रस्य परस्ये'त्यस्याप्राप्त्या वृद्धिनिषेधो न स्यादिति भावः। ननु एकादेशविशिष्टे सोमे शब्दे पूर्वान्तवद्भावेन पूर्वपदत्वमुपपन्नमिति चेत्—न, तथापि इन्द्रशब्दस्याभावेन पूर्वपदात्परेन्द्रशब्दस्याभावात्। ननु परादिवद्भावेनेन्द्रशब्दस्येन्द्रशब्दत्वमपि भविष्यतीति चेदाह—अन्तादिवद्भावस्त्विति। वस्तुतस्तु एकारान्ते पूर्वान्तवद्भावेन पूर्वपदत्वे तदेकारादावेव परादिवद्भावेन इन्द्रशब्दत्वेऽपि पूर्वपदात्परेन्द्रशब्दाभाव एवेति बोध्यम्। अन्तादिवत्त्वोभयाभावेऽपीति। अन्तादिवत्त्वोभयातिदेशे हि 'उभयत आश्रयणे नान्तादिवदि'तिनिषेधः प्रवर्त्तते। प्रकृते अन्तादिवत्त्वोभयाभावेन तन्निषेधस्याप्रवृत्तावपि वृद्धिर्न प्राप्नोति निमित्तसम्बन्धनाभावादिति हृदयस्थं हेतुं प्रकटयति, एकादेशविशिष्टे सोमे शब्दे पूर्वान्तवत्त्वेन पूर्वपदत्वेन न्द्रशब्दस्यैकदेशविकृतन्यायेन तदाश्रयणे उत्तरपदत्वातिदेशाश्रयणे उत्तरपदत्वेऽपि

तस्यानच्कत्वादेकस्यैकादेशेन परस्य नित्येन यस्येति लोपेनापहारात्। न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम्, उत्तरपदाद्यच्स्थानिकत्वाद् वृद्धेस्तद-

---

अनच्कत्वात् । तदेवोपपादयति—एकस्येति, आद्यस्येत्यर्थः । परस्य उत्तरस्य यस्येतिलोपेनापहारादित्यन्वयः । 'देवताद्वन्द्वे चे' त्यनेन हि पूर्वोत्तरपदयोर्घटकस्याचो वृद्धिर्विधीयते । पुनः प्रकारान्तरेण निमित्तसम्वलनमाशंक्य खण्डयति—न च परादिवद्भावेनेति । एकादेशविशिष्टस्येति—एन्द्रशब्दस्येत्यर्थः । मान्तस्यैकदेशविकृतन्यायेन पूर्वपदत्वमित्यपि योज्यम् । तत्सम्भव इति—वृद्धिप्राप्तिसम्भव इत्यर्थः । उत्तरपदाद्यच्स्थानिकत्वादिति । एतदुक्तम्भवति—केवलमुत्तरपदत्वन्तु अशास्त्रीयत्वान्नातिदेष्टुं योग्य, किन्तूत्तरपदाद्यच्त्वं परादिवद्भावेनानेयम्, तस्य शास्त्रीयाच्त्वघटितत्वेन शास्त्रीयत्वादिति प्रश्नाशयो वाच्यं, तस्य च वर्णमात्रवृत्तित्वेनातिदेशासम्भवस्तादूप्यानतिदेशादिति ।

ननु किमिदं ताद्रूप्यम् ? न तावद्वर्णमात्रवृत्तित्वं तत, खट्वाभिरित्यत्र टापा सहैकादेशविशिष्टखट्वाशब्दे पूर्वान्तवद्भावेनादन्तत्वमादाय ततः परस्य भिस ऐसापत्तेरदन्तत्वस्य वर्णमात्रवृत्तित्वाभावेनाताद्रूप्यत्वात्; नापि वर्णमात्रवृत्तिधर्म्मघटितत्वं तत, अदन्तत्वे स्वतः अत्त्वे च व्यपदेशिवद्भावेन वर्णमात्रवृत्तिधर्मघटितत्वं वोध्यमिति युक्तम, क्षीरपेणेत्यादावेकादेशविशिष्टे पेशब्दे पत्वायैकाजुत्तरपदत्वस्यातिदेशानापत्तेः तस्यापि तथाभूताच्त्वघटितत्वात्; न च तत्रैकाच्त्वस्य स्वतः सिद्धत्वादुत्तरपदत्वं पूर्वान्तवद्भावेनानीयते, तस्याताद्रूप्यत्वादिति वाच्यम; तस्याशास्त्रीयत्वेनातिदेशासम्भवात्; नाप्येकादेशस्थानिविशिष्टवर्णमात्रवृत्तिधर्म्मघटितत्वं तत्त्वं, वैशिष्ट्यञ्च स्ववृत्तित्वस्वस्थानि-

भावेनाप्राप्तेस्ताद्रूप्यानतिदेशात्; अन्यथा खट्वाभिरित्यादावपि पूर्वान्तवत्त्वेनादन्तत्वे भिस ऐस्त्वापत्तिरिति भाष्ये स्पष्टम्। अतएव पूर्वैषुकामशम इत्यादावन्तरङ्गत्वादाद्गुणे वृद्धिर्न स्यादित्याशङ्कितम्, तदेकदेशमात्रस्य विकाराभावाच्च।

---

कादेशावृत्तित्वोभयसम्बन्धेन, अच्त्वस्य स्वस्थानिकादेशवृत्तित्वेनादोपादित्यपि साधु, उत्तरपदाद्यच्त्वस्य वर्णमात्रवृत्त्यच्त्वघटितत्वेऽपि अच्त्वस्यैकादेशस्थानिभूतेन्द्रशब्दघटकेकारविशिष्टत्वाभावात् उत्तरपदाद्यच्त्वे विशिष्टधर्मघटितत्वस्याभावेन ताद्रूप्यत्वानापत्तेरिति चेत्, अत्रोच्यते—अच्त्वमादाय ताद्रूप्यत्वाभावेऽपि एकादेशस्थानी इकारस्तद्विशिष्टं निरुक्तोभयसम्बन्धेनोत्तरपदाद्यच्त्वमेव, तच्च वर्णमात्रवृत्त्यपि तद्घटितमपि व्यपदेशिवद्भावेन तदेवेति तदपि ताद्रूप्यमेवेति दिक्।

अन्यथेति। ताद्रूप्यस्याप्यतिदेश इत्यर्थः। भाष्य इति—अन्तादिवत्सूत्रस्थे भाष्ये इत्यर्थः। तत्र हि 'वर्णाश्रये अन्तादिवद्भावप्रतिषेधो वक्तव्यः, न वा अताद्रूप्यातिदेशादि'त्युक्तम्। अत्र ज्ञापकं 'षत्वतुकोरसिद्ध'इतिसूत्रे तुग्ग्रहणम्, अन्यथा अधीत्येत्यादावेकादेशस्य परादिवद्भावेन ह्रस्वत्वात्तुक्सिद्धेस्तद्वैयर्थ्यमेवेति। अतएवेति—ताद्रूप्यानतिदेशादेवेत्यर्थः। पूर्वेषु कामशम्याम्भव इत्यर्थेऽणि पूर्वमन्तरङ्गत्वादाद्गुणे एकारस्योत्तरपदाद्यच्त्वाभावेन 'प्राचो ग्रामनगराणामि'त्यनेन दिशःपरेषां नगरवाचिनां ग्रामवाचिनाञ्चाद्यचोऽणि परे वृद्धिरित्यर्थकेन वृद्धिर्न स्यादित्याशङ्क्य अनेन न्यायेन गुणात्पूर्वमेव वृद्धिः साधितेति भावः। ननु सोमशब्दस्यैकदेशविकृतन्यायेन पूर्वपदत्वम्, एन्द्रशब्दस्य तेनैवोत्तरपदत्वमानीय उत्तरपदाद्यच्त्वस्याथंमसाजमस्तत्वादवृद्धिः प्राप्तेत्यत आह—तदेकदेशेति। एकारूपविकारस्य पूर्वपरोभयैक-

तदुक्तं भाष्ये—इन्द्रे द्वावचौ एको 'यस्ये'तिलोपेनापहृतः, अपर एकादेशेन, ततोऽनच्क इन्द्रशब्दः सम्पन्नः तत्र कः प्रसङ्गो वृद्धेरिति; मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपातः। अत आह—

**पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न॥५३॥**

अत्र च 'नेन्द्रस्य' इति निषेध एव ज्ञापक इति 'अन्तादिवच्च'-'विप्रतिषेधे परमि'तिसूत्रयोर्भाष्ये स्पष्टम् ॥ ५३ ॥

---

देशविकारत्वात् तदेकदेशमात्रविकारविशिष्टं तदन्यवन्नेतिन्यायाकार इति भावः। अत्रैव प्रमाणमाह—तदुक्तमित्यादिना। निषेधस्य चारितार्थ्यमाशङ्क्य निराकरोति—मरुदादीति। पूर्वनिपात इति। 'अजाद्यदन्तं पूर्वम्'-'अभ्यर्हितञ्चे'तिसूत्रवार्तिकाभ्यामिति शेषः। सोमस्य तु सर्वोत्कृष्टशिवशिरसोह्यमानत्वादभ्यर्हितत्वेन पूर्वनिपातः, विष्णुशब्दस्येन्द्रशब्देन द्वन्द्वेऽपीन्द्रशब्दस्यैव पूर्वनिपातः, इन्द्रस्य सर्वदेवाधिष्ठातृत्वेनाभ्यर्हितत्वादिति न तत्र निषेधस्य चारितार्थ्याशा। इदमत्र बोध्यम्—परिभाषायां पूर्वपदमुत्तरपदञ्च वस्तुसन्निमित्तं यस्मिन् कार्ये तत्र कार्यं गृह्यते, न तु पूर्वपदत्वोत्तरपदत्वाभ्यां कार्यीयनिमित्ततायामाग्रहः, तेन परमाहमित्यादावन्तरङ्गादप्येकादेशात्प्रागेवानया परिभाषया 'स्वाहौ सा'वित्यनेनाहादेशः सिद्धः। नहि तत्र पूर्वपदत्वादिना निमित्ततास्ति। एकादेशपदेनापि सन्धिकार्यमात्रमुच्यते। अतएव रात्रिमटइत्यादौ 'रात्रेः कृति विभाषे'ति मुमः प्रागन्तरङ्गोऽपि यण् न। न च नाजानन्तर्यनिषेधेन निर्वाहः, तस्य जातासिद्धत्वविषयकत्वात्, प्रतिपदोक्तत्वान्मुम् इत्यस्यापि वक्तुं शक्यत्वाच्च ॥ ५३ ॥

नन्वेवमपि प्रधाय प्रस्थायेत्यादावन्तरङ्गत्वादिषु कृतेषु ल्यप् स्यादत आह—

अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ॥५४॥

'अदो जग्धि'रितिसूत्रे ति-कितीत्येव सिद्धे ल्यब्ग्रहणमस्या ज्ञापकमिति 'अदो जग्धि'रित्यत्र भाष्ये स्पष्टम् ॥५४॥

नन्वेवमियायेत्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात्सवर्णदीर्घत्वे तदसिद्धिरत आह—

---

अन्तरङ्गत्वादिति—पदद्वयापेक्षसमासापेक्षल्यबपेक्षयैकपदापेक्षस्य 'दधातेर्हि'रित्यादेरन्तरङ्गत्वादित्यर्थः। 'नल्यपी'तिसूत्राकरणलाघवात् प्रकृतिप्रत्ययमात्रनिमित्तकं कार्यं ल्यब्विषये न प्रवर्त्तत इत्येव ल्यब्ग्रहणेन ज्ञाप्यतामिति तु न वाच्यम्, अधीत्येत्यादौ तुकोऽप्यभावापत्तेः। क्त्वाश्रयानुबन्धकार्याणां ल्यब्विषयेऽप्रवृत्तिज्ञापनेऽपि अनुभूयेत्यादौ गुणनिषेधः प्रोह्येत्यादौ संप्रसारणं, प्रमथ्येत्यत्र नलोपश्च न स्यात्। तत्त्वं तु ल्यब्ग्रहणं व्यर्थं सत् स्वप्रवृत्तिविरोधिप्राप्तेर्बाधेन चारितार्थ्ये स्वप्रवृत्त्युत्तरप्राप्तिबाधे न समर्थमिति स्थानिवद्भावेन ल्यबुत्तरप्राप्तेत्त्ववारणाय 'न ल्यपी'त्यस्यावश्यकत्वमिति। अन्तरङ्गनिमित्तविनाशकस्यैव ल्यपः प्राबल्यं, तेन प्रपूर्वकादिष्धातोर्ण्यन्तात् क्त्वाप्रत्यये प्रेष्यगत इत्यादौ न गुणात्पूर्वं ल्यप्, अन्यथा णेर्गुणात् पूर्वं 'ल्यपि लघुपूर्वादि'त्यनेनायादेशापत्तेरित्यन्यत्र विस्तरः॥ ५४॥

इयायेत्यादाविति—आदिना इयेषेत्यादेस्संग्रहः। द्वित्वे कृते इति—दीर्घे कर्तव्ये द्वित्वस्य न बहिरङ्गासिद्धत्वं, 'नाजानन्तर्ये' इति निषेधात्। अतएव आदतुरूखतुरित्यादि सिद्धम्। अन्तरङ्गत्वादिति—वृद्धिगुणापेक्षयेत्यादिः। अत्र 'नाजानन्तर्ये' इति नि-

## वार्णादाङ्गं बलीयो भवति ॥ ५५ ॥

तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः ; 'अभ्यासस्यासवर्णे' इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्यां ज्ञापकम् ; तद्धीयतुरित्यादावियङादिव्याप्त्यर्थम् ; एतत्परिभाषाभावे त्वीयतुरित्यादावन्तरङ्गेण सवर्णदीर्घेण बाधात्तद्व्यर्थम् ; इयङुवङौ ह्यभ्याससम्बन्धिनिमित्तकत्वाद्बहिरङ्गौ ;

---

षेधो न, तस्य जातासिद्धत्वविषयत्वात्। वृद्धिगुणविधायकशास्त्रघटकाङ्गपदप्रयोज्यविषयताश्रयघटकः पर इकारस्तन्निष्ठविषयताप्रयोजकाच्पदघटितत्वं यथा दीर्घस्य तथा दीर्घविधायकशास्त्रघटकपूर्वपरयोरिति पदप्रयोज्यविषयताश्रयेकारद्वयसमुदायघटकपरेकारनिष्ठविषयताप्रयोजकाजादिपदघटितत्वेन वृद्धिगुणयोरप्यन्तरङ्गत्वं समानमिति तु न वाच्यं, विषयताप्रयोजकपदस्य सप्तम्यन्तस्यैव ग्रहणेन वृद्धिगुणयोरन्तरङ्गत्वाभावात्। वार्णादित्यस्य वर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यकादित्यर्थः। आङ्गमित्यस्य अङ्गत्वावच्छिन्नोद्देश्यकमित्यर्थः। तेनेति — वार्णादाङ्गमितिन्यायेनेत्यर्थः। 'असवर्णग्रहणमि'तिसूत्रमियर्त्तीत्यादौ चरितार्थमिति तद्भावः। तद्धीति—असवर्णग्रहणं हीत्यर्थः।

दीर्घापेक्षया इयङुवङोर्बहिरङ्गत्वमुपपादयति—इयङुवङौ हि अभ्याससम्बन्धिनिमित्तकत्वादिति—अभ्याससम्बन्धिभूतसमुदायाङ्गनिमित्तकत्वादित्यर्थः। एतदुक्तं भवति—इयङ्शास्त्रघटकाङ्गपदप्रयोज्यविषयताश्रय इइपिति समुदायः, तद्घटकपरेकारवृत्तिविषयताप्रयोजकसप्तम्यन्ताच्पदघटितत्वेन दीर्घस्यान्तरङ्गत्वमिति। न चेयङुवङोरपि दीर्घशास्त्रघटकपूर्वपरयोरित्येतत्पदप्रयोज्यविषयताश्रय इ-इ इति समुदायः, तद्घटकपरेकारवृत्तिविषयताप्रयोजक-

**न चेयङपवादः, येननाप्राप्तिन्यायेनेयतीत्यादिसकललक्ष्यप्राप्त-**

सप्तम्यन्ताच्चपदघटितत्वरूपान्तरङ्गत्वाविशेष इति वाच्यम्; स्वप्रयोज्यविषयताश्रयघटकत्व-स्वघटकपदप्रयोज्यविषयतापर्याप्त्यनधिकरणत्वोभयसम्बन्धेन बहिरङ्गशास्त्रघटकपदविशिष्टवृत्तिविषयताप्रयोजकसप्तम्यन्तपदघटितत्वस्यैवान्तरङ्गपदार्थत्वेनादोषात्।

यत्तु—प्राचीनमतेनैतद्ग्रन्थस्य सत्त्वेन तन्मते संज्ञाकृतबहिरङ्गत्वस्यापि सत्त्वेनाभ्याससंज्ञासापेक्षत्वेनेयङुवङोर्बहिरङ्गत्वमित्यभिप्राय इति—तन्न, दीर्घस्याप्यगादिसंज्ञापेक्षकत्वाविशेषात्।

केचित्तु—अभ्यासनिमित्तकत्वेनाभ्याससंज्ञोत्तरप्राप्तिमदियङाद्यपेक्षया अभ्याससंज्ञानपेक्षस्य दीर्घस्य पूर्वप्रवृत्तिकत्वेनान्तरङ्गत्वमित्याहुः—तन्न, हलादिः शेषोत्तरमेवोभयोः प्राप्तत्वेन द्वयोरप्यभ्याससंज्ञोत्तरप्राप्तिकत्वाविशेषात्।

केचित्तु—द्वित्वप्रयोज्यसंज्ञानिमित्तककार्याणां द्वित्वनिमित्तप्रत्ययाव्यवहितपूर्वत्वनिमित्तकत्वमिति 'ह्वः संप्रसारणमि'तिसूत्रारम्भसामर्थ्यात् कल्प्यते; तद्धि अजूहवदित्यत्र चङ्परणौ 'ह्वः संप्रसारणं' विदधदपि निरुक्तकल्पनाऽभावे 'अभ्यस्तस्य चे'त्यनेनैव तत्र संप्रसारणसिद्धौ व्यर्थं स्यात्; कल्पिते च तस्मिन् 'अभ्यस्तस्य चे'त्यस्य द्वित्वप्रयोज्याभ्यस्तसंज्ञानिमित्तकत्वेन द्वित्वनिमित्तभूतप्रत्ययाव्यवहितपूर्वत्वनिमित्तकत्वेन णिचा व्यवधानेनाप्राप्तेः सूत्रं सार्थकम्; अतएव ण्वुलन्तह्वायकशब्दप्रकृतिकक्यजन्तात्सनि जिह्वायकीयिषतीत्यादौ 'अभ्यस्तस्य चे'तिसम्प्रसारणम्; तथा चेयङादेरपि अतुल्निमित्तकत्वेन प्रकृतिप्रत्ययोभयापेक्षत्वेन बहिरङ्गत्वमित्याहुः।

न चास्मयणंमहणमीयतुरित्यादौ इ-इ-अतुनिर्निमित्ते यणदीर्घैकादेशौ प्रतिपक्षिविरचितमबाध्य 'दीर्घ इणः किती'त्यभ्यासस्य दीर्घं इत्यस्यणत्यिणो यणि च कृते स्थानिवद्भावेन प्राप्तयेत्तो

यणपवादत्वस्यैव निर्णयात्—इति प्राञ्चः ।

परे तु—एतत्परिभाषाभावेऽभ्यासस्येतिसूत्रमेव व्यर्थम्; निवृत्त्यर्थमस्त्विति वाच्यम, तक्रन्यायेनेयङं बाधित्वा जाते दीर्घे इयङ्प्रवृत्तेः ।

यणपवादत्वस्यैवेति । यथा 'कुप्वोः ःकःपौ चे'तिसूत्रं 'विसर्जनीयस्य स' इत्यस्यैव सकललक्ष्यप्राप्तस्य बाधकं, न तु 'शर्पुरे विसर्जनीय'इत्यस्येति भावः । ननु यणगुणयोरन्यतरत्वेन व्यापकत्वात्तयोर्यथा 'अकरसवर्ण'इति बाधकं तथा यण्दीर्घयोरुभयोर्बाधकमियङ्, तत्रान्यतरस्य सकललक्ष्यप्राप्तत्वाभावेन विशेषात् । अत्रत्यं तत्त्वमग्रे वक्ष्यते । न च इयर्त्तीत्यादौ ऋ-ऋ-ति इति स्थिते यणं तक्रन्यायेन बाधित्वा 'अर्तिपिपर्त्योश्चे'तीत्वे इ-ऋ-ति इति स्थिते यणः पुनरप्राप्त्या न तस्यापि सकललक्ष्यप्राप्तत्वमिति वाच्यम्; यणं बाधित्वाऽपवादत्वाद्दीर्घः प्राप्तः, तं बाधित्वा प्रतिपद्विधित्वादित्वं प्राप्तं, तदपि 'अभ्यासविकारेषु बाध्याः पूर्वं प्रवर्तन्त'इतिन्यायेन बाधित्वोत्सर्गभूतमुरदत्वं, तत इत्वे निष्प्रत्यूहं यणः प्राप्त्या सकललक्ष्यप्राप्तत्वोपपत्तेः ।

यत्तु—ऋ-ऋ-ति इति स्थिते 'सार्वधातुके'तिगुणः प्राप्तः, तं बाधित्वा परत्वाल्लघूपधगुणः, तं बाधित्वाऽन्तरङ्गत्वाद्यण्, तं बाधित्वा अपवादत्वाद्दीर्घः, तं बाधित्वा परत्वात्प्रतिपद्विधित्वाच्च 'अर्तिपिपर्त्यो'रितीत्वं, तदप्यभ्यासविकारन्यायेनोरदत्वं, तदपि बाधित्वा परत्वाद्ध्रस्वः,तमपि बाधित्वा पूर्वोपस्थितनिमित्तकत्वेन सार्वधातुकगुणः, तमपि तमपीतिचक्रकापत्तिरिति—तन्न, प्रतिपद्विधित्वादेव 'श्लौ'वितिद्वित्वं ततोऽनैमित्तिकत्वेन सर्वापेक्षयान्तरङ्गत्वादभ्यासविकारे बाध्याः पूर्वमितिन्यायेनेत्वापेक्षया च पूर्वमुरदत्वे प्रतिपद्विधित्वेनेत्वे यणप्राप्त्या चक्रकस्यासम्भवात् ।

न चेयायेयेपेत्यादौ चरितार्थम्, तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च 'द्विर्वचनेऽची'ति रूपातिदेशेनापहारे द्वित्वे कृते पुनः प्राप्ते गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात्सवर्णदीर्घापत्तेः; न चेयर्तीत्यादौ तच्चरितार्थम्, तावन्मात्रप्रयोजनकत्वे उरित्येव ब्रूयात्; य्वोरित्यनुवर्तते; इणो यणिति

---

ननु ईषतुरित्यादौ इकारांशे यण एव सकललक्ष्यप्राप्तत्वेन तदपवादत्वेऽपि दीर्घस्य तत्त्वाभावेन तदपवादत्वाभावेनान्तरङ्गत्वेन दीर्घस्यैव प्रवृत्त्याऽसवर्णग्रहणस्य वैयर्थ्येऽपि ऊखतुरित्यादावुकारांशे सकललक्ष्यप्राप्तदीर्घस्याप्यपवादत्वेन प्राप्तस्योवङोऽप्रवृत्तये आवश्यकत्वादसवर्णग्रहणन्न ज्ञापकमिति चेत्—न, उकारांशमात्रव्यावृत्त्यर्थत्वे अभ्यासस्यानावितिन्यासेनैव सिद्धे असवर्णग्रहणस्य वैयर्थ्येन ज्ञापकत्वमित्याशयात्।

रूपातिदेशेनापहारे इति। नन्वतिदेशेन अतिदिष्टधर्मज्ञानमेवाहार्यात्मकं भवति, न तु तद्धर्म्मविरुद्धस्थितधर्म्मस्यापहारो भवति, अतएवातिदिश्यमानधर्मविरुद्धधर्म्मप्रयुक्तकार्याभाव इत्येवोक्तं, न तु तद्विरुद्धधर्माभाव इति प्रकृते पूर्वस्थितधर्म्मापहारोक्तिः पुनर्गुणवृद्धिप्राप्तिश्चासङ्गतेति चेत्—न। रूपातिदेशस्थले वास्तविकमेव रूपन्तत्रोत्पद्यते। तदुत्पत्तिश्च पूर्वरूपसद्भावे न सम्भवति, विभिन्नयोरानुपूर्व्योरेकशब्दवृत्तित्वायोगादनुपलब्धेश्च। तस्मात् पूर्वरूपापहारं विना गत्यभावः। अतएव 'तृज्वत्क्रोष्टु'रित्यतिदेशे क्रोष्टुशब्दस्य क्रोष्टा क्रोष्टारावित्यादिरूपाणि भवन्ति। वस्तुतो रूपातिदेशस्थले तद्रूपविशिष्टादेश एव तात्पर्यमित्यस्यैव वक्तव्यत्वाच्च। चरितार्थमिति। नवर्णात्परत्वाभावात् दीर्घस्यानवकाशत्वेन बाधाद्यणश्च तत्राप्राप्तेरिति भावः। उरित्येव ब्रूयादिति—न च उरिति न्यासे अकार्ष्यर्त्यन्वाचीत्यस्य च सम्भवेन ऋवर्णान्ताङ्-

साहचर्याद्व्याख्यानाच्च ऋधातोरेव ग्रहणम्; अर्तेरिवर्णस्येयङित्यर्थः; अभ्यासस्यार्ताविल्यभ्यासस्यार्तेरिति वा गुरुत्वान्न युक्तम् ; न च ए-ऐ-ओ-औशब्देभ्य आचारक्विबन्तेभ्यो लिटीयङाद्यर्थं तत्सूत्रमावश्यकं, तथा ओणृधातोर्ण्वुलन्तादिच्छार्थक्यजन्तात्सन्युवोणकीयिपतीत्याद्यर्थमावश्यकमिति वाच्यम्, षाष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात्, अन्त्ये

---

स्याचि परे इयङित्यर्थे कर्त्तारावित्यादावियङापत्त्या फलभेद इत्यत आह—ऋधोरिति । तथापि ऋकारस्य य इकारस्तस्येयङित्यर्थे ऋकारेकारयोः स्थान्यादेशभावसम्बन्धस्यैव सम्भवेन इयर्तीत्यत्रोरदत्वे एवोक्तरीत्या 'अर्त्तिपिपर्त्योश्चे'त्यस्य प्रवृत्त्या ऋकारस्थानिकेकारस्याभावादियङ् न स्यादरियर्त्तीत्यादेरसिद्ध्यापत्तेश्चेत्यत आह—इणो यणिति । सूत्रान्तरसाहचर्यस्यादर्शनादाह—व्याख्यानादिति—'न ह्येकमुदाहरण'न्यायेन सूत्रस्य ज्ञापकत्वप्रदर्शकभाष्यमूलकादचिण्णुधात्वित्यतो धातुग्रहणानुवृत्तिमूलकाद्वा व्याख्यानादित्यर्थः ।

पाष्ठेति—'दाश्वानि'तिसूत्रस्थेत्यर्थः । तत्र हि निरुक्तपरिभाषाज्ञापनसमये 'अभ्यासस्यासवर्ण'इत्यस्येयर्त्तीत्यत्र चारितार्थ्यमाशंक्य 'न ह्येकमुदाहरणमि'त्यादिना समाहितम। उक्तस्थले चारितार्थ्यसम्भवे तदसङ्गतिः स्पष्टैवेति भावः । प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच् इति वक्तव्यमित्यारम्भप्रत्याख्यानयोः फलैक्यायापि एऐओऔण्तेभ्य आचारक्विपोऽनभिधानं बोध्यम् । 'इजादेश्च गुरुमतोऽनृच्छ'इत्याम तु न, अनृच्छइतिपर्युदासेनानतिदिष्टगुरुमत्त्वस्यैव तत्र ग्रहणादिति केचित् । कटीत्यत्र प्रश्लिष्टस्य ईधातोरयाञ्चकारेत्युदाहरणात्तादृशसाहचर्यानाश्रयणमित्यन्ये । द्वित्वे

द्वितीयद्विर्वचनस्यैव सत्त्वेन त्वदुक्तप्रयोगस्यैव दुर्लभत्वात् ;

---

एएइत्यादि स्थिते इदानीं परिभाषाया अभावेनान्तरङ्गत्वाद् ह्रस्वम्बाधित्वाऽयादेशादेरेव प्रवृत्त्या तेषु चारितार्थ्यासम्भव इति परे। अतएव इण्धातोर्लिटि द्वित्वात्पूर्वमपरनिमित्तकत्वेनान्तरङ्गत्वाद् थलि परत्वाद् गुणे द्वित्वे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवत्त्वाप्रवृत्तौ इएथेति स्थिते सूत्रं चरितार्थमित्यपास्तम्, तत्रापि ह्रस्वं बाधित्वाऽन्तरङ्गत्वादयादेशस्यैव प्रवृत्तेः। **अन्त्ये द्वितीयद्विर्वचनस्यैवेति**—नामधातावपि अजादेस्तु आद्येतरस्येत्युक्तत्वेनाद्येतरस्यवैकाचो द्वित्वमिति भावः। आद्यैकाचो द्वित्वे तु ओण्ओण् इतिस्थिते 'ह्रस्वः' 'हलादिः शेष' इत्यनयोः प्राप्तौ परमपि हलादिः शेषम् 'अभ्यासविकारे बाध्यबाधकभावो ने'त्यनेन बाध्याः पूर्वं प्रवर्तन्त इत्यर्थकेन बाधित्वा ह्रस्वे हलादिः शेषे इयङर्थं चरितार्थं स्यादिति भावः।

अत्रेदं बोध्यम्—'हलादिःशेष' इत्यस्य यदि अभ्यासस्य आदिभूतं हलमुद्दिश्य शेषविधायकत्वमादीतरहलो निवृत्तिश्च फलिता, तर्हि आटतुरित्यादौ उद्देश्याभावेनाप्रवृत्तौ टकारनिवृत्तिर्न स्यात्। इतरनिवृत्तिपूर्वकस्वस्थितिरूपशेषविधाने गौरवञ्च। तस्मादभ्यासावयवस्यादीतरस्य हलो निवृत्तिरेव विधीयते। तावतैवादिहलस्थितिस्सिद्धैव बोधिता स्यात् सति सम्भवे। आटतुरित्यादौ तु अन्त्यहलो निवृत्तिमात्रमादिहलस्थितेरभावात्, पपाचेत्यादौ तु पचो द्वित्वे चकारस्यानेन निवृत्त्यपेक्षया लाघवाद्धलादेरजन्तस्यैवैकाचो द्वित्वतात्पर्यबोधनद्वारैव चकारनिवृत्तिबोधनम्। तथा चाजाद्यनेकाज्धातौ आदिभूतादचः परस्य द्वितीयस्येति, नामधातावजादेस्तु आद्येतरस्येति चैतत्फलितमेव। तेन नामधातौ मध्यस्थस्याप्येकाचो हलादेरजन्तस्यैव द्वित्वमिति स्थितम्। तेन मनश्-

एवं च सम्पूर्णसूत्रस्य ज्ञापकता युक्ता ; यद्यपि भाष्ये यदयम् 'अभ्यासस्यासवर्ण' इत्यसवर्णग्रहणं करोतीति ग्रन्थेनासवर्णग्रहणस्यैव ज्ञापकता लभ्यते, तथापि न ह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवतीति तदुपपादनग्रन्थेन सम्पूर्णसूत्रस्यैव ज्ञापकता लभ्यते ; अग्रेऽपि 'नैतदस्ति ज्ञापकम्, अस्त्यर्थमेतत्स्यादि'त्यनेन सूत्रसार्थक्यमेव दर्शितम्, असवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्व्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात्; न चाकृतव्यूहपरिभाषयेयेपेत्यादौ सवर्णदीर्घाप्राप्तिः, यदि दीर्घो न स्यात्तर्हि गुणः स्यादिति सम्भावनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं सम्पूर्णसूत्रस्य ज्ञापकतेति वाच्यम्,

---

शब्देन ओणकशब्दस्य समासे मन ओणकीयियिपतीत्यादौ णशब्दस्यैव द्वित्वेन चारितार्थ्यशंकापि न। एतेन मनश्शब्देन समासे ओणिरयस्याद्येतरत्वाद्दोषो दुर्वार इत्यपास्तम्। इयेपिथेत्यादाविप्धातोर्लिटि थलीडागमे कृते गुणस्याच्पर्याप्तनिमित्तताकत्वाभावेन 'द्विर्वचनेऽची'त्यस्याप्रवृत्त्या परत्वाद्गुणे द्वित्वे हलादिश्शेषे ह्रस्वे सूत्रं चरितार्थमित्यपि न, ह्रस्वापेक्षयाऽन्तरङ्गत्वाद्यादेशस्यैव पूर्वं प्रवृत्तेः। हलादिश्शेषात् पूर्वमेव 'अभ्यासविकारे बाध्यबाधकभावो ने'त्यनेन ह्रस्वप्रवृत्तौ ततो हलादिश्शेषे सूत्रं चरितार्थमेवेति चेत्—उक्तरीत्या एमात्रस्य द्वित्वेनायादेशस्यैव प्रवृत्तिरिति बोध्यम्।

एवञ्चेति—इतिकरणेनेयर्तीत्यस्य सिद्धौ चेत्यर्थः। इयेपेत्यादाविति—आदिना इयायेत्यस्य संग्रहः। इयेपेत्यत्र गुणदीर्घयोः परस्परं निमित्तविनाशकत्वेनाकृतव्यूहेत्यस्याप्रवृत्तावपीयायेत्यत्र दीर्घस्य वृद्धिनिमित्तविनाशकत्वाभावेन दीर्घे परिभाषा-

तस्या असत्त्वात्, सत्त्वे वा एतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकबहिरङ्गविधेः प्राप्तिः तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च ; न चान्तरङ्गत्वाद् दीर्घेऽपीयायेत्यादौ पूर्वान्तवत्त्वेनाभ्यासत्वादिवर्णत्वाच्च णल्यसवर्णे इयङ्विधानेनेदं सूत्रं चरितार्थं, न च 'अचि श्नु' इत्यनेन सिद्धिः, वृद्धिबाधनार्थत्वात् इति वाच्यम्, प्रत्यासत्त्याऽसवर्णपदेनाभ्यासोत्तरखण्डसम्बन्ध्यसवर्णाच एव ग्रहणात्, शास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्चेत्याहुः।

सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्यित्व एव।

---

प्रवृत्तेर्बाधकाभाव इति बोध्यम्। एतद्भाष्येति—ज्ञापकपरभाष्येत्यर्थः। यत्रान्तरङ्गकार्येति। प्रकृते न तथा, द्वित्वात्पूर्वमपि गुणस्य प्राप्तेः। प्रत्यासत्त्येति—उत्तरखण्डपूर्वस्यैवाभ्यासत्वेनाभ्यासकार्यसान्निध्यस्योत्तरखण्डे सत्त्वादिति भावः।

धर्मिग्राहकमानादिति—समानकार्यित्वं धर्म्मः, परिभाषा धर्म्मी, तद्ग्राहकं बोधकं, मानं प्रमाणम् 'अभ्यासस्यासवर्णे'-इतिसूत्रं, तस्मादित्यर्थः। तद्विषये तथैव सत्त्वादिति भावः। समानकार्यित्व एवेति—समानस्थानिताकत्व एवेत्यर्थः। तत्त्वञ्च वार्णशास्त्रीयस्थानितासमानाधिकरणस्थानिताकत्वमाङ्गशास्त्रे, अयेयायेत्यादाविण्धातोर्लिटि तस्य णलादेशे द्वित्वे इइअइतिस्थिते दीर्घशास्त्रीयस्थानिता परेकारनिष्ठा तत्समानाधिकरणस्थानिता वृद्धिनिरूपिता तन्निरूपकत्वं वृद्धिशास्त्रस्येति समन्वयः। पर्याप्त्यनिवेशाद्दीर्घीयस्थानितासमुदायनिष्ठा वृद्धिशास्त्रीयस्थानिता परेकारनिष्ठेति समानस्थानिकत्वाभाव इत्यपास्तम्। ननु त्वं स्त्रीत्यत्र

यत्तु समाननिमित्तकत्वरूपसमानाश्रयत्व एवैषेति—तन्न,

त्व-अट्-अमिति स्थिते अन्तरङ्गत्वादतो गुणे कृते टिलोपेनादन्तत्वाभावान्न टाविति कौमुदीग्रन्थासङ्गतिः, लोपीयस्थानितापररूपीयस्थानितयोरपर्य्याप्त्याऽकारनिष्ठत्वेन समानस्थानिताकत्वेनानया परिभाषया पूर्वं टिलोपे टापो दुर्वारत्वादिति चेत्—न, वार्णशास्त्रीयस्थानितावच्छेदकपर्य्याप्त्यधिकरणपर्याप्तस्थानिताकत्वस्यैव समानस्थानिताकत्वपदार्थतयाऽदोषात्, इयायेत्यादौ दीर्घीयस्थानितावच्छेदकपरत्वपर्याप्तिः परेकारे तत्रैव वृद्धिस्थानितापर्याप्तेरसत्त्वात्, त्वमित्यादौ पररूपीयस्थानितावच्छेदकपरत्वपर्याप्त्यधिकरणे परेऽकारे लोपस्थानितापर्याप्त्यभावाच्च, हलन्तादेशस्यैव भाष्यसम्मतत्वाच्च, 'शेषे लोप' इतिसूत्रस्थशेषग्रहणेन परिभाषाया अप्रवृत्तिज्ञापनाच्च। स्थानितायाः निवेशादुच्छति युच्छतीत्यादावन्तरङ्गत्वात्पूर्वं तुकि लघूपधत्वाभावेन गुणाभावः। कार्यित्वनिवेशे तु तुग्गुणयोस्समानकार्यित्वेन तुकः पूर्वमनया गुणापत्तेः गानइत्यत्र गाअआनेति स्थिते अन्तरङ्गत्वाद्दीर्घे मुको प्राप्त्या गानइति रूपस्यैव सत्त्वेनादादिकादविशेषः कौमुद्युक्त उपपद्यते, कार्यित्वनिवेशे दीर्घेण मुकस्समानकार्यित्वादनया मुगागमे विशेषापत्तेः। चच्छावित्यादौ छाछाअ इति स्थितेऽन्तरङ्गत्वादभ्यासाऽऽकारस्य तुक्यजन्ताभ्यासत्वाभावेन ह्रस्वो न स्यादित्याशंक्य अभ्यासावयवस्याचो ह्रस्व इति वैयधिकरण्यान्वयकरणपरभाष्यमत एव सङ्गच्छते, अन्यथाऽनया पूर्वं ह्रस्वस्यैव प्रवृत्त्या तद्विरोधापत्तिः। समानकार्यित्वविषयत्वादेव गाते इत्यादौ गाअआते इति स्थिते आङ्गादपि 'आतो ङित'इतिसूत्रात्पूर्वमन्तरङ्गत्वात्सवर्णदीर्घसिद्धिः। वारिणी इत्यादौ नुमः पूर्वमन्तरङ्गत्वाद्दीर्घापत्तिः, समानस्थानिकत्वाभावेन प्रकृतपरिभाषाया अप्रवृत्तेः; 'येन नाप्राप्त'न्यायेन नुमो बाधकत्वन्तु न, वारिणोरित्यादिसकलक्ष्य-

**ज्ञापितेऽपीयायेयेषेत्याद्यसिद्धेः, सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च ।**

प्राप्तयण्बाधकत्वस्यैव सम्भवादिति तु न युक्तम्; लक्ष्यानुरोधेन बाध्यसामान्यचिन्ताश्रयणेनोभयबाधकत्वात् । स्योन इत्यादौ सिउ-न इति स्थिते गुणं बाधित्वाऽन्तरङ्गत्वाद्यणिष्यते, तन्न स्यात्, अनया गुणस्यैव प्रवृत्तेरिति तु नाशंक्यं; वक्ष्यमाणरीत्या अस्या अनित्यत्वात् । ननु प्रष्टेत्यादौ ह्रस्वस्य तुक् छकारस्य शकार इत्यनयोस्समानकार्यित्वाभावेन प्रकृतपरिभाषाया अप्रवृत्त्या अन्तरङ्गत्वात् पूर्वं तुकि तस्य निवृत्तये सतुग्ग्रहणस्यावश्यकत्वेनानित्यत्वे न ज्ञापकमिति चेत्—न, अन्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यत इतिभाष्यादस्या अनित्यत्वात् । नन्वनित्यत्वाश्रयणस्यावश्यकत्वेन तेनैवातिप्रसङ्गभङ्गात्समानस्थानिकत्वविषयकत्वकल्पनानवकाश इति चेत्—न, असमानस्थानिकत्वेनाप्रवृत्तिस्थलानामनुगमेऽपि लाघवस्य सत्त्वात् ।

ज्ञापितेऽपीयायेत्याद्यसिद्धिरिति—इयायेत्यादौ परेकारनिमित्तकत्वं दीर्घस्य प्रत्ययनिमित्तकत्वं वृद्धेरिति तयोस्समाननिमित्तकत्वाभाव इति भावः ।

परे तु—आङ्गशास्त्रविशिष्टत्वं वार्णशास्त्रे समाननिमित्तकत्वम्; वैशिष्ट्यञ्च स्वीयस्थानितापर्याप्त्यधिकरणवृत्तित्व-स्वघटकसप्तम्यन्तपदप्रयोज्यविषयताश्रयघटकवृत्तित्वान्यतरसम्बन्धेन स्वविशिष्टविषयताप्रयोजकसप्तम्यन्तपदघटितत्वसम्बन्धेन; इयायेत्यादौ वृद्धिशास्त्रवैशिष्ट्यं दीर्घस्य यतस्तद्घटकाच्पदप्रयोज्यविषयताया वृद्धिनिरूपितस्थानितापर्याप्त्यधिकरणपरेकारवृत्तित्वम्; कारकेत्यादौ यण्शास्त्रीयाच्पदप्रयोज्यविषयताया वृद्धिशास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयताश्रयाकघटकाकारवृत्तित्वेनोभयोस्समाननिमित्तकत्वादियङं यणश्चान्तरङ्गमपि बाधित्वाऽऽङ्गं वृद्धिकार्यं सिद्धम्; स्योन इत्यत्र यणशास्त्रघटकसप्तम्यन्ताच्पद-

स्योन इत्यत्र तु वक्ष्यमाणरीत्याऽस्या अनित्यत्वादप्र-

---

प्रयोज्योकारनिष्ठविषयतायां गुणशास्त्रवैशिष्ट्याभावेन समाननिमित्तकत्वाभावेनाङ्गमपि गुणमन्तरङ्गत्वाद्बाधित्वा यणादेशः; ननु ऊखतुरित्यत्राङ्गत्वाद्ध्रस्वे कृते दीर्घे पूर्वान्तवद्भावेनाभ्यासत्वेऽपि लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाभावो भवति, तत्र दीर्घशास्त्रघटकसप्तम्यन्तपदप्रयोज्यविषयतायां ह्रस्वशास्त्रवैशिष्ट्याभावेन समाननिमित्तकत्वाभावेन परिभाषाया अप्रवृत्तावाङ्गमपि ह्रस्वमन्तरङ्गत्वाद्बाधित्वा दीर्घे ह्रस्वापत्तिरिति चेत्—न, सप्तम्यन्तपञ्चम्यन्तान्यतरपदस्य निवेशेन पञ्चम्यन्ताक्पदप्रयोज्याभ्यासवृत्तिविषयतायां ह्रस्वशास्त्रवैशिष्ट्यसत्त्वेनादोषात्; नन्वेवमपि यणशास्त्रस्य समाननिमित्तकत्वाभावेन तस्य ह्रस्वेनाबाधात् चक्रकापत्तिः, तथा हि उ-उख्-अतुसिति स्थिते यणमपवादत्वात्प्रबाध्य दीर्घः प्राप्तस्तमाङ्गत्वाद्बाधित्वा ह्रस्वः प्राप्तस्तमप्यन्तरङ्गत्वाद्बाधित्वा यण् प्राप्तस्तं दीर्घ इत्यावर्त्तनात् तदर्थं षष्ठ्यन्तपदस्याप्यन्यतमत्वेन प्रवेशे स्योनइत्यत्रापि यणो गुणेन बाधापत्तिरिति चेत—एतदाशयेनैव तत्पक्षस्य दूषितत्वात्; वस्तुत ऊखतुरित्यत्र उख्-उख्-अतुसिति स्थिते अभ्यासविकारे बाध्यबाधकभावाभावेन हलादिशेषह्रस्वयोस्समकाले प्रवृत्तेस्तस्मिन काले न दीर्घप्राप्तिः; खकारेण व्यवधानात्तदुत्तरं दीर्घे पुनर्लक्ष्ये लक्षणन्यायेन ह्रस्वाप्रवृत्त्या न दोषः; एतदाशयेनैव कौमुद्यां परत्वादित्युक्तिः; दीर्घस्य परकालिकप्रवृत्तिमत्त्वादिति तस्या अर्थ इति समाननिमित्तकत्वं निर्दुष्टमेव—इत्याहुः।

सिवेर्नप्रत्यये नित्यत्वाद्गुणात्पूर्वमूठि सिऊन इति स्थिते गुणमन्तरङ्गत्वाद्बाधित्वा यण् भवति, स न स्यात्, आङ्गत्वाद्गुणस्यैव प्राप्तेरित्यत आह—स्योन इत्यत्रेत्यादि। स्थानिवत्त्वेनेति। ननु

वृत्तौ गुणादन्तरङ्गत्वाद्यणादेशः। न चैवमपीयायेत्यादावियङ् दुर्लभः, तत्र कर्त्तव्ये वृद्ध्यादेः स्थानिवत्त्वेनासवर्ण इति प्रति-

---

इयायेत्यत्र इ-ऐ-अ इति स्थितेऽन्तरङ्गत्वादायादेशे इ-आयेति स्थिते इयङ् भवति, तत्र स्थानिवद्भावेनायादेशे इबुद्ध्या सवर्णाच्परत्वेनेयङोऽप्राप्तिस्तेऽभिमता, सा न युक्ता, आयादेशस्थानिनि वृद्ध्यादेशे इत्वस्याभावात्; न चैकारे प्रथमं स्थानिवद्भावेन सवर्णाच्त्वमानीय पुनरायादेशे स्थानिवद्भावेन सवर्णाच्त्वानयनमविवादमिति वाच्यं, लक्ष्ये लक्षणन्यायेन पुनः स्थानिवत्त्वाप्राप्तेः; अतएवैतिकेत्यादौ लक्ष्ये लक्षणन्यायेन स्थानिवद्भावद्वयाभावः स्त्रीप्रत्ययप्रकरणे शेखरोक्तस्संगच्छते, आयादेशेनैकारस्यापहारेण तत्र प्रथमं स्थानिवद्भावाप्राप्तेश्चेति चेत्, अत्रोच्यते— स्थानिवदित्यत्र स्थानिपदेन स्थानिस्थान्यपि गृह्यते। तथा चादेशः आयादेशस्स स्वस्थानिस्थानी इकारस्तद्वृत्तिसवर्णाच्त्ववान् स्यादितीयङादेशप्राप्तिः। अतएव सुनयिकेत्यादौ धात्वन्तत्वाद्यकारस्य 'धात्वन्तयकोस्तु नित्यमि'त्यस्य प्रवृत्तिः, अन्यथा नयरूपानुमानिकादेशे नीरूपस्थानिस्थानिगतस्य धातुत्वस्यातिदेशाभावे नित्येत्वानापत्तिः। नन्वेतिकेत्यादावेकस्थानिवद्भावेनैव टापा सहैकादेशः स्वस्थानी पररूपनिष्पन्नोऽकारस्तत्स्थानी वर्णद्वयात्मकस्तद्वत्त्यात्ततश्चेत्वं न स्यादिति चेत्—न, टापा सहैकादेशस्थानी पररूपात्मकोऽकारष्टावाकारश्चेति समुदायस्तत्स्थानित्वस्य कुत्राप्यभावेनादोषात्।

केचित्तु—'यूनस्ति'रितिनिर्देशादतिदेशविषये लक्ष्ये लक्षणन्यायो न प्रवर्तत इति ज्ञापनेनात्र स्थानिवद्भावद्वयप्राप्तिः, अन्यथा यु-उन इति स्थिते कृतस्य दीर्घैकादेशस्य स्थानिवद्भावेऽपि यु-उन इति बुद्धौ पूर्वरूपस्योक्तन्यायेन पुनः स्थानिवद्भावाप्राप्त्या

षेधादिति वाच्यम्, सूत्रारम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृत्तेः।
तच्च सामान्यापेक्षम्, अभ्यासकार्ये तदुत्तरखण्डाजादेशस्य

---

संप्रसारणपरत्वाभावेन निषेधाप्राप्त्या संप्रसारणे निर्देशासंगतिः, एतिकेत्यादौ तु न यासयोरितिज्ञापकात् त्यदाद्यकारेण जातपररूपस्य स्थानिवत्त्वं नेति कल्पनेनादोष इत्याहुः—तन्न, संप्रसारणस्थानिकपूर्वरूपस्य 'हल'इतिसूत्रारम्भसामर्थ्यात्सम्प्रसारणतुल्यत्वातिदेशेन पूर्वरूपेण पूर्वपरनिवृत्तिपूर्वकापूर्वस्यैकस्य बोधनापेक्षया लाघवेन परनिवृत्तिपूर्वकपूर्वस्थितेरेवाभ्यनुज्ञादानस्य युक्ततया च पुनः स्थानिवद्भावमन्तरेणैव निषेधप्रवृत्त्या निर्देशोपपत्तेः।

सूत्रारम्भसामर्थ्यादिति। ननु इयेथ-इयर्त्तीत्यादौ सूत्रस्य चारितार्थ्यम्, इणधातोर्लिटि सिपि थलि द्वित्वनिमित्ताचोऽभावेन 'द्विर्वचनेऽची'त्यस्याप्राप्त्या परत्वाद्गुणे एरूपस्य द्वित्वे ह्रस्वे तस्य स्थानिभूतादचः पूर्वत्वाभावेनोत्तरखण्डस्य स्थानिवद्भावाप्रवृत्तेः, इयर्त्तीत्यादौ गुणात्पूर्वमभ्यासस्येत्वेऽपि उत्तरखण्डस्य स्थानिवद्भावेऽप्यसवर्णाच्त्वस्याक्षतत्वाच्च; न चाभ्यासस्यानिकि अभ्यासस्याच्योरितिन्यासेनैवोपपत्तावभ्यासस्यासवर्ण इत्यस्य वैयर्थ्येन युक्तमेव ज्ञापकत्वमिति वाच्यं, तथा सति ज्ञापितेऽपि चारितार्थ्याभावेन ज्ञापनासम्भवादिति चेत्—न, अभ्यासस्याऽणि अभ्यासस्यानावितिन्यासेनैव सिद्धावसवर्णग्रहणस्य ज्ञापकत्वसिद्धेरप्रत्यूहत्वात्। इयर्त्तीत्यादौ स्थानिवद्भावेन ऋवृद्धावप्यणवत्वस्य इयेथेत्यत्र स्थानिवद्भावाप्राप्त्या स्वत एवाणिभन्नत्वस्येकारभिन्नत्वस्य च सत्त्वेनेयङुपपत्तेः। ज्ञापिते तु इयायेत्यादावणिभन्नत्वाभावादियङोऽभावापत्त्योस्तुरित्यत्रेकारभिन्नत्वेनोवङापत्त्या च चरितार्थमसवर्णग्रहणम्। गुरुचरणास्तु—इयेथेत्यादौ प्रतिपदोक्तत्वात्पूर्वं द्वित्वमेवेत्याहुः।

तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति। अतएवारतीत्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य 'ढ्रलोप'इतिदीर्घो दुर्लभ इत्यपास्तम्; दीर्घविधौ तन्निषेधाच्च। अरिर्यियादित्यत्र तु

---

अतएवेति—इयङादेशे कर्तव्ये न स्थानिवदिति विशेषापेक्षं विहायाभ्यासकार्य इत्यादिसामान्यापेक्षज्ञापनादेवेत्यर्थः। आरतीति। ऋधातोर्यङ्लुगन्ताल्लटो झेरदादेशे अभ्यासस्योरदत्वे रुकि च कृते उत्तरखण्डस्य यणि 'रोरी'तिलोपे दीर्घे रूपसिद्धिस्तत्रोक्तज्ञापनाभावे यणस्थानिवत्त्वेन रेफलोपनिमित्तरेफाभावेन 'ढ्रलोप' इतिदीर्घो न स्यादिति भावः। बहिरङ्गत्वेन यणोऽसिद्धत्वन्तु न, नाजानन्तर्य इति निषेधात्। रोरीत्येतदपेक्षयाऽपि यणो न बहिरङ्गासिद्धत्वं, तस्य त्रिपादीस्थत्वेन परिभाषाया अप्रवृत्तेः। वस्तुतस्तु स्थानिवद्भावेऽपि न क्षतिः, दीर्घविधौ हि रेफस्य रेफत्वेन न निमित्तत्वमपि तु रेफलोपनिमित्तत्वेन, तस्य च रेफाज्ञानेऽपि लोपदर्शनेन ऋकारे एव ज्ञानसम्भवेन दीर्घप्रवृत्तेरुपपादत्वात्। दीर्घविधौ तन्निषेधाच्चेति—न पदान्तसूत्रेण स्थानिवत्त्वनिषेधादित्यर्थः। न च तत्र दीर्घपदेन त्रैपादिकस्यैव ग्रहणम्, अतएव 'पूर्वत्रासिद्धे न स्थानिवदि'त्यवष्टभ्य वरेयलोपस्वरवर्ज्यं द्विर्वचनादीनां प्रत्याख्यानं सङ्गतम्, अन्यथा फलभेदापत्तेरिति वाच्यम, 'चिणणमुलो दीर्घोऽन्यतरस्यामि'तिसूत्रे 'मितां ह्रस्व'इत्यतो ह्रस्वग्रहणमनुवर्त्य तद्विकल्पेनैव सिद्धे दीर्घग्रहणसामर्थ्येन तत्रैतस्यापि ग्रहणावश्यकत्वेन वर्ज्यकोटौ दीर्घस्याप्युपलक्षणत्वेन दीर्घातिरिक्तानामेव द्विर्वचनादीनां प्रत्याख्यानात्। स्पष्टञ्चेदं 'चिण्णमुलो'रितिसूत्रे शब्देन्दुशेखरे। तत्रस्थकौमुदीग्रन्थस्तु चिन्त्य एवेत्यपि तत्रैव स्पष्टम्। न च 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदि'त्युक्तत्वादिदं न युक्तमिति वाच्यम, तत्र दीर्घग्रहणस्य

स्थानिवत्त्वेनेयङ् भवत्येव, तस्य स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावात् ।

---

फलाभावात् । विव्यतुरित्यादौ 'उपधायाश्चे'त्यनेन दीर्घे कर्त्तव्ये यणः स्थानिवत्त्वनिषेधेन दीर्घस्तु न, प्रत्यासत्त्या धात्ववयवस्यैवेको दीर्घविधानेनाभ्यासोत्तरखण्डस्यैव धातुत्वेनाभ्यासावयवेको दीर्घाप्राप्तेः । अतएव 'क्विधौ सर्वत्र संप्रसारणिभ्यो ड वक्तव्य' इत्यनेन परिपूर्वाद्व्येञो डप्रत्यये डलोपे परिव्य इत्यत्रोपसर्गावयवेको न दीर्घः ।

अरियियादिति—अर्त्तेर्यङ्लुगन्ताल्लिङि द्वित्वे अभ्यासस्य रिगागमे रिङियङोः प्राप्तौ परत्वादुत्तरखण्डस्य रिङादेशे तस्य स्थानिवद्भावेनाभ्यासस्येयङ् भवति । स्थानिवद्भावस्यानेन निषेधस्तु न, अभ्यासकार्यसाधकत्वात् । यदि तु अन्तरङ्गत्वात्पूर्वमेव रिङादेशादियङ्, अतएव रिङादेशस्य स्थानिवद्भावाद्यलोपो न, पूर्वं रिङादेशे यकारस्य स्थानिभूतादचः पूर्वत्वाभावेन स्थानिवद्भावाभावेन यलोपापत्तेदुर्वारत्वात्; यलोपे बहिरङ्गासिद्धत्वन्तु न, अचोऽन्यानन्तर्यनिमित्तके अन्तरङ्गे इयङि कृते निषेधात् । इत्युच्यते—तदा प्रतिबन्धकीभूतत्वं न देयम् । अतएव कर्टावीत्यत्र प्रश्लिष्टादिधातोर्लिटोऽतुसि द्वित्वे इ-इ-अतुसिति स्थिते 'एरनेकाचि'तियणि इयतुरित्यत्र यणः स्थानिवद्भावेन नाभ्यासेकारस्य यण् । अचकाणदित्यादौ 'काण्यादीनाम्वे'ति ह्रस्वाभावे वृद्ध्यादेशस्य स्थानिवद्भावेन लघुपरत्वमादाय दीर्घसन्वद्भावौ न, स्थानिवद्भावस्यानेन निषेधात् । प्रतिबन्धकीभूतत्वनिवेशो तु नैतत्सिद्ध्येत; स्थानिवद्भावस्याभ्यासकार्य्यसाधकत्वात्, अभ्यासत्वावच्छिन्नोद्देश्यककार्याभावेनाद्यदोषाभावेऽपि द्वितीयस्य प्रसक्तेपत्वात्, अभ्यासत्वावच्छिन्नोद्देश्यताकत्वनिवेशेन दोषवारणा-

इयं चाङ्गसम्बन्धिन्याङ्ग एवेति 'स्वरितो वा' इति सूत्रे भाष्ये। तत्र हि कुमार्यै इत्यादौ यणुत्तरमाडुक्तः।

इयं चानित्या, 'च्छ्वो'रिति सतुङ्निर्देशात्। अन्यथाङ्ग-

---

पेक्षया निष्फलनिवेशाभावस्यैव युक्तत्वाच्च। अभ्यासकार्येत्यनुक्तौ तु नीधातोर्लिटि निन्यतुरित्यादावनेन निषेधादुत्तरखण्डाजादेशस्थानिवद्भावानापत्त्या 'अनिदिताम्' इति नलोपापत्तिः, तदुक्तौ तु नलोपस्याभ्यासकार्यत्वाभावान्न दोषः। उत्तरखण्डनिवेशाद्व्रश्चेत्यत्राभ्यासकार्ये संप्रसारणनिषेधे कर्त्तव्येऽभ्यासावयवोरदत्वस्य स्थानिवद्भावः। एतद्वचनफलन्तु अचीकमत अतूतवदित्यत्र दीर्घसन्वद्भावयोः कर्त्तव्यत्वे उत्तरखण्डाजादेशस्य ह्रस्वस्य स्थानिवद्भावाभावः।

अङ्गसम्बन्धिन्याङ्ग इति—अङ्गनिष्ठोद्देश्यताके अङ्गाधिकारस्थे कार्य्ये एवेयं परिभाषा प्रवर्तत इत्यर्थः। धर्म्मिग्राहकमानादिति भावः। कुमार्यै इत्यत्राङ्गत्वेऽप्यङ्गनिष्ठोद्देश्यताकत्वविरहान्न पूर्वमाडिति भावः।

अनित्येत्यादि। 'च्छ्वोश्शूडि'तिसूत्रे तकारोऽपि छकारात्पूर्वं प्रश्लिष्यते, तेन तुग्विशिष्टस्य छकारस्य प्रष्टेत्यादौ शकारः, अन्यथाऽन्तरङ्गत्वात् 'छे चे'तितुकि छकारस्य शकारेऽपि तकारश्रवणापत्तिः। न चाकृतव्यूहपरिभाषया न पूर्वं तुगिति वाच्यम्, तस्या असत्त्वात्। अनित्यत्वाभावे तु वार्णपरिभाषयैवान्तरङ्गादपि तुकः पूर्वमेव शकारे सतुग्निर्देशस्य वैयर्थ्यं स्पष्टमेव। न च समानस्थानिकत्वाभावात्परिभाषाया अप्रवृत्तेर्वैयर्थ्याभाव इति वाच्यम्, समानस्थानिकत्वस्याप्यनित्यत्वमूलकत्वात्। न च समानस्थानिकत्व एवेयमित्येव सतुग्निर्देशाज्ज्ञाप्यते इति युक्तम्; स्योन इत्यादौ यण्गुणयोस्समानस्थानिकत्वेनानया पूर्वं गुणस्य-

स्यात्पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः ॥ ५५ ॥

नन्वेवं सेदुष इत्यादौ क्वसोरन्तरङ्गत्वादिटि ततः संप्रसारणेऽपीटः श्रवणापत्तिरिति चेद्, अत्र केचित्—

अकृतव्यूहाः पाणिनीयाः ॥ ५६ ॥

न कृतो विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः; भाविनिमित्तविनाशे इत्यध्याहारः; बहिरङ्गेणान्तरङ्गस्य निमि-

---

त्तापत्तेः, चंच्छम्यत इत्यादावनया तुकः पूर्वं नुमः प्रवृत्तेरभावापत्तेश्च । अङ्गसम्बन्धिन्याङ्ग एवेत्यसङ्गतमेव, कुमार्यं इत्यादावस्या अनित्यत्वादेवाटः पूर्वमप्रवृत्तिसिद्धेः । अतएव ज्ञाने वारिणी इत्यादावाङ्गत्वादन्तरङ्गाभ्यामपि वृद्धिपूर्वसवर्णदीर्घाभ्यां पूर्वं श्यादेशः, अन्यथा श्यादेशस्याङ्गोद्देश्यकत्वाभावादेतस्या अप्रवृत्त्या पूर्वमप्रवृत्यापत्तेः । न च तस्य वैयर्थ्यं, हलन्ते चारितार्थ्यादिति दिक् ॥ ५५ ॥

नन्वेवमिति—पूर्वोपस्थितनिमित्तककार्य्यस्य मनुष्योऽयं प्रातरुत्थाय शरीरकार्य्याणि करोतीति लोकन्यायेन प्रथमं प्रवृत्तिवर्णने सतीत्यर्थः। क्वसोरन्तरङ्गत्वादिटीति—सद्धातोर्लिटः क्वसौ धातोर्द्वित्वैत्वाभ्यासलोपेषु सेद्वस् इत्यवस्थायामेव वलादित्वरूपपूर्वोपस्थितनिमित्तकस्येटः शस्प्रत्ययोत्पत्त्युत्तरप्रवर्त्तिष्यमाणसम्प्रसारणात्पूर्वं प्राप्तेरिति भावः । इटः श्रवणापत्तिरिति—तत्स्थानिकयणः श्रवणापत्तिरित्यर्थः । यणुद्धारकमिट एव श्रवणं वा बोध्यम् । केचिदिति—दीक्षितादय इत्यर्थः । अध्याहार इति । अन्यथा यथाश्रुतपरिभाषार्थे शास्त्राणां वैयर्थ्यापत्तिरिति भावः ।

त्तविनाशे पश्चात्सम्भावितेऽन्तरङ्गं नेति यावत्; अत्र च ज्ञापकं 'समर्थानां प्रथमात्' इतिसूत्रे समर्थानामिति। तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम्, अन्यथान्तरंगत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्टैव; तत्र हि भाविन्याऽऽदिवृद्ध्या सवर्णाच्त्वविनाशः स्पष्ट एव; न चात्रैकादेशप्रवृत्तिसमये वृद्ध्यप्राप्त्यैकादेशे कृते आदेशे वृद्धेः प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम्, तद्द्वारैव तन्निमित्तविनाशसत्त्वेनाक्षतेः; न च सूत्थितौ बहिरंगतया वृद्धेरसि-

---

बहिरङ्गेणेति। फलितमिदं, न तु बहिरङ्गत्वान्तरङ्गत्वे परिभाषाप्रवृत्तौ निमित्तम्। पश्चादिति—उत्तरकालिके इत्यर्थः। अत्र चेति—परिभाषायामित्यर्थः। समर्थानामिति—कृतसन्धिकार्यादिति तदर्थः। अन्यथेति—परिभाषाया अभाव इत्यर्थः। अन्तरङ्गत्वादिति। प्राप्तिमत्त्वन्तत्त्वमप्राप्तिकत्वञ्च बहिरङ्गत्वम्। अच्त्वविनाश इति। अल्पाच्तरमितिसौत्रप्रयोगाक्ष्विवतिभाष्यप्रयोगाभ्यामचि पदत्वं वैकल्पिकमितिकल्पनात् कुत्वाभावः। तद्द्वारैवेति—एकादेशविनाशद्वारैवेत्यर्थः। श्रीपायेत्यत्र दीर्घनिमित्तस्यात्वस्यादेशेऽनुवर्त्तमानस्य धर्मिनाशान्नाशः सन्निपातपरिभाषाप्रवृत्तिप्रयोजक इव एकादेशेऽपि सतः सवर्णाच्त्वरूपनिमित्तस्य धर्म्मिनाशादेव नाश एतत्परिभाषाप्रवृत्तिप्रयोजक इति भावः। निमित्तविनाश इत्यस्य निमित्तविशिष्टो विनाश इत्यर्थो वा। वैशिष्ट्यञ्च स्वप्रतियोगिकत्व-स्वस्थानिकादेशप्रतियोगिकत्वैतदन्यतरसम्बन्धेन। न च सूत्थिनाविति। ननु जातस्य तत्कालप्राप्तस्य वा बहिरङ्गस्यैवासिद्धत्वं बहिरङ्गपरिभाषया बोध्यते, वृद्धेश्च भविष्यत्प्राप्तिकत्वात्कथं दीर्घापेक्षयाऽसिद्धत्वमिति चेन्, अत्रोच्यते—अन्तरङ्गप्रवृत्ति-

द्धत्वान्न तन्निमित्तविनाश इति वाच्यम्, समर्थग्रहणेनै-तद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात् ; यत्तु समर्थग्रहणेनान्त-रंगपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति—तन्न, असिद्ध-परिभाषया समकालप्राप्तबहिरंगस्य पूर्वजातबहिरंगस्य चान्तरंगे कर्तव्येऽसिद्धत्वं बोध्यते. न तु जातेऽन्तरङ्गे तस्य तत्त्वं बोध्यते, मानाभावात् फलाभावाच्च ; एवं च सुत्थितादावेकादेशस्य परि-भाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासंभवात् ; 'अन्तरङ्गानपि

---

समये उपस्थितस्य बहिरङ्गस्यासिद्धत्वम्बोध्यते, अनुपस्थितस्याप्य-सिद्धत्वे मानाभावात् । उपस्थितिश्चान्तरङ्गप्रापकतया, तत्प्रति-बन्धकतया च । तेन रूपेणोपस्थितिः प्रायस्तयोरेवेत्येतत्कालतैव जातस्येत्याद्युक्तिर्ग्रन्थकारस्य । प्रकृते च स्वप्रवृत्तिप्रतिबन्धकपरि-भाषाप्रवृत्तिकारणीभूताया वृद्धेः परिभाषाद्वारा स्वप्रवृत्तिप्रतिबन्ध-कतया दीर्घप्रवृत्तिसमये उपस्थितैव वृद्धिरिति तस्या असिद्धत्वं युक्तमेवेति बोध्यम । किञ्चान्तरङ्गनिमित्तविनाशनिमित्तकत्वेनान्त-रङ्गदेशस्थत्वेन च परिभाषाप्यन्तरङ्गा तद्दृष्ट्यैव तत्समकालप्रा-प्ताया वृद्धेरसिद्धत्वेन परिभाषाया अन्तरङ्गनिमित्तविनाशज्ञाना-भावात् न प्रवर्त्तत सेति बोध्यम् । समर्थग्रहणेनेति । यद्विना न चारितार्थ्यं तत्कल्पनीयमेवेति बोध्यम । एतद्विषये—अकृतव्यूह-परिभाषारूपान्तरङ्गे कर्तव्य इत्यर्थः ।

अनित्यत्वमेवेति । न तु परिभाषेति बोध्यम् । तथा च सुत्थितशब्दे दीर्घस्य प्रथमप्रवृत्त्याऽकृतसन्धेरेव प्राप्तप्रत्ययवारणार्थं समर्थग्रहणमिति भावः । तदनित्यत्वज्ञापनासम्भवादिति । सुत्थितेति स्थिते वृद्धेरप्रवृत्त्या दीर्घस्य च प्रवृत्त्याऽन्तरङ्गपरि-भाषां विनैव निराबाधदीर्घप्रवृत्त्या कृतसन्धिकार्यादेव प्रत्ययोत्प-

विधीनि'त्यादेरप्यस्यामेवान्तर्भावः ; एतत्प्रवृत्तौ च निमित्त-विनाशसम्भावनापि निमित्तम् ; अतएव गोमद्दण्डीत्यादौ हल्ङ्यादिलोपो न, अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः ; अस्ति चात्रापि यदि लोपो न स्यात्तर्हि लुक् स्यादिति सम्भावना ; 'अल्लोपो न'इतिसूत्रस्थतपरकरणं तु परिभाषानित्यत्वज्ञापनेन चरितार्थम् ; तद्धि आन इत्यादौ

---

त्तिसम्भवेन समर्थग्रहणस्य चारितार्थ्याभावेन ज्ञापकत्वासङ्गत्यापत्तेः। न हि परिभाषाधीना दीर्घप्रवृत्तिर्य्येनानित्यत्वात्तदप्रवृत्तावप्राप्तदीर्घप्रवृत्त्यर्थं चरितार्थं समर्थग्रहणं स्यादिति भावः। अस्यामेवान्तर्भाव इति। गोमत्प्रियइत्यादौ गोमत्सु प्रियस्वित्यवस्थायां हल्ङ्यादिलोपस्य निमित्तं सुः, कारणमात्रस्य निमित्तत्वात्, तस्य सामासिकलुका विनाशस्य भावित्वात् पूर्वं हल्ङ्यादिलोपस्यानयैवाभावसम्भवात्। प्रजग्ध्येत्यादौ जग्ध्यादेशनिमित्तस्य तादिकित्त्वस्य ल्यपा विनाशस्य भावित्वात् पूर्वं जग्ध्यादेशस्याप्राप्त्या ल्यपि जग्ध्यादेशार्थं ल्यब्ग्रहणमिति भावः।

एतत्प्रवृत्ताविति—अकृतव्यूहपरिभाषाप्रवृत्तावित्यर्थः। निमित्तविनाशसम्भावनेति—यद्यन्तरङ्गं पूर्वं न प्रवर्त्तेत तदा बहिरङ्गेणान्तरङ्गनिमित्तविनाशः स्यादिति सम्भावनेत्यर्थः। अतएवेति—सम्भावनाया निमित्तत्वादेवेत्यर्थः। अन्यथेति—सम्भावनाया निमित्तत्वाभाव इत्यर्थः। लोपस्यैवापत्तेरिति—निमित्तविनाशस्य भावित्वाभावेन प्रकृतपरिभाषाया अप्राप्तेरिति भावः। ननु सम्भावनाया निमित्तत्वे तपरकरणं व्यर्थमित्यत आह—अल्लोपो न इति। तद्धीति—तपरकरणं हीत्यर्थः। आन इति। अनधातोः क्विपि

लोपवारणाय, अन्यथा दीर्घाभावे लोपसम्भावनयैतत्परिभाषा-बलाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव—इत्याहुः ।

'समर्थानामि'तिसूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यते अकृतव्यूहाः पाणिनीया इति । तेन पपुष इत्यादावन्तरङ्गत्वात् पूर्वं कृतोऽपीडागमो निवर्तत इति वदन् न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति । निमित्तापाये नैमित्तिकस्याप्यपाय इति यावत् । सुत्थितादिञि वृद्धौ दीर्घनिवृत्तौ सौत्थितिर्माभूदिति

'अनुनासिकस्ये'तिदीर्घे शसि रूपम् । लोपेति—आलोपेत्यर्थः । अन्यथेति—अनित्यत्वाभाव इत्यर्थः । दीर्घाभाव इति । यदि दीर्घो न स्यात् तर्हि लोपः स्यादिति दीर्घनिमित्तविनाशसम्भावनायास्सत्त्वेन दीर्घाप्राप्तौ सत्यपि तपरकरणे लोपप्राप्त्या तपरकरणं व्यर्थमिति बोध्यम । अनित्यत्वफलन्तु अतिभवकानित्यादौ सर्वनामसंज्ञाया निमित्तभूतानुपसर्जनत्वस्य भाविना समासेन विनाशसम्भावनायामनया वाक्येऽपि सर्वनामत्वाप्राप्त्यावकचोऽप्रवृत्त्यापत्तिः, अनित्यत्वेऽकच्सिद्धिरिति । दान् शान् भ्यां धातुभ्यां क्विपि शसि दानः शान इत्यादौ लोपाभावस्तु न तपरकरणफलम, तयोर्नित्यण्यन्तत्वेन णिलोपस्य स्थानिवद्भावेन लोपाप्राप्तेः ।

सौत्थितिर्माभूदिति । ननु कृतदीर्घान सुस्थितशब्दादिञि दीर्घरूपादेशस्य वृद्धावपि न तया दीर्घनिमित्तविनाशः, दीर्घेणैव स्वनिमित्तविनाशस्य कृतत्वात; किञ्च नैमित्तिकस्य दीर्घस्य वृद्ध्यैव विनाशात् परिभाषया तद्विनाशस्याशक्यत्वाच्चेदमनुपपन्नम; किञ्च दीर्घविनाशेऽपि देवदत्तहन्तृहतन्यायेनोकारश्रवणमप्यनुपपन्नमिति चेन, अत्रोच्यते—निमित्तस्य विनाशो नत्प्रयुक्त-

समर्थानामिति । लोकन्यायसिद्धश्चायमर्थः । तथा हि लोके निमित्तं द्विविधं दृष्टम्—कार्यस्थितिनियामकं तदनियामकं च। आद्यं यथा न्यायनये अपेक्षाबुद्धिस्तन्नाशे द्वित्वनाशाभ्युपगमात् । वेदान्तनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसि-

---

कार्यविशिष्टस्य स्थाने तत्कार्यरहितस्वरूपातिदेशोऽनया बोध्यते, तावतैव नैमित्तिकविनाशस्योपपत्तेरुकारश्रवणोपपत्तेश्च । दीर्घनिमित्तस्याक्त्वस्य सवर्णत्वस्य चैकादेशेऽपि सत्त्वात् वृद्ध्यैव तस्य विनाशाच्च न किमप्यनुपपन्नम् । किञ्च निमित्तं सवर्णाक्त्वं नैमित्तिकञ्चादेशस्थितिः स्थानिनो निवृत्तिश्च, तत्र दीर्घैकादेशेऽप्यनुवर्त्तमानसवर्णाक्त्वस्य वृद्ध्या विनाशे उकाररूपस्थानिनो निवृत्तिरूपनैमित्तिकस्याप्यपायेऽभावाभावस्य प्रतियोगिरूपतयोकारागमे आद्योकारस्य निवृत्तिपूर्वकोकारे विहिते आवादेशे सावुत्थितिः प्राप्नोतीति बोध्यम् । समर्थानामितीति । कृतसन्धिकार्यादेव प्रत्ययस्थितिरिति बोधनेन निमित्तापाय इत्यस्यात्राप्रवृत्तिस्समर्थग्रहणेन बोध्यत इति सौत्थितिसिद्धिः ।

निमित्तविनाशे भाविनि नैमित्तिकस्यानुत्पत्तिः, निमित्तविनाशे सति जातस्य नैमित्तिकस्यापाय इत्युभयोर्ज्ञापकसिद्धत्वाविशेषेऽपि कैयटमते लोकसम्मतत्वमपीति प्रदर्शयति—लोकन्यायेति । कार्यस्थितिनियामकमिति —यावन्निमित्तं तिष्ठति तावत्कार्यं तिष्ठतीत्यर्थः । अपेक्षाबुद्धिरिति । अयमेकः अयमेक इत्याकारापेक्षाबुद्धिः, ततो द्वित्वसंख्योत्पत्तिः, ततोऽपेक्षाबुद्धिनाशः, ततो द्वित्वनाश इति लोकस्थितिः ; तत्र निमित्तभूतापेक्षाबुद्धिनाशान्नैमित्तिकस्य द्वित्वस्य नाशो दृष्टः । प्रारब्धस्येति । कर्म्म द्विविधं, सञ्चितं प्रारब्धञ्च । यत् फलप्रदानोन्मुखन्न तदाद्यं, यत् तदुन्मुखं तद् द्वितीयम् । तत्राद्यस्य ब्रह्मसाक्षात्कारेण नाशः, 'क्षीयन्ते चास्य कर्म्माणि

द्धमेव । द्वितीयं यथा दण्डादि तन्नाशेऽपि घटनाशादर्शनात् । शास्त्रे लक्ष्यानुरोधाद्व्यवस्था । भाविनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चित् न्यायो नापि संप्रतिपन्नो दृष्टान्तः । समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसम्भवे लोकासिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशय इति बोध्यम् ।

परे तु—सेदुष इत्यादौ पदावधिकेऽन्वाख्याने सेद्वस् अस् इति स्थिते इट्संप्रसारणयोः प्राप्तयोः प्रतिपदविधित्वात्पूर्वं संप्र-

---

तस्मिन् दृष्टे परावरे' इतिश्रुतेः । द्वितीयस्य तु भोगादेव क्षयः, 'नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपी'तिवचनात् । तत् यावदस्ति तावत् भोगात्मकः संसारः, तस्य नाशो संसारनाश इति वेदान्तिमतम् । विक्षेपेति—संसारेत्यर्थः । वस्तुतस्तु अपेक्षाबुद्ध्यादिस्थले तथादर्शनेऽपि निमित्तनाशत्वेन नैमित्तिकनाशत्वेन न कार्यकारणभावः, दण्डनाशे घटनाशादर्शनेन व्यभिचारात्; किन्त्वपेक्षाबुद्धिनाशत्वादिविशेषरूपेणैव कार्यकारणभावस्य वक्तव्यतया न प्रकृतोऽर्थो लोकन्यायसिद्धः, तथा च 'प्रक्षालनाद्धि पङ्कस्ये'तिन्यायात् लुकाऽनुत्पत्तिरिव नैमित्तिकानुत्पत्तिरेव युक्तेत्याहुः—तन्न, अयमर्थो लोकेऽपि क्वचिद् दृष्ट इत्येतावन्मात्रे ग्रन्थतात्पर्यात् । लक्ष्यानुरोधाद्व्यवस्थेति । अनेनास्यानित्यत्वं लब्धमिति बोध्यम् । तेनातिभवकानित्यादावलयाऽकज्न युक्त इत्यपास्तम् । सम्प्रतिपन्न इति—वादिप्रतिवादिसम्मत इत्यर्थः । ननु ज्ञापकसिद्धेऽर्थे नास्ति दृष्टान्तापेक्षेत्यत आह—समर्थानामिति ।

परिभाषां विनैव सर्वदोषपरिहारमाह—परे त्वित्यादिना । पदावधिकेऽन्वाख्यान इति । पदं विभज्य साधुत्वान्वाख्यान इत्यर्थः । प्रतिपदविधित्वादिति—प्रतिपदोक्तत्वादित्यर्थः । सम्प्र-

सारणे बलादित्वाभावादिटः प्राप्तिरेव नेति तत्सिद्धिरिति 'समर्थानामिति'सूत्रे कैयटे असिद्धवत्सूत्रे च कैयटे स्पष्टमेतत्। यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजं, तथापि पूर्वप्रवृत्तौ सावकाशत्वेऽपि नियामकं भवत्येवेति तदाशयः। निरूपितं चैतद्बहुशः शब्देन्दुशेखरे। समर्थानामितिसूत्रस्थसमर्थग्रहणं तु विपुण इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र

---

सारणसूत्रे वसोस्साक्षादुपादानात्तत्वम्। नन्विडागमविधायकेऽपि 'वस्वेकाजि'तिसूत्रे वसोस्तथैवोपादानादुभयोस्समत्वमेवेति चेत्—न, 'वस्वेकाजि'तिसूत्रस्य नियमार्थत्वेनेतरव्यावृत्तिमात्रतात्पर्यकत्वेन 'आर्धधातुकस्येड्वलादे'रित्यस्यैव विधायकत्वेन तत्त्वाभावात्। ननु स्वमते नियमशास्त्रस्य विधिमुखेनैव प्रवृत्तेस्तत्त्वमस्त्येवेति चेत्—न, प्राचीनाभिमतपरिभाषायास्तन्मतेनैव खण्डनस्यौचित्यात्। स्वमते सद् सद् वस् असिति विभागेऽन्तरङ्गत्वात्सम्प्रसारणं पूर्वं बोध्यम्। उभयोः प्रतिपदविधित्वेन नित्यत्वात् सम्प्रसारणस्य पूर्वं प्रवृत्तेश्च वस्वन्तसमुदायस्यैवोभयत्राश्रयणेन नान्तरङ्गत्वमिटः। न च पूर्वमिडागमेऽपि सम्प्रसारणे यणि सम्प्रसारणस्यासिद्धत्वाद्हलिलोपे रूपसिद्धिरिति वाच्यम्, नाजानन्तर्ये इत्यस्यान्तरङ्गे कर्तव्ये कृते चेत्यर्थेनाक्ष्युरित्यत्रेव दोपाभावात्। बाधकत्वे बीजमिति—अपवादस्य स्वप्रवृत्त्युत्तरोत्सर्गप्रवृत्तिप्रतिबन्धकत्वे बीजमित्यर्थः। इदन्तु सावकाशमिति भावः। ननु सेदुष इत्यस्यान्यथैवोपपत्तौ परिभाषाया अनभ्युपगमेन सौस्थितिरित्यादावन्तरङ्गत्वात् कृतदीर्घेभ्य एव प्रत्ययोत्पत्त्या समर्थानामिति व्यर्थमित्याह—समर्थानामिति। विपुण इत्यत्र 'विष्वगित्युत्तरपदलोपश्चाकृतसन्धे'रितिवार्तिकात् विपुअच् इत्य-

तथाऽप्रमवारणाय न्यायसिद्धार्थानुवाद एव । ध्वनितं चेदं विप्रतिषेधसूत्रे भाष्ये । तत्र हि वैचमाणिरित्यन्तरङ्गपरिभाषोदाहरणमुक्तम् । किञ्च विभज्यान्वाख्याने सु-उत्थित-अस्-इ इति स्थिते 'वार्णादाङ्गं बलीय' इतिप्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव

---

वस्थायां णप्रत्ययः, अचो लोपः । न्यायसिद्धार्थानुवाद एवेति । न तु दोषवारणायेत्यर्थः । ध्वनितञ्चेदमिति — न्यायसिद्धार्थानुवादत्वं ध्वनितमित्यर्थः । इदं हि तत्र भाष्यं— 'वृद्धेरेकादेशः वैचमाणिः सौत्थितिः वृद्धिश्च प्राप्नोत्येकादेशश्च परत्वाद्वृद्धिस्स्यादेकादेशो भवत्यन्तरङ्गत' इति । कृतसन्धिकार्यात्प्रत्ययोत्पत्त्यर्थं चेत समर्थग्रहणम्, अन्तरङ्गत्वाभावेऽपि प्रत्ययोत्पत्तेः प्रागेवैकादेशस्यावश्यकत्वेनान्तरङ्गत्वाधीनत्वमेकादेशस्योच्यमानमसङ्गतं स्यादिति बोध्यम । मम तु समर्थग्रहणस्यान्तरङ्गत्वसिद्धार्थबोधकत्वेन न दोषः ।

ननु समर्थग्रहणेनाकृतव्यूहपरिभाषा ज्ञापिता, सा तद्धितविधौ न प्रवर्त्तते इत्येव तेन बोध्यते, ततश्चान्तरङ्गत्वादेवैकादेशो वैक्षमाणिरित्यत्रेति युक्तन्तदुदाहरणत्वमस्येत्यरुचेराह — किञ्चेति । वृद्धिवारणाय समर्थग्रहणमिति—तथा च पूर्वमेव दोषं इति भावः । एवं च समर्थग्रहणस्य सार्थकत्वादज्ञापकत्वमित्याशयः । ननु समर्थग्रहणेनाकृतव्यूहेति ज्ञाप्यते ; ततश्च प्राप्तवृद्धिवारणाय समर्थग्रहणं, वार्णपरिभाषा तु नातिरिच्यते ; अकृतव्यूहरूपैव सेत्यरुचेराह—अतएवेति—परिभाषाया अभावादेवेत्यर्थः । ननु दीक्षिनमते पपुष इत्यादौ सम्प्रसारणेन वलादित्वरूपनिमित्तविनाशे भाविनि पूर्वमिटोऽप्रवृत्तेः सम्प्रसारणे कृते तन्निमित्तक एवातो लोपो वाच्यः, सम्प्रसारणस्यासिद्धत्वे स न स्यादिति युक्त एव परिभाषायां सत्यां वार्त्तिकारम्भः ; कैयटमतेऽपि पूर्वमन्तरङ्गत्वादिटि तन्निमित्तकालोपे च कृते सम्प्रसारणेनेटो निमित्तस्य वला-

कैयटे स्पष्टम् । अतएवासिद्धवत्सूत्रे 'वसुसंप्रसारणमज्विधौ सिद्धं वक्तव्यं, पपुष इत्यादौ वसोः संप्रसारणे कृते आतो लोपो यथा स्यादि'ति भाष्ये उक्तम् । पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं संप्रसारणे इटोऽप्राप्तावुस्निमित्तक एवातो लोप इति तदाशयः । अन्यथान्तरङ्गत्वादिटि तन्निमित्तक एवातो लोप इति तदसङ्गतिः । अतएव चौ प्रत्यङ्गस्य प्रतिषेध इति वचनं वार्त्तिककृतारब्धं भाष्यकृता च न प्रत्याख्यातम् । प्रत्यङ्ग-मन्तरङ्गम् । अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव । अतएव 'च्छ्वो'रितिसूत्रेऽवश्यमत्र तुगभावार्थो यत्नः कार्यः, अन्त-

---

दित्वस्य विनाशे निमित्तापाय इति परिभाषयेटोऽपाये तयैव तन्नि-मित्तकातो लोपस्याप्यपाये पुनस्सम्प्रसारणनिमित्तक एवालोपो वक्तव्य इति तस्यासिद्धत्वाभावाय वार्त्तिकारम्भस्यावश्यकत्वा-न्नैतद्भाष्यविरोधः परिभाषास्वीकर्त्तुरित्यत आह—अतएवेति । प्रतीच इत्यादौ प्रति-अच्-असिति स्थिते अन्तरङ्गत्वात्प्राप्तस्य यणः प्रतिषेधे अल्लोपे दीर्घे च प्रतीच इति सिद्धम् । ननु प्रतिषेधो ना-पूर्वः, किन्त्वकृतव्यूहपरिभाषालभ्य एव, अतएव न प्रत्याख्यात इतिचेदतएवारुचेराह—अतएवेति । वस्तुतस्तु चाविति दीर्घवि-धानसामर्थ्याद्यणाद्यभावमुपपाद्य वार्त्तिकं प्रत्याख्यातमेव । तथा च भाष्यम्—'इहान्ये आचार्य्याश्चौ प्रत्यङ्गस्य प्रतिषेधमाहुः, तदिहापि साध्यम्, नैष दोषः, एतदेव ज्ञापयत्याचार्य्यो न चौ प्रत्यङ्ग-म्भवतीति यदयं चौ दीर्घत्वं शास्ती'ति । ननु अस्मादपि परिभा-षाया अभाव एव लभ्यते; सत्यां हि तस्यां दीर्घत्वसामर्थ्यो-क्तिरसङ्गतेति चेत्—न, दीर्घत्वसामर्थ्येन परिभाषैवांशतो ज्ञाप्यत इति तात्पर्य्यात् । प्रच्छेत्यादौ छकारमात्रस्य शत्वे तन्निमित्तकतुकः

रङ्गत्वाद्धि तुक् प्राप्नोतीति भाष्ये उक्तम्। एतत्सत्त्वे तु तुकोऽप्राप्त्या यत्नावश्यकत्वकथनमसङ्गतमिति स्पष्टमेव। न चैतदनित्यत्वज्ञापनार्थमेव तदिति तदाशयः, अवश्यमत्रेत्यक्षरस्वारस्यभङ्गापत्तेः। किञ्चानयैव 'प्रत्ययोत्तरपदयोश्च'-'अदो जग्धिर्ल्यप्ति कि'त्यनयोश्चारितार्थ्येन तज्ज्ञापकत्वशाल्लुग्ल्यपोरन्तरङ्गबाधकता भाष्योक्ता भज्येत। किञ्चैषा भाष्ये न दृश्यते। तदुक्तमसिद्धवत्सूत्रे कैयटेन—निमित्तापाये नैमित्तिकस्याप्यपाय

---

श्रवणं स्यादित्यत उक्तम्—अवश्यमित्यादि। एतत्सत्त्वे त्विति—परिभाषायास्सत्त्वे त्वित्यर्थः। यत्नश्च 'च्छ्वो'रितिसूत्रे सतुग्ग्रहणरूपो बोध्यः। एतदनित्यत्वेति—परिभाषाऽनित्यत्वेत्यर्थः। अवश्यमत्रेत्यक्षरस्वारस्येति। तुको निवर्तकोपायस्य सर्वथाऽभावे हि तथाकथनौचित्यमिति भावः। न च प्रकृतिप्रत्यापत्तिवचनेनैतस्या अनित्यत्वेन वाञ्छधातोः क्विपि शादेशाभावाय च यत्नावश्यकत्वं, न तु परिभाषाया अभावेनेति वाच्यम्, तावताप्यक्षरस्वारस्यभङ्गस्यैवापत्तेः। अतएवारुचेश्चाह—किञ्चानयेति। त्यमादेशजग्ध्यादेशयोर्निमित्तभूतविभक्तितादित्वयोर्लुग्ल्यब्भ्यां विनाशसम्भावनयाऽनया पूर्वमप्रवृत्त्या 'प्रत्ययोत्तरपदयोश्चे'तिसूत्रस्य ल्यब्ग्रहणस्य च चारितार्थ्यं बोध्यम्। यदि चाकृतव्यूहपरिभाषाज्ञापनद्वारैव तज्ज्ञापकता भाष्याभिप्रेतेत्युच्यते तदा नायं दोषः, अत आह—किञ्चेति। एषेति अकृतव्यूहपरिभाषेत्यर्थः। अकृतव्यूहेत्यानुपूर्व्या अदर्शनेऽपि 'अन्तरङ्गानपि विधीनि'त्यादिना तद्दर्शनमस्त्येवेति न किञ्चिदेतदित्यत आह—तदुक्तमिति। स्वरूपतोऽनाश्रयणमात्रेण कैयटोक्तिसङ्गतिरिति चेन्न, परिभाषास्वीकार एव युक्त इत्यवेहि।

**इति परिभाषाया भाष्यकृतानाश्रयणादिति। पदसंस्कारपक्षे हरिरित्यादौ विसर्गे कृते ततो गच्छतीत्यादिसंबन्धे हरिः गच्छतीत्यायेव साधु। तद्विषये पदसंस्कारपक्षानाश्रयणं वेति दिक् ॥५६॥**

---

गच्छतीत्यादिसम्बन्धेनावसानभङ्गे भाविनि पूर्वं विसर्गाप्रवृत्त्याऽवसाननिमित्तकस्य जातस्य विसर्गस्य निवृत्त्या वा हरिर्गच्छतीति भवति परिभाषासत्त्वे। तस्या अभावे तु वाक्यसंस्कारपक्षे तत्सिद्धावपि पदसंस्कारपक्षे हरिः गच्छतीत्यस्याप्यापत्तिरिति दूषणमिष्टापत्त्या वारयति—पदसंस्कारपक्ष इत्यादिना। वस्तुत इदन्न युक्तं, 'विसर्जनीयस्य स'इतिसूत्रभाष्यविरोधात्। तत्र हि—'विसर्जनीयस्य स' इतिसूत्रे खरीत्यस्यानुवृत्त्यभावेऽपि खर्निमित्तकस्यैव विसर्गविधानस्य वैयर्थ्यं, खरवसानयोस्सत्वविधानेनैव सिद्धेः, अवसानमात्रनिमित्तकस्य सत्वे शर्परे विसर्गविधानस्य वैयर्थ्यं, तत्र सत्वाप्राप्त्या विसर्गस्य सिद्धेः। न च वासः क्षौममद्भिःप्सातमित्यादौ ᳲकᳲपयोर्बाधनार्थं तत्सार्थकम्, तावन्मात्रप्रयोजनकत्वे कुप्वोःᳲकᳲपौ चाशरीत्येव ब्रूयादितिरीत्या खरीत्यस्यानुवृत्तिस्तिरस्कृता। यद्यवसाननिमित्तकस्य विसर्गस्यावसानभङ्गे भाविन्यपि पूर्वं प्रवृत्तिरवसानभङ्गे वा जातस्य तस्य निवृत्त्यभावः, तदा पदसंस्कारपक्षे कः इत्यवसाने विसर्गं कृत्वा त्सरुरित्यस्य सम्बन्धे सत्वाभावार्थं शर्परइत्यस्यावसानमात्रनिमित्तकविसर्गस्य सत्वविधानेऽपि चारितार्थ्यसम्भवेन भाष्योक्ता ज्ञापकता भज्येत। तस्मात् परिभाषा मन्तव्या, पदसंस्कारपक्षस्यैतद्विषयेऽनाश्रयणं वेत्यरुचेराह—तद्विषय इत्यादि।

परिभाषाया अभावे तु हरिः ओमित्यस्य वैदिकसम्प्रदायसिद्धशिक्षाकारवचनबलात् कथञ्चित्साधुत्वं वाक्शब्दे पूर्वं जातस्य कुत्वस्यानिवृत्त्या वागाशीर्दत्तो वाचिक इति रूपस्य कथं सिद्धि-

# अन्तरङ्गादप्यपवादो बलीयान् ॥ ५७ ॥

रिति न वाच्यम्, पूर्वत्रेत्यत्र विषयसप्तम्या सपादसप्ताध्यायीस्थकार्य्यप्रवृत्तिसम्भावनायां त्रैपादिकस्य पूर्वमप्रवृत्तिरित्यर्थात्, तद्विषये वाक्यसंस्कारपक्षस्यैवाश्रयणाद्वा। नाप्येतस्या अभावे वृक्षो वृक्षः सिच्यत इत्यादौ 'पूर्वत्रासिद्धीयमद्विर्वचन' इत्यनेनासिद्धत्वनिषेधाद्विसर्गान्तेषु कार्य्येषु कृतेषु 'सर्वस्य द्वे' इतिद्वित्वे पूर्वखण्डे रोरभावादुत्वानापत्त्या रूपासिद्धिरापाद्या, तस्यानित्यत्वेनादोषात्। निमित्तापायइत्यस्याभावे ष्ठा गतिनिवृत्तावितिधातुपाठे षकारनिमित्तकष्टुत्वस्य 'धात्वादे' रितिसत्वेन षस्य निवृत्तावपि निवृत्त्यभावे स्थाता स्थानमित्याद्यसिद्धिर्न, ष्टुत्वस्य लक्षणवशसम्पन्नत्वेन बोधकत्वेन तात्पर्य्यविषयीभूतस्वरूपस्यैव 'त्रेत्रय' इत्यत्रेव बोध्यतया लक्ष्ये 'नकारजावनुस्वार' त्यभियुक्तोक्त्या टवर्गश्रवणाप्रसक्तेः। विभाजयितृशब्दाण्ण्यन्तोत्तरतृजन्ताद् 'विभाजयितुर्णिलोपश्चाञ् च वाच्य' इतिवार्तिकादञि णिलोपे च वैभाजित्रमिति सिद्ध्यति। परिभाषाया अभावेऽन्तरङ्गत्वाण्णेर्गुणायादेशयोस्सतोरलोऽन्त्यपरिभाषया यकारमात्रस्य लोपापत्तिः। परिभाषायान्तु गुणायादेशयोर्निमित्तभूतस्य णेर्लोपेन विनाशसम्भावनया पूर्वमप्रवृत्त्या णेरिकारस्यैव लोपेनादोषः। न च यलोप इति वक्तव्ये णिग्रहणसामर्थ्याद् गुणायादेशौ नेति वाच्यं, विभाजीतिणिभिन्नेकारान्तप्रातिपदिकादाचारक्विबन्तात् तृचि विभाजयितृशब्दाद्यलोपप्रत्यययोरापत्तेरिति चेत्—अस्तु परिभाषा। तथासत्यन्तरङ्गानपीतिपरिभाषाद्वयमनेकत्रानेकक्लिष्टकल्पनञ्च नाश्रयणीयमिति लाघवमिति दिक् ॥ ५६ ॥

परनित्यान्तरङ्गेतिसङ्ग्राहकवाक्याच्चरमभर्थ निष्कृष्य प्रमाणयति—अन्तरङ्गादप्यपवादो बलीयानिति। अत्रापवादः पक्षः

तत्रापवादपदार्थमाह—येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति। प्राप्तइति भावे क्तः। येन नाप्राप्त इत्यस्य यत्कर्तृकावश्यकप्राप्तावित्यर्थः, नञ्द्वयस्य प्रकृतार्थ-

---

परादीनां सङ्ग्राहकोऽपि, हेतुरप्यपवादत्वरूपोऽपवादशब्देनैवोक्तः, तथा चापवादपदार्थस्य सनिरूपकतया यन्निरूपितापवादभूतं यच्छास्त्रं तत् तस्मात् परान्नित्यादन्तरङ्गादपि बलवत्, अपवादत्वादित्यनुमानाकारलाभः। तत्रेति। तच्छब्देन पूर्वोक्तानुमानप्रयोगः परामृश्यते। घटकत्वं च सप्तम्यर्थोऽपवादपदार्थान्वयि। आहेत्यस्यापरं कर्म्म आरभ्यत इत्यन्तमेव। अपवादत्वस्य बलवत्वप्रयोजकताबीजं लोकसिद्धमाह—स तस्य बाधको भवतीति भावे क्त इति। नपुंसके भावे क्तस्य योगे 'षष्ठ्या उपसङ्ख्यानमि'तिवार्तिकेनात्र छात्रस्य हसितमित्यत्रेव कर्त्तरि षष्ठी न, शेषषष्ठ्या भाष्ये तस्य प्रत्याख्यानात्, अत्र च शेषत्वस्याविवक्षणात्। नञोऽप्राप्त इत्यनेन समासे नलोपाद्यापत्तिः, असमासे प्रथमान्तप्रतियोगिवाचकपदाभावादत्यन्ताभावबोधानापत्तिः, तस्मान्नैकधेतिवन्निषेधार्थकनशब्दस्य 'सुप् सुपे'तिसमासः, पृषोदरादित्वान्न लोपाभावो वा। येनेति। कर्त्तरि तृतीया। नञ्द्वयस्येति—निषेधार्थकनशब्दपक्षे नञर्थकद्वयस्येत्यर्थः। प्रकृत्यर्थे प्राप्तौ दार्ढ्यं व्यापकत्वमेव, तदेवावश्यकत्वम्, अवश्यमशब्दसमानार्थकोऽवश्यशब्दोऽप्यस्ति, आवश्यकाधमर्ण्योरिति निर्देशात्। फलितमाह—एवञ्चेत्यादि। ततोऽपीदं लब्धम्—शास्त्रं स्वीयोद्देश्यतावच्छेदकव्यापकधर्म्मावच्छिन्नोद्देश्यताकशास्त्रस्य बाधकं, यथा 'वृद्धिरेची'तिशास्त्रस्योद्देश्यतावच्छेदकमेजव्यवहितपूर्वत्वविशिष्टात्वं, तद्व्यापकमजव्यवहितपूर्वत्वविशिष्टात्वं, तदवच्छिन्नोद्देश्यताकस्य 'आद् गुण' इतिशास्त्रस्य 'वृद्धिरेची'ति बाधकम्। मूले विशेषपदेन बाधकत्वेनाभिमतस्य

ग्रहणं, द्वितीयविशेषपदं व्याप्यबोधकं, सामान्यपदञ्च व्यापकपरं, सामान्यधर्म्मे सामान्यविशेषपदार्थमहिम्नैव लब्धं विशेषधर्म्मावच्छिन्नवृत्तित्वं शब्दतस्तत् कथ्यमानं येन केनापि सम्बन्धेन व्याप्यव्यापकभावे वृत्तितालाभार्थं, न तूद्देश्यतावच्छेदकतावच्छेदकसम्बन्धेनैवेत्याग्रहः। तेन 'अजादेर्द्वितीयस्ये'त्यनेन 'एकाचो द्वे प्रथमस्ये'त्यस्य बाधः। तस्य ह्युद्देश्यतावच्छेदकं धात्ववयवादिभूताच्परत्वविशिष्टं द्वितीयैकाच्त्वं, तच्च यद्यप्युद्देश्यतावच्छेदकतावच्छेदकस्वरूपसम्बन्धेनोर्णुनावेत्यत्र नुशब्देऽस्ति, तत्र धात्ववयवप्रथमैकाच्त्वं स्वरूपसम्बन्धेन नास्ति, किन्तूर्णित्यत्रास्तीति तयोस्सामानाधिकरण्यस्याप्यभावेन व्याप्यव्यापकभावस्य सर्वथाऽभावेऽपि स्वघटकाच्त्ववदुत्तरत्वसम्बन्धेन प्रथमैकाच्त्वस्य द्वितीयैकाचि सत्त्वात् तस्य द्वितीयैकाच्त्वव्यापकत्वमुपपन्नम्।

नन्वत्र बाधः कः पदार्थः? न तावत् व्यापकधर्म्मावच्छिन्ने व्याप्यधर्म्मावच्छिन्नभिन्नत्वबोधनम; तथा सति 'अजादेर्द्वितीयस्ये'त्येतदीयोद्देश्यतावच्छेदकमादिभूताच्त्वं व्याप्यं, तद्धर्म्मावच्छिन्नातिरिक्तत्वस्य प्रथमैकाच्त्वघटकाच्त्वस्य व्यापकत्वात्तद्धर्म्मावच्छिन्ने बोधनं स्यात्, तथा सति धातोरादिभूतो योऽच् तद्भिन्नाज्घटितो यः प्रथमैकाच् तस्य द्वित्वमित्यर्थे आटतुरित्यादावडित्यस्य तथाभूताज्भिन्नाज्घटितत्वाभावाद्द्वित्वानापत्तेः, ञ्णिणित्तद्धितत्वस्यादिवृद्ध्युद्देश्यतावच्छेदकस्य व्याप्यतया तद्धर्म्मावच्छिन्नातिरिक्तत्वस्योपधावृद्ध्यन्तवृद्ध्युद्देश्यतावच्छेदकं व्यापकीभूतं ञ्णिणित्प्रत्ययत्वं तदवच्छिन्ने बोधनेनोपधावृद्धेरन्तवृद्धेश्च ञ्णिणित्तद्धितभिन्न एव प्रवृत्त्या ञ्णिणित्तद्धिते तयोरप्रवृत्तेर्न्यायेनैव सिद्धावनुशतिकादिगणे पुष्करशब्दस्य पाठसामर्थ्यात् 'आदिवृद्धिरन्त्योपधावृद्धी बाधते' इतिभाष्यविरोधापत्तेश्च। स च पाठोऽनुशातिकादीनाञ्चेत्युभयपदवृद्ध्यर्थः। न वा यैर्यैर्विशेषणैः यैर्यैर्विशेष्यभूतैः पदार्थैर्विशेषितो व्याप्यो धर्मः तैस्तैर्विशेषितव्याप्यध-

र्म्मावच्छिन्नातिरिक्तत्वबोधनं व्यापकीभूतधर्म्मावच्छिन्ने सः। तथा सति द्वितीयैकाज्निष्ठपरत्वावधिभूतत्वविशिष्टं धात्ववयवादित्वविशिष्टं यदच्त्वं तदवच्छिन्नातिरिक्तत्वस्य धात्ववयवप्रथमैकाच्त्वघटकाच्त्ववतो बोधनेनाऽऽटतुरित्यादावट्धातुघटकस्याचस्तदतिरिक्तत्वसत्त्वान्न दोषः। उर्णुनावेत्यादौ च द्वितीयैकाच् तु तन्निष्ठपरत्वावधित्वस्य धात्ववयवाद्यच्त्वस्य चोकारे सत्त्वेन तदवच्छिन्नातिरिक्तत्वविरहान्न तद्घटितस्य द्वित्वम्। एवञ्चोद्देश्यतावच्छेदकतावच्छेदकसम्बन्धेनैव वृत्तित्वग्रहणेऽपि न दोष इत्यपि युक्तम्, उक्तभाष्यविरोधतादवस्थ्यात्। तथाहि व्याप्यं ञ्णिणित्तद्धितत्वं, तच्च प्रातिपदिकावधिकपरत्वेन विशेषितं कृत्वा प्रातिपदिकावधिकपरत्वविशिष्टञ्णिणित्तद्धितत्वावच्छिन्नातिरिक्तत्वेन ञ्णिणित्प्रत्ययत्वावच्छिन्ने सकोचे पाठस्य चारितार्थ्यात्।

अत्रोच्यते—तत एव भाष्याद् व्याप्यभूतया शाब्दबोधीयविषयतया व्यापकीभूतायाश्शाब्दबोधीयविषयताया बाधः। शाब्दबोधीया च विषयता शाब्दबोधीयविशेष्यतया प्रकारतया च संकुचिता भवति। ततश्चोपधाभूतान्निष्ठविशेष्यतानिरूपिताव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्रकारतारूपोपधावृद्धिसम्बन्धिनी ञ्णिणित्प्रत्ययत्वावच्छिन्ना विषयता अजन्ताङ्गनिष्ठविशेष्यतानिरूपिताव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना अन्त्यवृद्धिसम्बन्धिनी ञ्णिणित्प्रत्ययत्वावच्छिन्ना प्रकारतारूपा वा विषयता। प्रातिपदिकनिष्ठविशेष्यतानिरूपिताव्यवहितपूर्वत्वसम्बन्धावच्छिन्नञ्णिणित्तद्धितत्वावच्छिन्नप्रकारतारूपविषयताया न व्यापिका, तदभाववति मरुच्छब्दप्रकृतिकइञि प्रत्यये एतस्यास्सत्वात। तथा च न्यायेन बाधाप्राप्त्या ज्ञापकेन बाधस्साधितः।

अथवोद्देश्यदलप्रविष्टैर्विशेष्यैर्विशेषणैश्च पदार्थैर्विशेषितो य उद्देश्यतावच्छेदको धर्म्मः स एव व्याप्यतया व्यापकतया च गृह्यते। तथाऽपि न भाष्यविरोधः। प्रातिपदिकोत्तरत्वविशिष्ट-

दार्ढ्यबोधकत्वात् । एवं च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्न-

---

त्रिणिणत्तद्धितत्वापेक्षयाऽदुपधोत्तरत्वाजन्तोत्तरत्वविशिष्टत्रिणिण-प्रत्ययत्वस्य मारुतिरित्यत्र व्यभिचारेणाव्यापकत्वात् । इदमेवाभिप्रेत्यानवकाशविषयत्वं विधेयविषयत्वमेतस्योच्यते । अनयोः पक्षयोर्बाधोऽपि विषयतायां व्याप्यविषयताश्रयातिरिक्तवृत्तित्वबोधनम्, तादृशधर्म्मे तादृशधर्म्माश्रयातिरिक्तवृत्तित्वबोधनम् । 'इको यणची'त्यादौ इक्त्वावच्छिन्नकार्यितयाऽच्त्वावच्छिन्ननिमित्तताया बाधोत्प्रेक्षा कैयटस्य तु न युक्ता, इग्निष्ठविशेष्यतानिरूपिताव्यवहितपूर्वत्वसम्बन्धावच्छिन्नाच्त्वावच्छिन्नप्रकारतात्मकनिमित्ततानाक्रान्ते सुधीकारे कार्यिताया अज्निष्ठाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितेक्त्वावच्छिन्नविशेष्यतारूपायास्स्वेनाव्याप्यत्वात् ।

नन्वेवमपि 'नेमौ रहौ कार्यिणौ निमित्तन्द्विर्वचनस्ये'तिग्रन्थेन रत्वावच्छिन्ननिमित्ततया यत्वावच्छिन्नकार्यिताया बाधो भाष्योक्तोऽसंगतः स्यात्, 'यणो मयो द्वे वाच्य' इति शास्त्रीयाया मयः परत्वविशिष्टयण्त्वावच्छिन्नकार्यिताया 'अचो रहाभ्यामि'तिशास्त्रीयाया अजुत्तरत्वविशिष्टरेफहकारान्यतरोत्तरत्वविशिष्टयत्वावच्छिन्नकार्यितायाश्चाजुत्तरत्वविशिष्टयपूर्वत्वविशिष्टरत्वावच्छिन्ननिमित्तत्ववति हर्यनुभव इत्येतद्घटकरेफे अभावेनाव्यापकत्वात्; केवलम् 'अनचि चे'तिशास्त्रीयाया अचःपरत्वविशिष्टाच्पूर्वत्वाभावविशिष्टयत्वावच्छिन्नकार्यिताया एव व्यापकतया तस्याः स्वाश्रयातिरिक्तवृत्तित्वबोधने हर्यनुभवे रेफस्य द्वित्वाभावोपपादनेऽपि मद्रह्रदे पररेफस्य 'अचो रहाभ्यामि'त्यनेन, धात्रंशे रेफस्य 'यणो मय' इत्यनेन, अर्हणेत्यादौ 'अनचि चे'त्यनेन द्वित्वापत्तेर्वज्रलेपत्वात; न च बाध्यसामान्यचिन्तया सकलद्वित्वकार्यि-

वृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधः ।

ताबाधकत्वमितिविवरणकारोक्तं युक्तमिति वाच्यम्, एकस्यानेकशास्त्रप्रयोज्यं यत्रानवकाशत्वं तत्रैव बाध्यसामान्यचिन्ताविषयत्वेन विवरणस्य गुरुचरणैः खण्डितत्वादिति चेत्, अत्रोच्यते—अन्योऽयं तक्रकौण्डिन्यन्यायान् माठरपरिवेषणन्यायो येन रत्वावच्छिन्ननिमित्ततया यत्वंयणत्वावच्छिन्नकार्यितयोर्बाधः, तेन च व्याप्यधर्म्मावच्छिन्नविषयतया व्यापकधर्म्मावच्छिन्नविषयताया बाधः । स्वावच्छेदकव्याप्यधर्म्मावच्छिन्नातिरिक्तवृत्तित्वस्य व्यापकधर्म्मावच्छिन्नविषयतायां बोधनञ्च बाधः, तथा च रेफातिरिक्तस्यैव यरो द्वित्वम् । एतन्न्यायमादायैवेकोयणचीत्यत्र कार्य्यितया निमित्तत्वबाधं युक्तमाशंक्य तस्मादित्युत्तरस्येतिनिर्देशेन समाहितं कैयटेन । परन्तु बाध्यबाधकयोरेकप्रकरणस्थत्वं यत्र तत्रैवायं न्यायः प्रवर्त्तते; तत्त्वं च यत्किञ्चिदनुगतरूपावच्छिन्नस्य प्रतिपाद्यत्वेन विषयत्वं यस्यामिच्छायां तत्प्रयोज्यकृतिविषयत्वम्; भवति च वर्णद्वित्वप्रतिपादनविषयकमहेच्छापूर्वकावान्तरेच्छाधीनकृतिगोचरत्वम् 'अचोरहाभ्यामि'त्यारभ्य 'दीर्घादाचार्य्याणामि'त्यन्तसूत्रवार्त्तिककदम्बस्य, तद्घटकयर्यणरदयो रेफेतरस्वार्थपरतामुपपादय । इदञ्च न एरजिकोयणचीत्यादीनां भिन्नप्रकरणस्थानामिति न तत्रास्य विषय इति दिक् ।

ननु 'आद्गुणः' 'इको यणची'त्यनयोर्बाधकत्वम् 'अकः सवर्णे दीर्घ' इत्यस्योपपद्यते, तन्नोपपद्यते, दीर्घशास्त्रीयसवर्णाज्व्यवहितपूर्वत्वविशिष्टाक्त्वावच्छिन्नविषयतां प्रत्याद्गुण इत्येतदीयाजव्यवहितपूर्वत्वविशिष्टावर्णत्वावच्छिन्नविषयतायाः ओशब्दत्वादौ व्यभिचारेणाव्यापकत्वात् अजव्यवहितपूर्वत्वविशिष्टेक्त्वावच्छिन्नविषयतायाश्च दध्यत्रेत्यादौ व्यभिचारेणाव्यापकत्वादिति चेन्न—न, दीर्घविधिप्रसक्ताधिकरणे तत्तद्विषयतात्वेन तयोरभावेऽप्यन्यतरविषयता

नास्तीत्याकारकाभावस्यासत्त्वेन तदन्यतरत्वस्याभावप्रतियोगितानवच्छेदकत्वेन स्वाधिकरणावृत्त्यभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वरूपव्यापकत्वस्योभयत्र सत्त्वात् ।

नन्वेवं प्रमेयत्वादिना दीर्घीयविषयताया अपि यणीयविषयतां प्रति व्यापकत्वादव्यवस्थापत्तिरिति चेत्—न, दीर्घशास्त्रस्य वैयर्थ्यापत्त्या तेन रूपेण व्यापकतामादाय बाधायोगात् ।

न चैवमपि 'एरनेकाजि'तिशास्त्रीयविषयताऽऽद्गुणशास्त्रीयविषयतेकोयणचीतियणीयविषयतानामन्यतमत्वेन व्यापकतया गुणादेरिवैरनेकाजितियणोऽपि बाधापत्त्या वातप्रम्यीति प्रद्ध्यीति न स्यात्, एवं 'विसर्जनीयस्य सः' 'शर्परे विसर्जनीय'-इत्यनयोरप्यन्यतरत्वेन व्यापकतामादाय 'कुप्वो ≍ क ≍ पौ चे'त्यनेन बाधापत्त्या वासः क्षौममित्यादावपि जिह्वामूलीयाद्यापत्तिरिति वाच्यम्, स्वीयविषयताविशिष्टधर्म्मवद्विषयताकशास्त्रस्य स्वेन बाध इत्यर्थात् । वैशिष्ट्यञ्च स्वव्यापकतावच्छेदकत्व-स्वव्यापकतावच्छेदकधर्म्मविशिष्टभिन्नत्वोभयसम्बन्धेन । पुनर्वैशिष्ट्यं स्वव्यापकत्व-स्वभिन्नत्वोभयसम्बन्धेन । अन्यतमत्वे आद्यसम्बन्धसत्त्वेऽपि द्वितीयसम्बन्धाभावः, यतः स्वव्यापकतावच्छेदकमन्यतरत्वं तद्व्यापकत्वतद्भिन्नत्वसम्बन्धाभ्यां तद्विशिष्टत्वस्यैव सत्त्वम् । अन्यतरत्वं तु स्वविषयताविशिष्टं भवति । तत्र ह्याद्यसम्बन्धोऽस्ति द्वितीयोऽप्यस्ति, यतो व्यापकतावच्छेदकमन्यतमत्वमन्यतरत्वञ्च । आद्यस्यान्यतरत्वे व्यापकत्वन्न, द्वितीयस्य तस्मिन् भेदो नेति अन्यतरत्ववद्विषयताप्रयोजकयोरेव बाधः; न त्वन्यतमत्ववद्विषयताप्रयोजकस्यैरनेकाजित्यस्येति द्रष्टव्यम् । एवं 'विसर्जनीयस्य स' इत्येतदीयविषयतागततद्व्यक्तित्वस्य व्यापकतावच्छेदकत्वात्तद्विशिष्टत्वमेवान्यतरत्वस्येति न तदादायोभयोर्बाधः, अपि तु तद्व्यक्तित्वस्यैव स्वविशिष्टत्वात्तद्विषयताप्रयोजकसत्वशास्त्रस्यैव बाध इति सर्वं समञ्जसम् ।

नन्वेवमुर्ऋदितिशास्त्रीयविषयताया व्यापकतावच्छेदकम् 'उपधायाश्च' 'मृजेर्वृद्धिः' 'पुगन्तलघूपधस्यचे'ति शास्त्रीयविषयतात्रयगतमन्यतमत्वं तत्र व्यापकतावच्छेदकं यत्पुगन्तेत्युपधायाश्चेतिशास्त्रद्वयीयविषयताद्वयगतमन्यतरत्वन्तद्विशिष्टत्वमेव स्वव्यापकत्वस्वभिन्नत्वोभयसम्बन्धेन, न तु तद्विशिष्टभिन्नत्वमित्यन्यतमत्ववद्विषयतात्रयप्रयोजकशास्त्रत्रयस्य बाधो न स्यादितीररारामपवाद इत्यनुपपन्नमिति चेत्, अत्रोच्यते—स्वव्यापकतावच्छेदकधर्म्मविशिष्टभिन्नत्वरूपद्वितीयसम्बन्धघटकव्यापकताच्छेदको धर्म्मः उभयावृत्तिर्गृह्यते, ततश्च प्रकृते नान्यतरत्वमादाय दोषः, तस्योभयवृत्तित्वात्। न च 'एरनेकाजि'तिसूत्रीयविषयताघटितान्यमत्वमादायैरनेकाजित्यस्यापि बाधेन वातप्रम्यीत्यादौ दीर्घापत्तिरिति वाच्यम् अन्यतरत्वमादाय गुणयणौ बाधित्वा दैत्यारिरित्यादौ चरितार्थस्याकस्सवर्णे दीर्घस्य वार्णपरिभाषया बाधेन एरनेकाच इत्यस्यैव प्रवृत्तेः।

परे तु—अपवादशब्दोऽत्र बाधकपरः, 'उर्ऋदि'त्यत्र हि ऋकारस्य चङो णेश्च प्रातिस्विकरूपेणोपादानादुपधायाश्च पुगन्तलघूपधस्य च मृजेर्वृद्धिरितिसूत्राणां प्रतिपदविधित्वेनैव बाधकमुर्ऋदितिसूत्रमित्याहुः। ननु गुणदीर्घोत्वानामपवाद इति ग्रन्थेन 'अचि र ऋत' इत्यस्य गुणादि प्रत्यपवादत्वमुच्यमानमसङ्गतं स्यात्, तथा हि—तदीयविषयतानां तिस्रस्तिष्ठन्तीत्यत्र दीर्घत्वयोः धियन्निन्त्रः पुत्र इत्यत्र गुणदीर्घयोर्विषयताया व्यभिचारेण तत्तद्वृत्तित्वेनाव्यापकत्वात्; नापि त्रितयमात्रवृत्त्यन्यतमत्वेन व्यापकता युक्ता, धियन्निस्त्रोरित्यादौ सर्वासामभावेन तेनाप्यव्यापकत्वात्; नापीकोयणचीतिविषयताघटितान्यतमत्वेन व्यापकत्वं, तथा च न धियन्निस्त्रोरित्यत्र व्यभिचारशंकेति युक्तम्; स्वव्यापकतावच्छेदकयणीयविषयतानतद्व्यक्तित्ववैशिष्ट्यस्यैव तादृशान्यतमत्वे सत्त्वादिति चेत्—न, धियन्निस्त्रोरित्यादावपि-

तदप्राप्तियोग्येऽचारितार्थ्यं ह्येतस्य बाधकत्वे बीजम् । अतएव

कोयणचीत्यनेनैव रेफस्य सिद्धतया 'अचि र ऋत' एतदीयविषयताया अदग्धदहनन्यायेन तत्राभावात् , त्रितयगतान्यतमत्वेनैव व्यापकतायास्सुवचत्वात् । एवम् 'एत्येधत्यूठ्स्वि'त्यस्येणेधविषये पररूपबाधनमात्रतात्पर्येणोपसर्ग एव प्रवृत्त्या तत्र सर्वत्र 'एङि पररूपमि'त्यस्य प्राप्त्या तदीयविषयताया व्यापकत्वाद् वृद्ध्या तस्यैव बाधः । तद्घटितयोरोमाङोश्चैङिपररूपयोरन्यतरत्वेन व्यापकतामादाय न बाधः, अन्यतरत्वे द्वितीयसम्बन्धविरहात् । ननु 'यचि भमि'त्यनेन स्वादिष्वसर्वनामस्थाने सुप्तिङन्तमित्यनयोर्बाध इष्यते, अतएव राजन्येत्यत्रान्तर्वर्तिविभक्त्या पदत्वमादायापि न नलोपः, स च बाधो न स्यात् , अन्यतरत्वे निरुक्तांशद्वय-विरहादिति चेत्—न, बाध्यसामान्यचिन्तयोभयोर्बाधात् । पूर्वोक्तबाधप्रकारस्य बाध्यविशेषचिन्ताविषयत्वात् । लक्ष्यानुरोधेन च पक्षद्वयं व्यवस्थितम् , अतएव शब्देन्दुशेखरेऽजन्तपुल्लिङ्गप्रकरणे बाध्यसामान्यचिन्तयैव सुप्तिङन्तमित्यस्य बाध उक्तः । एवमतो गुण इत्यकस्सवर्ण इत्यस्यैव बाधकम् , न तु प्रथमयोः पूर्वसवर्णः अकस्सवर्णे इत्यनयोः । क्रोडादिग्रहणमसंयोगोपधादित्यस्यैव बाधकम् , न तु 'न क्रोडादिसहितासंयोगोपधादि'त्यस्य । नासिकोदरग्रहणम् न क्रोडादीत्यस्यैव बाधकन्न तु 'सहनञ्'सहितस्य 'न क्रोडादी'त्यस्य । नन्वेवमाम याट्स्याटोर्बाधको न स्यादपि तु याट एवेति चेत्—न, याटोऽपवादत्वात् स्याटः परत्वाद्बाध इत्यदोषात् । मध्येऽपवादन्यायपुरस्तादपवादन्यायौ च पूर्वोक्तबाधबीजवर्णनेनैव गतार्थौ ।

व्यापकत्वं बाध्यताबीजमुक्त्वा बाधकताबीजं व्याप्यत्वमाह—तदप्राप्तियोग्य इति । अत्रेदं बोध्यम्—तदप्राप्तियोग्ये अचारितार्थ्ये सति कृतेऽप्यचारितार्थ्यमेकं, तदप्राप्तियोग्ये अचारितार्थ्ये

सति कृते चारितार्थ्यं द्वितीयम्। आद्यस्थले उत्सर्गोद्देश्ये अपवादेन स्वप्रवृत्तियोग्यातिरिक्तत्वं बोध्यते। तत्रापवादे जाते प्राप्तौ सत्यामुत्सर्गः प्रवर्त्तते, यथा रमायामित्यत्रापि कृतेऽपि याट् प्रवर्त्तते। द्वितीयस्थले उत्सर्गोद्देश्ये अपवादेन स्वप्रवृत्तियोग्यातिरिक्तत्वं स्वविहितकार्याश्रयातिरिक्तत्वञ्च बोध्यते, यथा सर्वेषामित्यादौ सुटि कृतेऽपि न नुट्। ननु 'स्वमोर्नपुंसकादि'त्यस्याप्राप्तियोग्येऽचरितार्थत्वात् कृतेऽपि लुक्यचरितार्थत्वात् 'अतोऽमि'त्यनेन स्वप्रवृत्तियोग्यं ज्ञानस्त्रिति तद्भिन्नत्वेनैव लुक उद्देश्यतावच्छेदकावच्छिन्ने संकोचात् कृतेऽमि लुक् स्यात्; न चाम्विधानसामर्थ्यात् स्वविहितकार्य्याश्रयातिरिक्तत्वेनापि सङ्कोच इति वाच्यम्, नियमभङ्गेनाव्यवस्थापत्तेस्तावतापि दुर्वारत्वादिति चेत्—न, स्वप्रवृत्त्युत्तरोत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्यवैयर्थ्यसम्भावनाविषयत्वाभावे सति तदप्राप्तियोग्येऽचरितार्थत्वे सति कृतेऽप्यचरितार्थत्वं यत्र तत्र स्वप्रवृत्तियोग्यातिरिक्तत्वेन संकोचः। अन्यत्र स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविहितकार्य्याश्रयातिरिक्तत्वेन च संकोच इति नियमेनादोषात्। आमो धर्मत्रयसत्त्वादेकरूपेणैव सङ्कोचः। अमादेशे सुडागमे च त्रितयाभावसत्त्वादुभयरूपेण सङ्कोचः।

ननु तदप्राप्तियोग्येऽचारितार्थ्ये सति कृतेऽप्यचारितार्थ्ये 'स्वप्रवृत्तियोग्यातिरिक्तत्वेन सङ्कोच' इत्येवापवादस्थलेऽस्तु, न तु कृते चारितार्थ्ये उभयरूपेण सङ्कोचः, फलाभावात्; सुट्शास्त्रे आम्याकारप्रश्लेषेणाकारादावामि सुटो विधानेन नुटि आकारादित्वाभावेन सुटोऽप्रवृत्तेः; 'अजादेर्द्वितीयस्ये'त्यस्य कृते प्रथमैकाचो द्वित्वे चारितार्थ्येन परत्वादेव बाधकत्वं, सकृद्गतिन्यायेन पूर्वस्याप्रवृत्तिः; उभयरूपेण सङ्कोचे 'ईत्राध्मो'रित्यस्य द्वित्वे कृते चरितार्थस्य प्रवृत्तौ द्वित्वानापत्तेः, 'पचो व' इति कृते पक्व इत्यत्र कुत्वानापत्तेश्च, तदोस्सस्सावितिसूत्रानाप्यकइतिसूत्राभ्यान्यदाद्य-

'आयादय' इतिसूत्रे गोपायिष्यतीत्यादावायादीन्बाधित्वा परत्वा-त्स्यादयः प्राप्नुवन्तीत्याङ्कय 'अनवकाशा आयादयः, गोपाय-तीत्यादावपि शप्स्यादिः प्राप्नोति । न च सति शप्यसति वा न

---

त्यबाधापत्तेश्च; अतएव 'इदमो म' इतिसूत्रं चरितार्थम् , तत्कन्या-दस्याश्रयणे तु 'यस्साविदो'-'दः पुंसी'तिसूत्राभ्यां त्यदाद्यत्वबा-धेनैव मकारोपपत्तौ तस्य वैयर्थ्यापत्तेः, सामर्थ्यादनित्यत्वक-ल्पनापेक्षया तस्यानाश्रयणकल्पनस्यैव युक्तत्वात् ; दिध्ये इत्यादौ परत्वादिय्यादेशे सकृद्गतिन्यायेन द्वित्वाभावः ; पिप्ये इत्यादौ कृते द्वित्वे चरितार्थत्वात् परत्वान् प्यादेशे पुनः प्रसङ्गविज्ञा-नात द्वित्वमिति चेत , अस्तु तथैवेति केचित् । बाधकतावी-जन्तु तद्प्राप्तियोग्ये अचारितार्थ्यमेव, तद्व्याप्यत्वमिति या-वत् ; न तु तत्कृतवैयर्थ्यं न वा तद्धटकोत्सर्गप्राप्तिस्सफलंवेत्या-शहः । तेन नुटि कृते चारितार्थ्येऽपि सुट् बाधकः । 'एङ्ह्रस्वादि'-त्यस्य हे त्रपो इत्यत्र लुका बाधेऽपि तत्र 'न लुमते'तिनिषेधा-नित्यत्वेन चरितार्थोऽपि ह्रस्वस्य गुणः एङ्ह्रस्वादित्यस्य बाधकः, तेन हे हरे इत्यत्र गुणे कृते सुलोपार्थङ्ग्रहणं चरितार्थम् । अत्रैव प्रमाणमुपन्यस्यति—अतएव आयादय इत्यादिना । अत एवेत्यस्य तद्व्याप्यत्वमात्रस्य बीजत्वादेवेत्यर्थः । आयादयो वा सार्वधातुके नित्यमितिन्यासमुपक्रम्येदं भाष्यं प्रवृत्तम् । गोपायि-ष्यतीत्यादावायादीन बाधित्वा परत्वात स्यादयः स्युः । तत्र कृते सार्वधातुके नित्यमित्यास्याप्राप्त्या आययोगेन वैकल्पिके आय-प्रत्यये गोपायिष्यति गोपिष्यतीत्यस्य सिद्धिः स्यादिति भावः । ननु आयादीनां कथमनवकाशत्वं गोपायतीत्यादौ स्यप्रत्ययाप्रा-प्तियोग्ये चारितार्थ्यादित्यत आह—गोपायतीत्यादावपीति । स्य-नामिशपामन्यतमत्वेन प्राप्त इति भावः । ननु शपि कृतेऽपि गो-

विशेषः, अन्यदिदानीमिदमुच्यते नास्तिविशेष इति, यदुक्तमायादीनां स्यादिभिरव्याप्तोऽवकाश' इति भाष्ये उक्तम्। एवमत्रैतत्प्रवृत्त्युत्तरं चारितार्थ्येऽपि तदव्याप्तोऽवकाशो नास्तीति सममेव। किञ्चानेन न्यायेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्ये तद्बाधबोधनम्, अन्यथानवकाशत्वेनैव बाधे सिद्ध एतत्कथनस्यैव वैयर्थ्यापत्तेः, तक्रकौण्डिन्यन्यायप्रदर्शनस्यापि वैयर्थ्यापत्तेश्च। यथा प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीयद्विर्वचनेन बाधः, यथा चादेरपि प्रवृत्त्या चरितार्थेनादेः परस्ये-

---

पायति अकृतेऽपि गोपायतीति फलाभावान्न शप् स्यादिति कथमनवकाशत्वमायादीनामित्यत आह अन्यदिदानीमिति। शपः प्राप्तिः फलवती माभूदायादीनां व्याप्यत्वन्त्वस्त्येवेति भावः। एतद्भाष्याद् व्याप्यत्वमात्रस्य बाधकताबीजत्वं लभ्यते। एवमत्रेति। यथा शपः फलाभावेऽपि प्राप्तिमात्रेण अयादीनां व्याप्यत्वम्, एवमत्र बाध्यबाधकभावे कृते चारितार्थ्येऽपि व्याप्यत्वं बाधकताबीजमस्तीति भावः। पूर्वग्रन्थेन कृते चारितार्थ्येऽपि बाधो भवतीत्यर्थस्य लाभेऽपि तत्र प्रमाणान्तरदानाय स्पष्टार्थमुच्यते—किञ्चानेन न्यायेनेति। अन्यथेति। व्याप्यत्वमात्रस्य बाधकताबीजत्वाभावे इत्यर्थः। अनवकाशत्वेनेति। वैयर्थ्येनेत्यर्थः, तस्य किञ्चिदर्थज्ञापकत्वन्तु ज्ञापकस्थले सुप्रसिद्धमिति भावः। एतत्कथनेति—येन नाप्राप्त इतिन्यायकथनेत्यर्थः। कृते चारितार्थ्येऽपि बाधे फलमाह—यथेति। अनभ्यासग्रहणं प्रत्याचक्षाणस्य भाष्यकारस्य मतेनेदम्बोध्यम्। अत्र परत्वाद्बाधेनाप्यदोष इत्यरुचेराह—यथेति। 'अलोऽन्त्यस्ये'त्यनेनैकवाक्यतया विधाने पुनरादेः परस्येत्यनेनैकवाक्यत्वे प्रमाणाभावेन 'आदेः परस्ये'त्यस्य न कृते चारि-

स्यनेनालोऽन्त्यस्येत्यस्य बाधः। तदुक्तं 'मिदचोऽन्त्यात्' इति सूत्रे भाष्ये 'सत्यपि सम्भवे बाधनं भवती'ति, अन्यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात्, तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्य-सम्भवात्। अतएव विषयभेदेऽप्यपवादत्वम्। अतएवाचि रादेशेन नुटोऽप्यपवादत्वाद्बाधमाशङ्क्य 'न तिसृ'तिज्ञापकेन समाहितं तृज्वत्सूत्रे भाष्ये। तेन विषयभेदेऽपवादत्वाभाव एव

---

तार्थ्यमित्यरुचेराह—तदुक्तमिति। सत्यपि सम्भव इति—समा-वेशसम्भवेऽपीत्यर्थः। अन्यथेति। चारितार्थ्याभाव एव बाधक-त्वाङ्गीकार इत्यर्थः। अतएवेति—व्याप्यत्वमात्रस्य बाधकत्वबी-जत्वादेवेत्यर्थः। विषयभेद इत्यस्य विभिन्नकार्यित्व इत्यर्थः। अचि रादेशेनेति—प्रकृते रेफादेशः, प्रत्ययस्य नुडिति विषयभेदः स्पष्टः। विषयभेदे अपवादत्वाभावे शङ्कासमाधाने निर्दले स्याता-मिति भावः। तेनेति—'न तिसृ'तिज्ञापकेनेत्यर्थः। ननु विषय-भेदेऽपि बाधे ब्राह्मणेभ्यो दधि दीयतां, कम्बलः कौण्डिन्यायेत्या-दावपि कम्बलदानेन दधिदानस्य बाधापत्तिः, सुटा यासुट् न बाध्यते, लिङो यासुट् तकारथकारयोस्सुडिति विषयभेदादिति फक्किकाप्यनुपपन्नेति चेत्—न, सजातीययोरेव बाध्यबाधक-भावो भवति दधितक्रयोर्भोजने रुच्युत्पादकत्वेनास्ति साजात्यं, न दधिकम्बलयोः, एवमेककालिकयोरेव बाध्यबाधकभावः, अत एवाद्य ब्राह्मणाय दधि दीयतां श्वः कौण्डिन्याय तक्रमित्यादौ न बाध्यबाधकभावः, तथा च परस्मैपदेष्वित्यत्र विषयसप्तम्या लिङ एव यासुट् आदेशोत्तरकाले तकारथकारयोः सुडिति कालभेदान्न बाध्यबाधकभावः। विषयभेदादित्यस्य कालभेदादित्यर्थः। अत

बोध्यत इति कश्चित्—तन्न, विन्मतोर्लुका टिलोपमात्रस्य बाधानापत्तेः। यत्तु 'दयतेर्दिगि'तिसूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यं कैयटेनोक्तं तत्प्रौढ्या। ध्वनितं च तेनापि तस्य तथात्वं तदुत्तरग्रन्थेन। असंभवे एव बाधकत्वं विरोधस्य

---

एव 'प्यायः पी'त्यनेन 'लिड्यङोश्चे'ति विषयसप्तम्या लिटः पूर्वमेव प्यादेशेन न पिप्य इत्यादौ द्वित्वबाधइत्यदोषात्। विन्मतोर्लुकेति—प्रकृत्यैकाजित्यस्य प्रत्याख्याने स्रजिष्ठ इत्यादाविष्ठनि विनो लुकि स्रजित्यस्य टेर्लोपः कस्मान्नेत्याशङ्क्य लुका स्रग्विणष्ठेविनो लुगुत्तरं प्राप्तस्य स्रजष्टेश्च जातिपक्षाश्रयणेनेष्ठन् निमित्तकटिलोपत्वावच्छिन्नस्य बाधेनोभयोर्लोपस्य बाध उक्तो भाष्यकारेण, सोऽसङ्गतः स्यात्, स्रजेरयस्य टेर्लोपः विनश्च लुगिति विषयभेदादित्यर्थः। तस्माद्विषयभेदेऽपि बाध इति सिद्धम्।

ननु दयतेर्दिगिति द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्येन नानवकाशत्वाद्द्वित्वस्य दिग्यादेशेन बाध इति कैयटेन यदुक्तन्ततो विरोधः, त्वया चारितार्थ्येऽपि बाधाङ्गीकारादित्याह—तत्प्रौढ्येति। तत् कैयटोक्तम्, प्रौढ्येति अशुद्धमित्यर्थः। तेनापीति—कैयटेनापीत्यर्थः। तस्येति—पूर्वकैयटग्रन्थस्येत्यर्थः। तथात्वमिति—अशुद्धत्वमित्यर्थः। तदुत्तरग्रन्थेनेति। तत्र हि दिग्यादेशमुपक्रम्य नैवमनवकाशः, कृते द्विर्वचने प्रवृत्त्यविघातात्। अथ पुनरेवमप्यनवकाशं मन्यसे, तदा लक्ष्यदोषप्रसङ्ग इत्युक्तम्; तत्राथ पुनरित्याद्युक्तग्रन्थेन चारितार्थ्यप्रतिपादनपरस्य पूर्वग्रन्थस्यारुचिग्रस्तत्वमुपाध्यायो मन्यते इति ध्वन्यते।

असम्भवे इति—समावेशासम्भव इत्यर्थः। दूषितत्वादिति—सत्यपि सम्भवे बाधनम्भवतीति 'मिदचोन्त्यादि'तिसूत्रस्थभाष्येण

तद्बीजत्वादिति वार्त्तिकमतं तु भाष्यकृता दूषितत्वान्न लक्ष्यसिद्धयुपयोगि । (तक्रकौण्डिन्यन्यायोऽपि तदप्राप्तियोग्येऽचरितार्थविषयो विधेयविषय एव चेति 'तद्धितेष्वचामादेः'

---

दूषितत्वादित्यर्थः । न लक्ष्यसिद्धयुपयोगीति । यथोत्तरं मुनीनां प्रामाण्यमितिभावः । तक्रकौण्डिन्यन्यायेन बाधः निरवकाशत्वेन बाधश्च येननाप्राप्तन्याय एवान्तर्भूत इति द्वयोः समानविषयत्वप्रतिपादनायाह—तक्रकौण्डिन्यन्यायोऽपीति । तदप्राप्तीति—विषयतयोर्व्याप्यव्यापकभावविषय इत्यर्थः । विधेयविषय इति—एककार्यविधायकशास्त्रेणापरकार्यविधायक शास्त्रस्य बाधो, न त्वेककार्यविधायकशास्त्र एव व्याप्यधर्मावच्छिन्नविषयतया व्यापकधर्मावच्छिन्नविषयताया बाध इत्यर्थः । इदञ्चाचारितार्थ्यविषयत्वकथनेनैव गतार्थम्, एकशास्त्रीयविषयतयोर्व्याप्यव्यापकभावविरहादिति बोध्यम् । रत्वावच्छिन्ननिमित्ततया यत्वावच्छिन्नकार्यिताया बाधस्तु माठरपरिवेषणन्यायादित्युक्तं प्राक् । माठरन्यायेनैव च 'वाऽवसाने' इत्यत्र चर्त्वावच्छिन्नविधेयतया झल्त्वावच्छिन्नकार्यिताया बाधात् चर्भिन्नझल एव चर्त्वविधानात् रत्नमुषितिपान्तशब्देऽपवादेनापि 'वाऽवसाने' इत्यनेन जश्त्वेन डकारे कृते चर्त्वेन टकारे रत्नमुट् इति, तदभावे रत्नमुडिति सिद्ध्यति, चरतिरिक्तत्वेन सङ्कोचाभावे तु तक्रन्यायेन जश्त्वं बाधित्वाऽनेन पकारस्यैव चर्त्वेनान्तरतम्यात् पकारे रत्नमुप् तदभावे जश्त्वे रत्नमुडिति स्यात, न तु टकारान्तो रत्नमुट् इति बोध्यम् । एतन्न्यायस्य चासार्वत्रिकत्वात् घिशब्दभिन्नत्वेनेदन्ते न सङ्कोचो यकारातिरिक्तत्वेन च यलि न संकोचः ।

तद्धितेष्वचामादेरिति । तत्र ह्यादिवृद्धौ अन्त्योपधालक्षणवृद्धेः प्रतिषेधो वक्तव्यः, औष्ट्रः जागत इत्युपक्रम्य मध्ये तक्रकौण्डिन्य-

'धातोरेकाचः' इत्यादिसूत्रेषु भाष्ये स्पष्टम् ॥ ५७ ॥

क्वचित्तु सर्वथानवकाशत्वादेव बाधकत्वं यथा ङेरामो याडादिबाधकत्वम्। न हि याडादिषु कृतेषु ङेराम् प्राप्नोति, निर्दिश्यमानस्य व्यवधानात्। तत्र स्वस्य पूर्वं प्रवृत्तिरित्येव

न्यायेन बाधमाशङ्क्य नाप्राप्ते दधिदाने तक्रदानमारभ्यते, इह पुनरप्राप्तायामन्त्योपधालक्षणायां वृद्धावचामादिवृद्धिरारभ्यते सुश्रुत सौस्नुतइति वैषम्यमुद्भावितम्, अनेनाचारितार्थ्यविषयत्वं स्पष्टमेवोक्तम्। धातोरेकाच इत्यादीति। अतद्गुणसंविज्ञानबहुव्रीहिणा 'नित्यं कौटि'-'लुपसदचरे'त्यनयोर्ग्रहः, तत्र हि उत्तरयोर्विग्रहेण विशेषासंप्रत्ययान्नित्यग्रहणानर्थक्यमित्युक्तम्। कुटिलगमनतात्पर्यकं व्रजतीति माभूदित्यर्थं नित्यग्रहणं न, अभिधानस्वाभाव्याद् व्रजतीत्यनेन कौटिल्यरूपविशेषस्याप्रतीत्या तत्प्रयोगाभावसिद्धेरिति भाष्यार्थः। कौटिल्य एव इत्यर्थबोधनद्वारा क्रियासमभिव्यवहारे यङोऽभावार्थन्नित्यग्रहणमस्त्वित्याशङ्कायामाह—क्रियासमभिव्याहारे च नैतेभ्यो यङ् भवितव्यमिति। अत्र चकारेण पूर्वोक्तविशेषासम्प्रत्ययादिति हेतुरनुकृष्यते। वात्र्यते अत्र क्रियासमभिव्याहारस्याप्रतीत्या तत्र तत्प्रयोगाभावसिद्धेस्तदपि नित्यग्रहणस्य न फलमित्यर्थः। केवलव्याप्यव्यापकधर्म्मावच्छिन्नोद्देश्यताकयोर्बाध्यबाधकभावे तु अनुकर्षणार्थकचकारवैयर्थ्यं गत्यर्थकधातुत्वधातुत्वयोर्व्याप्यव्यापकभावादेव गत्यर्थकधात्वतिरिक्तत्वेन धातौ सङ्कोचादेव तत्र तत्प्रयोगसिद्धेरिति भावः। विधेयविषयत्वकथनेनाज्ञादिशब्दे बोधकतया बोध्यतायां न बाधः, अतएव घिशब्दे घिसंज्ञासिद्धिरिति दिक् ॥ ५७ ॥

क्वचित्तु सर्वथानवकाशत्वादिति। इदन्नापूर्वम्, किन्तु येन नाप्राप्तन्यायस्यैवैकदेशमनूद्य तत्र सङ्कोचविशेषः प्रतिपाद्यते इति।

तेषां बाधः। तत्र बाधके प्रवृत्ते यद्युत्सर्गप्राप्तिर्भवति तदा भवत्येव, यथा तत्रैव याडादयः। अप्राप्तौ तु न, यथा पचेयुरित्यादौ दीर्घबाधके निरवकाश इयादेशे दीर्घाभावः। तदेतत् पठ्यते—

क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति ॥५८॥

अपवादशब्दोऽत्र बाधकपरः, तदुक्तं गुणो यङ्लुकोः इत्यत्र भाष्ये 'अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते, अजीगणत्, अत्र गणेरीत्वमपवादत्वाद्धलादिः शेषं बाधते, न गणेरीत्वमपवादत्वाद्धलादिः शेषं बाधते, किं तर्हि ?

---

तदेतत्पठ्यत इति। क्वचिदपवाद इत्ययं नापूर्वः किन्तु स्वप्रवृत्तियोग्यातिरिक्तत्वमात्रबोधनफलित एवेति भावः। क्वचिदिति—सर्वथा निरवकाशस्थल इत्यर्थः। ननु कृते चारितार्थ्ये सति यो बाधकस्स एवापवादशब्दशक्यो वक्ष्यमाणगुणो 'यङ्लुकोरि'तिसूत्रस्थभाष्याल्लभ्यते तर्हि निरवकाशस्थलस्थबाधकतात्पर्येण अभ्यासविकार इत्यत्र क्वचिदपवादविषय इत्यत्र च प्रयुक्तोऽपवादशब्दोऽनुपपन्न इत्यत आह—अपवादशब्दोऽत्रेति। अत्र प्रकृतपरिभाषायामित्यर्थः। तथा च बाधकमात्रे लाक्षणिकः, सुखमात्रे स्वर्गशब्दवदिति बोध्यम। तदेव भाष्यमुपपादयति—तदुक्तमित्यादिना। अभ्यासविकार इत्यस्याः भाष्ये फलन्दत्तमजीगणदिति, तदुपपादयति ग्रन्थकारः—अत्रेत्यादि बाधते इत्यन्तग्रन्थेन। अभ्यासविकार इत्यस्याभावे हलादिः शेषस्य बाधकं गणेरीत्वं स्यात्, तथा चाजीगणदिति न स्यात्, परिभाषया बाधकत्वाभावे बोधिते हलादिः शेषे कृते ईत्वे रूपसिद्धिरिति भावः। अत्राशङ्कते भाष्यकारः—न गणेरिति। परिभाषया चापवादस्यैव बाधक-

अनवकाशत्वादि'तिग्रन्थेन। गणरूपाभ्यासान्त्यणस्येत्वमित्यर्थे हलादिः शेषेण तन्निवृत्तौ तदनवकाशम्, इत्वे तु कृते न तस्य प्राप्तिः अन्त्यहलोऽभावात्। अभ्यासविकारेषु बाध्यबाधकभावाभावेन च साधितम्। तस्मिंश्च सति लोपे कृते सामर्थ्याच्छिष्टस्यान्त्येत्वमिति न दोषः। न च येन नाप्राप्तन्यायेनापवादत्वमप्यस्य सुवचं, तस्य चरितार्थविषयताया उक्तत्वात्। 'इको

---

त्वाभावो बोध्यते। अनेन कृते चारितार्थ्ये यो बाधकस्स एवापवाद इति स्पष्टमेव लभ्यते। इति ग्रन्थेनेत्यस्य तदुक्तमित्यनेनान्वयः, कृते चारितार्थ्ये यो बाधकस्स एवापवादशब्दप्रतिपाद्य इत्युक्तमित्यर्थः। अनवकाशत्वमुपपादयति—**गणरूपाभ्यासान्त्यणस्येति**। लाघवात् सामानाधिकरण्येनैवान्वय इतिभावः। गस्येति तु अलोऽन्त्यविधिलभ्यः। **इत्वे तु कृते इति**। इदत्र प्रकृतोपयोगि। **बाध्यबाधकभावाभावेनेति**। तथा चाभ्यासविकारे बाध्यबाधकभावो नेत्याकारिकैव परिभाषेति न दोष इति भावः। **तस्मिँश्च सतीति**—अभ्यासविकारे बाध्यबाधकभावाभावे च सतीत्यर्थः। **सामर्थ्यादिति**। गणरूपाभ्यासस्येत्यर्थे अभ्यासस्यानर्थक्यादानुमानिकस्थान्यादेशकल्पनाया अभावादुक्तपरिमाणे एकदेशविकृतन्यायाप्रवृत्तेश्चाभ्यासे गणरूपत्वाभावादिति भावः। सामर्थ्याद्गणधातोरभ्यासस्येति वैयधिकरण्यान्वयाऽनर्थकेऽप्यानुमानिकस्थान्यादेशकल्पनादिर्वेति भावः। ननु निरवकाशस्थलेऽपि येननाप्राप्तन्यायेनैव बाधात् तेन बाधकस्यैव चापवादपदप्रतिपाद्यत्वात् निरवकाशस्थलेऽपि यो बाधकस्तस्यापवादत्वं सुवचमेवेत्याह—**न च येन नेत्यादि**। **तस्य चरितार्थेति**, तेन न्यायेनापि चारितार्थ्यविषये यो बाधकस्तस्यैवापवादत्वस्य पूर्वप्रतिपादित-

झल्' इत्यत्र भाष्येऽपि ध्वनितमेतत् । तत्र हि 'अज्झने'निर्दी-र्घेण गुणोत्तरं फलाभावेनानवकाशत्वाद्गुणे बाधिते दीर्घोत्तरं गुणः स्याद् , दीर्घविधानं तु मिनोतेर्दीर्घे कृते 'सनि मीमे'त्यत्र मीग्रहणेन ग्रहणेऽर्थवत्, तत्र पश्चात् प्राप्तगुणबाधनार्थम्, 'इको झलि'तिकित्त्वमित्युक्तम् । अन्यथाऽपवादत्वेन बाधे

---

भाष्येण लाभात् 'इको झलि'ति भाष्यादपि तथैव लभ्यत इत्याह— इको झलीति । अयम्भावः 'इको झलो'तिसूत्रम्मास्तु, बुभूपतीत्यादौ गुणाप्राप्तियोग्येऽचरितार्थेन, गुणे कृते फलाभावेन कृतेऽप्यचरितार्थेन गुणम्बाधित्वा दीर्घेण रूपसिद्धेरित्याशङ्क्य दीर्घोत्तरं गुणो माभूदित्येतदर्थं सूत्रं स्थापितम् । न च दीर्घोत्तरं गुणे अजन्तस्य दीर्घविधानं व्यर्थमिति वाच्यं, दीर्घाभावे ह्रस्वान्तस्य मिधातोः सनि 'सनिमीमे'तिसूत्रस्थमीग्रहणेन ग्रहणाभावे मित्सतीतिरूपासिद्धचा दीर्घविधानस्य सार्थक्यादिति । न च न ह्येकमुदाहरणन्यायेन मिग्रहणे एव कर्त्तव्ये अज्ग्रहणं व्यर्थमेवेति वाच्यम्, अजादेशगमेरित्यर्थस्यापि लाभार्थं तस्यावश्यकत्वात् । न च लाक्षणिकत्वेन कृतदीर्घस्य मिनोतेः मीनातिग्रहणेन चरितार्थेन मीग्रहणेन न ग्रहणमिति वाच्यम्, 'गामादाग्रहणेष्वविशेष' इतिन्यायेन माग्रहणे लाक्षणिकस्यापि ग्रहणात् तत्साहचर्य्येण मीग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वात् । न चास्यामवस्थायां कित्त्वाभावेनेञ्विषयत्वात् मिनोतेरप्यात्वे माग्रहणेनैवेसः सिद्धौ मीग्रहणेन ग्रहणाभावेऽपि न क्षतिरिति वाच्यम्, एज्निमित्तत्वं निमित्तीकृत्य प्रवर्त्तमानात्वस्यैज्निमित्तत्वविघातकहलन्ताचेतिकित्त्वमभ्यादकमिसादेशं प्रति निमित्तत्वासम्भवात् । अतएव मीग्रहणं सार्थकम्; अन्यथा आत्वेन मीनातेरपि माग्रहणेनैव सिद्धे तद्वैयर्थ्यं स्यात् । अन्यथेति—निरवकाशस्थलेऽप्यपवाद

तद्विषये उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासंगतिरिति स्पष्टमेव।

यत्तु काञ्चनीत्यादावपवादमयड्विषयेऽप्यण् भवति, 'क्वचिदपवादविषयेऽपी'तिन्यायादिति—तन्न, 'अण् कर्मणि च' इतिसूत्रस्थभाष्यविरोधात्। तत्र हि 'अणः पुनर्वचनमपवाद-विषयेऽनिवृत्त्यर्थं गोदायो व्रजती'त्याद्युक्तम्। काञ्चनीत्यादौ काञ्चनेन निर्मितेत्यर्थे शैषिकोऽण् बोध्यः।

अत्रेदं बोध्यम्—येन नाप्राप्ते इत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थस्तदा स्वविषये स्वेतरत्रद्यत् प्राप्नोति तद्बाध्यं विध्यन्तराप्राप्तविषयाभावात्। इयमेव बाध्यसामान्यचिन्तेति व्यवह्रियते। अनवकाशत्वेन बाधेऽप्येषा वक्तुं शक्या यद्यु-दाहरणमस्ति, विनिगमनाविरहात्। यदि तु येनेत्यस्य लक्षणे-नेत्यर्थः कार्येणेत्यर्थो वा, तदा बाध्यविशेषचिन्ता। अनव-काशत्वेन बाधेऽप्येतद्बाधेन सार्थक्यमुत तद्बाधेनेत्येवं विशेष-चिन्ता संभवति यद्युदाहरणमस्ति ॥ ५८ ॥

---

शब्दप्रवृत्तौ। अत्राप्यपवादत्वादेव गुणस्य दीर्घेण बाधे अपवाद-त्वाद्बाधे उत्सर्गाप्रवृत्तेर्दीर्घोत्तरं प्राप्तस्य गुणस्याभावाय सूत्राव-श्यकत्वानापत्तेः।

अनिवृत्त्यर्थमिति। अन्यथा न्यायेनैवाणस्सिद्धौ पुनरणूग्रह-णस्य व्यर्थत्वमेवेति बोध्यम। शैषिकोऽणिति—शेष इति विधिसूत्र विहितोऽणित्यर्थः, 'वृद्धाच्छ' इति त्वधिकारविषयो नतु विधि-विषय इत्याशयः।

अत्रेदं बोध्यमित्यादिग्रन्थास्तु बाध्यत्वप्रयोजकधर्म्मवर्णनेनैव व्याख्याताः। यद्युदाहरणमस्तीति। इदमुक्तिवैचित्र्यमात्रम्, 'अक-

तत्र येन कार्येणेत्यर्थे पररूपत्वावच्छिन्ने कार्ये आरभ्यमाणाया वृद्धेस्तद्बाधकत्वे निर्णीते किंशास्त्रविहितस्येत्येवं तद्विशेषचिन्तायामाह—

पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान् ॥५९॥

अवश्यं स्वपरस्मिन्बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभावः, आकाङ्क्षानिवृत्तेः, विप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य बीजम् ॥ ५९ ॥

'नासिकोदरौष्ठजङ्घादन्ते'त्यस्यौष्ठाद्यंशे ङीप्निषेधत्वावच्छिन्नबाधकत्वे निर्णीते किंविहितस्येत्याकाङ्क्षायामाह—

मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान् ॥ ६० ॥

तेनौष्ठादिषु पञ्चसु 'असंयोगोपधादि'तिप्रतिषेध एव बाध्यते, न तु सहनञ्विद्यमानलक्षण इति 'नासिकोदर' इत्यत्र भाष्ये स्पष्टम् । पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥ ६० ॥

ननु 'वा छन्दसी'त्यनेन 'सेह्यपिच्चे'त्यनन्तरस्यापिच्चस्येव हेरपि विकल्पः स्यात्, तथा 'नेटी'तिनिषेधोऽनन्तरहल-

---

स्सवर्णे दीर्घः 'गुणदीर्घोत्वानामपवाद' इत्याद्युदाहरणस्य प्रसिद्धत्वात् । येन लक्षणेन, येन कार्येण इत्याद्यपि न विशेषावगतिहेतुः ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

न्तलक्षणाया इव सिचिवृद्धिमृजिवृद्ध्योरपि स्याद् अत उक्तन्यायमूलकमेवाह—

अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ६१ ॥

अतएव 'संख्याव्ययादे'रिति ङीब्ग्रहणं चरितार्थम्, तद्ध्यनन्तरस्य ङीषो विध्यभावाय। 'न क्तिची'तिसूत्रे दीर्घग्रहणं च चरितार्थम्; तद्ध्यनन्तरस्य 'अनुदात्तोपदेशे'त्यस्यैव निषेधाभावाय। 'मध्येऽपवादा' इतिन्यायापेक्षयाऽनन्तरस्येतिन्यायः प्रबल इत्यष्टाभ्य इति सूत्रे कैयटः। प्रत्यासत्तिमूलकोऽयम्। लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम्। तत्र तत्र क्वचित्स्वरितत्वप्रतिज्ञानात्सामर्थ्येन वा बाध्यतेऽयं न्यायः, यथा 'टिड्ढे'तिसूत्रेण डापा व्यवहितस्यापि ङीपो विधिः, 'न षडि'त्यादिना द्वयोरपि टाब्ङीपोः प्रतिषेधः। इयं च 'शि सर्वनामस्थानम्'इत्यादौ भाष्ये स्पष्टेत्यन्यत्र विस्तरः ॥ ६१ ॥

ननु दधतीत्यादावन्तरङ्गत्वादन्तादेशेऽल्विधौ स्थानिवत्त्वाभावाददादेशो न स्यादिति तद्वैयर्थ्यापत्तिरत आह—

---

ननु दधतीत्यादावन्तरङ्गत्वादिति—द्वित्वोत्तरमभ्यस्तसंज्ञा तदुत्तरप्रवृत्तिमददादेशापेक्षया अन्तादेशस्य शीघ्रोपस्थितिकत्वेनान्तरङ्गत्वादित्यर्थः। ननु जक्षतीत्यादावनैमित्तिकत्वेन सर्वापेक्षया पूर्वमेव 'जक्षित्यादय' इत्यभ्यस्तत्वे समकालमेव प्राप्तयोरन्तादेशादादेशयोर्न्निरवकाशत्वेनान्तादेशं बाधित्वा अदादेशश्चरितार्थ इति चेत्—न, अन्तादेशे उपदेशिवद्भावेन तत्राप्यन्तादेशस्य पूर्वमेव प्रवृत्तेः, कार्यकालपक्षे कार्यप्रवृत्तिप्राक्क्षणे एव संज्ञायाः प्रवृत्त्या-

पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ ६२ ॥

लक्षणैकचक्षुष्को ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिश्चये उत्सर्गेण तत्तल्लक्ष्यं संस्करोति, अन्यथा विकल्पापत्तिरित्यर्थः। अभिनिविशन्ते इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः। 'अपवादो यद्यन्यत्र चरितार्थ' इतिन्यायस्य तु नात्र प्राप्तिः, अन्तादेशाप्राप्तिविषये चारितार्थ्याभावात् ॥ ६२ ॥

लक्ष्यैकचक्षुष्कस्तु तत्तच्छास्त्रपर्यालोचनं विनाप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति, तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेस्तदाह—'

प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते॥ ६३॥

तत इत्यस्यापवादशास्त्रपर्यालोचनात्प्रागपीत्यर्थः प्रकल्प्येत्यस्य परित्यज्येत्यर्थः॥ ६३ ॥

अतएव प्रातिपदिकार्थसूत्रे भाष्ये इदं द्वयमप्युक्त्वा न कदाचित्तावदुत्सर्गो भवत्यपवादं तावत्प्रतीक्षत इत्यर्थकमुक्तम्।

---

ऽभ्यस्तसंज्ञासमकालमेवान्तादेशप्रवृत्तेः, अदादेशवैयर्थ्यस्य सुवचत्वाच्च। लक्षणैकचक्षुष्क इति—लक्षणद्वारैव साधुत्वज्ञानवानित्यर्थः॥ ६२ ॥

लक्ष्यैकचक्षुष्क इति—लक्ष्यसाधुत्वं शास्त्रमन्तरेणैव जानन्नित्यर्थः। ननु तस्य शास्त्रापेक्षा कुत इत्यत आह—तस्यापीति। 'एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः शास्त्रान्वितः स्वर्गे लोके च कामधुगि'तिश्रुतेरिति भावः॥ ६३ ॥

अतएवेति—परिभाषाद्वयस्य सद्भावादेवेत्यर्थः।

एतन्मूलकमेव नवीनाः पठन्ति—

उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्त-मप्युत्सर्गं बाधत इति ॥ ६४ ॥

यत्तु अभ्यस्तसंज्ञासूत्रे कैयटेन प्रकल्प्य चेतिप्रतीकमुपादाय यथा 'न संप्रसारणे' इति परस्य यणः पूर्वं सम्प्रसारणं

---

एतन्मूलकमेवेति—वैयर्थ्यमूलकमेवेत्यर्थः। उपसंजनिष्यमाणेति—उत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्यापवादशास्त्रवैयर्थ्यसम्भावनायां पूर्वमुत्सर्गशास्त्रप्रवृत्त्यभाव इत्यर्थः। यत्रापवादेन स्वप्रवृत्तियोग्यातिरिक्तत्वेनोत्सर्गोद्देश्ये सङ्कोचेऽप्यपवादस्य वैयर्थ्यमेव तत्रोत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्यस्वप्रवृत्तिसम्भावनाविषयातिरिक्तत्वेनापि सङ्कोच इति तत्त्वम्, यथा दधतीत्यादौ। अत्रापवादपदेन निषेधपर्युदासापवादाः सर्वे गृह्यन्ते, तेन ररन्धतुरित्यादौ यदि क्त्विन्न स्यात्तदा नुमि संयोगात्परत्वेनासंयोगादिति स्यादितिसम्भावनायां नुमः पूर्वं कित्त्वन्न। अतएव नलोपो न, 'अनुपसर्गाल्लिम्पविन्दे'त्यादिसूत्रेण उपसर्गयोगात्पूर्वं शप्रत्ययेन 'शे मुचादीनामि'तिनुमि उपसर्गयोगे प्रलिम्प इति च न, यदि पूर्वं शप्रत्ययो न स्यात्तदोपसर्गयोगेऽनुपसर्गादिति निषेधस्स्यादिति सम्भावनायास्तत्राऽपि सत्त्वात्। प्रफुल्लत इत्यादावुपसर्गयोगात्पूर्वं लत्वं न, वागत्रेत्यादावत्रेत्यस्य योगात्पूर्वं द्वित्वं न। यत्रापवादोत्सर्गयोः क्वचित्समकालप्राप्तिस्तत्रायं न्यायो न प्रवर्त्तते। अतएव गविट्टिर इत्यत्र 'गवीतिवचनादेवालुगि'तिभाष्यं सङ्गच्छते, अन्यथा गोइ इति दशायां यदि लुग् न स्यात्तर्ह्यवादेशे हलन्तात्परत्वेनालुक्स्यादितिसम्भावनया पूर्वमलुकस्सिद्धौ गवीतिवचनादितिभाष्यमसङ्गतं स्यात्; 'ऋदुपधेभ्यो लिटः कित्त्व-

पूर्वस्य तु तन्निमित्तः प्रतिषेध इत्युक्तं, तत्तु तत उत्सर्ग इत्याद्यक्षरार्थाननुगुणम् । यत्तु अपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थ इति—तन्न, अभिनिविशन्तेऽपवादविषयमित्यादिपदस्वारस्यभङ्गापत्तेः, पदजन्यपदार्थोपस्थितौ वाक्यार्थबोधाभावे कारणाभावाच्च ।

---

मि'तिवार्त्तिकमपि सङ्गच्छते, अन्यथा यदि गुणो न स्यात्तदा कित्त्वेन निषेधः स्यादिति सम्भावनया पूर्वं गुणाप्राप्त्या तत्करणवैयर्थ्यापत्तेरिति कश्चित् ।

वस्तुतो 'हलदन्तादि'तिसूत्रे अदन्तग्रहणसामर्थ्यात् लुग्विषये उपसञ्जनिष्यमाणन्यायो न प्रवर्त्तते, हलन्तादिति विहितविशेषणमिति वा कल्पनया भाष्यसङ्गतेः। ववृक इत्यादौ तु यदि कित्त्वन्न स्यात्तदा गुणे असंयोगादिति स्यादिति सम्भावनया कित्त्वमपि न प्राप्नोति पूर्वोक्तसम्भावनया गुणोऽपि न प्राप्नोतीति कित्त्वविधानार्थं वार्त्तिकावश्यकत्वम् । यत्तु—अस्य न्यायस्य वैयर्थ्यविषयत्वे ममन्थतुरित्यादौ असंयोगादित्यस्य अपिल्लिट्किदित्यस्य च समकालप्रवृत्त्या ररन्धतुरित्यादौ पूर्वं कित्त्वेन नलोपो दुर्वार इति—तन्न, न्यायाप्रवृत्तावपि नित्यत्वेन पूर्वं नुम्यसंयोगात्परत्वाभावेन कित्त्वाप्राप्तेः, पर्युदासविषये प्रवृत्तौ ज्ञापकं 'दीर्घोऽकित'इत्यकिद्ग्रहणमेवेति दिक् ।

इत्युक्तमिति । एतन्मते प्रकल्प्येत्यस्य रचयित्वेत्यर्थः । अननुगुणमिति । उत्तरकालिकत्वस्य क्त्वाप्रत्ययेनैव लाभादिति भावः ।

अपवादविषयमिति । अस्मिन् व्याख्याने लक्ष्यज्ञानस्यानपेक्षणात् लक्ष्यबोधकापवादविषयशब्दोपादानमनर्थकमिति भावः ।

कारणाभावाच्चेति । कार्ये कारणातिरिक्तस्यानपेक्षणादिति भावः ।

यत्र त्वपवादो निषिद्धस्तत्रापवादविषयेऽप्युत्सर्गः प्रवर्त्तत एव, यथा वृक्षावित्यत्र 'नादिची'तिपूर्वसवर्णदीर्घनिषेधादप्रवर्त्तमानस्य वृद्धिबाधकत्वाभावाद् वृद्धिः प्रवर्तते । अतएव 'तौ सदि'त्यादि संगच्छते । अतएव निर्देशाद् भ्रष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणम् । ध्वनितं चेदम् 'इको गुण' इतिसूत्रे भाष्य इति भाष्यप्रदीपोद्द्योते निरूपितम् । अत्र 'देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं ने'तिन्यायस्य विषय एव नास्ति । हते देवदत्त उन्मज्जनं न, देवदत्तहननोद्यतस्य तु हनने भवत्येवोन्मज्जनम् प्रकृतेऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हननं किन्तु हननोद्यमसजातीयं प्रसक्तिमात्रं, प्रसक्तस्यैव निषेधात् । प्रतिपदोक्तत्वमपि निरवकाशत्वे सत्येव बाधप्रयोजकम् । स्पष्टं चेदं 'शेषाद्विभाषा' इतिसूत्रे भाष्ये । तत्र हि शेषग्रहणमनर्थकं, ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्तीत्याशङ्क्यानवकाशा हि विधयो बाधका भवन्ति, समासान्ताश्च कब्भावे सावकाशा

---

अनाश्रयणमिति । उद्देश्यतावच्छेदकाक्रान्तेरेव शास्त्रावसरत्वेन तस्यापवादनिषेधस्थलेऽपि सत्त्वेनावसरभ्रष्टत्वाभावाच्च । शेषग्रहणमनर्थकमिति । ननु रम्यपथ इत्यादौ प्रतिपदोक्तत्वादप्रत्यये कृतेऽपि कप् माभूदित्यर्थमस्त्वित्यत आह—ये प्रतिपदमिति । बाधका इति—स्वप्रवृत्त्युत्तरमपि कपं वारयिष्यन्तीत्यर्थः । अनवकाशा हीति । तथा च येन नाप्राप्तन्यायस्थल एव तथा बाधो नान्यत्रेति भावः । न च तेनैव बाधोऽस्त्वित्यत आह—समासान्ताश्चेति । तथा च प्रतिपदविधित्वं शीघ्रोपस्थितिनिमित्त-

इत्युक्तम् । क्वचिदनवकाशत्वाभावेऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वं, प्रतिपदविधित्वेनापि; परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति 'प्रत्ययोत्तरपदयोश्च' इतिसूत्रे कैयटेन पाठात् । अतएव रमे इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्व आकारप्रश्लेषाद्धल्ङ्याबिलोपो न प्राप्नोतीत्याशङ्क्य एङ्ह्रस्वात्' इतिलोपेन साधितम् ॥ ६४ ॥

नन्वयजे इन्द्रमित्यादावन्तरङ्गस्यापि गुणस्यापवादेन सवर्णदीर्घेण बाधः स्यादत आह—

अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥६५॥

निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात् । एवं च प्रकृ-

---

कत्वरूपमन्तरङ्गत्वमेव नातिरिक्तं बाधनिमित्तमिति बोध्यम् ॥६४॥

बाधकत्वबीजस्याभावादिति । अन्तरङ्गपरिभाषामबाधित्वैव च येन नाप्राप्तन्यायेन गुणं बाधित्वा दैत्यारिरित्यादौ चरितार्थस्य सवर्णदीर्घस्यान्तरङ्गपरिभाषाबाधकत्वे मानाभावः । किञ्चापवादत्वेऽपि व्याप्यविषयतया व्यापकविषयतायां सङ्कोच एव स्यात्, तथा चावर्णे सवर्णाज्व्यवहितपूर्वाङ्गितरत्वेनाचि वा अगव्यवहितोत्तरत्वविशिष्टसवर्णाज्भिन्नत्वेन सङ्कोचेऽपि अयज-इ-इन्द्रमित्यादौ गुणप्रवृत्तिरप्रतिहतैवेति नापूर्वेयं परिभाषेति तत्त्वम् । अत एव पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वविषय इदमिति वक्ष्यते । तादृशान्तरङ्गस्थले एवापवादशास्त्रीयव्याप्यविषयतया व्यापकविषयतायां सङ्कोचेऽपि उत्सर्गशास्त्रस्यापवादशास्त्रविषये प्रवृत्तियोग्यता । अतएवावशब्दादाचारक्विबन्तात् कर्तरि क्विपि ऊरित्यत्र

तेऽन्तरङ्गेण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यण्-गुणयोरपवादोऽपि बाध्यते । पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्ग-विषय इदम् । यत्तु—आगमादेशयोर्न बाध्यबाधकभावो भिन्न-फलत्वात्, अतएव ब्राह्मणेभ्यो दधि दीयतां, कम्बलः कौण्डिन्या-येत्यादौ कम्बलदानेन न दधिदानबाध इति 'चक्षुवो'रितिसूत्रे कैयटः—तन्न, 'अपवादो नुग्दीर्घत्वस्ये'ति 'दीर्घोऽकितः' इति सूत्रस्थभाष्यविरोधात् ॥ ६५ ॥

नन्वजीगणदित्यादौ गणेरीत्वं निरवकाशत्वाद्धलादिः शेषं बाधेत तत्राह—

---

समानाश्रये चरितार्थ ऊठ् अक्षद्यूरित्यत्रान्तरङ्गत्वाद्वलि लोपेन बाध्येतेत्यपास्तम्, अपवादत्वात्सङ्कोचेन वलि लोपाप्राप्तेः ।

यण्गुणयोरपवाद इति । ननु यणि सिज्लोपस्यासिद्धतया एकादेशे च सिद्धतया यण्गुणयोरप्राप्तियोग्ये आतीदित्यादौ दीर्घस्य चारितार्थ्येन कथमपवादत्वमिति चेत्—न, एकादेशविषये अविशेषात्सर्वं प्रति सिज्लोपः सिद्ध इति तद्वार्त्तिकस्यार्थाद्यणोऽपि तत्र प्राप्तिसत्त्वात्, 'न ह्येकमुदाहरण'न्यायेन सिज्लोप एकादेशो भवतीत्यर्थकवार्त्तिकेनैव सिद्धे अकस्सवर्ण इत्यस्याचारितार्थ्यात्, सिज्लोपस्यासिद्धत्वेन यणः प्रवृत्त्यभावेऽपि उद्देश्यतावच्छेदका-क्रान्तिरूपाया यणः प्राप्तेस्तत्रापि सत्त्वाच्च ॥ ६५ ॥

निरवकाशत्वादिति । गणरूपस्याभ्यासस्येत्वमित्यर्थकस्य 'ई च गणः' इत्यस्य हलादिःशेषेण णकारलोपे निरवकाशत्वम्बो-ध्यम् । बाधेतेति । बाधे हि णकारस्येत्वे ह्रस्वे च कृते अग्लोपि-त्वाद्दीर्घाभावे अजिगणदिति स्यादिति बोध्यम् ।

अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६६ ॥

'दीर्घोऽकितः' इत्यकिद्ग्रहणमस्या ज्ञापकम् । अन्यथा यंयम्यते इत्यत्र नुकि कृतेऽनजन्तत्वाद् दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । इयं परान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिका ।

---

अकिद्ग्रहणस्य ज्ञापकत्वमुपपादयति—अन्यथेति—परिभाषाया अभावे इत्यर्थः । दीर्घप्राप्तियोग्ये अचरितार्थत्वेनानवकाशत्वाद्दीर्घं बाधित्वा नुकि कृते अनजन्तत्वाद्दीर्घाप्राप्त्याऽकिद्ग्रहणं व्यर्थम्, तेन परिभाषाज्ञापने तु नुकः पूर्वं दीर्घो माभूदित्यकिद्ग्रहणम् । न च तस्यामवस्थायामभ्यासस्याकित एव सत्त्वेन कृतेऽप्यकिद्ग्रहणे दीर्घो दुर्वार इति वाच्यम्, यदि दीर्घो न स्यात्तदा नुकि कृते अकिदितिनिषेधः स्यादिति सम्भावनायासत्त्वेनोपसंजनिष्यमाणन्यायेन पूर्वन्दीर्घाप्राप्तेः। अकिद्ग्रहणाभावे तु बाधकसम्भावनाया अप्यभावेन दीर्घो दुर्वारः स्यादित्यकिद्ग्रहणं चरितार्थम् । न च नुकि कृते अनजन्तत्वेन दीर्घाप्राप्त्याऽकिद्ग्रहणं व्यर्थमेवेति वाच्यम्, यावत्पर्यन्तं व्यर्थं तावज्ज्ञाप्यमिति न्यायाद्वैयधिकरण्यान्वयस्यापि ज्ञापनात् । न च परिभाषाज्ञापनोत्तरमपि वैयधिकरण्यान्वयस्यावश्यज्ञापनीयत्वेनावश्यकत्वात्तदेव ज्ञाप्यतां नुकि दीर्घाभावाय चरितार्थं स्यादिति परिभाषायां न प्रमाणमिति वाच्यम्; 'अभ्यासे ह्रस्व' इत्यनेन ह्रस्वस्यैव सत्त्वेन तपरकरणसामर्थ्यादौपदेशिकह्रस्वस्यैव ग्रहणम्, अतएव भाम्धातोर्बाभाम्यत इत्यत्र ह्रस्वे कृतेऽपि न नुक्, तथा च दीर्घे कृतेऽप्यौपदेशिकह्रस्वत्वमादाय नुकः प्रवृत्त्या तक्रन्यायेनैव दीर्घस्य बाधेन कृते नुकि दीर्घाप्राप्त्याऽकिद्ग्रहणवैयर्थ्यस्य तदवस्थत्वात् । न चेदानीं परिभाषाया अभावेन तक्रन्यायेन ह्रस्वं बाधित्वा बाभाम्यत इत्यत्र नुको व्यावृत्त्यर्थन्तपरकरणस्य चारितार्थ्येनौपदेशिकेत्यर्थाभावेन कृते

तेनाचीकरत् मीमांसत इत्यादि सिद्धम् । आद्ये सन्वद्भावस्य परत्वाद्दीर्घेण बाधः प्राप्नोति ; अन्त्ये 'मान्बधे'तिदीर्घेणान्तरङ्गत्वादित्वस्य बाधः प्राप्तः ।

यत्तु—यत्रैकैकप्रवृत्त्युत्तरमपि सर्वेषां प्रवृत्तिस्तत्रैवेदमिति 'अत एक' इतिसूत्रे कैयटः—तन्न, नुकि कृते दीर्घाप्राप्त्या

दीर्घेऽप्यचारितार्थ्येन निरवकाशत्वेनैव दीर्घं बाधित्वा नुकि दीर्घाभावाय चरितार्थमकिद्ग्रहणं न परिभाषाज्ञापकं स्यादिति वाच्यं, वनीवच्यते चर्करीतीत्यादौ तक्रन्यायेनैव नीगादिना दीर्घस्य बाधेन दीर्घाप्राप्तेः यंयम्यत इत्येतन्मात्रार्थत्वे पदलाघवात् न ह्येकमुदाहरणमितिन्यायाच्चानुक इत्येव सिद्धेऽकिद्ग्रहणस्य वैयर्थ्येन परिभाषाज्ञापकत्वसम्भवात् । ननु ध्योधातोर्यङि आत्वे द्वित्वे चाध्यायत इत्यत्रान्तरङ्गत्वात्तुकि दीर्घव्यावृत्त्यर्थमकिद्ग्रहणमस्तु न ज्ञापकमिति चेत्—न, प्रत्यासत्त्याऽभ्यासत्वावच्छिन्नोद्देश्यताकस्यैव कितो ग्रहणेन यङ्यङ्लुग्निमित्तकस्यैव कितो ग्रहणेन वा चाध्यायत इत्येतद्व्यावर्त्तकत्वाभावात् । अतएव जहातेर्जाहातीत्यादावभ्यासस्य व्यपदेशिवद्भावेन किद्घटितत्वेन किद्घटितभिन्नस्येत्यर्थकत्वाकित इत्यस्य न व्यावर्त्यत्वमिति ज्ञापकं सुवचम् । ननु नुकोऽनुस्वारे तस्य वर्णसमाम्नाये पाठेनाच्त्वात् चरिकर्त्तीत्यादौ रिगागमे अजन्ताभ्यासस्यैव सत्त्वेन च सामानाधिकरण्येऽप्यकिद्ग्रहणस्य तद्व्यावर्त्तकत्वेन चारितार्थ्यान्न वैयधिकरण्यान्वयज्ञापकत्वमिति चेन्न, दीर्घसाहचर्येणाऽच्छुभयानात्मकस्यैवाचो ग्रहणाद् वर्णसमाम्नाये तत्पाठस्यानित्यत्वाच्च रीगागमेनैव सिद्धे रिगागमसामर्थ्यान्न तत्र दीर्घाप्रवृत्तेस्सिद्धत्वेनाकिद्ग्रहणस्य तद्व्यावर्त्तकत्वाभावेन वैयर्थ्यात् ।

ननु एकैकप्रवृत्त्युत्तरं यत्र सर्वेषां प्रवृत्तियोग्यता तत्रैवेयं प्रवर्तत

धर्मिग्राहकमानविरोधात्, मान्धधादीनां दीर्घे कृते इत्वाप्राप्त्या 'गुणो यङ्लुको'रितिसूत्रस्थभाष्योक्ततदुदाहरणासङ्गतेश्चेत्यन्यत्र विस्तरः ॥ ६६ ॥

---

इति कैयटाशयः, यंयम्यत इत्यत्र नुमुत्तरमकित इति निषेधेऽपि वैयधिकरण्यान्वयेन दीर्घप्रवृत्तियोग्यताऽस्त्येवेति न धर्म्मिग्राहकमानविरोध इति चेदाह—मान्धधेति। नन्वत्रापि अभ्यासस्यायमाभ्यास इतिव्युत्पत्त्याऽभ्यासस्थानिकस्याचो दीर्घ इत्यर्थेन परिभाषां विनापीत्वस्यैव पूर्वं प्रवृत्त्या दोषाभाव इत्यत आह—गुणो यङ्लुकोरिति। तत्र डोढौक्यत इत्यत्र ह्रस्वं परत्वाद्बाधित्वा दीर्घः स्यादित्याशङ्क्याभ्यासविकारपरिभाषया पूर्वं ह्रस्वे दीर्घस्याबाधित्वा गुणे डोढौक्यत इति सिद्ध्यतीत्युक्तं, तत्र ह्रस्वोत्तरं दीर्घापवादगुणस्यैव प्रवृत्त्या बाध्यबाधकयोर्ह्रस्वदीर्घयोरेकप्रवृत्त्युत्तरमुभयोः प्रवृत्त्यभावेन तदसङ्गत्यापत्तिः, योग्यतापर्यन्ताशयवर्णनेन तु गुणेन बाधेऽपि दीर्घप्रवृत्तियोग्यतायास्सत्त्वेनात्रापि न दोष इति बोध्यम्। नन्वभ्यासविकारे बाध्यबाधकभावाभावेऽनया बोधिते केन भाव्यमिति चिन्तायां यथा समावेशः तथा भवतीत्यर्थस्यैव लाभेन बोभूयत इत्यादौ गुणे ह्रस्वस्य ह्रस्वे गुणस्य प्रवृत्तिसम्भवेन परत्वरूपाधिकबलेन पूर्वं गुणे ह्रस्वे लक्ष्यलक्षणन्यायेन पुनर्गुणाप्रवृत्तौ बोभूयत इत्यसिद्धिः; न च गुणस्य वैयर्थ्यं, डोढौक्यत इत्यत्र ह्रस्वं विना इकोऽभावेन ह्रस्वस्यैव पूर्वं प्रवृत्त्या ततो गुणार्थन्तस्य सार्थक्यात्, अतो बाध्याः पूर्वं प्रवर्त्तन्त इत्येव परिभाषार्थं इति न दोष इति बोध्यम्। विव्यथ इत्यादौ व्यथो लिटीत्येतदपेक्षया बाध्यस्य हलादिः शेष इत्यस्य पूर्वं प्रवृत्तौ वकारस्य सम्प्रसारणापत्तिरिति तु न वाच्यम्, उभयेषां ग्रहणसामर्थ्येन सम्प्रसारणतदाश्रयकार्ययोर्बलवत्त्वबोधनादिति दिक्॥ ६६ ॥

ननु तच्छीलादितृन्विषये ण्वुलपि स्यात्, न च तृन्नपवादोऽसरूपापवादस्य विकल्पेन बाधकत्वाद्, अत आह—

ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति ॥ ६७ ॥

ण्वुलि सिद्धे निन्दहिंसादिसूत्रेणैकाज्भ्यो वुञ्विधानमत्र ज्ञापकं, तत्र ण्वुल्वुञोः स्वरे विशेषाभावात् । ताच्छीलिकेष्विति विषयसप्तमी । तेन ताच्छीलिकैरताच्छीलिकैश्च वाऽसरूपविधिर्नेति बोध्यम् । नन्वेवं कम्रा कम्रेत्याद्यसिद्धिः 'नमिकम्पी'तिरेण 'अनुदात्तेतश्च हलादे'रिति युचो बाधादिति चेत्—न, 'सृददीपदीक्षश्चे'त्यनेन दीपेर्युज्निषेधेनोक्तार्थस्यानित्यत्वात् ॥ ६७ ॥

नन्वेवं हसितं छात्रस्य हसनमित्यादौ घञ्, इच्छति भोक्तुमित्यत्र लिङ्लोटावीषत्पानः सोमो भवतेत्यत्र खल् प्राप्नोतीत्यत आह—

---

तच्छीलादीति । कर्तृसामान्ये विहितस्य ण्वुलस्ताच्छील्यविशिष्टे कर्त्तरि विधाने बाधकाभावादिति भावः । एकाज्भ्य इति । एकाचि ञ्निन्निमित्तकाद्युदात्तत्वे लिन्निमित्तकान्तोदात्तत्वे विशेषाभावादिति भावः । विषयसप्तमीति । तेनैकस्यापि ताच्छीलिकत्वे इयं प्रवर्त्तत इति बोध्यम् । नन्वेवमिति । ताच्छीलिकेषु वाऽसरूपविध्यभाव इत्यर्थः । दीपेर्युज्निषेधेनेति । 'नमिकम्पी'तिरेण बाधादेव युचोऽभावसिद्धेरिति भावः ॥ ६७ ॥

प्राप्नोतीति । वाऽसरूपविधेरिति शेषः । कृत्यतृचोर्बाधेति ।

कृत्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति ॥ ६८ ॥

इदं च वाऽसरूपविधेरनित्यत्वात्सिद्धम् । तदनित्यत्वे ज्ञापकं च 'अर्हे कृत्यतृचश्चे'ति । तत्र हि चकारसमुच्चितलिङा कृत्यतृचोर्बाधो माभूदिति कृत्यतृचोर्ग्रहणं क्रियते इत्यन्यत्र विस्तरः । वाऽसरूपसूत्रे भाष्ये स्पष्टा ॥ ६८ ॥

ननु श्वः पक्तेत्यत्र वाऽसरूपविधिना लडपि प्राप्नोति, कृते आदेशे वैरूप्यादत आह—

लादेशेषु वाऽसरूपविधिर्नास्ति ॥ ६९ ॥

आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थः । अत्र च 'हशश्वतोर्लङ् च' इति लङ्विधानं ज्ञापकम् । अन्यथा परोक्षे लिटा लङः समावेशोऽसारूप्यात्सिद्ध इति किं लङ्-विधानेन । शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्तिः 'लिटः कानज्वे'ति वाग्रहणं च कृतं तज्ज्ञापयति । वाऽसरूपसूत्रेऽपवाद आदेशत्वानाक्रान्तः प्रत्यय

---

वाऽसरूपविधेर्नित्यत्वे तु बाधेऽपि पक्षे कृत्यतृचोः सिद्धेस्तयोर्वैय-र्थ्यमिति बोध्यम् । वाऽसरूपविधेरनित्यत्वादेवोभयोः परिभाषयो-स्सिद्धौ पृथक् ज्ञापनं प्रपञ्चार्थम् ॥ ६८ ॥

ननु श्वः पक्तेति । ननु 'नानुबन्धकृतमसारूप्यमि'तिपरिभा-षया लुट्लृटोरसारूप्याभावादेव वाऽसरूपविध्यभावः तदादेश-योश्चोत्सर्गापवादत्वाभावः, अतएव 'हशश्वतोर्लङ् चे'तिलङ्वि-धानमपि न व्यर्थम् इति चेत्, अत्रोच्यते—लकारे वाऽसरूप-विध्यभावाय न परिभाषा आरभ्यते, अपि तु लादेशेषु तदभावाय

एव गृह्यत इति कैयटादौ ध्वनितम्। तत्फलं 'तु पक्षे तिङ्' इति बोध्यम् ॥ ६६ ॥

ननु 'ङमो ह्रस्वादि'त्यादौ ङमः पास्याचोऽचिपरतो ङम इति वेतिसन्देहः स्यादत आह—

---

परिभाषा आरभ्यते, तत्रैव शतृविधायके विभाषाग्रहणानुवृत्तिः 'लिटः कानज्वे'ति वाग्रहणञ्च प्रमाणम्, अतएव परिभाषायामपि लादेशेष्वित्येवास्ति न तु लकारेष्विति ॥ ६९ ॥

'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय' इत्यस्या व्याख्यानमेतत्पर्य्यन्तं विधाय बलीयःपदघटितत्वसाधर्म्येणोपस्थितामुभयनिर्देश इति परिभाषां व्याख्यातुमाह—नन्विति। सन्देह इति। 'ङमो ह्रस्वादची'त्यादौ ह्रस्वादिति पञ्चमीनिर्देशादुपस्थितस्योत्तरस्येत्यस्य, अचीति सप्तमीनिर्देशादुपस्थिते पूर्वपदार्थे तस्य वोत्तरपदार्थेऽभेदेनान्वयात् ङमः पराभिन्नो योऽचः पूर्वस्तस्य ङमुट्, अचः पूर्वाभिन्नो यो ङमः परस्तस्येत्यर्थो वा, प्रत्यङ् आत्मेत्यत्र ङमः पराभिन्नस्याचः पूर्वस्य कस्याप्यभावेन सूत्राप्रवृत्तावपि प्रत्यङ्-परम-आत्मेत्यादौ तथाभूतस्य परम इत्यस्य सत्त्वेन तत्र सूत्रस्य चारितार्थ्यसत्त्वेन न सन्देहस्सम्भवतीति न वाच्यम्।

इदमत्र चिन्त्यम्—उपस्थितयोः पूर्वपरयोः परस्परमनन्वयेऽपि बाधकाभावेन विशेष्यविशेषणभावे विनिगमकाभावेन च द्वयोर्ङमुट्पदार्थे एवान्वये उद्देश्यभेदेन विधेयस्यापि भेदापत्त्या ह्रस्वात्परो यो ङम् तदन्तं यत्पदं ततः परस्य ङमुट्, अचः पूर्वस्य ङमुडिति वाक्यभेदापत्तिः ; सम्भवत्येकवाक्यत्वे वाक्यभेदो न युक्तो गौरवादिति पूर्वस्येत्यस्य परपदार्थे परस्य वा पूर्वपदार्थेऽभेदेनान्वयेऽभेदेन विशेषणपदोत्तरविभक्तेर्निरर्थकतया षष्ठ्यर्थबाधस्यावश्यकत्वेन तदंशविकलं पूर्वत्वं परत्वं वा परिभाषयोपस्थाप्यं,

उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ ७० ॥

'अची'तिसप्तमीनिर्देशस्य 'मय उञ' इत्युत्तरत्र चारितार्थ्यात्पञ्चमीनिर्देशोऽनवकाश इति 'तस्मादित्युत्तरस्ये'त्यस्यैव प्रवृत्तिः, यत्र तु 'ङः सि धुडि'त्यादावुभयोरप्यचारितार्थ्यं तत्र 'तस्मिन्नि'तिसूत्रापेक्षया तस्मादित्युत्तरस्येत्यस्य परत्वात्तेनैव व्यवस्था। एवमुभयोश्चारितार्थ्येऽपि यथामि सर्वनाम्न इत्यादौ।

---

पूर्वस्य विशेष्यत्वविवक्षायां परत्वं षष्ठ्यर्थविकल्पमुपस्थाप्यं, तस्य च परत्वस्य पूर्वपदार्थेऽन्वयोऽच्पदार्थे वान्वय इति विचारे श्रुतत्वात् अच्पदार्थे एवान्वय उचितः, परपदार्थस्य विशेष्यत्वविवक्षायां पूर्वत्वं तथाभूतमुपस्थाप्यं, तस्य च श्रुतत्वात् परपदार्थेऽन्वयं विहाय ङमुपदार्थे एवान्वयः, तथा च ङमः. परो योऽच् ततः पूर्वस्य ङमुडित्यर्थे ङमो ङमुट् प्राप्तः, अचः पूर्वो यो ङम् ततः परस्य ङमुडित्यर्थेऽचो ङमुट् प्राप्त इति विभिन्नविषयत्वात् सन्देहोपपत्तिः। तत्र 'तस्मिन्नि'ति-'तस्मादि'तिपरिभाषयोर्मध्ये यस्या बलवत्वं तयैव प्रथमं स्वविधेयमुपस्थाप्यं, तस्य विशेष्यत्वसम्भवेन विशेषणत्वाभावात् विशेष्यत्वं, पश्चादपरयोपस्थाप्यस्य विशेषणत्वम्। 'ङमो ह्रस्वादची'त्यादौ पञ्चमीनिर्देशस्यानवकाशत्वेन 'तस्मादि'त्यस्या एव बलवत्वमिति 'तस्मादि'तिपरिभाषयैव प्रथमं स्वविधेयमुपस्थाप्यं, 'शि तुगि'त्यादौ सप्तमीनिर्देशस्य निरवकाशत्वेन तस्मिन्नित्यनयैव प्रथमं स्वविधेयमुपस्थाप्यमिति तत्फलितमाह—उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति ॥ ७० ॥

इति विजयायां बाधबीजकथनप्रकरणं समाप्तम्।

---

तत्राप्नोति सप्तमी 'त्र्यष्ठय' इत्यत्र चरितार्था आदिति पञ्चमी 'आज्जसेरसुगि'त्यत्र चरितार्थेति स्पष्टं तस्मिन्निति सूत्रे भाष्ये कैयटे च ॥ ७० ॥

इति परिभाषेन्दुशेखरे बाधबीजकथनप्रकरणं समाप्तम् ।

---

## अथ शेषार्थकथनप्रकरणम् ।

ननु 'अतः कृकमी'तिसत्वमयस्कुम्भीत्यत्र न स्यात् कुम्भ शब्दस्यैवोपादानादत आह—

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥७१॥

सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्द-

---

अतः कृकमीति सत्वमयस्कुम्भीत्यत्र नेति । विसर्जनीयस्य कुम्भरूपोत्तरपदपरत्वाभावात् अयसः कुम्भीति समासे ङ्यन्तस्यैव तत्त्वात् । कुम्भादावुत्तरपद इत्यर्थः केनचिदुत्प्रेक्षितस्तु हेय एव, तदादिविधिप्रापकाभावात् एकदेशविकृतन्यायोपन्यासोऽपि तथैव, भकारान्तस्य तेनन्यायेन कुम्भशब्दत्वेऽपि तस्योत्तरपदत्वाभावात् । ङ्यन्तस्य तेन न्यायेन तत्त्वन्तु दुरुपपादमेव, तस्य तदेकदेशविकृतत्वाभावात् । प्रातिपदिकग्रहणे इत्यादि । प्रातिपदिकग्रहणे प्रातिपदिकबोधकपदे उच्चारिते सति प्रत्यासत्त्या तेनैव पदेन लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणं बोधनं भवतीत्यर्थः । ननु 'अत इञि'त्यादौ अत्पदस्यापि अदन्तप्रातिपदिकबोधकत्वेन रमा गौरीत्यादिलिङ्गविशिष्टबोधकत्वापत्तिः, इत्यत आह—सामान्यरूपेणेत्यादि ।

ग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम्। अपिना केवलस्यापीत्यर्थः। अस्याश्च ज्ञापकं समानाधिकरणाधिकारस्थे 'कुमारः श्रमणादिभिः' इति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः, स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यं, न तु कुमारशब्दस्येति तदेतज्ज्ञापकम्।

इयं च 'द्विपत्परयो'रित्याद्युपपदविधौ, समासान्तविधौ, मह-

---

प्रातिपदिकत्वतद्व्याप्यानुपूर्वीप्रकारेण बोधके सतीत्यर्थः। अत्पदश्चादन्तत्वप्रकारेण बोधकम्, अदन्तत्वञ्च न प्रातिपदिकत्वरूपन्तद्व्याप्यं वेति न दोषः। नन्वेवं स्त्रीलिङ्गश्रमणाशब्दपाठस्य ज्ञापकत्वानापत्तिः, कुमारत्वस्य कुमारक्रीडायामिति धातावपि सत्त्वेन प्रातिपदिकत्वव्याप्यत्वाभावेन तेन रूपेण बोधककुमारशब्दे परिभाषाया अप्रवृत्तौ ज्ञापितायामपि स्त्रीलिङ्गनिर्देशानुपपत्तेस्तादवस्थ्यादिति चेत्—न, प्रातिपदिकत्वव्याप्यशाब्दबोधीयविषयताप्रयोजकस्यैव प्रातिपदिकग्रहणपदेन ग्रहणात् 'कुमारः श्रमणे'तिसूत्रेण कुमारप्रकृतिकसुबन्तस्यैव बोधेन तत्रत्यकुमारपदप्रयोज्यविषयताया प्रातिपदिकत्वव्याप्यत्वेनादोषात्। नन्वेवम् 'अत इञि'त्यत्रापि प्रातिपदिकाधिकाराददन्तप्रातिपदिकस्यैव ग्रहणेनादन्तत्वावच्छिन्नशाब्दीयविषयताया अपि प्रातिपदिकत्वव्याप्यत्वेनात्पदस्यापि प्रातिपदिकग्रहणत्वापत्तिरिति चेन्—न, प्रातिपदिकत्वावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताभिन्नविषयताया एव ग्रहणेनादोषात् अदन्तत्वावच्छिन्नविषयतायास्तादृशप्रकारताभिन्नत्वाभावात्।

इयमनित्यत्वाद्यत्र यत्र न प्रवर्त्तते तानि परिगणयति—द्विपत्परयोरित्यादि। द्विपत्पदे अस्या अप्रवृत्त्या द्विपदीताप इत्यत्र

दात्त्वे, ञित्स्वरे, राज्ञः स्वरे ब्राह्मणकुमारयोः, 'बहोर्नञ्वदुत्तरपदभूम्नी'त्यादौ समाससङ्घातग्रहणेषु च न प्रवर्तत इति ङ्याप्-

न खश् , समासान्तविधावप्रवृत्त्या मद्राणां राज्ञी मद्रराज्ञीत्यत्र 'राजाहस्सखिभ्य' इति टच् न ; महदात्वे अप्रवृत्त्या महती प्रिया यस्य स महतीप्रियः इत्यत्र 'आन्महत' इत्यात्वन्न; ञित्स्वरे अप्रवृत्त्या इञ्प्रत्ययान्तदाक्षिशब्दान्ङीषि दाक्षीत्यत्र ञित्प्रत्ययान्तत्वमादायाद्युदात्तत्वन्न; राज्ञः स्वरे ब्राह्मणकुमारयोः ब्राह्मणकुमारशब्दयोः परयो राजन्शब्दस्य विधीयमानः प्रकृतिस्वरः राजब्राह्मणी राजकुमारीत्यत्र न, तत्रत्यब्राह्मणकुमारशब्दयोरेतस्या अप्रवृत्तेः। बहोर्नञ्वदुत्तरपदभूम्नीत्यादौ समाससङ्घातग्रहणेषु चेति। अनेनोत्तरपदार्थगतबहुत्वबोधकबहुशब्दपूर्वपदकसमासे बहवो गोमन्तो यस्मिन् स बहुगोमानित्यादौ नञ्पूर्वपदकसमासस्य विधीयमानमन्तोदात्तत्वं यथा अतिदिश्यते, तथा बहवो गोमन्तो यस्यां सा बहुगोमती इत्यत्राप्यनया उत्तरपदार्थगतबहुत्वार्थकबहुशब्दपूर्वपदकसमासत्वं बहुगोमतीत्यत्रानीयान्तोदात्तत्वं न भवति, तत्रत्यसमाससङ्घाते अस्या अप्रवृत्तेः। समाससङ्घातग्रहणे त्विति न स्वतन्त्रमप्रवृत्तिस्थलम् , अपि तु बहोर्नञित्यनेनान्वितं, तेनान्यत्र समाससङ्घातेऽपि प्रवर्त्तत एव। अतएव 'बहुव्रीहेरूधस' इतिसूत्रस्थभाष्यविरोधो न। एवं समासान्तविधावप्रवृत्तिरपि समासावयवे राजादावेव, तेन समासान्तविधावपि समाससङ्घातग्रहणे प्रवर्त्तत एव। अतएवोधश्शब्दान्तबहुव्रीहित्वमनया ङीपन्त आनीय कबापादितो 'बहुव्रीहेरूधस'इतिसूत्रभाष्ये, तेन अतिशयितो भ्राता यस्याः सा अतिभ्रात्रीत्यत्र ऋदन्तोत्तरपदकबहुव्रीहित्वमनया ङ्यन्ते आनीय प्राप्तस्य नित्यकपः पूजितार्थकभ्रातृशब्दान्तबहुव्रीहित्वमनया ङ्यन्त आनीय 'वन्दिते भ्रातु'रित्यनेन

सूत्रे भाष्ये स्पष्टम् । विभक्तिनिमित्तककार्ये च नेत्यपि तत्रैव । तत्र समासान्तविधाववयवग्रहणे एव न, समाससङ्घातग्रहणे तु प्रवर्तते एव, स्वरविधावेव समाससंघातग्रहणे तत्र दोषोक्तेः, 'बहुव्रीहेरूधस' इतिसूत्रभाष्याच्च । एतावत्त्वेनानित्यत्वाद-प्रवृत्तिः, 'दोषाः खल्वपि साकल्येन परिगणिता' इति भाष्योक्तेः ।

नन्वेवं 'बहुव्रीहेरूधसो ङीष्' इतिसूत्रस्थभाष्यासङ्गतिः, तत्र हि कुण्डोध्नीत्यत्र 'नद्यृतश्चे'ति कबापादितो नद्यन्तबहु-व्रीहेरित्यर्थात्, नद्यन्तस्य बहुव्रीहित्वाभावात्तदसङ्गतिः, नद्य-न्तानां यः समास इत्यर्थेन परिहृतम् नद्यन्तप्रकृतिकसुबन्तो-

---

निषेधः । कस्यचिदत्रातिभ्रात्रीघटितद्वितीयसमासकरणबीजन्तु नावधारयामः । एतत्सर्वं स्पष्टप्रतिपत्तये वक्ष्यते मूले तत्र समासा-न्तविधावित्यादिना । विभक्तिनिमित्तकेति । तेन बहुगोमतीत्यत्र 'उगिदचामि'तिनुम् न । साकल्येन परिगणिता इति । सकलाः परिगणिता इत्यर्थः ।

नन्वेवमिति—प्रातिपदिकत्वतव्द्याप्यानुपूर्वीप्रकारेण प्रातिप-दिकग्रहणे एवास्याः प्रवृत्तावित्यर्थः । तदसङ्गतिरिति । 'नद्यृतश्चे'-तिसूत्रे निरुक्तोभयप्रकारेण प्रातिपदिकबोधकपदाभावेन प्रातिपदि-कग्रहण इत्यस्या अप्रवृत्तेरिति भावः । प्रातिपदिकत्वव्याप्यधर्म्म-मात्रस्य ग्रहणं न तु आनुपूर्व्या एवेत्याग्रह इति भावः । तेन बहुव्रीहित्वस्य तव्द्याप्यत्वेन परिभाषाप्रवृत्तिः सुलभेति न दोषः । ननु लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणं परिभाषया बोधितमपि न भवितुमर्हति, प्रातिपदिकबोधकपदस्य तत्र शक्तिलक्षणयोरभा-

त्तरपदकः समास इतीति चेत्—न, अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि पर्याप्तत्वमतिदिश्यते इत्याशयात् ॥ ७१ ॥

---

वात् ताभ्यामुपस्थितस्यैव च शाब्दधीविषयत्वात्, तत्राप्यन्यथानुपपत्त्या लक्षणास्वीकारे तु केवलस्याग्रहणप्रसङ्गः, एकेन पदेन शक्यलक्ष्ययोर्युगपद्बोधस्यादर्शनादित्यत आह—अतिदिश्यत इति । स्वविशिष्टे स्ववृत्तीनां वर्णत्वव्याप्यधर्म्माघटितधर्माणामारोपोऽनया बोध्यत इति बोध्यम् । वैशिष्ट्यं स्वनिष्ठाद्यवयवतानिरूपकत्व-स्वविशिष्टोद्देश्यतानिरूपितविधेयताश्रयीभूतलिङ्गबोधकप्रत्ययनिष्ठचरमावयवतानिरूपकत्वोभयसम्बन्धेन । तत्र वैशिष्ट्यं स्वपर्याप्तत्व-स्वघटितपर्य्याप्तत्वान्यतरसम्बन्धेन बोध्यम् । यथा कुमारशब्दविशिष्टः कुमारीशब्दः, तत्र स्वं कुमारशब्दः तदाद्यवयवत्वस्य स्वपर्याप्तोद्देश्यताघटितापरसम्बन्धस्य च सत्त्वात् तत्र स्ववृत्तिकुमारत्वस्यारोपेण सूत्रस्थकुमारपदेन कुमारीशब्दस्य कुमारशब्दस्य च लक्षणां विनैव बोधोपपत्तिः । शक्यतावच्छेदकारोपस्य लक्षणात्वे तु न विद्वेषः । अय इव कर्णौ यस्यास्सा अयस्कर्णीत्यादौ अयस्कर्णप्रकृतिकङीपन्तकर्णीशब्दस्यार्थवत्त्वाभावेन कर्णीशब्देन ग्रहणाभावे सत्वन्न स्यादिति नाशंकनीयम्, अनया कर्णशब्दगतार्थवत्त्वस्य कर्णीशब्द आरोपात् । एतदर्थमेव द्वितीयसम्बन्धघटकोद्देश्यतायां स्वघटितपर्य्याप्तत्वस्य निवेशः । अतएव च दीर्घमुखमानिनीत्यादौ 'अमानिनीति वक्तव्यमि'तिनिषेधेन 'क्यङ्मानिनोश्चे'तिप्राप्तपुम्वद्भावस्य 'स्वाङ्गाच्चेत' इतिनिषेधः प्रतिषिध्यते, अन्यथा दीर्घमुखमानिनशब्दप्रकृतिकङयन्तमानिनीशब्दस्यार्थवत्त्वाभावेन 'अमानिनी'तिनिषेधो न स्यात् । मम तु द्वितीयसम्बन्धनिवेशेन मानिन्शब्दगतार्थवत्त्वस्य

नन्वेवं यूनः पश्येत्यत्रेव युवतीः पश्येत्यत्रापि 'श्वयुवे'ति-संप्रसारणं स्यादत आह—

मानिनीशब्दे आरोपेणार्थवत्त्वान्निषेधसिद्धिः। यतो यः प्रत्ययो विहितस्तदादितदन्ते एव तद्वृत्तिधर्म्मारोप इत्यत्र तु न मानं, दीर्घमुखमानिनीत्युदाहरणपरभाष्यविरोधश्चेत्येतत्सर्वं 'स्वाङ्गाच्चेत'इतिसूत्रे शेखरे स्पष्टम्। यदि तु अर्थवतः कर्णीशब्दस्याभावादनर्थकस्यापि कर्णीशब्दस्य ग्रहणं, दीर्घमुखमानिनीति भाष्यादनर्थकस्यापि मानिनीशब्दस्य ग्रहणमित्युच्यते, तदा स्वावयवकत्व-स्वोद्देश्यकप्रत्ययान्तत्वोभयसम्बन्धेन स्वविशिष्टे स्वगतधर्म्मारोप इत्यर्थेऽपि न दोष इति बोध्यम्। रमेत्यादावदन्तत्वारोपेणञ्प्रत्ययस्तु न, तस्य वर्णत्वव्याप्यधर्म्मघटितत्वात्।

केचित्तु कुम्भश्च कुम्भी च देवश्च देवी चेति 'पुमान्स्त्रिये'त्येकशेषेण निर्देशादुभयोर्ग्रहणम्, अनुकरणं प्रकृतिवदित्यतिदेशेनानुकरणत्वेऽपि स्त्रीबोधकत्वात् इति नास्याः फलमित्याहुः—तन्न, 'प्रातिपदिकाद्धात्वर्थे' इत्यत्र प्रातिपदिकग्रहणेन रमागौरीत्यादीनां ग्रहणानापत्तेः, 'विष्वग्देवयो'रित्यत्र बहुवचनत्वापत्तेश्च, 'अनुकरणं प्रकृतिवदि'त्यनेनार्थवत्त्वातिदेशस्यादर्शनाच्च ॥ ७१ ॥

नन्वेवमिति—प्रातिपदिकग्रहण इत्यस्य स्वीकारे इत्यर्थः। युवतीः पश्येति—तिप्रत्ययान्ते युवन्शब्दत्वस्यान्यथाऽतिदेशादित्यर्थः। वस्तुतस्तु नेदमस्या असाधारणं फलं, 'श्वयुवे'त्यत्रान इत्यस्य सम्बन्धेनान्नन्तानां श्वादीनां सम्प्रसारणं विधीयते,प्रातिपदिकग्रहणपरिभाषयाऽन्नन्तत्वस्यायास्यतीत्येतत्तात्पर्यकभाष्येणास्यान्यथासिद्धेः। तद्भाष्यस्य नकारप्रश्लेषेण नकारान्तानामन्नन्तानां श्वादीनामित्यर्थे तात्पर्यम्, तेन नकारान्तत्वस्य वर्णत्वव्याप्यधर्म्मघटितत्वेन परिभाषया नातिदेशः, अन्यथा कुमारत्वस्येव

## विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ ७२ ॥

**स्पष्टा चेयं 'युवोरनाकौ' इत्यत्र भाष्ये । घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वात्तन्मूलैवेषेत्यन्ये ॥ ७२ ॥**

---

प्रातिपदिकत्वव्याप्यस्याप्यन्नन्तत्वस्यातिदेशेन भाष्यासङ्गत्यापत्तेः । अतएव 'श्वयुवे'तिसूत्रे शेखरे नकारप्रश्लेष उक्तः । तत्रत्यप्रश्लेषखण्डनन्तु न युक्तं, मघवत् इत्यत्रानुमानिकस्थान्यादेशभावेनान्नन्तत्वात्सम्प्रसारणस्य प्रकारान्तरेण वारणासम्भवात् । सुपथी सखीत्यादावात्वणिद्वद्भावाभावः परिभाषाफलं बोध्यम् ।

**विभक्तौ लिङ्गेति**—विषयसप्तम्या विभक्तिसम्बन्धिकार्ये कर्त्तव्ये प्रातिपदिकग्रहणपरिभाषा न प्रवर्तते इत्यर्थः। तेन विभक्त्युद्देश्यकविभक्तिनिमित्तकानां सर्वेषां ग्रहणम्, अतएव शुन्या शुन्ये इत्यादौ गौरादिङीष्स्थानिकयणमाश्रित्य प्राप्तस्य 'उदात्तयणो हल्पूर्वादि'ति विभक्त्युदात्तत्वस्य लिङ्गविशिष्टपरिभाषया 'न गोश्वन्नि'त्यनेन गोशब्दात् श्वशब्दात् परस्य स्वरो नेत्यर्थकेन प्रसक्तः प्रतिषेधो न, एतस्यापि विभक्तिसम्बन्धित्वात् । सख्यावित्यादौ 'सख्युरसम्बुद्धावि'ति णिद्वद्भावश्च न, दीर्घाह्नी प्रावृडित्यत्रायस्कर्णीत्यत्रेव ङीबन्ते अह्नीशब्दे लिङ्गविशिष्टपरिभाषया अहन्शब्दत्वमादाय अहन्नित्यनेन न रुत्वं, तस्य पदत्वद्वारा परम्परया विभक्तिनिमित्तककार्यत्वेन अनया प्रातिपदिकग्रहणपरिभाषाया निषेधात् । ननु चित्रगवीणामित्यत्र 'कुमति चे'त्यनेन णत्वं न स्यात्, प्रत्यासत्त्या कवर्गवदुत्तरपदघटितसमासप्रकृतिकविभक्तिसम्बन्धिनकारस्यैव तेन णत्वम्, अतएव आक्रोशे षष्ठ्या अलुकि पूर्वपापानां विपाकेन इत्यत्र कवर्गवदुत्तरपदघटितसमासत्वेऽपि विभक्तेस्तत्प्रकृतिकत्वाभावान्न णत्वम्, ततश्च चित्रगवीणामित्यत्र ङीबन्ते कवर्गवदुत्तरपदघटितसमासत्वं लिङ्गविशिष्टपरिभाषयैवानीय तत्प्र-

नन्वु 'तस्यापत्यमि'त्येकवचननपुंसकाभ्यां निर्देशाद् गार्ग्यौ गार्ग्यावित्याद्ययुक्तमत आह—

सूत्रे लिङ्गवचनमतन्त्रम् ॥ ७३ ॥

कृतिकविभक्तित्वं वक्तव्यम्, सा च विभक्तिकार्यत्वेनानया निषिद्धेति चेत्—न, 'अट्कुप्वाङि'त्यनेनैव सिद्धेरिति दिक् ॥ ७२ ॥

गार्ग्यौ गार्ग्याविति। ननु 'तस्यापत्यमि'त्यनेन तत्सम्बन्ध्येकत्वनपुंसकत्वविशिष्टापत्यरूपार्थबोधकोऽणादिप्रत्ययो भवतीत्येवार्थो बोध्यते, ततश्च गार्ग्यः गार्ग्यावित्यादौ यञ्प्रत्ययस्यैकत्वनपुंसकत्वविशिष्टापत्यबोधकत्वेनैकत्वविशिष्टवाचकादेकवचनं नपुंसकत्वविशिष्टवाचकात्परयोः स्वमोरमित्यर्थकाभ्यां 'द्व्येकयोर्द्विवचनैकवचने' 'अतोऽमि'तिसूत्राभ्यामेकवचनस्य सोरमादेशस्य चैवं साधुत्वेन पुल्लिङ्गताद्विवचनयोरनुपपत्तिरित्यत आह—सूत्रे लिङ्गेति। अतन्त्रमिति—अविवक्षितमित्यर्थः। सूत्रघटकशब्दजन्यबोधविषयत्वेन तात्पर्यविषयत्वं लिङ्गस्य संख्यायाश्च नेत्यर्थः। तेन तयोः शास्त्रघटकपदजन्यशाब्दबोधविषयत्वञ्च, शाब्दबोधीयविषयतायास्तात्पर्यीयविषयताप्रयोज्यत्वात्। ततश्चापत्यत्वावच्छिन्नबोधकत्वमेव यञादीनामितिविशेष्यगतलिङ्गसंख्यानुसारेणैव लिङ्गसंख्याकार्यमित्यर्थः।

नन्वेवं तस्यापत्यमित्यादौ अपत्यपदस्य नपुंसकत्वबोधकत्वाभावेन तत्प्रकृतिकसोरमादेशो न स्यात, न च नपुंसकादित्यस्य लक्षणया स्त्रीत्वपुंस्त्वयोरबोधकादित्यर्थ इति न दोष इति वाच्यम्; तत्र भवस्तत्र जात इत्यत्रापि पुंस्त्वाविवक्षणात् सोरमादेशापत्तेः, न चाविवक्षितत्वेऽपि तन्निरूपितशक्तेस्सत्त्वेन न सोरमादेशानुपपत्तिर्नपुंसकादित्यस्य नपुंसकत्वनिरूपितशक्तिमत इत्यर्थादिति वाच्यम्, तट इत्यत्र पुंस्त्वविवक्षायामपि सोरमादेशापत्तेर्नपुंस-

'अर्द्धं नपुंसकम्' इति नपुंसकग्रहणमस्या ज्ञापकम् ।

---

कत्वनिरूपितशक्तेस्तत्रापि सत्त्वात्, अत्रोच्यते—अर्थभेदेन शब्दभेदाङ्गीकारात् नपुंसकत्वशक्तिमतस्तटशब्दात् भिन्न एव पुंस्त्वशक्तिमान् तटशब्दः। 'तटन्त्रिषु' इत्यमरस्य तु प्रमाद एव। नानार्थत्वव्यवहारोऽपि समानानुपूर्वीकत्वमात्रेण बोध्य इति स्पष्टं शब्देन्दुशेखरे। एवञ्चापत्यमित्यत्र नपुंसकत्वशक्तिमत्त्वेन नपुंसकत्वशक्तिमतः प्रातिपदिकात्परयोः स्वमोरित्यर्थेनामादेशः सिद्धः। तट इत्यादौ नपुंसकत्वशक्तिमत्त्वाभावेनादोषः। तत्र भवः तत्र जात इत्यादौ च लिङ्गाविवक्षायामपि पुंस्त्वशक्तिमत्त्वस्यैव सत्त्वेनामादेशाभावः। किञ्च तस्यापत्यं तत्र भवस्तत्र जात इत्यादौ नपुंसकत्वादेः प्रकारतया भानेऽपि तत्तत्प्रत्ययशक्यतावच्छेदकतयाऽविवक्षितत्वेन न तत्तत्प्रत्ययजन्यबोधे प्रकारतया भानं, यथा घटो द्रव्यपदशक्य इति वाक्यजन्यज्ञाने घटत्वस्य प्रकारतया भानेऽपि द्रव्यपदशक्यतावच्छेदकतयाऽविवक्षितत्वेन द्रव्यपदजन्यशाब्दबोधे प्रकारतयाऽभानम्। एवञ्च नपुंसकत्वावच्छिन्नबोधकात्परयोरित्यर्थेऽप्यमादिसिद्धिः

**नपुंसकग्रहणमस्या ज्ञापकमिति।** ननु नपुंसकत्वबोधकस्यैव नपुंसकशब्दबोध्यतया नपुंसकत्वबोधकोऽर्द्धशब्दः समस्यत इत्यर्थेन नपुंसकग्रहणे सति पुम्बोधकस्यार्द्धशब्दस्य ग्रामार्द्ध इत्यादौ नानेन समासः, नपुंसकग्रहणाभावेऽर्द्धमित्यत्र नपुंसकत्वाविवक्षायामपि तस्यार्द्धपदार्थेऽर्द्धशब्दे स्वरूपसम्बन्धेनैवान्वयेन नपुंसकत्वविशिष्टोऽर्द्धशब्दः समस्यत इत्यर्थेन लिङ्गस्य केवलान्वयित्वेन ग्रामार्द्ध इत्यत्राप्यर्द्धशब्दस्य नपुंसकत्वविशिष्टत्वेन समासापत्त्या कथमज्ञापकं नपुंसकग्रहणमिति चेत्, अत्रोच्यते—नपुंसकग्रहणाभावे अर्द्धमित्यस्य नपुंसकत्वविशिष्ट इत्यर्थे पूर्वापरेत्यत्रैवार्द्धशब्दस्य पाठेन सिद्धे पृथक् योगकरणसामर्थ्यात् नपुंसकत्वबोधक इत्य-

नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम्। धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति 'तस्यापत्यम्' इत्यत्र भाष्ये स्पष्टम्। अतएवाकडारसूत्र एकेतिचरितार्थमित्यन्यत्र विस्तरः॥ ७३॥

---

र्थलाभेन नपुंसकग्रहणं व्यर्थं सज्ज्ञापकम्। न चेदं ज्ञापितायामपि तस्यां कथं चरितार्थं, पृथक् योगकरणादेव नपुंसकत्वबोधक इत्यर्थलाभसम्भवादिति वाच्यम्। सत्यामेतस्यां पृथक्योगकरणात् नपुंसकत्वस्य विवक्षा, तस्य चान्यत्र कल्पस्वरूपसम्बन्धं विहाय बोधकत्वसम्बन्धेनान्वय इत्यर्थद्वयकल्पनापेक्षयैकदेशिनेत्यस्यासम्बन्धकल्पनायामेव लाघवेनोक्तार्थलाभाय नपुंसकग्रहणस्य चारितार्थ्यात्। परिभाषाया अभावे तु विवक्षायास्स्वतस्सिद्धत्वेन बोधकत्वसम्बन्धेनान्वयमात्रस्यैव कल्पनीयत्वेनैकदेशिनेत्यस्याननुवृत्तिकल्पनापेक्षया लाघवम्बोध्यमिति।

नन्वर्धमित्यत्र नपुंसकत्वस्य सत्त्वे पुनर्नपुंसकग्रहणाद् 'द्विर्बद्धं सुबद्धमि'तिन्यायात् नित्यनपुंसकस्यार्द्धशब्दस्येत्यर्थ एव कस्मान्नेत्याह—नित्यनपुंसकत्वार्थं तु नेति। 'एओङ्'सूत्रे समांशतात्पर्येणापि अर्द्ध एकार अर्द्ध ओकार इत्यत्र पुंस्त्वस्यैवाभिधानेन नित्यनपुंसकत्वं समांशवाचिनोऽप्यर्धशब्दस्याप्रामाणिकमेवेति बोध्यम्। धान्यपलालन्यायेनेति। यथा धान्यमात्रार्थिनाऽपि धान्यमात्रस्यानेतुमशक्यतया पलालमप्यानीयते तथाऽपत्याद्यर्थमात्रबोधेच्छारप्याचार्यस्य शब्दात् लिंगसंख्याभ्यां विना प्रातिपदिकार्थमात्रबोधस्याशक्यतया तयोरुपादानमिति बोध्यम्। नान्तरीयकतया—आवश्यकतयेत्यर्थः। वचनस्यातन्त्रत्वे प्रमाणमाह—अतएवेति। एकेतिचरितार्थमिति। अन्यथा पदं भमित्यादावेकत्वविवक्षयैव संज्ञेत्यनेकत्वविवक्षयैव वा सिद्धिरिति भावः॥ ७३॥

ननु 'भृशादिभ्यो भुव्यच्वे'रिति विधीयमानः क्यङ् क्व दिवा भृशा भवन्तीत्यत्रापि स्यादत आह—

**नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥७४॥**

नञ्युक्तमिवयुक्तं च यत्किंचिद् दृश्यते तत्र तस्माद्भिन्ने तत्सदृशेऽधिकरणे द्रव्ये कार्यं विज्ञायते, हि यतस्तथार्थगतिरस्ति। न ह्यब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवति। अतश्च्व्यन्तभिन्ने च्व्यन्तसदृशेऽभूततद्भावविषये क्यङिति नोक्तदोषः। 'ओषधेश्च विभक्तावप्रथमायामि'त्यादौ विभक्तिग्रहणं ह्येतन्न्या-

---

स्यादिति। भृशशब्दस्य च्व्यन्तभिन्नत्वादिति भावः। अन्यसदृशेति नञ्समभिव्याहृतमिवसमभिव्याहृतञ्च पदं स्वसादृश्यस्वभिन्नत्वोभयसम्बन्धेन स्वविशिष्टबोधकं, नञ्पदमिवपदञ्च तात्पर्यग्राहकम्। अतएवाब्राह्मणः चन्द्र इवेत्यादौ ब्राह्मणभिन्नो ब्राह्मणसदृशः क्षत्रियादिः चन्द्रभिन्नश्चन्द्रसदृशो मुखादिः प्रतीयते न तु लोष्टादिः। तथा ह्यर्थगतिरिति—हि यतः शब्दशक्तिस्वभावात्तथा गतिरतस्तथाभूतमित्यर्थः। एतेनात्र ज्ञापकजिज्ञासा न कार्य्येति बोध्यम्। अत्र विनिगमनाविरहात् भेदविशिष्टसादृश्यं सादृश्यविशिष्टभेदश्चार्थः। अतएव

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥"

इत्यभियुक्तोक्तौ सादृश्यभेदयोः पार्थक्येन कथनम्। द्रव्येपदार्थे इत्यर्थः। अभूततद्भावविषये इति—च्व्यन्तसादृश्यमभूततद्भावविषयत्वेनेत्यर्थः। विभक्तिग्रहणमिति। अप्रथमापदेनैव विभक्तित्वेन तत्सदृशतद्भिन्न इत्यर्थाद्विभक्तावित्यस्य लाभादिति भावः।

यसिद्धार्थानुवाद एव । एतेन विभक्ताविन्त्याद्यस्याऽनित्यत्वे ज्ञापकमिति वदन्तः परास्ताः, अनित्यत्वे भाष्यसंमतफलाभावात् । अतएव 'अकर्त्तरि च' इति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमिति बोध्यम् । स्पष्टा चेयं 'भृशादिभ्य' इतिसूत्रे भाष्ये । अत्रान्यसदृशेत्युक्त्या सादृश्यस्य भेदाघटितत्वं सूचयति । निरूपितं चैतन्मञ्जूषायाम् ॥ ७४ ॥

ननु व्याघ्री कच्छपीत्यादौ सुबन्तेन समासात्ततोऽप्यन्तरङ्गत्वादाप्यदन्तत्वाभावाज्जातिलक्षणो ङीप् न स्यादत आह—

---

भाष्यसम्मतफलाभावादिति । अयम्भावः—नञो भेदबोधकत्वमत्यन्ताभावबोधकत्वं स्वतस्सिद्धमेव, भेदस्थले सादृश्यमात्रं लोकसिद्धमेव परिभाषया बोध्यते, एतस्या अनित्यत्वफलमिदमेव यत् क्वचिदसदृशोऽपि भिन्नः प्रतीयत इति तेऽभिमतम् , तत्र सोऽपि केनचिद्रूपेण सदृश एवेति परिभाषाप्रवृत्तावपि दोषाभावादिति । भेदाघटितत्वमिति । तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वस्य सादृश्यत्वे सादृश्यकथनेनैव भेदलाभे अन्येत्यस्य वैयर्थ्यापत्तेरिति भावः ॥ ७४ ॥

ननु व्याघ्रीति । स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमेणोपस्थितिः, येन क्रमेणार्थोपस्थितिस्तेनैव क्रमेण तत्तदर्थनिमित्तककार्य्योत्पत्तिरिति सिद्धान्तात् सुबुत्पत्तेः प्रागेव स्त्रीत्वनिमित्तकटापि ततः सुपि ततस्समासेऽदन्तत्वाभावात् ङीप् न स्यादिति भावः ।

ननूपसञ्जनिष्यमाणन्यायेन उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसम्भावनायामुत्सर्गशास्त्राप्रवृत्तिरित्यर्थकेन पूर्वं टापोऽप्रवृत्तिः, यदि टाप् न स्यात्तदा समासे सुपो लुकि ङीप् स्यादिति सम्भावनायास्सत्त्वात्—

## गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥ ७५ ॥

अत्र केचित्—भविष्यदपवादविषयातिरिक्तत्वेनापि सङ्कोच इत्यस्यैवैतन्न्यायतात्पर्य्येण व्याघ्रेत्यस्यैव जातिवाचकत्वेन ङी-ष्विषयत्वात् तदतिरिक्तत्वेन संकोचेऽपि ध्रशब्दाट्टाप् स्यादेवेत्य-वतरणं युक्तमेव ; न चापवादविषयघटकातिरिक्तत्वेनापि सङ्को-चान्न दोषः, अन्यथा सिद्धान्ते सुबुत्पत्तेः प्राक् समासेऽपि अन्तर-ङ्गत्वात् ध्रशब्दाट्टाप् दुर्वारः, न चैवं सति अजया क्रीताऽजाक्रीती-त्यादौ 'क्रीतात्करणपूर्वादि'त्यपवादविषयघटकत्वेनाजशब्ददपि टाप् न स्यादिति वाच्यम , अपवादविषयान्तातिरिक्तत्वेन सङ्कोचे तात्पर्य्यादिति वाच्यं, घन इव कपिला घनकपिलेत्यादौ 'अन्यतो ङीषि'तिङीषापत्तेः, 'तत्पुरुषे तुल्यार्थे'तिसूत्रेण पूर्वप्रकृतिस्वरेण कपिलशब्दस्यानुदात्तान्तत्वेन भविष्यदपवादविषयान्तत्वेन पूर्वं टापोऽप्रवृत्त्या समासेऽन्यतो ङीषित्यस्य प्राप्तेस्सत्त्वात ; भविष्यद-पवादविषयातिरिक्तत्वेन सङ्कोचे तु न दोषः, कपिलशब्दस्य तथा-भूतत्वेन पूर्वं टापि समासेऽदन्तत्वाभावादित्याहुः ।

वस्तुतस्तु—घनकपिलेत्यादौ टापि कृते टाबन्तात्सुपि कृते घनशब्देन समासः, टाप्प्रवृत्तिकाले चान्तोदात्तस्य कपिशलब्दस्य न भविष्यदपवादविषयान्तत्वम् अपि त्वनुदात्तान्तस्यैव तस्य तत्त्व-मिति तत्र टापि न बाधकम् । व्याघ्रीत्यादौ अपवादविषयान्ता-तिरिक्तत्वेनापि सिद्धान्तानुरोधेनावश्यके सङ्कोचे टापोऽप्रसङ्ग एव । किञ्चापवादशास्त्रं स्वप्रवृत्तये स्वप्रवृत्तिस्थानादुत्सर्गशास्त्रं वारयतीत्येव पर्य्यवसितोऽर्थः । तथा च व्याघ्रशब्दे ध्रशब्दादुत्तरं स्थानमपवादस्य व्याघ्रशब्दाद्भविष्यतो ङीष एवेति कथन्तत्र टाप् स्यादित्यपवादविषयातिरिक्तत्वेनापि सङ्कोचे टापोऽप्रसङ्ग एवेत्यवतरणमसङ्गतमेव ।

'उपपदमि'तिसूत्रेऽतिङ्ग्रहणेन कुगतीत्यत्र तदपकर्षणे-नातिङन्तश्च समास इत्यर्थात्तयोः सूत्रयोः सुपेत्यस्य निवृत्त्यैक-देशानुमत्या कारकांशे च सिद्धेयम् । तेनाश्वक्रीती सिद्धा,

---

तत्त्वन्तु समकालिकापवादविषयातिरिक्तत्वेन सङ्कोचेऽपि यत्रापवादस्य वैयर्थ्यमेव तत्रैवायन्न्यायो यथा दधतीत्यादौ । प्रकृते समकालिकापवादविषयातिरिक्तत्वेन सङ्कोचे ब्राह्मणीत्यादौ 'जातेरस्त्रीविषयादि'त्यस्य चारितार्थ्यान्न्यायाप्रवृत्तिरिति सम्य-गेवावतरणमिति बोध्यम् । अन्तरङ्गनिमित्तविनाशको यो लुक् तत्प्रयोजकसमासादीनामेवान्तरङ्गानपीतिन्यायेन प्राबल्यबोधनान्न तेन न्यायेन टापः पूर्वमप्रवृत्तिः ।

परिभाषालाभोपायमाह—उपपदमिति । सुपेत्यस्य निवृत्त्ये-ति । तृतीयान्तस्यैव सुपेत्यस्य निवृत्तिः, प्रथमान्तस्यापि निवृत्तौ चर्म्मच्छेद इत्यादौ चर्म्मप्रकृतिकसुबुत्पत्तेः पूर्वमेव समासे नलो-पानापत्तेर्विभक्तिश्रवणापत्तेश्च । न हि सुपेत्यस्यानुवृत्तौ तिङन्तस्य समासः प्राप्नोति यद्वारणार्थमतिङ्ग्रहणं स्यादिति सुपेत्यस्य निवृत्तिज्ञापकमतिङ्ग्रहणं; ततश्चोपपदसमासगतिसमासयोः सम-र्थेनैव विधानात् । बहिर्भूतसंख्याकारकसापेक्षोत्तरखण्डप्रकृति-कविभक्त्यपेक्षया शीघ्रोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात् सुबुत्प-त्तेः पूर्वमेव समासः । स चोत्तरखण्डो गत्युपपदसमभिव्याहारा-दतिङितिनिषेधाच्च कृदन्त एवेति परिभाषाया अंशद्वयं फलति । स्थालीपुलाकन्यायेन कारकांशोऽपि सिद्ध इत्याह—एकदेशानुमत्ये-ति । न च समासस्योत्तरखण्डप्रकृतिकसुबनपेक्षत्वेऽपि समुदाय-मापेक्षत्वेन बहिरङ्गत्वाद् प्रमात्रसापेक्षटापोऽन्तरङ्गत्वात्प्रवृत्तिस्स-मासात्पूर्वं दुर्वारैवेति वाच्यम्, अर्थवत एव प्रातिपदिकत्वेन क्रियासमभिव्याहारेणैव प्रशब्दस्यार्थवत्त्वेन टापोऽपि समुदाया-

अन्यथा पूर्वं टाप्यदन्तत्वाभावात् 'क्रीतात् करणपूर्वादि'ति ङीप् न स्यात् । अस्या अनित्यत्वात् क्वचित्सुबुत्पत्त्यनन्तरमपि समासः, यथा सा हि तस्य धनक्रीतेति । अन्ये त्वनित्यत्वे न मानं, तत्राजादित्वाट्टाबित्याहुः । अतएव कुम्भकार इत्यादौ

---

पेक्षत्वात् स्त्रीत्वस्याधिकस्यापेक्षत्वेन च तस्यैव बहिरङ्गत्वात् । अतएव सांकौटिनमित्यत्रेनुणन्तत्वरूपाधिकापेक्षत्वेन समासापेक्षयाऽपीनुण् इत्यस्य बहिरङ्गत्वमुक्तं रामशब्दप्रकरणे शब्देन्दुशेखरे । केचित्तु प्राक् सुबुत्पत्तेरित्यत्र सुब्ग्रहणं प्रत्ययमात्रोपलक्षणमित्याहुः—तन्न, ज्ञापकात्तदलाभादुक्तशब्देन्दुशेखरविरोधाच्च । ङीप् न स्यादिति । एवञ्च 'क्रीतात्करणपूर्वादि'तिसूत्रं व्यर्थं सत्कारकांशे ज्ञापकमिति बोध्यम् । अस्या अनित्यत्वादिति । अत्र ज्ञापकम् 'अम्बाम्बगोभूमी'तिसूत्रे गोभूमिग्रहणम्, अस्या नित्यत्वे हि गोष्ठो भूमिष्ठ इत्यत्र सुबुत्पत्तेः पूर्वमेव तया समासे 'सात्पदाद्यो'रिति निषेधाप्राप्त्या 'आदेशप्रत्यययो'रित्यनेनैव षत्वसिद्धौ तस्य वैयर्थ्यं स्यात् । धनक्रीतेतीति । सुबुत्पत्तेः पूर्वं टापि ततस्सुपि समासे अदन्तत्वाभावान्न ङीप् । न मानमिति—गोभूम्यादिग्रहणं तु नियमार्थं, पूर्वपदान्तेणः परस्य स्थसम्बन्धिसस्य षत्वं स्याच्चेद् गोभूम्यादिभ्य एव, तेन हृदिस्थ इत्यादौ न षत्वमिति बोध्यम्; दधिसेचावित्यादौ सुबुत्पत्तेः पूर्वं समासे षत्वाभावाय पदादादिः पदादिरिति पञ्चमीसमासस्यावश्यकत्वेन गोष्ठ इत्यादावपि षत्वनिषेधापत्त्या षत्वार्थं गोभूम्यादिग्रहणस्य चारितार्थ्याच्च । फलमप्यन्यथासिद्धमित्याह—तत्रेति—धनक्रीतेत्यत्रेत्यर्थः । गोचेत्यपि नानित्यत्वे फलं, परपदस्थाजादेशेत्यत्र पदशब्दस्य पदत्वयोग्यपरत्वादिति स्पष्टं नपदान्तसूत्रे शब्देन्दुशेखरे । अतएवेति—परिभाषास्वीकारादेवेत्यर्थः ।

षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव, षष्ठीसमासाभावे चोपपदसमासकृत एकार्थीभाव इति न तत्र वाक्यमित्युपपदमितिसूत्रे भाष्ये स्पष्टम् । तत्र हि 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति वार्त्तिकम्, अथवा विभाषा षष्ठीसमासः, यदा न षष्ठीसमासस्तदोपपदसमास' इति तत्प्रत्याख्यानं च । यद्यप्युपपदसमासस्यान्तरङ्गत्वाभिप्रायकं 'न वा षष्ठीसमासाभावादुपपदसमास इति वार्त्तिककृतोक्तं, तथापि तदुभयप्रत्याख्यानपरमथवेत्यादि भाष्यं, परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तस्य कृद्भिः समासमात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात् । एतेनैषा कारकतद्विशेषयोरुपादान एवेति

---

ननु षष्ठीसमासस्थले एकार्थीभावस्य वैकल्पिकत्वेन कुम्भस्य कार इति वाक्यमपि स्यादित्यत आह—षष्ठीसमासाभावे चेति । षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति । षष्ठीसमासस्य सुबुत्पत्त्यनन्तरं प्रवृत्तौ हि उपपदसमासस्य सुबुत्पत्तेः प्रागेव प्रवृत्तेस्सिद्धत्वाद्विप्रतिषेधकथनस्यानुपयुक्तत्वं भिन्नकालिकत्वेन तदसम्भवश्चेति बोध्यम् । अथवा विभाषाषष्ठीसमास इति । उपपदसमासकाले षष्ठीसमास इति कथनस्य वैयर्थ्यं, स्वत एव तस्याप्राप्तेः । स्वमते वार्तिकविरोधमुपपाद्य खण्डयति—यद्यप्युपपदसमासस्येति । अनेन वार्त्तिकेन सुबुत्पत्त्युत्तरमेव षष्ठीसमासो लभ्यते । तदुभयेति—'षष्ठीसमासादुपपदसमासो विप्रतिषेधेने'ति 'न वा षष्ठीसमासाभावादुपपदसमास' इति वार्त्तिकद्वयेत्यर्थः । अथवेत्यादीति—'अथवा विभाषा षष्ठी समासो यदा न षष्ठीसमासस्तदोपपदसमास' इतिभाष्यमित्यर्थः । एतेनेति—उक्तभाष्येण षष्ठीसमा-

परास्तम्, अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशा-

---

स्यापि सुबुत्पत्तेः पूर्वं लाभेनेत्यर्थः। एवेति—गतिकारकेतिपरिभाषेत्यर्थः। परास्तमिति। नहि 'षष्ठी'ति सूत्रे कारकविशेषोपादानमस्तीतिभावः।

वस्तुतस्तु—कारकविशेषोपादानेन समासविधावेवास्याः प्रवृत्तिः। अतएव टावन्तैः श्रितादिभिस्समाससिद्धयेऽन्तर्वद्भाव आश्रितो 'द्वितीया श्रिते'तिसूत्रे भाष्ये, अन्यथा सुबुत्पत्तेः पूर्वमेव समासे तदसङ्गतिः स्यात्; अपां स्रष्टीत्यादौ 'तृजकाभ्यामि'ति षष्ठीसमासनिषेधो लिङ्गविशिष्टपरिभाषया साधितो ङ्याप्सूत्रे भाष्ये, सुबुत्पत्तेः पूर्वमेव षष्ठीसमासे तु परिभाषां विनैव निषेधप्रवृत्त्या लिङ्गविशिष्टपरिभाषोपादानमसङ्गतं स्यात्। किञ्च 'षष्ठी'ति सूत्रे सुपेत्यस्य सम्बन्धो वर्त्तते न वा? आद्ये कुम्भकारेत्यादौ कृदन्तेन समासोऽनुपपन्नः। अनया तदसम्बन्धो बोध्यत इत्यपि न, नटस्य शृणोतीत्यादौ तिङन्तेनापि समासापत्तेः। न च सुपेत्यस्य सम्बन्धोऽस्ति, परन्तु कृदन्तस्थलेऽनया सुबुत्पत्तेः प्रागेव समासो बोध्यते इति वाच्यं, विरोधात्। नहि स एव समासस्सुबन्तेनापि स्यात् कृदन्तेनाऽपि। अनयैव कृदन्तेन समासो विधीयते इत्यपि न, तर्हि विधित्वापत्त्या परिभाषात्वानापत्तेः। न च 'षष्ठी' सूत्रेणैव सुबन्तेन कृदन्तेन च समासो बोध्यत इति वाच्यं, वाक्यभेदापत्तेः। 'उपपदमतिङि'तिसूत्रस्थभाष्यविरोधोऽपि न, 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेने'ति अथवा विभाषा षष्ठीसमासो यदा न षष्ठीसमासस्तदोपपदसमास इत्युभयप्रत्याख्यानपरमन्तरङ्गत्वाभिप्रायकं 'न वा षष्ठीसमासादुपपदसमास' इतिभाष्यमित्यस्यैव युक्तत्वात् षष्ठीसमासस्थले विभाषाधिकारेणैकार्थीभावस्यैव वैकल्पिकत्वबोधनेन पक्षे वाक्यापत्तेर्दुर्वारत्वात्।

सुवत् कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थालाभाच्च ॥ ७८ ॥

ननूगिदचामित्यत्र धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेतिनियमेनाधातोरेव नुमि सिद्धेऽधातुग्रहणं व्यर्थमत आह—

साम्प्रतिकाभावे भूतपूर्वगतिः ॥ ७९ ॥

तत्तद्वचनसामर्थ्यन्यायसिद्धेयम् । तत्सामर्थ्यादधातुभूतपूर्वस्यापीत्यर्थेन गोमत्यतः क्विपि गोमानित्यादौ नुम्सिद्धिः । 'नामि'इत्यादिसूत्रेषु भाष्ये स्पष्टा ॥ ७९ ॥

---

उपपदसमासकृतैकार्थीभावस्य सत्त्वादिति तु न युक्तम्, एकार्थीभावद्वये प्रमाणाभावेन, तद्भाष्यस्यैकदेश्युक्तत्वाच्च । गोपालिकेत्यादौ 'पालकान्तान्ने'तिवार्त्तिकोदाहरणे सुबन्तेनैव षष्ठ्यन्तस्य समासे टापः सुपः परत्वेनेत्वानापत्तिस्तु न, तत्राणन्तगोपालशब्दात्स्वार्थे कप्रत्ययस्यैव सत्त्वेनापः सुपः परत्वाभावादिति बोध्यम् ॥ ७८ ॥

धातोश्चेदुगित्कार्यमिति—नन्वञ्चतेश्चेदुगित्कार्य्यं न लोपिनोऽञ्चतेरेवेतिनियमस्यापि सम्भवेन धातोर्व्यावृत्त्यर्थमधातुग्रहणं न व्यर्थमिति चेन्न—न, नकारविशिष्टेऽञ्चतौ नुम्यपि वर्णग्रहणे जातिग्रहणमित्यनेन नकारद्वयस्यापि नत्वेनानुस्वारं विशेषाभावात्, 'नपुंसकस्य झलच' इत्यतो झलचेत्यस्य सम्बन्धेनाचःपरो यो झल् तदन्तानामेवोगितां नुमविधानेन नकारविशिष्टे नुमोऽप्राप्त्या नलोपिन एवेति नियमे फलाभावात् । न चौपदेशिकधातुत्वविशिष्टानां चेदञ्चतेरेवेति नियमेनैव गोमत्यतेर्गोमानित्यादौ नुमसिद्धेरधातुग्रहणं व्यर्थमेवेति वाच्यं, तत्रैव स्त्रीत्वविवक्षायाम 'उगितश्चे'तिङीनापत्तेः । नामीत्यादिसूत्रेष्विति । तत्र च आमीति-

## बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७७ ॥

अपिनाऽतद्गुणसंविज्ञानम् । तेषां गुणानामवयवपदार्थानां संविज्ञानं विशेष्यान्वयित्वमिति तदर्थः । यत्र समवायसंबन्धेन संबन्ध्यन्यपदार्थस्तत्र प्रायस्तद्गुणसंविज्ञानम् । अन्यत्र प्रायोऽन्यत् । लम्बकर्णचित्रगू उदाहरणे । सर्वादीनि

---

न्यासे नित्यत्वाद्रामाणामित्यादौ दीर्घे कृतेऽपि ह्रस्वग्रहणसामर्थ्याद् भूतपूर्वह्रस्वान्तत्वमादाय नुडुक्तः ॥ ७६ ॥

अवयवपदार्थानामिति—बहुव्रीह्यवयवपदार्थानामित्यर्थः । विशेष्यान्वयित्वमिति—समासार्थस्य यो विशेष्यस्तदन्वयित्वमित्यर्थः । यत्र समवायसम्बन्धेनेति । संयोगस्याप्युपलक्षणम् । लम्बकर्णमानय लोहितोष्णीषा ऋत्विजश्चरन्तीत्यादौ आनयनचरणादौ कर्णोष्णीषादीनामन्वयात्तद्गुणसम्विज्ञानम् । प्रायस्तद्गुणेति । प्रायोग्रहणात् लम्बकर्णो भोज्यतां चित्रवासा बोध्यतामित्यादावुक्तसम्बन्धेन सम्बन्धित्वेऽप्यन्यपदार्थस्यातद्गुणसम्विज्ञानमेव, नहि कर्णो वासो वा भोजनबोधनान्वयी । अन्यत्रेति—समवायसंयोगान्यसम्बन्धेनान्यपदार्थस्यावयवार्थेन सम्बन्धित्वे इत्यर्थः । प्रायोऽन्यदिति—अतद्गुणसम्विज्ञानमित्यर्थः । यथा दृष्टसागरमानय चित्रगुमानयेत्यादौ । न ह्यत्र सागरस्य गोर्वाऽऽनयनान्वयः । प्रायोग्रहणात् तरुणवत्सां गान्ददाति दृढसेनो राजा युध्यत इत्यादौ जन्यजनकभावस्वस्वामिभावसम्बन्धेऽपि तद्गुणसम्विज्ञानमेव, वत्सस्य सेनायाश्च दानयुधिक्रियान्वयात् । लम्बकर्णेति—लम्बकर्णमानयेति वाक्यघटकलम्बकर्णमित्यर्थः । लौकिकमुदाहरणमुक्त्वा सौत्रमुदाहरणमाह—सर्वादीनीति । अत्रादिशब्दस्यावयववाचित्वात् समवायः सम्बन्धः । जक्षित्यादय इत्य-

जक्षित्यादय इति चोदाहरणे । सर्वनामसंज्ञासूत्रे भाष्ये स्पष्टा ॥ ७७ ॥

ननु 'वदः सुपि क्यप् चे'ति चेनानुकृष्टस्य यतो 'भुवो भावे' इत्यत्राप्यनुवृत्तिः स्यादत आह—

चानुकृष्टं नोत्तरत्र ॥ ७८ ॥

णमुल्यनुवर्त्तमाने 'अव्ययेऽयथाभिप्रेते'तिसूत्रे पुनर्णमुल्ग्रहणमस्यां ज्ञापकम्, अन्यथा क्त्वा चेति वदेत् । तद्धि उत्तरत्रोभयोः सम्बन्धार्थम् । उदाहरणानि स्फुटानि । इदमनित्यम् । अतएव 'तृतीया च हो'रित्यत्र चानुकृष्टाया अपि द्वितीयाया 'अन्तरान्तरेणे'त्यत्र सम्बन्धः । 'लुटि च क्लृप' इतिसूत्रस्थेना-

---

त्रादिशब्दस्य पूर्ववाचित्वात् निरूप्यनिरूपकभावस्सम्बन्धः । तेन क्रमेण तद्गुणसम्विज्ञानातद्गुणसम्विज्ञाने । यत्र समासार्थविशेष्यान्वयित्वमवयवार्थस्य विवक्ष्यते तत्र तद्गुणसम्विज्ञानम्, अन्यत्रान्यदित्यपि व्यवस्था सम्भवति ॥ ७७ ॥

चानुकृष्टमिति—चकारेणानुवर्त्तमानमुत्तरत्र न सम्बध्यत इत्यर्थः । इदमनित्यमिति । तेनेयं क्वचित्प्रवर्त्तते क्वचिन्न । प्रवृत्तिनिवृत्ती च व्यवस्थिते । तथा हि चकारो द्विविधोऽस्ति, एकश्च विधेयघटितसूत्राव्यवहितसूत्रस्थः, व्यवहितसूत्रस्थश्च द्वितीयः । तत्र द्वितीये चकारे इयं प्रवर्त्तते, न प्रथमे । तेन 'तृतीया च होश्छन्दसी'तिसूत्रे कर्मणि द्वितीयेति विधेयघटितसूत्रादव्यवहिते तत्रत्ये चकारे एतस्या अप्रवृत्त्या तेनानुकृष्टाऽपि द्वितीया 'अन्तराऽन्तरेण युक्त' इत्यत्र सम्बध्यते । यत्प्रत्ययरूपविधेयघटिताद्यो यदित्यतोऽनेकसूत्रव्यवहिते 'वदःसुपी'त्यत्र विद्यमाने चकारे

नुवृत्त्यर्थसकलचकारप्रत्याख्यानेन विरुद्धेयम् । व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इति तदाशयः । 'कुलिजाल्लुक्खौ च' इति सूत्रस्थभाष्यविरुद्धा च । तत्र हि 'द्विगोष्ठंश्चे'तिसूत्रात् ष्ठनस्तत्र चेनाप्यनुकृष्टस्य 'खोऽन्यतरस्यामि'त्यस्य चानुवृत्ति स्वीकृत्य लुक्खौ चेति भाष्ये प्रत्याख्यातम् ॥ ७८ ॥

नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह—

स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ७९ ॥

---

एतत्प्रवृत्त्या तस्य यतो भुवो भावे इत्यत्रासम्बन्धः । विरुद्धेयमिति । व्यवहितसूत्रस्थाव्यवहितसूत्रस्थयोरुभयोरपि चकारयोः पूर्वसूत्रस्थपदानुवृत्तिसूचकत्वेनानुवृत्त्यर्थत्वाविशेषादनुवृत्त्यर्थकसकलचकाराभावे इयं क्व प्रवर्त्तेतेति भाष्यविरोधः स्पष्टः । व्याख्यानादिति । स्वरितत्वमेव विलक्षणं किंचित् बहुषु सूत्रेष्वनुवृत्तिप्रयोजकं किञ्चिदल्पसूत्रेष्वनुवृत्तिप्रयोजकमित्यधिकारस्य समीपगमनदूरगमनव्यवस्थार्थमवश्यं वक्तव्यम्, तेनैवात्रापि व्यवस्थोपपत्तिरिति भावः । तथा च यथास्थितसूत्रन्यासे इयं परिभाषेति भावः । यदि चाव्यवहितसूत्रस्थचकारविषयकमेव चकारप्रत्याख्यानभाष्यं तदा न तेन भाष्येण व्यवहितसूत्रस्थचकारविषयिणीयं परिभाषा विरुद्धा, भिन्नविषयत्वात् । नापि 'कुलिजाल्लुक्खौ च'-तिसूत्रस्थभाष्यविरुद्धा, तस्याप्यव्यवहितसूत्रस्थचकारविषयकत्वादिति दिक् ॥ ७८ ॥

न प्राप्नोतीति । व्यञ्जनस्यानुदात्तत्वाद्यभावादितिभावः । स्वरविधाविति—स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यताके विधौ कर्त-

स्वरोद्देश्यके विधावित्यर्थः । 'नोत्तरपदेऽनुदात्तादावपृथिवी रुद्रपूषमन्थिषु' इति सूत्रे पृथिव्यादिपर्युदासोऽस्या ज्ञापकः. अन्यथा पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । धर्मिग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम् । अतएव 'शतुरनुमो नद्यजादी' 'अचः कर्तृयकी'त्यादावजादी अच इत्यादेश्चारितार्थ्यम् । अतएव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वात् 'अन्तोवत्या' इति स्वरो न, उदश्वित्वानित्यत्र 'ह्रस्वनुड्भ्यामि'ति मतुबुदात्तत्वं च नेत्याकरः । स्पष्टं चेदं 'समासस्ये'तिसूत्रे .

---

न्ये लक्ष्यस्थव्यञ्जनानामविद्यमानवद्भाव इत्यर्थः । अतएवेति—स्वरविधावित्यस्य स्वरोद्देश्यकेत्यर्थादेवेत्यर्थः । शतुरनुम इति—अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिविभक्तिरुदात्ता स्यादित्यर्थः । अचः कर्तृयकि—उपदेशे अजन्तानां कर्तृयकि परे आदिरुदात्तो वेत्यर्थः । स्वरविधायकेऽपि विधौ व्यञ्जनस्याविद्यमानवद्भावे एतत्सूत्रद्वयेऽपि कर्तव्ये व्यञ्जनस्याविद्यमानत्वापत्त्याऽजाद्यग्रहणस्य वैयर्थ्यं स्यादित्यर्थः । अतएव—उक्तहेतोरेवेत्यर्थः । अन्तोवत्याः—अवतीशब्दस्यान्त उदात्त इत्यर्थः । ह्रस्वनुड्भ्याम्मतुप्—ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्त इत्यर्थः । नन्वस्यापि स्वरोद्देश्यकत्वेनात्र परिभाषाप्रवृत्त्योदश्वित्वानित्यादौ प्रवृत्तिर्दुर्वारेति चेत्—न, स्वरत्वव्याप्यधर्मघटितधर्मावच्छिन्नाया उद्देश्यदलीयविषयतायाः प्रतिबन्धकत्वं व्यञ्जनस्य नेत्यर्थेनोदश्वित्वानित्यत्रोदश्विच्छब्दस्यान्तोदात्तत्वेऽपि ह्रस्वान्तत्वावच्छिन्नविषयताप्रतिबन्धकत्वं तकारस्यास्त्ये-

भाष्ये । 'उच्चैरुदात्त'इतिसूत्रे कैयटस्तु—इयमनावश्यकी समभिव्याहृताजुपरागेण हलोऽप्युदात्तादिवदवभासात्तदुपपत्ते-रित्याह । तत्र भाष्येऽपि ध्वनितमेतत् ॥ ७९ ॥

नन्वेवमपि राजदृषदित्यादौ 'समासस्य' इत्यन्तोदात्तत्वं पकाराकारस्य न स्यादत आह—

हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८० ॥

अस्याश्च 'यतोऽनाव' इतिसूत्रे नौप्रतिषेधो ज्ञापकः। नाव्यमित्यत्रादिर्नकारो न स्वरयोग्यः, यश्चाकारस्तद्योग्यो नासावादिरिति स प्रतिषेधोऽनर्थकः । न चादिरेव नकार उदात्त-

---

वेत्यदोषात् । उदात्तान्तत्वोदात्तादित्वघटकवर्णे व्यञ्जनातिरिक्त-त्वन्देयमित्यत्रैव परिभाषायास्तात्पर्य्यमिति तत्त्वम् । अजुपरा-गेणेति—स्वरविशिष्टाच्सान्निध्येनेत्यर्थः । अवभासादिति—जपा सन्निधानेन स्फटिकस्य रक्तत्ववदित्यर्थः । यद्यपि व्यञ्जनस्योदात्त-वदवभासमात्रं नोदात्तत्वं वस्तुतः, तथापि पृथिव्यादिपर्य्युदासेना-भावात्मकाहार्यज्ञानस्यापि शास्त्रप्रवृत्तिप्रयोजकत्वमतिदेशस्थलव-दिति भाष्ये सूचितमिति बोध्यम् ॥ ७९ ॥

नन्वेवमपीति—स्वरोद्देश्यकविधौ व्यञ्जनस्याविद्यमानवद्भा-वेऽपीत्यर्थः । हल्स्वरप्राप्ताविति—स्वरविधायकशास्त्रीयोद्देश्यता-वच्छेदकाक्रान्तस्य हलः स्वरविधाने कर्तव्ये इत्यर्थः । यतोऽनाव इति—यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो नावं विनेति तदर्थः । न चादिरेवेति—व्यञ्जनस्योदात्तत्वादियोग्यत्वाभावेऽपि उदात्त-त्वादिगुणविशिष्टोऽन्तरतमोऽच् व्यञ्जनस्य स्थाने आदेशोऽस्तु

गुणविशिष्टान्तरतमाज्रूपोऽस्त्विति वाच्यम्, तथा सति निमित्तभूतव्यच्कत्वस्य विनाशादुपजीव्यविरोधेनाद्युदात्तत्वाप्राप्तेरित्यन्यत्र विस्तरः। स्पष्टा चेयं 'समासस्ये'ति सूत्रे भाष्ये ॥ ८० ॥

ननु 'पूरणगुणे'तिनिषेधस्तव्यत्यपि स्यात्, 'दिव औत्' इत्यौत्वं दिवेः क्विप्यपि स्यात्, तथा 'यतोऽनावः' इतिस्वरो ण्यत्यपि स्यात्, 'ऋदृशोऽङि गुणः' इति चङ्यपि स्यात्, अत आह—

---

तथा च नायोग्यतेत्यर्थः। तथा सतीति। अजूद्वयघटितशब्दघटकव्यञ्जनस्य स्थानेऽपरस्याचो विधाने अचस्त्रित्वेन निमित्तभूतस्य तन्निष्ठद्वित्वस्य नाशः स्यात्, उत्तरा संख्या पूर्वां संख्यां बाधत इति न्यायात्, तथा चोपजीव्यविरोधस्यान्याय्यत्वान्नाच्यमित्यत्र न प्रवर्त्तेत सूत्रमिति व्यर्थमेव नौग्रहणमिति भावः। न च स्वनिमित्तविघातकस्य स्वातिरिक्तस्य स्वमनिमित्तमित्यर्थस्य सन्निपातपरिभाषाया वक्ष्यमाणतया स्वेन स्वनिमित्तविनाशो न दोषाय, अत एव रामाभ्यामित्यादौ दीर्घेण स्वनिमित्तभूतस्य ह्रस्वत्वसमानाधिकरणस्यात्वस्य विनाशेऽपि न क्षतिरिति वाच्यम, यस्य स्वनिमित्तविनाशं विना न चारितार्थ्यं तेनैव स्वनिमित्तविनाशो न दोपाय, चरितार्थ्ये तु दोष एवोपजीव्यविरोधो न न्याय्य इति न्यायमूलकत्वात् परिभाषाया इत्यदोषात्, प्रकृतेऽजादौ चारितार्थ्यसम्भवात् ॥ ८० ॥

तव्यत्यपि स्यादिति—तकारस्य लक्ष्येऽश्रवणेन तव्यरूपस्य तत्रापि सत्त्वादिति भावः। क्विप्यपि स्यादिति। दिवुधातोरुकाररूपानुबन्धस्य लक्ष्येऽभावात् दिवरूपस्य तत्र सत्त्वादिति भावः। चङ्यपि स्यादिति। ननु ऋवर्णान्तात् दृशेश्च चङोऽसम्भवादि-

## निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८१ ॥

## तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणम् ॥ ८२ ॥

'वामदेवाड्ड्यड्ड्यौ' इतिसूत्रे ड्यड्यतोर्डित्त्वमनयोर्ज्ञापकम्। तद्धि 'ययतोश्चातदर्थे' इत्यत्र तयोरग्रहणार्थम्। नञः परस्य ययदन्तस्योत्तरपदस्यान्त उदात्त इति तदर्थः। एवं चावामदेव्येऽव्ययपूर्वपदप्रकृतिस्वर एव भवति। तन्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्यार्थः। एते च प्रत्ययाप्रत्ययग्रहणसाधारणे, 'दिव औत्' इत्यादौ

---

दमसङ्गतमिति चेत्—न, ततोऽङीत्यनुवर्त्तमाने 'श्वयतेर' इतिसूत्रं चङि अशिश्वियदित्यत्रापि स्यादिति तात्पर्य्यात्, तत्र च 'विभाषा धेट्श्व्यो' रित्यनेन चङो विधानात्। तद्धीति—डित्त्वं हीत्यर्थः। तयोरिति—वामदेवप्रकृतिकययतोरित्यर्थः। तदर्थ इति—'ययतोश्चातदर्थ' इत्यस्यार्थ इत्यर्थः, डकाररूपानुबन्धस्य बोधके सर्वेऽपि लक्ष्ये यमात्रस्यैव तत्रापि सत्त्वात्। यत्प्रत्ययस्थलेऽपि भूतपूर्वस्यैव तकारस्य सत्त्वेन ड्यत्प्रत्ययेऽपि भूतपूर्वतकारस्य स्वतो यकारस्य च डकारकरणेऽपि सत्त्वेन तयोर्ग्रहणस्य दुर्वारत्वेन डित्त्वं व्यर्थमेवेति भावः। टिलोपार्थन्तु न, यस्येति लोपेन सिद्धेः। अवामदेव्य इति—वामदेव्यशब्दस्य नञ्समास इत्यर्थः। अव्ययपूर्वपदेति। 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' इतिसूत्रेण सप्तते पूर्वपदभूतास्तत्पुरुषे प्रकृत्येत्यर्थकेणेति भावः। आद्यार्थस्य स्पष्टत्वादन्यार्थमाह—तन्मात्रेत्यादि। स चेति—यस्य सूत्रे उपादानं स इत्यर्थः। प्रत्ययाप्रत्ययेति—प्रत्ययस्य ज्ञापक-

संचारितत्वात् । वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्टमौङ आप इत्यत्र भाष्ये । येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा तदनुच्चारण एवैषा, धर्मिग्राहकमानात् । तेन जश्शसोरित्यत्र नेपेति निरनुबन्धकत्वात्तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम् । एवमन्त्या अन्यतरानुबन्धोच्चारणे एव । तेन 'वनो-रचे'त्यादौ ङ्वनिप्क्वनिपोर्ग्रहणासिद्धिः । एकानुबन्धकग्रहणे सम्भवतीत्यर्थो न भाष्यादिसंमत इत्यन्यत्र विस्तरः ॥ ८२ ॥

ननु कुटीर इत्यादौ स्वार्थिकत्वात् स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्न्यायप्राप्तत्वात्पुंस्त्वानुपपत्तिः, अप्कल्पमित्यत्र नपुंसकत्वैकवचनयोरनुपपत्तिश्चेत्यत आह—

---

स्वादप्रत्यये 'दिव औदि'त्यत्र संचारितत्वादिति भावः । वर्णग्रहणे चानयोरप्रवृत्तिरिति । तेनाधीते इत्यादौ ङितीकारेऽपि दीर्घसिद्धिः । औङ आप इत्यत्रभाष्य इति । तत्रहि निरनुबन्धकपरिभाषया द्वितीयाद्विवचनेऽप्रवृत्तिमाशंक्य वर्णग्रहणे नेपेति समाहितम । धर्मिग्राहकमानादिति—'ययतोश्चातदर्थे' इत्यत्र यप्रत्ययस्य ङकारेण सानुबन्धकत्वं यत्प्रत्यये ङकारेण द्व्यनुबन्धकत्वं तस्यानुच्चारणमस्तीति भावः । नेपेति—तत्र शकारानुबंधस्योच्चारणादिति भावः । तद्धितशसोऽग्रहणन्तु जस्साहचार्य्याद्बोध्यम । वनोरचेति । अत्र कस्याप्यनुबंधस्योच्चारणाभावादिति भावः । न भाष्यादिसम्मत इति । तेन 'अणिनुण' इत्यत्र घिनुणोऽग्रहणम्, अन्यथा एकानुबन्धकस्याभावेनोक्तपरिभाषाया अप्राप्तौ घिनुणो ग्रहणं दुर्वार स्यात् । 'ङ्मय' इत्यत्र मतुप्शब्देन ङ्मतुपोऽग्रहणञ्च सिद्धम ॥ ८१ ॥ ८२ ॥

## क्वचित्स्वार्थिकाःप्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते॥८३॥

'णचः स्त्रियाम्' इतिसूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका; अन्यथा 'कर्मव्यतिहारे णच् स्त्रियाम्' इतिस्त्रियामेव विधानात्किं तेन। स्पष्टा चेयं बहुज्विधायके भाष्ये॥ ८३॥

---

क्वचित्स्वार्थिकाः प्रकृतित इति। प्रत्ययानां प्रत्ययेति महासंज्ञयाऽर्थवत्त्वेनावश्यमेव भवितव्यम्। प्रत्याययति स्वीयमर्थमिति प्रत्यय इति भाष्ये स्वीयपदोपादानेन च यत्र शास्त्रेण कोऽप्यर्थो विशिष्य नोच्यते तत्रार्थवत्त्वजिज्ञासायामुपस्थितत्वात्प्रकृत्यर्थेनैवार्थवत्ता वक्तव्या, तदर्थविशेषणतयोपस्थितलिङ्गसंख्ययोरप्यन्वय उक्तयुक्त्या वक्तव्य इति प्रकृतेरेव लिङ्गसंख्यानुवर्त्तनं स्वार्थिकानामौत्सर्गिकम्, सति गमके प्रकृत्यर्थलिङ्गसंख्याभिन्नलिङ्गसंख्याबोधकत्वम्। अत एव क्वचिदित्युक्तम्। प्रकृतित इति। पष्ठ्यन्तात्तसिः, वचनं संख्या, अतिवर्त्तनम् त्यागः। णचः स्त्रियामेव विधानेन तदन्तात् जायमानोऽञ् स्त्रियामित्युक्तिं विनाप्युक्तयुक्त्या स्त्रियामेव भविष्यतीत्युच्यमानं स्त्रियामित्युक्तार्थे ज्ञापकम्। रप्रत्ययार्थाल्पत्वस्य कुटीरूपप्रकृत्यर्थेऽन्वयान्न प्रत्ययान्ते एकार्थीभावरूपसामर्थ्यानुपपत्तिः। नन्वत्यन्तस्वार्थिकप्रत्ययान्तयावकादीनां कथमेकार्थीभावः, तत्र कस्यापि प्रकृत्यर्थातिरिक्तस्यार्थस्य प्रत्ययेनाप्रतीतेः परस्परान्वितार्थकत्वरूपैकार्थीभावस्यासम्भवादिति चेत्—न, यावरूप एवार्थः प्रत्ययेनापि महासंज्ञाबलात् प्रतीयते, 'न सोऽस्तिप्रत्ययो लोके यः शब्दानुगमादृते' इत्यभियुक्तोक्त्या करूपशब्दस्य यावरूपशब्दस्यापि खण्डशक्त्योपस्थितस्य विशेषणतयाऽन्वयेन विभिन्नरूपतया प्रकृत्यर्थप्रत्ययार्थयोरभेदान्वयेनैकार्थीभावस्य सूपपादत्वात्।

नन्वेकार्थीभावो नाम कः पदार्थः? न तावत् परस्परान्विता-

ननु सुपथी नगरीति 'युवोरनाकाविं'तिसूत्रभाष्योदाहृते 'इनः स्त्रियाम्' इतिकप्स्यादत आह—

समासान्तविधिरनित्यः ॥ ८४ ॥

'प्रतेरंश्वादयस्तत्पुरुषे' इत्यन्तोदात्तत्वार्थं श्वादिषु राजशब्दपाठोऽस्यां ज्ञापकः, अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं

---

र्थबोधकत्वं, घटशब्देऽपि तदापत्तेः; न वा परस्परान्वितार्थकानेकशब्दघटितत्वं सः, क्विबन्तलिडादिशब्दे तदभावापत्तेरनेकशब्दघटितत्वाभावात्; अत्रोच्यते—स्ववृत्तित्वस्वपर्य्याप्तशक्तिज्ञानाधीनज्ञानविषयत्वोभयसम्बन्धेन पदविशिष्टशक्तिपर्य्याप्त्यधिकरणत्वं सः। समन्वयः स्वयमूहनीयः ॥ ८३ ॥

टचैवेति—ननु 'प्रतेरंश्वादयस्तत्पुरुष' इत्यस्य प्रतेः परीभूतास्तत्पुरुषघटका अंश्वादय अन्तोदात्ता इत्यर्थेन प्रतिराज इत्यत्र टिलोपे कृतेऽवशिष्टस्य राजोऽप्येकदेशविकृतन्यायेन राजनशब्दत्वात् सति शिष्टस्वरबलीयस्त्वाद्रेफाकारस्योदात्तत्वाय पाठ आवश्यक इति चेत—न, प्रतिपरांश्वाद्युत्तरपदकतत्पुरुषस्यान्त उदात्त इत्यस्यैव परस्परसमभिव्याहारल्लाभेन टचोऽकारस्यैव प्राप्त्या तस्य चित्त्वादेवोदात्तत्वसिद्धेः पाठवैयर्थ्यस्य सूपपादत्वात, अक्तपरिमाणत्वेन राजमात्रस्य तेन न्यायेन राजन्शब्दत्वालाभेन पूर्वोक्तार्थेऽपि वैयर्थ्यसत्त्वाच्च। 'द्वित्रिभ्यां पादन्मूर्द्धसु बहुव्रीहा'विति सूत्रे मूर्द्धस्विति कृतसमासान्तनिर्देशेन बहुव्रीहावेव समासान्तस्य सत्त्वेन बहुव्रीहिग्रहणं व्यर्थं सत् परिभाषां ज्ञापयति। ज्ञापितायाञ्च तस्यां समासान्ताभावे द्विमूर्द्धा इत्यत्र स्वरप्रवृत्तयेऽकृतसमासान्तनिर्देशस्यावश्यकत्वेन बहुव्रीहीतरसमासे स्वराभावाय बहुव्रीहिग्रहणं चरितार्थम्। एतेन राज्ञो प्रतिगतः प्रतिरा-

तेन । 'द्वित्रिभ्यां पाद्दन्मूर्द्धसु' इतिस्वरविधायके भाष्ये स्पष्टेयम् ॥ ८४ ॥

ननु शतानीत्यादौ नुमि कृते षट्संज्ञा प्राप्नोति ततश्च लुक् स्यात्, तथोपादास्तेत्यत्राप्त्वे कृते 'स्थाघ्वोरिच्चे'तीत्त्वं प्राप्नोत्यत आह—

**सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८५ ॥**

सन्निपातो द्वयोः सम्बन्धः तन्निमित्तो विधिस्तं सन्निपातं यो विहन्ति तस्यानिमित्तम् । उपजीव्यविरोधस्यायुक्तत्व-

---

त्रिरित्यत्र समासान्तविधौ लिङ्गविशिष्टपरिभाषाया अनित्यत्वेन टचोऽभावेन तत्र स्वरप्रवृत्तये राजन्शब्दपाठश्चरितार्थः । न च स्वरविधावपि लिङ्गविशिष्टपरिभाषाया अभाव इति वाच्यम्, संघातग्रहणे एव तत्राप्रवृत्तेरुक्तत्वात् नेयं ज्ञापकसिद्धेत्यपास्तम् ॥ ८४ ॥

ननु शतानीत्यादौ नुमि कृते षट्संज्ञा प्राप्नोतीति । ननु विभक्तिसापेक्षनुमो बहिरङ्गत्वेनासिद्धत्वान्न षट्संज्ञा स्यादिति चेत्—न, संज्ञाया विधिनिमित्तनिमित्तकत्वेन षट्त्वस्यापि लुम्निमित्तविभक्तिनिमित्तकत्वेनोभयोस्समत्वात् । उपदेशे नान्तस्य षट्संज्ञेत्यर्थेन षट्त्वाभावस्तु न, प्रातिपदिकस्योपदेशाभावेन तादृशार्थस्यासम्भवात् । नुमनिमित्तविभक्तिविनाशसम्भावनयाऽकृतव्यूहपरिभाषया नुम न स्यादिति दोषस्तु न, तस्या असत्त्वादेतद्दोषवारणायापि सन्निपातपरिभाषायाः कर्त्तव्यत्वाच्च । उपजीव्यविरोधस्यायुक्तत्वमिति—उपजीवयतीत्युपजीव्यः, ण्यन्तात् कर्त्तरि बाहुलकाद्यत्, तस्य यो विरोधो नाशानुकूलो व्यापारः स उपजीव-

मिति न्यायमूलैषा । अतएवात्र सन्निपातशब्देन न पूर्वपरयोः सम्बन्ध एव, किं तु विशेष्यविशेषणसन्निपातोऽपि गृह्यते । अतएव ग्रामणिकुलमित्यादौ नपुंसकह्रस्वत्वेऽपि पितिकृतीति तुग, प्रातिपदिकाजन्तत्वसन्निपातेन जातस्य ह्रस्वस्य तद्विघातकत्वात् । तुक्यजन्तत्वविघातः स्पष्ट एव, न चार्थाश्रयत्वेन

---

केन कर्तुमयोग्य इत्यर्थः । शतानीत्यादौ नुमं प्रत्युपजीव्या विभक्तिः तन्नाशो लुक् तज्जनको व्यापारः षट्संज्ञाप्राप्तिः सा उपजीवकेन नुमा न कर्त्तव्येति न षट्संज्ञा । एवमुपादास्तेत्यादौ दीङो 'मीनातिमिनोतिदीङा'मित्यनेन सिज्निष्ठमेज्विषयं गुणप्रयोजकमकित्त्वमुपजीव्य जायमानमात्त्वं घुसंज्ञाद्वारा 'स्थाघ्वोरिच्चे'त्यनेन विहितं सिज्निष्ठमकित्त्वविनाशकं कित्त्वं प्रति निमित्तं नेति न कित्त्वमिति बोध्यम् । ननु कित्त्वस्याकित्त्वविनाशकत्वेनाभावेऽपीत्वं दुर्वारन्तत्रोपजीव्यविरोधाभावादिति चेत्—न, कित्त्वस्यानयाऽभावे तत्सन्नियोगशिष्टेत्वस्य 'सन्नियोगशिष्टानामन्यतरे'त्यनया वारणात् । अतएवेति—उपजीव्यविरोधस्यायुक्तत्वमूलकत्वादेवेत्यर्थः । विशेष्यविशेषणसन्निपात इति—अभेदसम्बन्ध इत्यर्थः, सन्निपातस्य निमित्तमात्रपरत्वादिति भावः । निमित्तमात्रविरोध उपजीव्यविरोधस्य सत्त्वादिति भावः । प्रातिपदिकाजन्तत्वसन्निपातेनेति—प्रातिपदिकस्याजन्तेन सह योऽभेदस्तद्रूपसन्निपातेन निमित्तभूतेनेत्यर्थः । पूर्वपरसम्बन्धस्यैव सन्निपातपदेन ग्रहणे तु प्रकृते परिभाषाया अप्रवृत्त्यापत्तेः । तुक्यजन्तत्वविघात इति । यदागमन्यायेन तुग्विशिष्टस्य प्रातिपदिकत्वं न तु तेन तस्याजन्तत्वं, वर्णग्रहणे तस्याप्रवृत्तेः । ह्रस्वस्य तुकि बहिरङ्गासिद्धत्वन्तु नेत्याह—न चार्थाश्रयत्वेनेति—नपुंसक-

ह्रस्वस्य बहिरङ्गतयाऽसिद्धत्वम्, अर्थकृतबहिरङ्गत्वानाश्रयणस्योक्तत्वात्। किं च 'षत्वतुकोरसिद्ध' इत्येतद्बलात् कृति तुग्ग्रहणाच्च तुग्विधौ बहिरङ्गपरिभाषाया अप्रवृत्तेः। सर्वविधसन्निपातग्रहणादेव वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यादित्येतत्परिभाषादोषनिरूपणावसरे वार्त्तिककृतोक्तम्। न हि प्रत्ययः पूर्वपरसन्निपातनिमित्तकः, स एव च सन्निपातशब्देन गृह्यत इति मत्वा न प्रत्ययः सन्निपातनिमित्तक इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा तर्ह्यनिमित्तं स्यादित्येकदेशिनोक्तमिति न

---

स्वरूपार्थाश्रयत्वेनेत्यर्थः। किं चेति—नाजानन्तर्य इति परिभाषयेत्यर्थः। सर्वविधसन्निपातेति—निमित्तमात्रग्रहणादेवेत्यर्थः। वर्णाश्रयः—वर्णनिमित्तकः। विचालस्य—नाशस्येत्यर्थः। तथा च दाक्षिरित्यत्राकारनिमित्तके प्रत्यये परे यस्येति लोपो न स्यादिति बोध्यम्। पूर्वपरसम्बन्धस्यैव सन्निपातत्वे अत्र तदभावेन लोपो न स्यादिति भावः। ननु वर्णाश्रय इत्यादि वार्त्तिकोक्तं दूषणमयुक्तमेव न प्रत्ययस्सन्निपातेति वक्ष्यमाणभाष्येण तस्य खण्डनीयत्वादिति चेत्—न, तस्यैकदेशिकथितत्वेन तेन तस्य खण्डनासम्भवात्। एकदेशिकथितत्वमुपपादयितुमाह—नहि प्रत्यय इत्यादि। इतिमत्वेति—इत्यभिप्रायेणेत्यर्थः। तदभ्युपेत्यैवेति—प्रत्ययस्य सन्निपातनिमित्तकत्वाभावं स्वानभिमतमपि स्वीकृत्यैवेत्यर्थः। अङ्गसंज्ञा तर्ह्यनिमित्तमिति। वर्णाश्रयः प्रत्यय इति दूषणे न प्रत्ययस्सन्निपात इत्यनेन समाहिते वर्णाश्रय इत्यस्याशयान्तरं वर्णयति अङ्गसंज्ञा तर्हीति। वर्णाश्रयप्रत्ययनिमित्ताङ्गसंज्ञाप्रकृतिघटकवर्णनाशकं यस्येतिलोपं प्रत्ययनिमित्तं स्यादिति। अत्र प्रथमदूषणे न प्रत्यय इति समाधानस्य अङ्गसंज्ञा तर्हीत्याशयान्तर-

तद्भाष्यविरोधः । किं चैवं शैवो गार्ग्यो वैनतेय इत्यादावप्यङ्ग-संज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यस्य वैयर्थ्यम् । ग्रामणिकुलं ग्रामणिपुत्र इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथा-कथंचिद्बहिरङ्गपरिभाषयापि वारणं संभवतीति 'ङ्मो ह्रस्वादचि ङमुण्नित्यम्' इत्यत्र 'ह्रस्वस्य पिति' इतिसूत्रे चैकदेशिना तया परिभाषया तुग्वारितो भाष्ये । अतएव परिभाषाफलत्वेनेदमुक्तं ङ्मो ह्रस्वादचि इति सूत्रे वार्त्तिककृतेति केचित् ।

वर्णनस्य चैकदेश्युक्तत्वमित्यर्थः । तथा च वर्णाश्रय इति दोपदान-मेव युक्तं, तेन च विशेष्यविशेषणभावस्यापि सन्निपातपदेन ग्रहणमिति स्पष्टमेव लभ्यत इति भावः । एकदेश्युक्तत्वं साधयति—किञ्चेति । किमिति, कस्मादित्यर्थः, एवं सतीत्यर्थः । शैवः गार्ग्य इत्यत्र वर्णमनाश्रित्य जायमानो यः प्रत्ययस्तन्निमित्तिका अङ्ग-संज्ञा प्रकृतिघटकवर्णनाशे निमित्तं न स्यात्, लोपे हि अदन्त-शिवशब्दे प्रत्ययात्व्यवहितपूर्वत्वमदन्तस्याङ्गसंज्ञाया निमित्तं नश्य-तीति भावः । तथैव दाक्षिरित्यत्राप्यङ्गसंज्ञाया अनिमित्तत्वात्तत्ता-त्पर्यकत्वे वर्णाश्रयत्वं प्रत्ययविशेषणं व्यर्थं स्यादिति न तद्वाश-यक वर्णाश्रय इति भाष्यमिति तदाशयवर्णनमेकदेशिन एवेति स्प-ष्टम् । न च न प्रत्ययस्सन्निपातनिमित्तक इत्यस्य कथमेकदेश्युक्त-त्वमिति वाच्यं, सिद्धान्तिना तत्समाधानाकरणेन तस्य हेयत्वबो-धनात् । ननु ग्रामणिकुलमित्यादौ बहिरङ्गपरिभाषया तुको वार-णासंभवे तत्र तया तुको वारणपरभाष्यविरोध इत्यत आह—ग्रामणिपुत्र इत्यादि । यथाकथञ्चिदिति—नाजानन्तर्यपरिभाषा-स्मरणात्प्रागित्यर्थः । वस्तुतोऽयुक्तमेवेत्यत आह—एकदेशिनेति । अतएवेति—बहिरङ्गपरिभाषाया अप्रवृत्तेरेवेत्यर्थः । परिभाषाफल-

सन्निपातलक्षणविधित्वमस्या लिङ्गम् । स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातस्तद्विघातकस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति ।

नन्वेवं रामायेत्यादौ 'सुपि चे'तिदीर्घानापत्तिः, अदन्ताङ्गङे-सन्निपातेन जातस्य यादेशस्य तदविघातकत्वात्, न च यञादित्व-

---

त्वेन—सन्निपातपरिभाषाफलत्वेनेत्यर्थः । ईगतावित्यस्मात्क्विपि नपुंसकह्रस्वे इकुलमित्यादौ तुको वारणायैतद्विषये सन्निपातपरिभाषाश्रयणस्यावश्यकत्वेन क्वचिल्लक्ष्ये बहिरङ्गपरिभाषासंचारस्तेवृथेति भावः। सन्निपातपरिभाषाश्रयणस्यावश्यकत्वेन 'नपुंसकस्य झलच' इत्यत्र परिभाषोपस्थितिरिति बोध्यम् । सर्वनामस्थानं निमित्तीकृत्य जायमानो नुम् लुग्द्वारा सर्वनामस्थानविघातकषट्संज्ञां प्रत्यनिमित्तमिति न षट्संज्ञा ।

स्वातिरिक्तशास्त्रस्येति । ननु व्यञ्जनस्य 'यतोऽनाव' इत्यनेनोदात्तगुणविशिष्टाचो विधाने त्र्यच्त्वसम्पत्त्या निमित्तभूतस्याज्निष्ठस्य द्वित्वस्य विनाशेनोपजीव्यविरोधः स्यादित्यस्य पूर्वमुक्तत्वेन स्वस्यापि स्वनिमित्तविघातकत्वाभावस्य लाभादिदमसङ्गतमिति चेत्—न, यस्य स्वनिमित्तविनाशं विना न प्रवृत्तिस्तदतिरिक्तशास्त्रस्येत्यर्थेनादोषात् , यथा सुपिचेतिशास्त्रं स्वनिमित्तादन्तस्य विनाशं प्रति निमित्तमेव तद्विनाशं विना तस्याचारितार्थ्यात् । तदविघातकत्वादिति—अदन्तत्वविघातकदीर्घं प्रत्यनिमित्तत्वादित्यर्थः। यः स्वनिमित्तविघातकत्वेन यं जानाति तं प्रत्येव स निमित्तं न भवति । यादेशं प्रति बहिरङ्गतया दीर्घस्यासिद्धत्वेन ज्ञानाभावात् तं प्रति यादेशो निमित्तं स्यादेवेत्याह—न च यञादित्वेति,। दीर्घस्य अभावप्रतियोगिस्वरूपासिद्धत्वस्यारोपेऽपि वस्तुतस्तस्य सत्त्वेन प्रवृत्तिध्रौव्यात् निमित्तविघातोऽस्त्येवेति परिभाषा-

सापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्, आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेः; किं चान्तरङ्गे कर्तव्ये बहिरङ्गस्यासिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभावः, किं चातिदेशिकसन्निपातविघाताभावमादायैतदप्रवृत्तौ गौरीत्यादौ संबुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तसन्निपातविघाताभावात्तत्रैतस्यातिव्याप्तिपरं 'कृन्मेजन्त' इतिसूत्रस्थभाष्यासङ्गतिः; सन्निपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत्तर्ह्यसिद्धत्वमपि कथमिति विभावय, अशास्त्रीयेऽसिद्धत्वाप्रवृत्तेरोदूदेदितिसूत्रे कैयटेन स्पष्टमुक्तत्वात्; एवं च पूर्वत्रासिद्धीयेऽपि कार्ये एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेत्—न, कष्टायेति निर्देशेनैतस्या अनित्य-

या: प्रवृत्तिरव्याहतेत्याह—आरोपितेत्यादि । शास्त्रस्य प्रवृत्तौ नि-
वृत्तौ वाऽतिदेशस्थलानुरोधेन निमित्तबुद्धेरेवापेक्षितत्वेनाज्ञात-
स्य स्वरूपसतस्तद्विघातस्याकिञ्चित्करत्वादित्यरुचेराह—किञ्चेति ।
ननु 'ङेर्य्य' इत्यस्य जातत्वेऽपि न क्षतिः तं प्रत्यसिद्धत्वबोधनाभा-
वात् अपि तु परिभाषां प्रति दीर्घस्य तत्त्वं बोध्यते तस्याश्च जात-
त्वाभावात्, परिभाषया हि सन्निपातलक्षणे कार्य्ये स्वनिमित्तविघा-
तकं शास्त्रं प्रत्यनिमित्तत्वं बोध्यते, सन्निपातलक्षणविधित्वस्य परि-
भाषालिङ्गत्वेन 'ङेर्य्य' इतिशास्त्रस्थत्वेन तन्निमित्तनिमित्तकत्वेन-
न्तरङ्गा परिभाषा, तां प्रति दीर्घस्यासिद्धत्वेन तस्या चादेशनि-
मित्तविनाशकत्वेन दीर्घज्ञानाभावात्तया तं प्रत्यनिमित्तत्वबोधना-
सम्भवादत आह—किञ्चेति । पूर्वत्रासिद्धीयेऽपि कार्य्ये एतत्परि-
भाषाप्रवृत्तिरिति । वस्तुतः प्रवृत्तौ बाधकाभावमात्रप्रतिपादन-

त्वात्। ययोः संन्निपातस्य विघातकं शास्त्रं तयोः संनिपातनिमित्तकविधावुपादानमपेक्षितमिति तु नाग्रहः। अतएव दाक्षिरित्यत्राकारान्तप्रकृतीञ्सन्निपातनिमित्ताङ्गसंज्ञाऽनया परिभाषयाऽल्लोपस्य निमित्तं न स्यादित्याशंक्यानित्यत्वेन समाहितं 'कृन्मेजन्त' इतिसूत्रे भाष्ये न ह्यङ्गसंज्ञायामदन्तस्याङ्गसंज्ञेत्युक्तमस्ति। न च कुम्भकारेभ्य आधय इत्यादावव्ययसंज्ञाया अनया परिभाषया वारणपरभाष्यासङ्गतिः, अनया परिभाषया लुङ् माभूत्, अव्ययत्वं तु स्यादेव, लुका हि तदीयसन्निपातस्य विघातो नाव्ययसंज्ञया, संज्ञाफलं त्वकच् स्यादिति वाच्यम्; एतदुदाहरणपरभाष्यप्रामाण्येन साक्षात्परम्परया वा स्वनिमित्तसन्निपातविघातकस्य स्वयमनिमित्तमित्यर्थेनादोषात्। एतेनात्राकच् स्यादित्यपास्तम्। न च कार्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबाधेऽप्यकजेकवाक्यतापन्ना स्यादिति वाच्यम्,

---

परोऽयं ग्रन्थः। न तु तत्र प्रवृत्तौ फलम्। दुग्धं दोग्धेत्यादौ घनिमित्तकस्य 'झषस्तथो'रिति धत्वस्य जश्त्वं प्रति निमित्तत्वानापत्त्या प्रयोगासिद्धिप्रसङ्गाच्च, 'इकोयणाची'त्युत्तरं मय उञो वेति न्यासेन यणोऽनुवृत्त्या वकारादेशेनाऽपि किम्वुक्तमित्यादौ प्रकृतपरिभाषया मकारस्यानुस्वारनिवृत्तौ त्रिपाद्यां तन्निवृत्तये गुरुभूतस्य 'मय उञो वो वे'त्यस्य वैयर्थ्याच्च, त्रिपाद्यां प्रवृत्त्यभाव एव युक्त इति बोध्यम्। परंपरयेति—एवं स्वनिमित्तविभक्तेर्लुग्द्वारा परंपरया विघातकाव्ययसंज्ञाया निमित्तत्वेति बोध्यम्। एतेनेति—अव्ययत्वाभावेनेत्यर्थः। लुगेकवाक्यतापन्नेति। कार्य्यकालपक्षे

अन्तरङ्गायां तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणादेरसिद्धत्वात्; लुगेकवाक्यतापन्ना तु न गुणादितोऽन्तरङ्गा, उभयोरपि शब्दतः सुबाश्रयत्वात्। 'न यासयो'रिति निर्देशाच्चैषाऽनित्या, तेन नातिप्रसङ्गः। स्पष्टा चेयं 'कृन्मेजन्त' इति सूत्रे भाष्ये।

अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि। वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं दाक्षिः, आत्वं पुग्विधेः ज्ञापयति, पुक्ह्रस्वत्वस्य अदीदृपत्, त्यदाद्यकारष्टाब्विधेः

---

यावन्ति विधिशास्त्राणि तावन्ति संज्ञासूत्राणि भवन्तीति भावः। न यासयोरिति। विभक्त्यव्यवहितपूर्वत्वसन्निपातेन जातमत्वं तत्सन्निपातविघातकटापं प्रत्यनिमित्तं स्यादितिनिर्देशासङ्गतिरिति भावः।

वर्णविचालस्य—वर्णनाशस्येत्यर्थः। आत्वं पुग्विधेः ज्ञापयतीति। णिजव्यवहितपूर्वस्य क्रीधातुसम्बन्धिन एच आत्वविधानेन एज्निष्ठस्य णिजव्यवहितपूर्वत्वस्यैचो विनाशादेव विनाशो न पुकेति नानित्यत्वे फलम्। क्रीधातावपि णिजव्यवहितपूर्वत्वान्वये पुगन्ते यदागमन्यायेन क्रीधातुत्वात् णिजव्यवहितपूर्वत्वस्य च तत्र सत्त्वान्न तथाप्यनित्यत्वफलम्। न चातिदेशिकस्सन्निपातविघाताभावः तमादाय परिभाषाया अप्रवृत्तेर्निराकरणादिति वाच्यम्, आतिदेशिकविघाताभावे प्रवृत्तिबीजं हि अतिदेशेन तत्त्वबुद्धावप्यतिदेशप्रवृत्तेः प्राक्क्षणे विद्यमानविघातेनैव परिभाषाप्रवृत्तेर्दुर्वारत्वं, यदागमस्थले चागमविधानकाले एवागमिसम्बन्धित्वस्य बोधनात् कस्मिन्नपि क्षणे विघाताभावात्। अत्रोच्यते—अवयवषष्ठीविषयेऽपि निर्दिश्यमानपरिभाषाप्रवृत्तेरुक्तत्वान्निर्दिश्यमाने एव च निमित्तस्यान्वयात् निर्दिश्यमाने

या सेति, इड्विधिराकारलोपस्य पपिवान्, ह्रस्वनुड्भ्यां मतुप् अन्तोदात्तादुत्तरपदात् इति मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य अग्निमान् परमवाचा, नदीह्रस्वत्वं संबुद्धिलोपस्य नदि कुमारी-त्यादि, यादेशो दीर्घत्वस्य कष्टाय । इतोऽन्यत्र प्रवृत्तिरेव,

---

विद्यमानस्य णिजव्यवहितपूर्वत्वस्य पुका विनाशे परिभाषाप्रवृत्ति-सम्भवेनानित्यत्वफलं युक्तमेवेति । इड्विधिराकारलोपस्येति । 'वस्वेकाजाद्घसामिति'सूत्रेणात्वं निमित्तीकृत्य जायमानस्येट आकारविनाशकत्वायोगात् । अग्निमान् परमवाचेति । अन्तो-दात्तत्वं निमित्तीकृत्य जायमानं मतुब्विभक्त्युदात्तत्वम् 'अनुदा-त्तंपदमेकवर्जमि'तिसूत्रप्रवर्त्तनद्वाराऽन्तोदात्तत्वविनाशकन्न स्यादि-त्यनित्यत्वम् ।

इतोऽन्यत्रेति । ननु अत्वं निमित्तीकृत्य जायमानमुत्वं गुणद्वारा तद्विघातकं न स्यादिति चेत्—न, एचोऽयवेतिनिर्देशेन सन्धिका-र्येऽप्यनित्यत्वकल्पनात् । अतएव गवाग्रमित्यादौ दीर्घसिद्धिः ।

ननु सन्निपातपरिभाषया सन्निपातलक्षणविधेस्तद्विघातकं प्रत्यनिमित्तत्वबोधनेऽपि तद्विघातकशास्त्रस्य स्वीयोद्देश्यतावच्छेद-कज्ञानात्प्रवृत्तिरव्याहतैव, तया तत्प्रति किमप्यबोधनादिति चेत्—अत्रोच्यते—'इकोयणचो'त्यादिशास्त्राणां यदि विधेयघटितस्सा-धुरित्येव व्यापारस्तर्हि सुद्ध्युपास्य इत्यस्येव सुधी उपास्य इत्य-स्यापि 'सुपो धातुप्रातिपदिकयो'रित्येतद्विधेयघटितत्वेन साधुत्वा-पत्त्या यागादावप्युच्चारणापत्तिः, अतोऽज्ञुपश्लिष्टेग्घटितोऽसाधुः अज्ञुपश्लिष्टयण्घटितस्साधुरिति व्यापारद्वयमवश्यं वाच्यम् । तत्र साधुत्वं पुण्यजनकत्वमेव, तर्हि 'सुपो धात्वि'त्यनेन सुधीआ उपास्य सु इत्यसाधु सुधीउपास्य इति साधु इत्येवं प्रकारेण सुधी-उपास्येत्यस्य साधुत्वं बोधितमिकोयणचीत्यनेन तस्यासाधुत्वं

बोधितमिति साधुत्वासाधुत्वयोर्विरोधादेकस्य शास्त्रस्य तदभाववति तत्प्रकारकबोधजनकत्वरूपाप्रामाण्यापत्तिर्दुर्वारा, शास्त्रबोधितसाधुत्वानां सर्वेषां ततोऽन्यशास्त्रीयतत्तन्निमित्तसमभिव्याहारे तत्तदीयविधेयघटितस्य साधुत्वं, तेषाञ्चासाधुत्वमवश्यं वक्तव्यमिति सर्वेषां शास्त्राणामप्रमाण्यापत्तिर्दुर्वारैवेति चेत्—

अत्र वहवः—साधुत्वं न पुण्यजनकत्वम्, अपि तु शास्त्रप्रवृत्त्यर्हत्वमेव, स्वस्वविधेयघटिते शास्त्रप्रवृत्त्यर्हत्वरूपसाधुत्वमात्रं बोध्यते, न त्वन्यस्यासाधुत्वमपि । सुधीउपास्य इत्यादीनां यागादौ प्रयोगाभावस्त्वपरिनिष्ठितन्न प्रयुञ्जीतेतिभाष्यात् । परिनिष्ठितत्वञ्चाप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वमिति रामशब्दप्रकरणे शब्देन्दुशेखरे प्रतिपादितम् । साधूनामनुशासनमित्यस्य शास्त्रप्रवृत्त्यर्हत्वेन शास्त्रबोधितानामनुशासनमित्यर्थः । शब्दानां पुण्यजनकत्वन्तु 'एकः शब्दः सुष्ठुप्रयुक्तः सम्यग्ज्ञातः शास्त्रान्वितः स्वर्गे लोके च कामधुग्भवती'तिवचनादेव । गगरी अत्रेत्यादावपभ्रंशे प्रवृत्त्यभावाय सर्वेषां साधुत्वबोधकानां शास्त्राणामुद्देश्यतावच्छेदककोटौ शास्त्रप्रवृत्त्यर्हत्वेन शास्त्रबोधितत्वस्य प्रवेशस्साधूनामनुशासनमिति भाष्यादावश्यकः, अपभ्रंशाश्च न शास्त्रप्रवृत्त्यर्हत्वेन शास्त्रबोधिता इति न तत्र तेषां प्रवृत्तिः । नन्वेवं भू इत्यादीनां केनापि साधुत्वाबोधनात्तेषु साधुत्वबोधकानां लः कर्म्मणीत्यादीनामप्रवृत्त्यापत्तिरितिचेत्—न, भू सत्तायामित्यादिना सत्तायां भू साधुरित्याद्यर्थकेन तेषु साधुत्वबोधनात् । तस्यैव कथं प्रवृत्तिस्ततः प्राक् तेषु केनापि तत्त्वाबोधनादिति न वाच्यं, शब्दोद्देश्यकसाधुत्वविधीनामेव साधुषु प्रवृत्तिस्वीकारात्तस्य त्वर्थोद्देश्यकत्वात् । नन्वेवमप्यव्युत्पन्नघटपटादिषु स्वादिविधायकशास्त्राप्रवृत्तिस्तेषु केनापि साधुत्वाबोधनादितिचेत्—न । 'अप्रत्ययप्रातिपदिकानामुपदेशः कर्त्तव्यः, मञ्चको मञ्जक इति माभूदि'तिभाष्येण तेषामपि क्वचित्पाठेन साधुत्वबोधनावश्यकत्वात् पाठस्य

दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेरित्यन्यत्र विस्तरः ॥ ८५ ॥

---

च शब्दोद्देश्यकत्वाभावेन तेनापि कथन्तत्त्वमितिशंकाया अनवकाशात्। नन्वेवमप्यर्थवत्सूत्रस्य साधुत्वविधायकत्वाभावेन तस्य भाषायामपि प्रवृत्त्यापत्त्या भ्वादिग्रहणाभावे आणवयतीत्यादेः क्रियावाचकत्वेन भ्वादिसूत्रप्रवृत्त्या शास्त्रविषयतया शेखरोक्तसाधुत्वापादनमिव साधुत्वापत्तिरितिचेत्—न, अधातुपर्य्युदासेन साधुष्वेव प्रवृत्तेः। एवं स्थिते सन्निपातपरिभाषया तत्तच्छास्त्रविधेयभूतशास्त्रप्रवृत्त्यर्हत्वरूपसाधुत्वघटकशास्त्रपदार्थे स्वनिमित्तसन्निपातविघातकातिरिक्तत्वेन संकोचो बोध्यते, शास्त्राणि च स्वप्रवृत्त्यर्हत्वेन शास्त्रबोधिते एव प्रवर्तन्ते इति न शतानीत्यादौ लुगित्याहुः—तदपि न, सुद्ध्युपास्य इति परिनिष्ठिते कस्यापि शास्त्रस्य प्रवृत्तियोग्यत्वाभावेन तत्रान्तिमशास्त्रेण शास्त्रप्रवृत्त्यर्हत्वबोधने तस्य शास्त्रस्याप्रामाण्यापत्तेर्दुर्वारत्वात्।

अत्र मिश्रचरणाः—शास्त्राणां स्वविधेयघटितः पुण्यजनकः स्वविधेयाघटितः स्वोद्देश्यतावच्छेदकावच्छिन्नः पापजनकः इति व्यापारद्वयं भवति, अपरिनिष्ठितप्रयोगे केनचिच्छास्त्रेण पुण्यजनकत्वबोधनेऽपि शास्त्रान्तरेण पापजनकत्वबोधनाद्यागादावप्रयोगः पुण्यजनकत्वस्य पुण्यजनकत्वाभावेन विरोधेऽपि पापजनकत्वेन विरोधाभावात् न शास्त्राणामप्रामाण्यम्, सन्निपातपरिभाषया च विधेयभूतकार्य्ये परंपरया स्वनिमित्तसन्निपाताविघातकत्वं विशेषणतया बोध्यते, ततश्च स्वनिमित्तसन्निपाताविघातकत्वविशिष्टो दीर्घो भवतीत्यादिक्रमेण शास्त्राणामर्थाः, तत्र च प्राप्ताप्राप्तविवेकन्यायेन विशेष्यांशमात्रविधानेन यत्र विशिष्टस्संपद्यते तत्रैव दीर्घादिकार्य्यम्भवति न तु विशिष्टं विधीयते,

उपजीव्यविरोधो न न्याय्य इति न्यायमूलकत्वमप्यस्मिन्नेव कल्पे उपपद्यते, सन्निपातलक्षणविधित्वस्य लिङ्गत्वे तु विरोधिनं नोपजीवयेदिति न्यायमूलकत्वं स्यात, तथा च सन्निपातविघातकत्वमस्या लिङ्गमित्येव युक्तं न तु सन्निपातलक्षणविधित्वमित्याहुः।

केचित्तु—सन्निपातलक्षणो विधिरनिमित्तमसिद्धमित्यर्थः, तद्विघातस्य तद्विघातकशास्त्रं प्रतीत्यर्थ इत्याहुः।

अस्यां ज्ञापकं याचि ह्रस्वश्चेति न्यासेनैव श्रियां श्रीणामित्यादौ नदीत्वसिद्ध्याऽन्यत्राजादौ नदीत्वेऽपि दोपाभावात् 'ङिति ह्रस्वश्च' 'वामी'ति योगद्वयकरणम्, ज्ञापितायान्तु श्रीणामित्यादावजाद्यव्यवहितत्वसन्निपातेन जातं नदीत्वं नुड्द्वारा अजादित्वविघातकं स्यात्। नुटि यदागमन्यायेनाजादित्वन्तु न, वर्णग्रहणे तस्या अप्रवृत्तेः। वामीति पृथग्योगकरणे तु न तद्विघातः, यदागमन्यायेन नुडादावामत्वस्य सत्त्वात् मतिश्चोमाचेतिद्वन्द्वे मतिशब्दस्य नदीत्वापत्त्या घित्वाभावेन पूर्वनिपातानापत्तिस्तु न, अजादौ प्रत्यय इत्यर्थकरणात् 'ङितिह्रस्वश्चे'ति यथास्थितन्यासेऽपि मतिश्चचिन्नश्चेतिद्वन्द्वे नदीत्वाभावाय प्रत्यय इत्यर्थस्यावश्यकत्वात्।

वस्तुतो नेदं ज्ञापकं,याचिह्रस्वश्चेतिन्यासेनैव सिद्धे ज्ञापितायामपि योगद्वयकरणस्य चारितार्थ्याभावात, 'न तिसृचतसृ' इति सूत्रमस्या ज्ञापकं सम्यक्, परिभाषाभावे तिसृनामितिस्थिते ऽपि 'न तिस्रि'तिसूत्रं व्यर्थं सदस्याज्ञापकं, ज्ञापितायान्तु विभक्त्यव्यवहितपूर्वत्वसन्निपातेन जातस्य तिस्रादेशस्य तद्विघातकङीपं प्रत्यनिमित्तत्वान्न ङीञिति दीर्घवारणाय सूत्रं सार्थकम्। स्वस्रादिषु तिसृचतसृपाठस्यानार्षत्वात् 'न षड्'तिनिषेधेन नसिद्धिः। तदुक्तं 'कृन्मेजन्त' इतिसूत्रे भाष्ये—'आचार्यप्रवृत्तिर्ज्ञापयति न तिसृचतसृशब्दान्ङीप्भवतीति, यदयं न तिसृचतस्रिति नामीतिदीर्घप्रतिषेधं शास्ती'ति ॥ ८५ ॥

ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ 'द्विगोर्लुगि'त्यणो लुकि 'लुक्तद्धित'इतिस्त्रीप्रत्ययलुक्यानुकः श्रवणापत्तिरत आह—

## संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ॥८६॥

सन्नियोगशिष्टानामन्यतरापाय इति । ननु वस्तुद्वयारब्धसमुदायघटकैकवाचकान्यतरशब्दयोगे सन्नियोगशिष्टानामिति बहुवचनमसङ्गतमिति चेत्, अत्रोच्यते—सन्नियोगशिष्टौ च सन्नियोगशिष्टौ च सन्नियोगशिष्टौ चेति सन्नियोगशिष्टास्तेषां सन्नियोगशिष्टानामित्यर्थः, अन्यतरश्चान्यतरश्चान्यतरश्चेत्यन्यतरे तेषामपायोऽन्यतरापायः, प्रत्येकसन्नियोगशिष्टस्य प्रत्येकान्यतरपदार्थेऽन्वयादनुपपत्त्यभावः, प्रत्येकसन्नियोगशिष्टपदार्थस्य वस्तुद्वयारब्धसमुदायरूपत्वात् तद्घटकोऽन्यतरो युक्त एवेति । एकशेषेण तु न निर्वाहः, यावतामेकशेषस्ततोऽवशिष्टानामग्रहणप्रसंगादिति केनचिदुक्तं तु न युक्तं, परिभाषाविषया अष्टाध्याय्यां यावन्तः सन्नियोगशिष्टास्तेषां सर्वेषामेकशेषकरणेनावशिष्टाभावात । द्वित्वविशिष्टसन्नियोगशिष्टत्वावच्छिन्नबोधकतया सन्नियोगशिष्टपदस्य बहुवचनान्तत्वोपपत्तिरित्यपि केनचिदुक्तमयुक्तमेव, ताभ्यां सन्नियोगशिष्टो ङीविति दीक्षितोक्त्या द्वित्वस्य सन्नियोगशिष्टपदप्रवृत्तिनिमित्तकोटावप्रवेशात् । अन्यतरस्यापायेऽपरस्याप्यपाय इति वक्तुं युक्तम् । यथाश्रुतन्तु न युक्तम्, तदवस्थायामुभयोरभावात । न चैवमपि पञ्चेन्द्र इत्यादौ पञ्चेन्द्राणीशब्दादणि तस्य लुकि तन्निमित्तके ङीपो लुकि एकादेशविशिष्टस्य परादिवद्भावेनानुकत्वात्तस्यापायेऽकारश्रवणानापत्तिरिति वाच्यम, 'अन्तरङ्गानपी'तिन्यायेनान्तरङ्गनिमित्तविनाशकलुकः प्राबल्यबोधनाद् पूर्वमेकादेशाप्रवृत्तेः । नन्वेवमपि

अत्र च 'बिल्वकादिभ्यश्छस्य लुक्' इतिसूत्रस्थं छग्रहणं ज्ञापकम्, तद्धि छमात्रस्य लुग्बोधनद्वारा कुकोऽनिवृत्तिर्यथा स्यादित्यर्थम्। कृतकुगागमा नडाद्यन्तर्गणबिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन। न चैवमपि छग्रहणं व्यर्थं, कृतकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धेः, अन्यथा बिल्वादिभ्य इत्येव वदेत्, लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुर-

पञ्चभिरेनीभिः क्रीतः पञ्चैत इत्यादौ 'लुक्तद्धितलुगि'ति स्त्रीप्रत्ययस्यापायात् नकारस्यापायेऽपि तकारश्रवणन्न स्यादेवदत्तहन्तृहतन्यायादितिचेत्—न, अन्यतरापाये सम्भाविते सति उभयोरनुत्पत्तिरित्यर्थेनादोषात्।

तद्धीति—छग्रहणं हीत्यर्थः। छमात्रस्येति प्रत्ययेतरदर्शनाभावस्य लुक्पदशक्यत्वाभावात् छप्रत्ययेतरप्रत्ययस्य बिल्वकशब्दमुच्चार्य्य विहितत्वरूपप्रतिपदोक्तत्वाभावात् छग्रहणाभावेऽपि प्रतिपदोक्तत्वात् बिल्वकशब्दमुच्चार्य्य विहितस्य प्रत्ययस्य लुगित्यर्थेन छस्यैव लुक्सिद्धौ क्रियमाणं छग्रहणं छस्यैवेत्यवधारणार्थम्, तेन कुको न निवृत्तिः, परिभाषाया अभावे च कुको निवृत्त्यभावोऽपि कारणाभावात् सिद्ध एवेति व्यर्थं सन्निवर्त्तकं परिभाषारूपं कल्पयित्वा प्राप्तनिवृत्तेरभावाय छस्यैवेत्यवधारणार्थं चरितार्थमिति बोध्यम। ज्ञापितेऽपि चारितार्थ्याभावं शंकते,—न चैवमपीति। परिभाषा अस्तु, छग्रहणं मास्तु, बिल्वकादिभ्यो लुगिति करणेनैव छस्यैव प्रतिपदोक्तत्वात् लुक्सिद्धेः। ननु कुकोऽपि निवृत्तिस्स्यादित्यत आह—कृतकुगागमानुवादसामर्थ्यादिति। ननु बिल्वादिभ्यो लुगितिकरणे यस्यकस्यापि बिल्वादिशब्दप्रकृतिकप्रत्ययस्य लुक् स्यादित्यत आह—लक्षणप्रतिपदोक्तेति।

स्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नातिप्रसङ्ग इति वाच्यम्, ततोऽपि प्रतिपदोक्तत्वेन बिल्वादिभ्योऽणिति विकारार्थस्य लुगापत्तिवारणार्थं कुगनुवादचारितार्थ्यात् । समुच्चयार्थकचशब्दयोगे तु विधेययोरेककालिकत्वैकदेशत्वनियमान्न्यायसिद्धार्थायम् ।

---

ततोऽपीति । नडाद्यन्तर्गता बिल्वकादयः शब्दाः, तत्र बिल्वकशब्दाच्छ इत्येव शब्दमर्य्यादयाऽर्थो लभ्यते, बिल्वादिशब्दाच्छस्तस्य कुगागम इत्यर्थस्तु व्याख्यानगम्यः, अतएव विलम्बोपस्थितिकः, बिल्वादिभ्योऽणित्यत्र बिल्वादिशब्दस्योद्देश्यत्वं शब्दमर्यादयैव लभ्यमिति शीघ्रोपस्थितिकमिति बिल्वादिशब्दमुच्चार्य्य विहितत्वरूपं प्रतिपदोक्तत्वमणप्रत्ययछप्रत्यययोस्समानम्, अण्प्रत्ययोद्देश्यता बिल्वादिशब्दे परं शीघ्रोपस्थितिकेतिविशेष इति बोध्यम् । ननु बिल्वादिभ्यश्छस्य लुगित्येव सिद्धे कृतकुगागमानुवादो व्यर्थ एव, छग्रहणसामर्थ्याच्छमात्रस्येत्यर्थेन कुकोऽनिवृत्तिसिद्धेः, न च छग्रहणाभावे बिल्वादिभ्य इति करणेऽणो लुगापत्तिरिति वाच्यं, पदलाघवे 'बिल्वकादिभ्य इत्येवाणो वारणसम्भवेन छग्रहणस्य कुको निवृत्त्यभावार्थत्वादिति चेत्—न, तृणवेतसशब्दयोर्बिल्वकादिगहाद्युत्करादिषु पाठेन बिल्वादिभ्यश्छस्य लुगित्युक्तौ बिल्वादिशब्दमुच्चार्य्य विहितत्वाविशेषाद्गहादिविहितस्यापि तृणादिशब्दप्रकृतिकछस्य लुगापत्तेः । कुगनुवादे तु बिल्वकादिविहितस्यैव बिल्वकादीत्यानुपूर्वीकशब्दमुच्चार्य्यविहितत्वेन लुगिति दिक् । समुच्चयार्थकेति—समुच्चयः साहित्यं, तच्च विधेययोस्समानकालिकत्वसमानदेशत्वरूपं, तद्विशिष्टस्यैव साधुत्वेनैकस्यापायेऽपरस्य स्थितौ समानकालत्वाभावेनासाधुत्वापत्त्याऽपरोऽपि गच्छतीति फलितमेवेति बोध्यम् ।

यत्तु—'णाविष्ठवदि'त्यनेन पुंवत्त्वविधानमेतदनित्यत्वज्ञापनार्थम्, अन्यथैनयतीत्यादौ टिलोपेनैव ङीपि निवृत्ते संनियोगशिष्टपरिभाषया नस्यापि निवृत्त्यैतयतीत्यादिसिद्धौ पुंवत्त्ववैयर्थ्यं स्पष्टमेवेति 'टे'रितिसूत्रे कैयटः—तन्न, इडविडमाचष्टे ऐडविडयतीत्यादौ पुंवत्त्वस्यावश्यकत्वात्। ऐनेयः श्यैनेय इत्यादि तु स्थानिवत्त्वेन सिद्धमित्यन्यत्र विस्तरः॥ ८६॥

---

ऐडविडयतीति। दरदमाचष्टे दारदयतीत्यादावपि पुम्वत्वस्य फलं बोध्यम्। दरदोऽपत्यं स्त्री इडविडोऽपत्यं स्त्रीत्यर्थे दरच्छब्दात् इडविड्शब्दादञ् तद्राजसंज्ञकः प्रत्ययः, तस्य 'अतश्चे'ति स्त्रियां लुकि दरत् इडविद् तामाचष्टे णिचि पुम्वद्भावे स्त्रीत्वप्रयुक्तलुको निवृत्तौ दारदयति ऐडविडयतीतिरूपम्, अत्र पुम्वद्भावाभावे गतिविरहः। ननु अनित्यत्वे ऐनेयः एनीशब्दात् ढकि एयादेशे यस्येति चेतीकारलोपे तत्सन्नियोगशिष्टस्यापि नादेशस्यानिवृत्तिर्भवति, तस्या नित्यत्वे च तत्सिद्धिः कथमित्यत आह—ऐनेय इति। स्थानिवत्त्वेन सिद्धमिति। ईकारलोपस्य स्थानिवत्त्वेनेकारबुद्धावीकारापायाभावात् परिभाषाया अप्रवृत्तेः। ननु स्थानिभूतेकारात्पूर्वत्वेन दृष्टस्य नकारस्य कार्य्याभावात् स्थानिवद्भावाप्रवृत्तिरिति चेत्—न, पूर्वविधावित्यत्र विधिशब्दो भावसाधनः, विधानं विधिर्भावस्सत्ता, पूर्वस्य विधौ सत्तायां कर्त्तव्यायामित्यर्थेनादोषात्। वस्तुतस्तु नादेशस्य परिभाषया निवृत्तिरूपकार्ये कर्त्तव्ये स्थानिवद्भावप्रवृत्तिः कर्म्मसाधनेऽप्यव्याहतेति बोध्यम्।

केचित्तु ज्ञापकसाजात्यान् लुका यत्रान्यतरस्यापायस्तत्रैवैषा प्रवर्त्तते, अतएवैनेय इत्यत्र लोपेनापाये नानया नादेशापायः, तार्त्तीयीक इत्यादौ तृतीयशब्दादीकक्कि आदिवृद्ध्या संप्रसारणना-

ननु चुरा शीलमस्याः सा चौरीत्यादौ 'शीलं छत्रादि-

झेऽपि न तत्सन्नियोगशिष्टस्य तीयप्रत्ययस्यापायः, 'ई च खनः' इतीकारादेशसन्नियोगशिष्टस्य यतो गुणेनेकारापायेऽप्यनपाये खेयमिति सिद्धिः, उकारसन्नियोगशिष्टकृतलादेशकक्तान्तफुल्लशब्दादिञि प्रत्यये आदिवृद्ध्योकारापायेऽपि लत्वानपायात् फौल्लिरिति सिद्ध्यति, एषु लुकाऽपायविरहात् परिभाषाया अप्रवृत्तेरित्याहुः—तन्न, 'वातातीसाराभ्यां कुक् चे'तिनिष्पन्नकुगागमसन्नियोगशिष्टेनप्रत्ययान्तवातकिन् शब्दादणि 'नस्तद्धिते' इति टिलोपे कुको निवृत्त्यभावापत्त्या वात इति रूपासिद्धेः। तर्ह्युक्तप्रयोगाणां का गतिरिति चेत्, अत्रोच्यते—अपाय इत्यस्यापायत्वावच्छिन्नविधेयताश्रये नाशे इत्यर्थेनादोष इति।

अन्ये तु—अन्यतरस्यानुयोगिनोऽपाय इत्यर्थः, पञ्चेन्द्र इत्यादावानुक्सहितो ङीपिति क्रमेण सूत्राणामर्थादनुयोगित्वं ङीपस्तस्यैवापायः, खेयमित्यादौ 'ई च खनः' इत्यादीनामीकारसहितो यत् उकारसहितो लादेशः संप्रसारणसहितस्तीयप्रत्यय इत्यर्थादनुयोगित्वं यत्प्रत्ययादीनामेव, तेषामपायाभावाददोषः लक्ष्यानुरोधेनानुयोगित्वस्य विवक्षणान्नातिप्रसङ्ग इत्याहुः।

परे तु—भावसाधनविधिशब्दान्तपूर्वविधिशब्देऽपि पञ्चमीसमासाश्रयणादुक्तप्रयोगेषु वृद्ध्यादीनां स्थानिवद्भावेनैनेय इत्यत्रेव परिभाषाप्रवृत्त्यभावः। पञ्चमीसमासे पूर्वस्मादव्यवहितपरस्यैव कार्ये स्थानिवद्भावः, अतएव हेगौरित्यादौ वृद्धेः स्थानिवद्भावेनैङ्ह्रस्वादिति सुलोपो न, तथा च व्यवधानात्कथमुक्तेषु स्थानिवद्भाव इति तु न वाच्यम्, प्रविगणय्येति भाष्यप्रयोगात्पञ्चमीसमासस्यानित्यत्वेन हे गौरित्यस्य सिद्धौ अव्यवहितत्वनिवेशफलाभावात् ॥ ८६ ॥

शीलमिति—शीलमित्यनुवर्त्तमाने इत्यर्थः। अणप्रत्ययनिमित्त-

भ्यो णः' इति णे ङीप् न प्राप्नोतीत्यत आह—

ताच्छीलिके णेऽण्कृतानि भवन्ति ॥ ८७ ॥

'अन्' इत्यणि विहितप्रकृतिभावबाधनार्थं 'कार्मस्ताच्छील्ये' इतिनिपातनमस्या ज्ञापकम् । ताच्छीलिकणान्तात् 'अणो द्व्यचः' इतिफिञ्सिद्धिरप्यस्याः प्रयोजनमिति नव्याः । ताच्छीलिक इत्युक्तेः 'तदस्यां प्रहरणम्' इति णे दाण्डेत्येव । 'कार्म' इति सूत्रे भाष्ये स्पष्टा ॥ ८७ ॥

ननु कंसपरिमृड्भ्यामित्यादौ मृजेर्वृद्धिर्दुर्वारेत्यत आह—

धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥ ८८ ॥

भ्रौणहत्ये तत्वनिपातनमस्या ज्ञापकम् । धातोः स्वरूप-

---

ककार्य्याणि ताच्छीलिकणप्रत्ययेऽपि भवन्तीत्यर्थः 'कार्म्मस्ताच्छील्ये' इति कर्म्मनशब्दात्ताच्छील्ये णप्रत्यये अणप्रत्ययनिमित्तकस्य 'अन' इतिप्रकृतिभावस्य बाधनाय टिलोपनिपातनं व्यर्थम्, णप्रत्यये प्रकृतिभावाप्राप्त्या 'नस्तद्धित' इत्यनेन टिलोपसिद्धेः। ज्ञापितायाश्च परिभाषायां प्रकृतिभावप्राप्त्या निपातनमावश्यकमिति स्वांशे चारितार्थ्यम् ॥ ८७ ॥

धातोः कार्य्यमुच्यमानमिति—धातुत्वव्याप्यधर्म्मावच्छिन्नोद्देश्यताककार्य्यं तत्प्रत्यये धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रये प्रत्यये भवतीत्यर्थः। मृजेरुच्यमाना वृद्धिर्धातुत्वव्याप्यमृजत्वावच्छिन्नोद्देश्यताकं कार्य्यम् धातुत्वावच्छिन्नोद्देश्यताकप्रत्यये परे स्यात्। कंसपरिमृड्भ्यामित्यादौ न भवति भ्यामस्तादृशप्रत्ययत्वाभावात्। क्विपस्तथात्वेऽपि न तन्निमित्तोक्त्य वृद्धिस्यात 'क्ङिति चे'ति निषेधात्। भ्रौणहत्ये तत्वनिपातनमिति—भ्रूणहन्श-

ग्रहणे तत्प्रत्यये कार्यविज्ञानमिति पाठस्तु प्रसृड्भिरित्यादौ 'अनुदात्तस्य चर्दुपधस्य' इत्यमापादनेन भाष्ये दूषितः। यत्कार्य्यं प्रत्ययनिमित्तकं तत्रेयं व्यवस्थापिका, तेन पदान्तत्व-निबन्धनं 'नशेर्वा' इतिकुत्वं प्रनग्भ्यामित्यादौ भवत्येव। इयङादिविधौ तु नैषा, 'न भूसुधियो'रितिनिषेधेनानित्यत्वात्। 'मृजेर्वृद्धिः' इत्यत्र भाष्ये स्पष्टा ॥ ८८ ॥

---

वदात् ण्यत्प्रत्यये 'हनस्तोऽचिण्णलो'रित्यनेन नकारस्य तत्वे सिद्धे निपातनं व्यर्थं सज्ज्ञापकं, ज्ञापिते च ण्यतो धातुप्रत्ययत्वाभावात्तत्वाप्राप्तौ निपातनं चारितार्थम्। ननु न तत्वनिपातनमपि तु 'होहन्ते'रितिप्राप्तकुत्वाभाव एव निपात्यत इति न व्यर्थं निपातनमिति चेत्—न, तत्वं निपात्यत इति भाष्योक्तेस्तत्रैव पाणिनितात्पर्य्यावधारणात्। धातोः स्वरूपग्रहण इति—धातुत्वव्याप्यानुपूर्व्यवच्छिन्नोद्देश्यताकं कार्य्यमित्यर्थः। अमापादनेनेति। अनुदात्तत्वविशिष्टऋदुपधत्वस्य धातुत्वव्याप्यत्वात् सिद्धान्ते न दोषः। यत् कार्य्यं प्रत्ययनिमित्तकमिति—धातुत्वव्याप्यधर्म्मावच्छिन्नोद्देश्यताककार्य्ये निमित्तत्वेनाश्रीयमाणः प्रत्ययः धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रय एव गृह्यत इत्यर्थः। 'नशेर्वे'तिविधीयमानकुत्वे प्रत्ययस्य निमित्तत्वेनाश्रयणाभावान्नास्याः प्रवृत्तिरिति भावः। वस्तुतस्तु प्रनग्भ्यामित्यादौ धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयप्रत्ययस्य क्विपस्सत्त्वान् 'नशेर्वे'त्यादौ परिभाषाप्रवृत्तावपि न क्षतिः। इयङादिविधौ—'अचि श्नुधात्वि'त्यादौ। नभूसुधियोरितिनिषेधेनेति। तत्र सुपीत्यर्थेन 'एरनेकाच' इत्यत्र परिभाषाप्रवृत्तौ व्यर्थं स्यात्, 'अचिश्नु धात्वि'त्यत्र परिभाषाप्रवृत्तौ च सुधियोरिति निर्देशासङ्गतिश्च ॥ ८८ ॥

ननु सर्वक उच्चकैरित्यादौ सर्वनामाव्ययसंज्ञे न स्यातामत आह—

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ८९ ॥

'नेदमदसोरकोरि'तिसूत्रेऽकोरिति निषेधोऽस्या ज्ञापकः। तदेकदेशभूतं तद्ग्रहणेन गृह्यत इति 'येन विधि'रितिसूत्रे भाष्ये पाठः ॥ ८९ ॥

---

सर्वक उच्चकैरिति। ननु वर्णाश्रमेतरा अत्युच्चैसावित्यादौ शीभावलुकोरभावाय 'जशः सी'त्यादौ विहितविशेषणस्यावश्यकत्वादकच्सहितस्य सर्वनामत्वाद्यभावेऽपि प्रत्ययस्यान्तरङ्गत्वादकचः पूर्वमेवोत्पत्तेः सर्वनामादिविहितत्वसत्त्वेन परिभाषां विनापि शीलुकोः प्रवृत्तावप्यवतरणासङ्गतिरितिचेत्—न, प्रत्ययेन तदाद्युपस्थित्या तदाद्यभिन्नसर्वनाम्नः तदाद्यभिन्नादव्ययात्परस्येत्यर्थेनैवोक्तदोषवारणसम्भवाद्विहितस्येत्यर्थकरणे मानाभावात्, अकच्सहितस्य सर्वनामत्वाद्यभावेन परिभाषां विना दोषस्य सुवचत्वात्। तन्मध्यपतितत्वञ्च निर्दिश्यमानपरिभाषाव्याख्यावसरे निरूपितम्। गङ्गाप्रविष्टा नदी गङ्गाग्रहणेन गृह्यते देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यत इति लोकन्यायेनायमर्थो न सिद्ध्यति ससर्वनामत्वादेरुपसर्गत्वाद्विवदक्तपरिमाणत्वेन न्यूने अधिके वा शास्त्रव्यापारमन्तरेण तद्बुद्धेरभावात् ज्ञापकसाध्य एवायमर्थ इति येनविधिरितिसूत्रे भाष्ये स्पष्टम् अतो ज्ञापकमाह—नेदमदसोरकोरितीति। इदं सूत्रकारमते। भाष्यकृता चेदमदसोः कादिति न्यासं कृत्वा 'अतो भिस' इत्यनेनैव सिद्धे इदमदसोर्भिस एत्वाद्यर्थं कादेवेति नियममाश्रित्याकोरित्यस्य प्रत्याख्यातत्वात्; 'एतत्तदोस्सुलोपोऽको'रितिसूत्रस्याकोरित्येतदुपलक्षणं वा ॥ ८९ ॥

ननु 'गातिस्थाघुपाभूभ्य' इति सिचो लुगपासीदित्यादौ पातेरपि स्यादत आह—

लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ९० ॥

अस्याश्च ज्ञापकः 'स्वरतिसूति' इतिसूत्रे सूङिति वक्तव्ये सूतिसूयत्योः पृथङ्निर्देश इति कैयटः—तन्न, साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासंभवात्। ध्वनिता चेयं परिभाषा 'यस्य विभाषा' इत्यत्र भाष्ये। तत्र हि विदित इति प्रयोगे निषेधमाशङ्क्य यदुपाधेर्विभाषा तदुपाधेर्निषेधो 'विभाषा गमहनविदविशाम्' इति सूत्रे शविकरणस्य ग्रहणं लुग्विकरणश्चायमित्युक्तम्, तत्र चो हेतौ, यतोऽयं लुग्विकरणोऽतो विशिसाहचर्याच्छविकरणस्य ग्रहणं, न तु हनिसाहचर्यादस्यापि, एतत्परिभाषाविरोधादिति तदाशयः। अतएव परिभाषायां लुग्विकरणस्यैवेति नोक्तम्। कण्ठतस्तु भाष्य एषा क्वापि न पठिता 'गातिस्था' इति सूत्रे पिबतेर्ग्रहणं कर्तव्यमिति वार्त्तिककृता, सर्वत्रैव पाग्रहणेऽलुग्विकरणस्य

---

साहचर्यादिति—परिभाषां विनापीत्यादिः, स्वरतिसूत्योः साहचर्यादित्यर्थः। न तु हनि साहचर्यादिति। लुग्विकरणत्वात् हन्साहचर्यं परित्यज्य, तेनालुग्विकरणस्यैव ग्रहणं सति सम्भवे सूत्रांशनिर्वचनेन, तेन च परिभाषा ध्वनितेति भावः। अतएवेति—निरुक्तभाष्यपर्यालोचनयाऽलुग्विकरणस्यैव ग्रहणलाभादित्यर्थः, सूतिसूयत्योः पृथग् निर्देशस्य लुग्विकरणस्यैव ग्रहणासि-

ग्रहणमिति भाष्यकृता चोक्तम् । 'स्वरतिसूति' इति सूत्रे कैयटेन च स्पष्टमुक्ता ॥ ९० ॥

ननु प्राञ्जिघायथिषतीत्यादौ 'हेरचङि' इति विधीयमानं कुत्वं न स्यादत आह—

प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥ ९१ ॥

अचङीति प्रतिषेध एवास्या ज्ञापकः । इयं च कुत्वविषयैव । 'हेरचङी'तिसूत्रे भाष्ये स्पष्टेयम् ॥ ९१ ॥

ननु युष्मभ्यमित्यादौ भ्यस इत्यत्र भ्यमितिच्छेदे भ्यसो भ्यमि कृतेऽन्त्यलोप एत्वं स्यादत आह—

अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ ९२ ॥

अङ्गेऽङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्यं तस्मिन्सति पुनरन्यस्याङ्गकार्यस्य वृत्तौ प्रवृत्तावविधानं भवतीत्यर्थः । एषा च 'ज्यादादीयसः' इत्याद्विधानेन ज्ञापिता, अन्यथैकारलोपेन

---

त्यर्थज्ञापनेनापि चारितार्थ्यसम्भवाद्लुग्विकरणस्यैवेत्यर्थज्ञापकत्वासम्भवाच्च ॥ ९० ॥

कुत्वन्न स्यादिति । संज्ञोद्देश्यककार्याणां संज्ञानिमित्तप्रत्ययाव्यवहितपूर्वत्वं निमित्तमित्यस्य चार्णपरिभाषायामुक्तत्वात् प्रकृते णिचा व्यवधानाद्धिनोतेस्सन्प्रत्ययाव्यवहितपूर्वत्वाभावादिति भावः । अचङीत्येतज्ज्ञापकपरभाष्यप्रामाण्यादयुक्तार्थस्वीकारः । कुत्वविषयैवेति । अतएव शाययतीत्यादौ 'अदिप्रभृतिभ्य' इति शपो न लुक् । भाष्ये स्पष्टयमिति । तत्र हि 'हेरङि प्रतिषेधानार्थक्यमङ्गान्यत्वात् ज्ञापकन्तु चङोऽन्यत्र ण्यन्तेऽपि कुत्वभावस्ये'ति ॥९१॥

'अकृत्सार्व' इति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अतएव भिन्नस्थानिकाङ्गकार्यविषयाप्येषा । इयं चानित्या, द्वयोः इति निर्देशात् । अनित्यत्वबललभ्यार्थमादायैव 'भ्यसो भ्यम्' इति सूत्रे भाष्ये निष्ठितस्येति पठितम् । केचित्त्वनया परिभाषया न किञ्चिल्लक्ष्यं साध्यते, अतएव 'ज्ञाजनोर्जा'–'ज्यादादीयस'–इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनमिति प्रश्ने पिबतेर्गुणप्रतिषेध उक्तः स न वक्तव्य इत्येव प्रयोजनमुक्तं, न तु लक्ष्यसिद्धिरूपं तदुक्तं; भ्यसोऽभ्यमित्यत्राभ्यमितिच्छेदः, 'शेषे लोप'श्चान्त्यलोप एव 'अतो गुणे' इति पररूपेण सिद्धं युष्मभ्यमित्यन्यत्र निरूपितम्; एवं च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यं 'भ्यसोऽभ्यमि'तिसूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः ॥ ९२ ॥

यत्तु—ओरोदिति वाच्य 'ओर्गुणः' इति गुणग्रहणात्

---

अतएवेति—ज्ञापकपरभाष्यप्रामाण्यादेवेत्यर्थः । द्वयोरिति । कथमन्यथा त्यदाद्यत्वे कृते एत्वं स्यादिति भावः । निष्ठितस्येति—परिनिष्ठितस्येत्यर्थः । यदङ्गकार्य्यप्रवृत्तिं विनैव प्रयोगस्य परिनिष्ठितत्वं तदेवाङ्गकार्य्यमङ्गकार्य्ये कृते न प्रवर्त्तते इति भावः । पिबतेर्गुणेति—पिबतीत्यादौ शब्निमित्तकलघूपधगुणप्रतिषेध इत्यर्थः । एतत्परिभाषासत्त्वे पिबादेशरूप आङ्गकार्य्ये कृते पुनर्गुणरूपाङ्गकार्य्यस्यानयैव वारणसम्भवादिति भावः । एतदपि फलं पिबादेशोऽदन्त इत्यनेन खण्डितम् ॥ ९२ ॥

ओरोदिति । गुणशब्देनापि विधाने आन्तरतम्यादोकारस्यैव विधेयत्वलाभेन लाघवादोकारविधानमेव युक्तमिति भावः ।

संज्ञापूर्वकविधेरनित्यत्वम् ॥ ९३ ॥

इयं च विधेयकोटौ संज्ञापूर्वकत्व एव, तेन स्वायम्भुवमित्यादि सिद्धम् ॥९३॥ तथा निलोडित्येव सिद्ध आनिग्रहणात्

आगमशास्त्रमनित्यम् ॥ ९४ ॥

तेन सागरं तर्तुकामस्येत्यादि सिद्धम् ॥ ९४ ॥ तथा तनादिपाठादेव सिद्धे 'तनादिकृञ्भ्यः' इति सूत्रे कृञ्ग्रहणात्

गणकार्यमनित्यम् ॥ ९५ ॥

तेन न विश्वसेदविश्वस्तम् इत्यादि सिद्धम् ॥ ९५ ॥ तथा चक्षिङो ङित्करणाद्

अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ ९६ ॥

तेन स्फायन्निर्मोक इत्यादि सिद्धम् ॥ ९६ ॥ तथा विनार्थनञा समासेनानुदात्तं पदमनेकमित्येव सिद्धे नञ्ग्रहणात्

---

विधेयकोटाविति—विधेयताप्रयोजकसंज्ञाशब्दघटितं शास्त्रमनित्यमित्यर्थः, अन्यथा यथाकथञ्चित्संज्ञापूर्वकत्वस्य शास्त्रमात्रे सत्त्वेनातिप्रसङ्गः। सिद्धमिति। अन्यथा गुणे रूपासिद्धिरित्यादिति भावः॥ ९३ ॥

तर्तुकामस्येत्यादीति। अत्रेडभावः फलमस्या बोध्यम् ॥९४॥

गणकार्य्येति—गणनिर्देशेन विधीयमानं कार्य्यमित्यर्थः। विश्वसेदिति। अदादिगणप्रयुक्तः शपो लुग्नेत्यर्थः॥ ९५ ॥

स्फायन्निर्मोक इति। अत्र धातोरनुदात्तेत्त्वेऽपि परस्मैपदसिद्धिः॥ ९६ ॥

## नञ्घटितमनित्यम् ॥ ९७ ॥

तेन 'नेयङुवङ्' इत्यस्यानित्यत्वाद्धे सुभ्रु इति सिद्धमिति—

तन्न, भाष्येऽदर्शनात्, भाष्यानुक्तज्ञापितार्थस्य साधुताया नियामकत्वे मानाभावात्, भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात्। किञ्च ज्ञापितेऽप्यानीत्यस्य न सार्थक्यमाडागमशून्यप्रयोगस्याप्रसिद्धेः। आङ्ग्रहणं लोङ्ग्रहणवदिति बोध्यम्। अतएव 'घोर्लोपो लेटि वा' इतिसूत्रे वेति प्रत्याख्यातम्। लोपेऽप्याट्पक्ष आटः श्रवणं भविष्यति, अटि दधदिति, आगमशास्त्रस्यानित्यत्वे त्वाट्यसति दधादित्यसिद्ध्या वाग्रहणस्यावश्यकत्वेन तत्प्रत्याख्याना-

---

हे सुभ्रु इति। अत्रानित्यत्वेन निषेधाप्रवृत्त्या नदीत्वेन 'अम्बार्थ' इतिह्रस्वसिद्धिः।

लोङ्ग्रहणवदिति। लोङ्ग्रहणं यथा तव व्यर्थं तथा आडागमशून्यप्रयोगाभावादाङ्ग्रहणमपि व्यर्थमेव ममापीति बोध्यम्। अतएवेति—परिभाषाया अभावादेवेत्यर्थः। आट्यसति दधादित्यसिद्ध्येति। वाग्रहणप्रत्याख्यानस्यायमाशयः—वाग्रहणसत्त्वे कानि रूपाणि आटि सति लोपे लोपाभावे वा दधादिति, अटि सति लोपे दधत् लोपाभावे दधादिति आनुपूर्वीभेदेनैव रूपभेदात् रूपद्वयमेव, वाग्रहणासत्त्वेऽपि आटि लोपे दधात् अटि लोपे दधदिति रूपद्वयमेवेति फलैक्यात वाग्रहणं प्रत्याख्यातम्। यद्यागमशास्त्रमनित्यं तदा अडाटोरभावे नित्यलोपे दत् वाग्रहणे सति दधादिति ददिति फलभेदात् प्रत्याख्यानभाष्यविरोधः परिभाषावादिमते नागेशेनोक्तः स न युक्तः, परिभाषासद्भावे वाग्रहणे यादृशं रूपत्रयं

सङ्गतिः स्पष्टैव। एतेन यत्कैयटे केचिदित्यादिनास्यैव वाग्रहणस्य तदनित्यत्वज्ञापकतोक्ता—सापि चिन्त्या; प्रत्याख्यानपरभाष्यविरोधात्, 'तनादिसूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च, चक्षिङो ङकारस्यान्तेदित्त्वाभावसंपादनेनचारितार्थ्याच्च ॥९७॥

एवमेव

आतिदेशिकमनित्यम् ॥ ९८ ॥

सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥९९॥

इत्यादि भाष्यानुक्तं बोध्यम्। स्वायम्भुवमित्यादिलोकेऽसाध्वेवेत्यन्यत्र विस्तरः ॥ ९९ ॥

---

तादृशमेव रूपत्रयं वाग्रहणाभावेऽपीति फलैक्यात्प्रत्याख्यानाविरोधात्। एतेनेति—प्रत्याख्यानपरभाष्येणेत्यर्थः। प्रत्याख्यानपरभाष्यविरोधादिति—अनित्यत्वज्ञापनेऽपि स्वांशे चारितार्थ्याभावादित्यर्थः। अन्तेदित्त्वाभावसंपादनेनेति। तदर्थमकारकरणे तु भाष्यानुक्तत्वादेवानादरः ॥९७॥

आतिदेशिकेति। अत्र लोटो 'लङ्वदि'त्यतिदेशो ज्ञापकः, अन्यथा ङ्लोडित्युक्तेऽपि ङित्कार्य्यनिर्वाहे तद्वैयर्थ्यापत्तिः, तेन जुह्वत्वित्यत्र 'सिजभ्यस्ते'ति जुस् नेति प्राञ्चः। सिच्साहचर्य्यादभ्यस्तादप्यनतिदिष्टङित्त्ववतो लकारस्य स्थाने जायमानस्य भेर्जुसित्यर्थस्वीकारेण दोषाभावोद्भावने तु नैतस्याः फलम् ॥९८॥

लोपविधेः सर्वविध्यपेक्षया बलवत्त्वे 'नाग्लोपी'त्यत्र प्रत्याहारग्रहणं ज्ञापकं प्राचोक्तम्, अन्यथा पूर्वं वृद्धावकारातिरिक्तस्याको लोपाभावेन तद्वैयर्थ्यान्। वृद्ध्यपेक्षयैव लोपस्य बलवत्त्वज्ञापकताया भाष्योक्तत्वेन सामान्यापेक्षज्ञापने प्रमाणाभावादिदमप्रमा-

यदपि ननु हन्तेर्यङ्लुक्याशीर्लिङि वधादेशो न स्यादत आह—

**प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ १०० ॥**

पाष्ठद्वित्वस्य द्विःप्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम्, अतएव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धिरिति—तदपि न, भाष्येऽदर्शनात् । किंच तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधनेऽपि समुदायस्य तत्त्वबोधने मानाभावात् । अतएव 'दयतेर्दिगि' इति सुत्रेऽस्तेः परत्वा-

---

णम् । इड्विधेर्वलवत्त्वे 'नेड्वशी'त्यत इडित्यनुवर्त्तमाने पुनः 'आर्द्धधातुकस्येड्वलादे'रित्यत्रेड्ग्रहणं ज्ञापकं प्राचोक्तम् । भाष्यकृता च तस्य प्रत्याख्यानादिदमप्रामाणिकम ॥ ९९ ॥

यद्पीति । अस्य तदपि नेत्यनेनान्वयः । वधादेशो न स्यादिति लिङ्प्रकृतेर्य्यङ्लुगन्तसमुदायस्य जंहन्नित्यस्य हनत्वाभावात उत्तरखण्डस्यार्थवत्त्वाभावात् पूर्वखण्डस्योत्तरखण्डेन व्यवधानादिति भावः । समुदाये प्रकृतिरूपत्वेति—जंहन्नितिसमुदाये हन्त्वारोपस्य परिभाषया बोधनेनेत्यर्थः । अतएवेति—परिभाषायास्सत्त्वादेवेत्यर्थः । धित्वसिद्धिरिति । जुहीति समुदाये हुत्वारोपेणेत्यर्थः । परिभाषाया अभावे तु हुरुत्तरखण्डेन व्यवधानान समुदायस्य हुत्वाभावादुत्तरस्यागन्तुकत्वेनार्थवत्त्वाभावान हुधातुपरत्वाभावाद्धिर्न स्यादिति भावः । अदर्शनादिति । परिभाषाया इति शेषः । न्यायसिद्धत्वं खण्डयति—किञ्चेति । समुदायस्य तत्त्वबोधने मानाभावादिति । समुदायस्य वर्णचतुष्टयात्मकत्वेन वर्णद्वयात्मकहन्रूपत्वे प्रत्यक्षविरोधादित्यपि बोध्यम । अतएवेति—तत्समुदा-

द्वित्वे कृते परस्यास्तेर्भूभावे कृते पूर्वस्य श्रवणं प्राप्नोतीत्याशङ्क्य विषयसप्तम्याश्रयणेन परिहृतं भाष्ये, अन्यथा त्वदुक्तरीत्यैकाज्द्विर्वचनन्यायेन समुदायस्यैवादेशापत्तौ तदसङ्गतिः स्पष्टैव, तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या। 'भूसुवोः' इत्यस्य तदन्ताङ्गस्येत्यर्थात् प्राप्तस्य गुणनिषेधस्य बोभूत्विति नियम इति न तद्विरोध । तस्माद्धन्तेर्यङ्लुकि वध्यादित्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः ॥१००॥

---

यस्य तत्त्वाभावादेवेत्यर्थः। अस्तेः परत्वादिति—अस्धातोरस्तेर्भूरित्यपेक्षया परत्वाद्द्वित्वे इत्यर्थः। विषयसप्तम्याश्रयणेनेति। अस्यार्द्धधातुके इत्यत्रेत्यादिः, तथा च प्रत्ययोत्पत्तेः प्रागेव भूभावे कृते द्वित्वमित्यर्थः। अन्यथा—परिभाषासद्भाव इत्यर्थः। त्वदुक्तरीत्येति—द्विः प्रयोगत्वसिद्धान्तेनेत्यर्थः। उत्तरखण्डमादायैवेति। पूर्वोक्तभाष्यात्, 'नानर्थके' इत्यत्रानभ्यासविकार इति पर्य्युदासाच्चोत्तरखण्डस्यैवार्थवत्त्वादिति भावः। उभयोरर्थवत्त्वन्तु न, बोधावृत्तिप्रसंगात्। न चैवं प्रणिजगादेत्यादावुत्तरखण्डस्यैव धातुत्वादभ्यासेन व्यवधानाद्गद्धातुपरत्वाभावाण्णत्वानापत्तिरिति वाच्यम्, 'गदनद' इत्यत्र षष्ठ्यर्थकसप्तम्याश्रयणेन गदनदादिनिरूपितोपसर्गस्य नेणत्वमित्यर्थेन व्यवधानेऽपि प्रवृत्तेः। अतएव प्रण्यगददित्यत्र विकरणविशिष्टस्यैवाङ्गस्याडागमेन तेन व्यवधानेऽपि नेर्णत्वसिद्धिः। 'भूसुवोस्तिङि'त्यस्य तिङः प्रत्ययत्वेन तदादेरुपस्थितया भूरूपतदादेर्गुणो नेत्यर्थेन बोभूतु इत्यत्रोत्तरखण्डस्यागन्तुकत्वेन तदादित्वाभावात् समुदायस्य परिभाषाभावे भूत्वाभावाद्गुणनिषेधाप्राप्तेः बोभूत्विति गुणाभावनिपातनस्य भाष्योक्तनियमार्थत्वानुपपत्तिरित्याह—भूसुवोरित्यादि। न तद्वि-

यदपि ननु 'वृद्धिर्यस्याचामादिः' इत्यत्रेक्परिभाषोपस्थितौ शालीयाद्यसिद्धिरत आह—

विधौ परिभाषोपतिष्ठते नानुवादे ॥ १०१ ॥

---

रोध इति। परिभाषाभावेऽपीति शेषः। चिन्त्यमिति। अत्र नैव बधादेश इति तत्त्वम् ॥ १०० ॥

यदपीति। अस्य तन्नेत्यनेनान्वयः। शालीयाद्यसिद्धिरिति। 'इको गुणवृद्धी'इत्यस्य यत्र गुणवृद्धीपदे तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठत इत्यर्थात् 'वृद्धिर्यस्याचामादिस्तद्वृद्धमि'त्यत्र वृद्धिपदस्य सत्त्वेनेक इत्यस्योपस्थित्येकः स्थानिकावृद्धिर्य्यस्याचामादिस्तद्वृद्धमित्यर्थात् लैगवायन इत्यत्रैव स्यात् न तु शालीय इत्यादाविति भावः।

विधौ परिभाषोपतिष्ठते नानुवाद इति। अयं भावः—परिभाषोपस्थापकं लिङ्गं प्रधानमपेक्षते प्रधानाप्रधानन्यायेन। प्राधान्यञ्च विधेयस्यैव भवतीति सति सम्भवे विधेयबोधकमेव लिङ्गं गृह्यते नोद्देश्यबोधकम्। तथा च 'मजेर्वृद्धि'रित्यादाविक् परिभाषा प्रवर्त्तते; न तु 'वृद्धिर्य्यस्ये'त्यादौ तत्र वृद्धिपदस्योद्देश्यबोधकत्वात्। यच्च लिङ्गं विधेयताप्रयोजकन्न सम्भवति तदुद्देश्यगतमपि प्रधानं गृह्यते न त्वप्रधानं, प्रधानाप्रधानन्यायादेव। तथा चौपश्लेषिकाधिकरणबोधकसप्तम्यन्तं 'तस्मिन्नि'तिपरिभाषालिङ्गम्, अनिर्द्धारितसम्बन्धविशेषा षष्ठी 'षष्ठीस्थान' इत्यस्या लिङ्गम्। तच्चोद्देश्यगतमेव, विधेयासम्भवात्। तत्रापि विधेये साक्षाद्विशेषणं यत् तत् परंपराविशेषणं प्रति प्रधानमिति तत्रैव परिभाषाप्रवृत्तिर्न तु परंपराविशेषणीभूते उक्तन्यायादिति इको यणचीत्यादौ यण्रूपविधेये साक्षाद्विशेषणे इक इत्यत्र 'षष्ठीस्थाने' इत्यस्य प्रवृत्तिः न तु 'उदीचामातस्थाने' इत्यत्रात इत्यादौ, तस्य परंपरयेत्वरूपविधेयविशेषणत्वात्। अतएव तत्र स्थाने ग्रहणं चरितार्थम्। तद-

अनूद्यमानविशेषणेषु तन्नियामकपरिभाषा नोपतिष्ठते इति तदर्थः । विध्यङ्गभूतानां परिभाषाणां विधेयेनासिद्धतया सम्बन्धासम्भवेऽपि तद्विशेषणे व्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयम् । किञ्च 'उदीचामातः स्थाने' इतिसूत्रे स्थानेग्रहणमस्या लिङ्गम्, अन्यथा 'षष्ठी स्थाने' इति परिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति—

तन्न, 'उदात्तस्वरितयोर्यणः' इत्यादौ, 'ष्यङः संप्रसारणम्' इति सूत्रभाष्योक्तरीत्या 'अल्लोपोऽनः' इत्यादौ चैतस्या व्यभिचरितत्वात्, भाष्यानुक्तत्वाच्च, स्थानसम्बन्धो न परिभाषालभ्य इत्यर्थस्य 'षष्ठी स्थाने' इतिसूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञाप-

---

ध्येतत्परिभाषाज्ञापकम् । विधौ इत्यस्य प्रधाने इत्यर्थः । अनुवादे इत्यस्याप्रधाने इत्यर्थः । गुणवृद्धी विधीयेते इत्यर्थस्त्वेतत्परिभाषालभ्य एवेति । अनूद्यमानेति—उद्देश्यत्यर्थः । तन्नियामकेति—उद्देश्यविशेषणोपस्थापिकेत्यर्थः । विध्यङ्गभूतानामिति—विध्युपकारकाणामित्यर्थः । विधेयेनासिद्धतयेत्यस्य विधेयस्यासम्भवेने-त्यर्थः । इदङ्क्लोपश्लेपिकसप्तम्यादिविषयं बोध्यम्, गुणवृद्धिरूपस्य तस्य सम्भवात् । तर्कमूलयमिति—प्रधानाप्रधानन्यायमूलेयमि-त्यर्थः । उदात्तस्वरितयोरिति—'उदात्तस्वरितयो'रित्यत्र परंपरया विधेयविशेषणे 'षष्ठीस्थाने'इत्यस्य 'अल्लोपोऽन'इत्येतद्विधेयलोपे परंपराविशेषणे अङ्गभसंज्ञाक्षिप्ते असर्वनामस्थाने तस्मिन्नित्यस्य प्रवृत्त्या परिभाषाया व्यभिचार इत्यर्थः। स्थानेग्रहणं ज्ञापकमपि न,'षष्ठी स्थाने'इत्यस्य निर्दिश्यमानपरिभाषार्थकत्वेन स्थानार्थस्य परिभाषासाध्यत्वाभावेन ज्ञापितेऽपि चारितार्थ्यासम्भवादित्याह—स्थान-

कासम्भवाच्च । तत्र स्थानेग्रहणं तु स्पष्टार्थमेव । किञ्च विधौ परिभाषेति प्रवाद 'इको गुणवृद्धी' 'अचश्च' इत्यनयोर्विधीयत इत्यध्याहारमूलकः, अन्यत्र तु नास्याः फलमित्यन्यत्र विस्तरः ॥ १०१ ॥

ननु नमस्करोति देवान्नमस्यति देवानित्यादौ 'नमः स्वस्ति'इतिचतुर्थी दुर्वारेत्यत आह—

उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ १०२ ॥

---

सम्बन्धो नेति। विधीयते इत्यध्याहारमूलक इति । न चाध्याहार एतत्परिभाषामूलक एवेति वाच्यं, गुणवृद्धिग्रहणानुवृत्त्यैव सिद्धे सूत्रस्थगुणवृद्धिग्रहणसामर्थ्यात् गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते इत्यर्थेन तल्लाभात्, 'अचश्चे'त्यत्र 'अकाल' इत्यतोऽच् इत्यस्य ह्रस्वदीर्घप्लुत इत्यस्य चानुवृत्त्या आवृत्त्या तृतीयान्तत्वेन विपरिणामेन च तदर्थलाभसम्भवाच्च ॥ १०१ ॥

नमस्करोतीति। ननु नमःपदार्थे देवानामन्वयविवक्षायां चतुर्थी कृधात्वर्थफलेऽन्वयविवक्षायां द्वितीयेति व्यवस्थितत्वात्कथं द्वितीयाकाले चतुर्थ्याःप्राप्तिरिति चेत्—न, नमःपदस्य कृधात्वर्थनमस्कारार्थद्योतकतया स्वनिष्ठापकृष्टत्वप्रकारकबोधानुकूलव्यापाररूपनमस्कारघटकबोधान्वयमात्रेणैवोभाभ्यामन्वयलाभादेकदैव विभक्तिद्वयप्राप्तेस्सत्त्वात् । यदि च स्वप्रयोज्यस्ववाच्यार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकत्वसम्बन्धेन नमःपदविशिष्टात्प्रातिपदिकाच्चतुर्थीत्यर्थात् नमस्करोति देवानित्यादौ नमःपदप्रयोज्या न नमस्कारार्थनिष्ठा विषयता अपि तु कृधातुप्रयोज्येति न चतुर्थीप्राप्तिरित्युच्यते तदाह—नमस्यति देवानिति । अत्र नमःपदस्यैव नमस्कारार्थवाचकत्वाद्धातुत्वाच्चोभ-

कारकविभक्तित्वं च क्रियाजनकार्थविभक्तित्वं, तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरिति 'सहयुक्ते' इत्यादिसूत्रेषु भाष्ये ध्वनितम्। इयं च वाचनिक्येव। अतएव यस्य च भावेन इति सप्तम्यपेक्षयाधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन 'तत्र च दीयते' इति सूत्रे भाष्ये ध्वनितं कैयटेन स्पष्टमुक्तम्। एतेन क्रियान्वयित्वं कारकत्वमित्यपास्तं, 'यस्य

योर्युगपत्प्राप्तिरिति बोध्यम। क्रियाजनकार्थकविभक्तित्वमिति। ननु चतुर्थ्यर्थोद्देश्यत्वादेरपि उद्देश्यत्वं जानातीत्यादिप्रतीत्या क्रियाजनकत्वात्तदर्थकचतुर्थ्यादीनामपि विभक्तीनां क्रियाजनकार्थकविभक्तित्वेन कारकविभक्तित्वापत्तिरिति चेत्—न, क्रियानिष्ठविशेष्यतानिरूपितक्रियाकारकभावसम्बन्धावच्छिन्नप्रकारताप्रयोजकविभक्तित्वं कारकविभक्तित्वमितितात्पर्यात्, चतुर्थ्यादीनाञ्च तादृशप्रकारताप्रयोजकत्वाभावेनादोषात्। मातुः स्मरतीत्यादौ मातृविषयकस्मरणप्रतीत्या षष्ठ्यास्तादृशप्रकारताप्रयोजकत्वविरहः। कारकत्वव्याप्यकर्मत्वादिबोधकविभक्तित्वं वा कारकविभक्तित्वम्। प्रथमाया अपीति। 'अभिहिते कारके प्रथमे'तिवार्त्तिकात्तस्या अपि कारकार्थकत्वादिति भावः। भाष्ये ध्वनितमिति। तत्राप्रधानग्रहणाभावे पुत्रेण सहागतः पितेत्यादौ पितृशब्दादपि तृतीयामाशंक्य 'उपपदविभक्ते'रिति न्यायेन प्रथमया तृतीयाया बाधनस्योक्तत्वात्। अतएवेति—वाचनिकत्वादेवेत्यर्थः। क्रियान्वयित्वं तत्त्वमिति चेत्प्रथमार्थस्य प्रत्ययार्थेन सहान्वयेन तत्त्वाभावात्तदसंगतेः। ध्वनितमिति। तत्र हि 'तत्र च दीयते कार्य्यमि'ति सूत्रे दीयतेग्रहणं कार्यग्रहणञ्च किमर्थं यन्मासे दीयते यन्मासे कार्य्यं तदपि तत्र

च भावेनेति सप्तम्या अपि क्रियान्वयित्वात् । ये तु प्रधानीभूतक्रियासम्बन्धनिमित्तककार्यत्वेन कारकविभक्तीनां बलवत्त्वं वदन्ति, तेषामुभयोरपि क्रियासम्बन्धनिमित्तकत्वेन तदसङ्गतिः स्पष्टैव, 'नमो वरिवस्' इतिसूत्रे नमस्यति देवानित्यादौ चतुर्थीवारणाय भाष्ये उपन्यासस्यासंगतिश्च । एतेन क्रियाकारकसम्बन्धोऽन्तरङ्ग इति तन्निमित्ता विभक्तिरन्तरङ्गा उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता बहिरङ्गेत्यपास्तम्, नमस्यतीत्यत्र नमःपदार्थेऽपि क्रियाकारक-

---

भवं भवतीति 'तत्र भवम्' इत्यनेनैव सिद्धेरित्याशंक्य तत्र भवमित्यत्रौपश्लेषिकाधिकरणे सप्तमी । 'तत्र च दीयते' इत्यत्र सामर्थ्यात् 'यस्य च भावेने'तिसप्तमीति यस्य च भावेनेति सप्तमी यत्र तत्र प्रत्ययार्थं दीयते ग्रहणमित्युक्तम् । कैयटेन च 'उपपदविभक्ते'रितिन्यायेनौपश्लेषिकाधिकरणे सप्तमीति स्पष्टमेवोक्तम् । एतच्च भाष्यमस्यावाचनिकत्वे एव सङ्गतम्, उभयोः क्रियानिमित्तकत्वेन प्राधान्यादेस्साम्यात् । यत्किञ्चित्क्रियाकारकभावमूलक इति । 'नमः स्वस्ती'त्यादौ 'स्वंरूप'सूत्रेण स्वरूपस्यैव नमःशब्दार्थत्वेन तत्सम्बन्धो देवस्य स्वद्योत्यक्रियाकर्म्मत्वं, क्रियया सह तु कर्म्मत्वमेवेत्यन्तरङ्गबहिरङ्गभावः स्पष्टः । वस्तुतस्तु प्रधाननिमित्तकत्वेन कारकविभक्तीनां बलवत्त्वं, तन्मूलकोऽयं न्यायः । नमस्यतीत्यादावपकृष्टत्वप्रकारकबोधानुकूलव्यापारात्मकनमस्कारघटकबोधान्वयमात्रं चतुर्थ्याऽपेक्ष्यते, बाधापेक्षया प्रधानीभूतव्यापारनिमित्तकत्व द्वितीयायाः प्रधानीभूतव्यापारजन्यफलाश्रयस्य कर्म्मत्वादिति द्वितीया बलवती । न च कर्तृप्रत्ययस्थले व्यापारस्य प्राधान्यवत् कर्म्मप्रत्ययस्थले नमस्क्रियन्ते देवा इत्यादौ व्यमते फलस्यैव प्राधा-

भावेनैवान्वयात्। अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव। 'सह युक्ते' इत्यादौ च प्रधाने प्रथमासाधनार्थमियं भाष्ये उपन्यस्तेत्यन्यत्र विस्तरः॥ १०२॥

नन्वदमुयङित्यादौ पूर्वस्यापि मुत्वापत्तिरत आह—

---

न्येन साम्यमेवेति वाच्यम्, शाब्दबोधीयविशेष्यतारूपप्राधान्यस्य बोधे सत्त्वेऽपि जन्यत्वेनाप्रतीयमानत्वलक्षणप्राधान्यस्य व्यापारे एव तत्रापि सत्त्वात् अतएव प्रधानक्रियानिमित्तककर्मत्वं तत्र सिद्धम्। तदर्थकत्वेन प्रथमाया अपि प्रधाननिमित्तकत्वेन चतुर्थ्यपेक्षया बलवत्त्वम्। अतएवाप्रधानग्रहणाभावे पुत्रेण सहागतः पितेत्यादौ कारकविभक्तित्वेन प्रथमाया तृतीयाबाधकत्वेऽपि पुत्रेण सहागतस्य पितुर्धनमित्यादौ षष्ठीं बाधित्वा न तृतीयापत्तिः, साहित्यरूपसम्बन्धस्य पित्रनुयोगिकस्य पित्रपेक्षया विशेष्यत्वेन प्रधानीभूतधनानुयोगिकसम्बन्धापेक्षयाऽप्राधान्यात्। तन्निमित्तकषष्ठ्याः साहित्यसम्बन्धनिमित्तकतृतीयापेक्षया बलवत्त्वम्। वाचनिकत्वे तु षष्ठ्याः कारकविभक्तित्वाभावेन तृतीयाबाधकत्वानापत्त्या अप्रधानग्रहणप्रत्याख्यानासङ्गत्यापत्तेः। 'तत्र च दीयते' इतिसूत्रस्थभाष्यविरोधस्तु न। तथाहि यदि सर्वत्र शास्त्रे सत्सप्तम्येव स्यात्तर्हि 'तस्मिन्नि'तिपरिभाषा व्यर्था स्यात्, अस्या ह्यौपश्लेषिकसप्तमी लिङ्गं तस्मादिदं ज्ञाप्यतेऽनया परिभाषया। असति बाधके अस्मिन् शास्त्रेऽधिकरणसप्तम्येव। अतएवोक्तं भाष्ये 'सत्यामेतस्यां सत्सप्तम्याश्रयणमयुक्तमि'ति। ततश्च 'तत्र भव' इत्यत्राप्यधिकरणसप्तमी सिद्धा। 'तत्र च दीयते' इत्यत्र तु सामर्थ्यात्सत्सप्तमी। अतएव भाष्ये औपश्लेषिकाधिकरणं विज्ञास्यत इत्येवोक्तम्। न त्वेतन्न्यायोपन्यासः, कैयटे न्यायोपन्यासोऽपि 'तस्मिन्नि'ति ज्ञापनमूलक एवेति दिक्॥ १०२॥

## अनन्त्यविकारेऽन्त्यसदेशस्य ॥ १०३ ॥

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः, अन्यथा धात्वादेर्नत्वसत्वेनेता सोतेत्यादावेव स्यातां, न तु नमति सिञ्चतीत्यादौ। अनन्त्यविकार

---

मुत्वापत्तिरिति—अदसोरित्यनेनेति भावः। अनन्त्यविकार इति—न अन्त्यस्य विकारो येनासावनन्त्यनिकारस्तस्मिन् शास्त्रेऽन्त्यसदेशस्येत्यस्योपस्थितिरिति परिभाषार्थः। तथा च अदद्र्यङितिस्थिते अन्त्यो यकारस्तस्य 'अदसोऽसे'रित्यनेन विकाराभावात्तत्रान्त्यसदेशस्येत्युपस्थितौ अदःशब्दावयवस्यान्त्यसदेशस्य दस्य मत्वं प्रत्यासत्त्या तस्मात्परस्यैव रेफस्योत्वे अदमुयङिति सिद्धिः। न चामू इत्यादावन्त्यौकारोद्देश्यकोकाररूपविकारप्रयोजकमेव मुत्वशास्त्रमिति कथन्तत्र परिभाषाप्रवृत्तिरिति वाच्यम्, विधेयभेदेन वाक्यभेदात् मत्वशास्त्रस्यान्त्योद्देश्यकविकाराप्रयोजकत्वेन तत्र परिभाषाप्रवृत्तेस्सुलभत्वात्। धात्वादेर्नत्वसत्वे इति। ननु नमनं नयतीति नमननीस्तत आचारक्विबन्तात्कर्त्तरि क्विपि नमननीरित्यादौ सापादिके सर्वस्मिन् कार्य्ये जाते आदिणकारान्त्यसदेशणकारयोर्युगपदेकप्रयोगे नत्वप्राप्तिसत्त्वादन्त्यस्याप्राप्तेश्च 'णो न' इत्यत्रान्त्यसदेशस्योपस्थितिर्दुर्वारेति चेत्, अत्रोच्यते—यत्किञ्चित्प्रयोगविशिष्टे शास्त्रे अन्त्यसदेशस्येत्युपस्थितिः। वैशिष्ट्यं स्वपर्य्याप्तोद्देश्यताकत्वस्वान्त्योद्देश्यकविकाराप्रयोजकत्वस्वनिरूपितावयवत्वविशिष्टान्त्यसदेशानन्त्यसदेशोभयवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकत्वैतत्त्रितयसम्बन्धेन। नमननीति प्रयोगवैशिष्ट्यमादाय 'णो न' इत्यत्र दोषवारणायाद्यस्सम्बन्धः। नेतेतिप्रयोगवैशिष्ट्यं तत्र माभूदिति तृतीयस्सम्बन्धः। परम मु

इति च लिङ्गम् । अन्त्येन समानो देशो यस्य सोऽन्त्यसदेशः । तत्त्वं चान्त्यवर्णतद्वर्णयोरितराव्यवधानेन बोध्यम् । अतएव विद्ध इत्याद्यर्थं 'न संप्रसारणे' इति चरितार्थम् । 'अल्लोपोऽन' इत्यादेरनस्तक्ष्णोत्यदावाद्याकारादावप्रवृत्तिरप्यस्याः फलं, यजा-

---

राजन् सु अ इति टजन्तसमुदायस्य 'सुपो धात्वि'तिसूत्रे वैशिष्ट्य-वारणाय विषयतायां वर्णत्वव्याप्यधर्म्मावच्छिन्नत्वविशेषणम् । जुगुप्सतीत्यादौ गुप्सितिसकारान्तस्य प्रथमैकाचो द्वित्वे हलादिः शेषेण पकारसकारयोर्लोपाय द्वितीयः सम्बन्धः, अन्यथा अनया पकारस्यैवान्त्यसदेशत्वेन लोपः स्यात् नतु सकारस्य । द्वितीयसम्बन्धनिवेशे तु अन्त्योद्देश्यकविकारप्रयोजकत्वेन परिभाषाया अप्रवृत्त्या न दोषः । चलीक्लृप्यत इत्यत्र 'कृपो रोल' इतिशास्त्रीयविषयतायास्समुदायपर्य्याप्ताया अभावात् न परिभाषायाः 'कृपो रोल' इत्यत्र प्रवृत्तिः । अन्त्येन समानो देश इति । इदन्तु व्युत्पत्तिमात्रम्, अन्यवर्णस्यान्यवर्णसमानदेशत्वासम्भवात्, उपान्त्यस्यैवान्त्यस्यापि महादेशमादायान्त्यसदेशत्वापत्तेश्चेत्यत आह—तत्त्वञ्चेति । स्वप्रागभावाधिकरणक्षणवृत्तित्व-स्वप्रागभावाधिकरणक्षणवृत्तिस्वविजातीयवर्णप्रागभावाधिकरणक्षणावृत्तित्वोभयसम्बन्धेनान्त्यवर्णविशिष्टत्वमन्त्यसदेशत्वम् । विद्धमित्याद्यावकारेण व्यवधानाद्यकारस्यान्त्यसदेशत्वाभावेन परिभाषया वकारस्य संप्रसारणवारणासम्भवेन 'न संप्रसारणे' इति चरितार्थम् । विजातीयनिवेशाददमुयङित्यादौ रेफेण व्यवधानेऽपि दकारस्यान्त्यसदेशत्वोपपत्तिः । अनस्तक्ष्णोति । अन्नन्तं यदङ्गम्भं तदवयवो योऽनपदोचनिर्दिश्यमानः तस्याकारस्य लोप इत्यर्थकाऽल्लोपोऽन इतिसूत्रम् । निर्दिश्यमानत्वञ्च षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितीयविषयताश्रयत्वं, तथानस्तक्ष्णोत्यादावुभयोरनो-

दिस्वादिपरान्नन्ताङ्गस्याकारस्य लोप इत्यर्थस्यैवाङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षतयौचित्यात् अङ्गावयवाजादिस्वादिपरस्यान इत्यादिक्रमेणानेकत्रानेकक्लिष्टकल्पनापेक्षयाऽस्या उचितत्वात्। न चैषा 'ष्यङः संप्रसारणम्'इतिसूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम्, वार्त्तिकोक्तफलानामनेकक्लिष्टकल्पनाभिरन्यथासिद्धिं प्रदर्श्यापि 'यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्या, प्रतिविधेयं दोषेषु, प्रतिविधानं चोदात्तनिर्देशात्सिद्धमित्युपसंहारात्। मिमार्जिषतीत्यर्थं च तत्र वृद्धेः पूर्वमन्तरङ्गत्वादृद्धित्वे परत्वादभ्यासकार्ये ततोऽभ्यासेकारस्य वृद्धिवारणायावश्यकी। न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिः, लक्ष्ये

---

वर्तत इत्यनयैव परिभाषया पूर्वानोऽकारस्य लोपाभावः। क्लिष्टकल्पनेति। आक्षिप्तस्य शाब्दबोधे मानाभावात् संज्ञाशास्त्रस्य कार्य्यकालपक्षेऽपि विधिशास्त्रेण सह पदैकवाक्यताविरहाच्च क्लिष्टत्वम्बोध्यम्। अस्या—'अनन्त्यविकार' इति परिभाषाया इत्यर्थः। भाष्ये प्रत्याख्यातेति। अस्याः परिभाषायाः कतिपयफलानामन्यथासिद्धिप्रदर्शनमात्रं कृतन्तत्सूत्रे भाष्ये। प्रतिविधानमप्रवृत्तिः। उदात्तनिर्देशादिति। यत्र परिभाषाया अप्रवृत्तिरिष्टा तत्रोदात्तः पठनीयः। अनुदात्तत्वञ्च परिभाषालिङ्गं कर्त्तव्यमिति भावः। तदर्थमेषा कर्त्तव्येति। अनेनास्याः कर्त्तव्यत्वं स्पष्टमेवोक्तमिति बोध्यम्। मिमार्जिषतीत्यर्थश्चैषेति। इदन्त्वयुक्तम्, 'धातोः कार्य्यमुच्यमानमि'तिपरिभाषया प्रत्ययाव्यवहितपूर्वस्य 'मृजेरिकोवृद्धि'रित्यर्थेनाभ्यासस्य प्राप्त्यभावात्, समुदायस्य मृज्त्वाभावात्, अभ्यासस्य मृज्त्वेऽपि प्रत्यया-

लक्षणस्येति न्यायेन-पुनरप्रवृत्तेः । यत्तु 'न सम्प्रसारण' इति सूत्रे भाष्ये नैतस्याः परिभाषायाः प्रयोजनानीत्युक्तं, तस्याय-मर्थः—एतत्सूत्रप्रयोजनान्येतस्याः परिभाषायाः प्रयोजनानि न भवन्ति, व्यधादावन्त्यसमानदेशयणोऽभावादिति । नैतान्ये-तस्याः प्रयोजनानीति पाठोऽपि क्वचिद् दृश्यते । वाचनिक्ये-वैषा । स्पष्टा च 'ष्यङ'इतिसूत्रे 'अदसोऽसेः' इतिसूत्रे च केचिदन्त्यसदेशस्येत्यनेन भाष्ये इत्यन्यत्र विस्तरः॥ १०३ ॥

ननु 'अव्यक्तानुकरणस्यात' इति पररूपं पटत् इति पटि-तीत्यादावलोऽन्त्यस्येत्यन्त्यस्य प्राप्नोतीत्यत आह—

नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ १०४ ॥

अनभ्यासेत्युक्तेर्बिभर्तीत्यादौ 'भृञामित्'इत्याद्यन्तस्यै-वाभ्यासोऽनर्थकः अर्थावृत्त्यभावात्, कित्तूत्तरखण्ड एवार्थवा-

---

व्यवहितपूर्वत्वाभावात्, अनर्थकत्वाच्च । एतत्सूत्रप्रयोजना-नि । विद्ध इत्यादीनीति शेषः । परे तु—नैषा परिभाषा भा-ष्यसम्मता, नैतस्याः परिभाषायाः प्रयोजनानीति भाष्यात् । नागे-शव्याख्यानन्तु न युक्तम्, अक्षरस्वारस्य भङ्गापत्तेः । अतस्तदण् त्यादौ पूर्वाकारस्य लोपस्तु न, तस्य निर्दिश्यमानावयवत्वाभा-वात् । षष्ठीप्रकृतिप्रयोज्यशाब्दबोधीयप्रकारताश्रयत्वं निर्दिश्यमान-त्वमिति स्वीकारेण पूर्वानस्तत्त्वाभात् । अदमुयङित्यस्यानभि-धानं बोध्यम्, अतएवादमुयङिति भवितव्यमित्युक्तं न तु भव-तीति दिगित्याहुः ॥ १०३ ॥

नानर्थक इति । ततश्च पटद्पटकस्यातोनर्थकत्वान्न दोष इति बोध्यम् । अर्थावृत्त्यभावादिति—अभ्यासस्यार्थवत्त्वे तु अ-

नित्यन्यत्र निरूपितम् । एषाऽलोऽन्त्यात्सूत्रे भाष्ये स्पष्टा, फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चेति तत एवावधार्यम् ॥ १०४ ॥

ननु ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ पुमान् स्त्रियेत्येकशेषापत्तिः, स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावादत आह—

**प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ॥ १०५ ॥**

---

भ्यासादुत्तरखण्डाच्च द्विधा भानं स्यादिति बोध्यम् । उत्तरखण्ड एवेति । अतएव अस्तेर्द्वित्वे परस्य भूभावे पूर्वस्य श्रवणं प्राप्नोतीति भाष्यं सङ्गच्छते, उत्तरखण्डस्यानर्थकत्वे परस्य भूभावानापत्त्या तदसंगत्यापत्तेः । **फलानामन्यथेति**—आम्रेडितस्य वेतिन्यासेनैवालोऽन्त्यपरिभाषयाऽन्त्यस्य विकल्पसिद्धौ 'नाम्रेडितस्यान्त्यस्य तु वेत्यस्य वैयर्थ्यापत्त्या 'अव्यक्तानुकरणस्ये'तिसूत्रे अलोन्त्यविध्यभावकल्पनात्पटितीत्यादौ न दोषः । 'हलि लोप' इत्यत्र 'अनाप्यक' इत्यतोऽनित्यस्यानुवृत्त्या षष्ठ्यन्तत्वेन विपरिणमय्येदं सम्बन्धिनोऽनोऽन्त्यनकारस्यैव लोपेनाभ्यामिति सिद्धम् । एवमन्यत्राप्यन्यथासिद्धिरूहनीया । अत्र ज्ञापकमाम्रेडितस्य वेतिन्यासेनैव सिद्धौ नाम्रेडितस्यान्त्यस्य तु वेति सूत्रमेव बोध्यम् । अनभ्यासविकार इत्यंशे 'अर्त्तिपिपर्त्योश्चेति निर्देशो ज्ञापकः ॥ १०४ ॥

**प्रधानाप्रधानयोरिति**—तथा च पुमान्स्त्रियेत्यादौ प्रधानस्त्रीत्वपुंस्त्वमात्रकृतं यत्र वैरूप्यमित्यर्थः । ब्राह्मणीवत्सः ब्राह्मणवत्सेत्यादौ च ब्राह्मणगतं यदप्रधानं स्त्रीत्वादि तेनापि वैरूप्यान्नैकशेषः । नन्वप्राधान्यं प्रकारत्वमेव, तच्च सर्वत्र लिङ्गस्येत्युदाहरणासम्भव इति चेत्—न । लिङ्गनिष्ठमप्राधान्यं यस्य

तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः। स्पष्टा चेयं 'पुमान् स्त्रिया' 'नपुंसकमनपुंसकेन' इत्यनयोर्भाष्ये। अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति 'हेतुमति च' इत्यत्र भाष्यकैयटयोः ॥१०५॥

ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीन्निषेधः परिच्छेत्तृवाचकमातृशब्देऽपि स्यादत आह—

## अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०६ ॥

तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणं, न परिच्छेत्तृवाचकस्य। योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः

---

शब्दस्य वैरूप्यं विवक्षितं तत्प्रयोज्यविशेष्यतानिरूपितप्रकारतावच्छेदकत्वरूपं, प्राधान्यञ्च तत्पदप्रवृत्तनिमित्तावच्छिन्नविशेष्यतानिरूपितप्रकारतावत्त्वमित्यदोषात्। अनयैव परिभाषया विशेषणगतलिङ्गमादाय प्राप्तं लिङ्गनिमित्तकं नत्वादिकार्य्यं ब्राह्मणभार्य्याः कुलपुत्र इत्यादौ वारणीयम्। अन्तरङ्गादुपजीव्यादिति। अतएव शत्रूनगमयत्स्वर्गमित्यादौ प्रयोज्यक्रियानिरूपितकर्तृत्वे अन्तरङ्गत्वोपजीव्यत्वयोस्सत्त्वेऽपि तद्बाधित्वा प्रधानक्रियानिमित्तत्वेन प्राधान्यात्कर्म्मत्वसिद्धौ गतिबुद्धिसूत्रस्य नियमार्थत्वं 'हेतुमति चे'तिसूत्रभाष्योक्तं सङ्गच्छते ॥ १०५ ॥

योगजबोध इति—अवयवशक्तिज्ञानाधीनसमुदायशक्तिज्ञानाधीनोपस्थितिजन्यशाब्दबोध इत्यर्थः। तदनालिङ्गितेति—अवयवशक्तिज्ञानानधीनसमुदायशक्तिज्ञानजन्योपस्थितिरित्यर्थः। प्रतिबध्यप्रतिबन्धकभावस्तु वस्तुस्थित्यैव कल्प्यते। लोके च यत्रान्यतरतात्पर्य्यनिर्णायकं नास्ति तत्र समुदायशक्त्यैव बोधो

प्रतिबंधिकेति व्युत्पत्तिरेव तद्बीजम् । रथकाराधिकरणन्याय-सिद्धोऽयमर्थः। कश्चित्तु 'दीधीवेवीटाम्' इत्यत्रानया परिभाषया दीधीवेवीङोरेव ग्रहणं, न दीधीवेञ्वीनामिति—तन्न, तथा सति दीवेधोवीनामित्येव वदेदित्यन्ये ॥ १०६ ॥

ननु वातायनार्थे गवाक्षेऽवङो वैकल्पिकत्वाद्गोऽक्ष इत्याद्यपि स्यादत आह—

---

भवतीति वस्तुस्थितेस्तस्य कल्पनमिति भावः। इयञ्च वस्तुस्थिती रथकाराधिकरणन्यायेनापि निश्चीयते, तत्रापि समुदायशक्तिज्ञानाधीनबोधस्यैव निर्णीतत्वात्, तदाह—रथकारेति। ननु सति तात्पर्य्ये योगजबोधस्याप्युदयेनायं प्रतिबध्यप्रतिबन्धकभावो न युक्त इति चेत्—न, योगजबोधतात्पर्यनिर्णयाभावस्यापि प्रतिबन्धकदले निवेशात्। ननु गणपठितमातृशब्दस्य मातृत्वरूपानुपूर्व्यवच्छिन्नबोधकत्वेनानुपूर्व्याश्च परिच्छेतृवाचकेऽपि सत्त्वादुभयबोधो दुर्वार इति चेत्—न, अर्थस्याप्यर्थवद्ग्रहणपरिभाषया विशेषणतया भानात्तस्य समुदायप्रसिद्ध्यैवोपस्थितस्य ग्रहणेनादोषात्। ननु स्वंरूपसूत्रप्रत्याख्याने लौकिकव्युत्पत्त्या विभिन्नरूपेणोपस्थितयोर्जननीपरिच्छेतृरूपार्थयोस्समुदायप्रसिद्ध्या जनन्या एव ग्रहणमित्यस्य युक्तत्वस्यान्यत्रोपपादितत्वेनैतत्पक्षे आत्मीयवाचकस्वशब्देनात्मीयत्वेनैवार्थस्य भानादुभयोर्ग्रहणं दुर्वारमिति चेत्—न, लौकिकव्युत्पत्त्या शब्दबोध्यानामेवार्थानामेकरूपेणात्मीयत्वेन बोधार्थन्तत्सूत्रस्यारम्भात्, अन्यथा सकृद्गतिन्यायात् सर्वेषां बोधानापत्तेः, शब्दबोध्यश्चोक्तन्यायात्प्रसिद्ध एवेति परिच्छेतृरूपार्थस्याभानेनादोषात् ॥ १०६ ॥

व्यवस्थिताविभाषयापि कार्याणि क्रियन्ते ॥ १०७ ॥

लक्ष्यानुसाराद् व्यवस्था बोध्या। 'शाच्छोः' इतिसूत्रे 'लटः शत्रि'त्यादिसूत्रेषु च भाष्ये स्पष्टा ॥ १०७ ॥

विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०८ ॥

---

व्यवस्थितविभाषयेति। व्यवस्थितविभाषात्वञ्च शास्त्रे स्वीयोद्देश्यतावच्छेदकव्याप्यो य उभयावृत्तिधर्मव्यापको धर्म्मस्तन्निष्ठव्याप्यतानिरूपिता या विधेयतावच्छेदकधर्म्मावच्छिन्ना व्यापकता तद्वतोर्भावाभावयोर्विधायकत्वम्, यथाऽवङ्स्फोटायनस्येत्यस्योद्देश्यतावच्छेदको धर्म्मोऽजव्यवहितपूर्वत्वविशिष्टगोशब्दत्वं तद्व्याप्य उभयावृत्तिधर्म्मव्यापको वातायनार्थकत्वविशिष्टाक्षशब्दाव्यवहितपूर्वत्वविशिष्टगोशब्दत्वरूपः तद्व्यापकत्वं विधेयतावच्छेदकावङ्त्वावच्छिन्नं तद्वदवङ् तद्विधायकत्वं तस्येति समन्वयः। क्वचिदभावत्वावच्छिन्नमेव व्यापकत्वं भविष्यतीति बोध्यम् ॥१०७॥

विधिनियमसम्भव इति—

'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥'

इति जैमिनिस्मृतिः। विधिः सोमेन यजेदिति, यागस्य केनाप्यप्राप्तेः। नियमस्तु व्रीहीनवहन्तीति। अवघातस्तण्डुलनिष्पादक इति लोकसिद्धत्वाच्छास्त्रेण तण्डुलनिष्पत्तयेऽवघातो विधातुमयोग्योऽपि विधीयते, तस्येदं तात्पर्य्यं तण्डुलनिष्पत्तिस्तुषविमोकात्, स च यथाऽवघातेन तथा नखेनापि भवितुमर्हतीति तण्डुलार्थी कदाचिदवघातेन यदृच्छया तुषविमोकं कृत्वा यागं कुर्य्यादिति नखनिष्पन्नतण्डुलकृतपुरोडाशसिद्धो यागोऽपूर्वसाधको न, किन्त्ववघातसिद्ध एवापूर्वसाधक इति बोधयितुं पाक्षिकसिद्धोऽप्यवघा-

नियमे ह्यश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनमुक्तानुवादे दोषश्चेति लाघवाद्विधिरेवेति बोध्यम्। 'यस्य हल' इत्यत्र भाष्ये स्पष्टेयम् ॥ १०८ ॥

ननु 'आशंसायां भूतवच्च' इत्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्यादत आह—

---

तोऽनेन बोध्यत इति पाक्षिकसिद्धावघातबोधकत्वान्नियमत्वम्। पञ्चपञ्चनखा भक्ष्या इति परिसंख्या। रागतो भक्षणं पञ्चनखानां यथा प्राप्तं तथा श्वादिमांसानामपीति तेषामभक्ष्यत्वबोधनाय लोकतः सिद्धमपि पञ्चनखभक्षणमनेन विधीयत इति। तत्र स्वोपात्ते पञ्चनखादावन्यत्र श्वादौ प्राप्तभक्षणविधायकत्वात् परिसंख्यात्वम्। यथा भक्षणं क्षुन्निवृत्त्यर्थं तत्रान्यत्र प्राप्तम् तथाऽवघातस्तण्डुलनिर्वृत्त्यर्थं न तत्रान्यत्र च प्राप्तः, यथा वाऽवघातः पाक्षिकः प्राप्तस्तथा न भक्षणं पाक्षिकं प्राप्तं, क्षुन्निवृत्तेरुपायान्तराभावादिति तयोर्भेदः। अस्मिन् शास्त्रे तु नियमपदेन परिसंख्यैवोच्यते, यथा समासस्य विधीयमानप्रातिपदिकसंज्ञायाः समासे अन्यत्र च प्राप्तत्वात् परिसंख्यात्वम्। तत्रार्थवत्सूत्रेण प्राप्तैव संज्ञा समासातिरिक्ते पूर्वभागपदघटिते तद्व्यावृत्त्यर्थमनूद्यते इति अश्रुता अन्यनिवृत्तिः। प्राप्तस्यानुवादः स्पष्टः। इदञ्च विधिमुखेन प्रवृत्तौ। यदि च समासस्य सिद्धत्वात् तदतिरिक्तस्य पूर्वभागपदघटितस्य नेत्येव समासपदस्य समासातिरिक्ते पूर्वभागपदघटिते भवतीतिपदस्य न भवतीत्यर्थे च लक्षणयाऽर्थः तदा लक्षणैव गौरवमिति विधिसम्भवे नियमो न युक्तः। यस्य हल इति। तत्र घ्नन इत्यस्य सम्बन्धाद्धलः परस्यैव यस्यानो लोप इति नियामकम् इत अत इत्यननुवर्त्यालोऽन्त्यपरिभाषाञ्च सामर्थ्यान्निरस्य सर्वलोपविधानार्थमिति सन्दिग्धापूर्वाविधिर्भविष्यति न नियम इति युक्तम् ॥१०८॥

## सामान्यातिदेशे विशेषानतिदेशः ॥ १०९ ॥

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्य-भावोऽस्या बीजम् । तेनानद्यतनभूतरूपे विशेषविहितयोस्त-योर्नातिदेशः । इयमनित्या 'नल्यपी'तिलिङ्गात्, तेन स्थानि-वत्सूत्रेण विशेषातिदेशोऽपि । स्पष्टं चैतत् सर्वं स्थानिवत्सूत्रे भाष्ये ॥ १०९ ॥

---

सामान्यातिदेशे विशेषानतिदेश इति । अयम्भावः—भूतव-दित्यनेन भूतसादृश्यं विधीयते, सादृश्यञ्च तद्वृत्तिधर्म्म एव, स च धर्म्मः क इति जिज्ञासायां सादृश्यप्रतियोगितावच्छेदकतया शब्दादुपस्थितस्तज्ज्ञानादनुमानेनोपस्थितस्तद्व्यापको धर्म्मस्तस्यै-वातिदेशः, न तु तद्व्याप्यधर्म्मातिदेशः, तस्यानुपस्थितत्वादि-त्येतत् फलितैवेयं परिभाषा । तेन भूतत्वातिदेशेऽपि अनद्यतन-परोक्षभूतत्वादेर्नातिदेशः । एवमेव सर्वातिदेशविषये बोध्यम् । नल्यपीतिलिङ्गादिति । ल्यपि क्त्वावृत्तिकित्त्वातिदेशे हि तस्मि-न्नीत्वं प्राप्नोति, कित्त्वस्य च क्त्वाविशेषधर्मत्वेनातिदेशाभावा-न्नल्यपीति व्यर्थं सदनित्यत्वे ज्ञापकम् । वस्तुतस्तु स्थानिवत्सूत्रस्य सङ्ग्राहकवाक्यत्वम् , अतिदेशकवाक्यन्तु विशेषरूपेणैव वक्त-व्यम् , अन्यथा अन्यादेशोऽन्यस्थानिवत्स्यात् । तथा च येन रू-पेण सूत्रेण स्थान्यादेशभावो बोध्यते तेन रूपेण प्रतियोग्यनुयोगि-बोधकवाक्यं कल्पनीयमिति शब्दरत्नकारोक्तं न युक्तं, मानाभा-वात् , किन्तु अयमादेश एतत्स्थानिवदित्येव कल्प्यं; ततश्च प्रधा-येत्यत्र तत्क्त्वात्वव्यापकमेव कित्त्वमिति नल्यपीति सार्थकमे-वेति न ज्ञापकमनित्यत्वे, नापि फलमिति बोध्यम् ॥ १०९ ॥

ननु 'तित्स्वरितम्' इति स्वरितत्वं किरतीत्यादावपि स्यादत आह—

प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ ११० ॥

इयं चाङ्गस्य इति सूत्रे भाष्ये पठिता। वर्णग्रहणे च न प्रवर्तते इति तत्रैव कैयटे स्पष्टम्। अतएव 'सनाशंसभिक्ष उः' 'ग्ले' इत्यत्र सन्ग्लयोः प्रत्यययोर्ग्रहणम्। परे तु 'तित्स्वरितम्' इति सूत्रे एषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रितेति कैयटेनोक्तम्, 'अङ्गस्य' इति सूत्रे तत्प्रत्याख्यानायैषा भाष्य एकदेशिनोक्ता, अतएव तितिप्रत्ययग्रहणं कर्तव्यमिति वार्त्तिककृतोक्तम्। उक्तसूत्रयोर्व्याख्यानात् प्रत्यययोरेव ग्रहणमित्याहुः ॥ ११० ॥

ननु 'विपराभ्यां जेः' इत्यात्मनेपदं परा सेना जयतीत्यर्थके पराजयति सेनेत्यत्र प्राप्नोतीत्यत आह—

सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥१११॥

---

वर्णग्रहणे च नेति। शुक्लीभवतीत्यत्राप्रत्ययस्याप्यकारस्य 'अस्य च्वा'वितीत्वसिद्धिः। अतएवेति—परिभाषायास्सत्त्वादेवेत्यर्थः। वस्तुत एषा परिभाषा मन्तव्या, अन्यथा 'वनोरच' 'वसोस्सम्प्रसारणमि'त्यादौ वनच वसुस्तम्भ इत्यनयोर्धात्वोरपि ग्रहणापत्तेः। तितिप्रत्ययग्रहणं कर्त्तव्यमिति वार्तिकन्तु परिभाषालब्धार्थानुवादभूतमेवेति दिक् ॥ ११० ॥

सहचरितासहचरितयोरिति—सदृशासदृशयोरित्यर्थः। विशब्द-

तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये स्पष्टम्। सहचरणं सदृशयोरेवेति सहचरितशब्देन सादृश्यवानुच्यते। रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकम्, सदृशयोरेव सहविवक्षा, तयोरेव सहप्रयोग इत्युत्सर्गाच्च। ध्वनितं चेदं 'कर्मप्रवचनीययुक्ते द्वितीया' इति सूत्रे भाष्ये। तत्र हि 'पञ्चम्यपाङ्परिभिः' इति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीमाशङ्क्य यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने च, अयं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य कोऽन्यः सहायो भवितुमर्हत्यन्योऽवर्जनार्थाद्यथाऽस्य गोः सहायेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ इत्युक्तम्। तेन हि सदृशानामेव प्रयोगे सहायभावो बोधितः। 'द्वित्रिश्चतुः' इति सूत्रे साहचर्येणैव कृत्वोऽर्थस्य ग्रहणे

---

साहचर्य्यादिति। ननु पक्षिवाचकस्यापि वेस्सत्त्वात् कथमुपसर्गस्यैव तत्साहचर्य्याद्ग्रहणमिति चेत्—न। पराशब्दसाहचर्य्यात्पक्षिवाचकभिन्नस्यैव वेर्ग्रहणं तादृशवेश्चोपसर्गस्यैव सत्त्वेन तत्साहचर्य्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति परस्परसाहचर्य्ये एव तात्पर्यात्। रामलक्ष्मणावित्यत्रापि रामसाहचर्य्याद्दुर्योधनापत्यभिन्नबोधको लक्ष्मणशब्दः, दुर्योधनापत्यभिन्नश्च लक्ष्मणपदबोध्यो दाशरथिरेवेति तत्साहचर्य्याद्रामबोध्योऽपि दाशरथिरेव न परशुरामादिरिति परस्परसाहचर्य्यमेवात्रापि बोध्यम्। ध्वनितमिति—सदृशार्थक एव सहचरितशब्द इत्यर्थो ध्वनित इत्यर्थः। लक्षणादीति—आदिपदेनेत्थम्भूताख्यानभागवीप्सानां ग्रहणम्। दृष्टापचार इति—दृष्टव्यभिचार इत्यर्थः। साहचर्येणैव कृत्वाऽर्थ

सिद्धे क्त्वोऽर्थग्रहणादेषाऽनित्या। तेन 'दीधीवेवीटाम्' इत्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणमित्यन्यत्र विस्तरः॥ १११ ॥

नन्वस्थि इत्याद्यनङ् प्रियसक्थ्ना ब्राह्मणेनेत्यत्र न स्यादङ्गस्य नपुंसकत्वाभावादत आह—

**श्रुतानुमितयोः श्रुतसंबन्धो बलवान् ॥ ११२॥**

श्रुतेनैव संबन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः, प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः। एवं च तत्र लिङ्गम-स्थ्यादीनामेव विशेषणं नाङ्गस्य। शीशिलुङ्नुम्विधिषु तु गृह्यमाणस्याभावात् प्रकरणप्राप्ताङ्गस्यैव विशेषणम्। अतएव

---

स्येति। द्विस्त्रिःशब्दयोस्सुजन्तत्वेन क्त्वोर्थकत्वात् ताभ्यां क्त्वोर्थ-कत्वेन साहचर्य्यात क्त्वोर्थकश्चतुःशब्दो गृह्यत इति चतुः कपाल इत्यादौ दोपाभावाद् व्यर्थं क्त्वोऽर्थग्रहणं ज्ञापकमनित्यत्व इति बोध्यम्। धातुसाहचर्येऽपीति। वस्तुतस्तु धातुत्वेनैव साहचर्य्यं न हलनुबन्धकत्वेनेत्यत्र विनिगमकाभावान्नानित्यत्वफलमिति बोध्यम्॥ १११ ॥

अङ्गस्य नपुंसकत्वाभावादिति—नह्युपाधेरुपाधिर्भवतीति-न्यायात प्रधानाप्रधानन्यायाच्चास्थिदधीतिसूत्रे नपुंसकत्वस्याङ्ग-विशेषणत्वौचित्यात् प्रियसक्थ्ना ब्राह्मणेनेत्यसङ्गतमिति भावः। श्रुतेनैवेति—प्रकरणप्राप्ताङ्गापेक्षया श्रुतानामस्थ्यादीनां शीघ्रोपस्थि-तेस्तेष्वेवान्वयः। पूर्वोक्तन्यायद्वयन्तूभयोः श्रुतत्वविषयमिति भावः। प्रकरणादितः श्रुतेरिति—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षादि'तिजैमिनिन्यायसिद्धोऽयमर्थः। गृह्यमाणस्य-श्रुतस्येत्यर्थः। अभावादिति। श्रुते सति हि तेनैव

'वा नपुंसकस्य' इतिसूत्रे वाशाविति न कृतम्। तत्र नपुंसकग्रहणं हि गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्याद्बहवो ददतो येषु तानि कुलानि बहुददतीत्यत्र माभूद्बहूनि ददन्ति येषु ते बहुददन्त इत्यत्र यथा स्यादित्येवमर्थम्। स्पष्टं चेदं 'स्वमोर्नपुंसकात्' इत्यत्र भाष्ये। केचित्तु 'अचो रहाभ्यां द्वे' इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यरन्तर्भावादनुमितं कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः—तन्न, तक्रकौण्डिन्यन्यायेन सिद्धेरित्यन्यत्र विस्तरः ॥ ११२ ॥

ननु 'तत्पुरुषे तुल्यार्थ' इति स्वरः परमेण कारकेण परमकारकेणेत्यादौ स्यात्, तथा 'गातिस्थाघुपाभूभ्यः' इति लुक् पै शोषण इत्यतः कृतात्त्वात्परस्यापि स्यादत आह—

---

सम्बन्धः परिभाषार्थः। न्यायसिद्धेऽर्थे ज्ञापकमप्याह–अत एवेति। परिभाषायास्सत्त्वादेवेत्यर्थः। वा नपुंसकस्येति–यथास्थितन्यासे हि नपुंसकस्येत्यस्य समीपस्थत्वेन शीघ्रोपस्थिते श्रुतपदतात्पर्यविषये शत्रन्ते एवान्वयः, न तदन्ताङ्गेऽनुमिते दूरस्थत्वेन विलम्बोपस्थिते, तेनाङ्गस्य पुंस्त्वेऽपि प्रवर्तते, वाशाविति न्यासे त्वङ्गस्य नपुंसकत्वे एव स्यादिति फलभेदः। परिभाषाया अभावे तु प्राधान्यादङ्गे एव लिङ्गान्वयो यथास्थितन्यासेऽपि स्यादिति फलस्याज्ञापकत्वम् ॥ ११२ ॥

तत्पुरुषे तुल्यार्थ इति। तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः। तुल्यार्थं तृतीयान्तं सप्तम्यन्तमुपमानवाचकमव्ययं कृत्यप्रत्ययान्तं द्वितीयान्तं पूर्वपदं तत्पुरुषसमासे प्रकृत्येत्यर्थः। तेन परमेण कारकेणेति परिनिष्ठितविभक्त्या विशेष-

## लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥११३॥

लक्षणं लाक्षणिकम्, उपचारात् । तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तः तस्यैव ग्रहणं शीघ्रोपस्थितिकत्वात् । द्वितीयो हि विलम्बोपस्थितिकः पैइत्यस्य

---

णसमासेऽपि तत्पुरुषत्वस्य तदीयपूर्वपदे तृतीयान्तत्वस्य च सत्त्वेन स्वरस्स्यादिति भावः । लक्षणं लाक्षणिकमुपचारादिति-लक्षणनिष्पन्ने लक्षणत्वारोपात् लाक्षणिकं लक्षणपदेनोच्यत इति बोध्यम् । वस्तुतस्तु प्रतिपदोक्तभिन्नं लक्षणपदेनोच्यत इति बोध्यम् । प्रतिपदोक्तत्वञ्च यदर्थे विशेषणतया प्रतिपदोक्तत्वं विवक्षितं तद्विशिष्टत्वम् । वैशिष्ट्यं स्ववृत्त्यानुपूर्व्यवच्छिन्नविधेयताश्रयत्वस्वार्थान्वय्यर्थकपदवृत्त्यानुपूर्वीमत्पदप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन । तत्पुरुषे यत्तृतीयान्तं पूर्वपदं तत्प्रकृत्येत्यर्थकतत्पुरुषे इति सूत्रघटकतत्पुरुषपदार्थे प्रतिपदोक्तत्वं विशेषणतया विवक्षितं, प्रतिपदोक्ते तत्पुरुषे इत्यर्थादिति तत्पुरुषपदविशिष्टस्तत्पुरुषः प्रतिपदोक्तः । स च तृतीयापदप्रयोज्योद्देश्यतानिरूपितविधेयताश्रय एव, नतु परमकारकेति तृतीयान्तप्रकृतिकः कर्म्मधारयः । तथाहि स्वं तत्पुरुषपदं तदर्थान्वय्यर्थकं पदं तृतीयेतिपदं तद्वृत्त्यानुपूर्वीमत्पदं तृतीयातत्कृतार्थेति सूत्रघटकं तृतीयापदन्तत्प्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वन्तत्सूत्रविहित एवेति लक्षणसमन्वयः । एवं 'विभाषा दिक्समास' इति सूत्रे प्रतिपदोक्तः समासो 'दिङ्नामान्यन्तराल' इतिसूत्रविधेय एव । तत्रैव समासपदवैशिष्ट्यात् । एवं पापदार्थे पारूपे प्रतिपदोक्तत्वं विवक्षितमिति पावृत्त्यानुपूर्व्यवच्छिन्नविधेयताश्रयत्वं पाधातोरेव, नतु पैनिष्पन्ने पाधातौ, तत्र पात्वावच्छिन्नविधेयताया अभावादिति बोध्यम् । तृती-

पा इति रूपं लक्षणानुसंधानपूर्वकं विलम्बोपस्थितिकं, पिबतेस्तु तच्छीघ्रोपस्थितिकम् । इदमेव ह्येतत्परिभाषाबीजम् । इयञ्च वर्णग्रहणेऽपि, ओत्सूत्रे भाष्ये संचारितत्वात् । यत्तु वर्णग्रहणे नैषा

---

यासमास इत्यस्य तृतीयासमासः सर्वाद्यन्तस्सर्वनामसंज्ञको नेत्यर्थः । स च समासः प्रतिपदोक्तः 'पूर्वसदृशे'तिविहित एव, तत्रैव तत्समासपदवैशिष्ट्यसत्त्वात् । 'इकोगुणवृद्धी' इति सूत्रे प्रतिपदोक्तपरिभाषयैव प्रतिपदोक्तगुणवृद्धिविधायके इक इत्यस्योपस्थितिरित्यर्थेन 'त्यदादीनाम' 'आसर्वनाम्न' इत्येतद्व्यावृत्तौ गुणवृद्धिशब्दाभ्यां यत्रेति व्याख्यानं व्यर्थमेवेति तु न युक्तम्, उक्तान्यतरसम्बन्धेन गुणवृद्धिशब्दवैशिष्ट्याभावेन प्रतिपदोक्तयोर्गुणवृद्ध्योरसम्भवेन प्रतिपदोक्तपरिभाषायास्तत्राप्रवृत्तेः । एतदभिप्रायेणैव शब्देन्दुशेखरे उक्तं प्रतिपदोक्तपरिभाषया तु नात्र निर्वाह इति । ननु यदर्थे प्रतिपदोक्तत्वं विशेषणतया विवक्ष्यते तत् तदर्थान्वय्यर्थकपदैतदन्यतरवृत्त्यानुपूर्वीमत्पदघटितशास्त्रीयविधेयताश्रयत्वमित्येव प्रतिपदोक्तत्वमस्तु, तथासति 'इकोगुणवृद्धी'इत्यत्राप्यनयैव निर्वाहः, गुणवृद्धिपदार्थयोर्विशेषणतया विवक्षितं प्रतिपदोक्तत्वमिति गुणवृद्धिपदवृत्त्यानुपूर्वीमत्पदघटितं 'सार्वधातुके'ति-'मृजेर्वृद्धि'रित्यादिशास्त्रं, तदीयविधेयताश्रययोरेव प्रतिपदोक्तत्वं, नतु त्यदादीनाम इत्यादिविधेयेष्विति गुणो यो गुण इत्यादि व्याख्यानं, प्रतिपदोक्तपरिभाषया न निर्वाह इति कथनञ्चासंगतमेव, 'विभाषा दिक्समासे'-'घुमास्थे'त्यादिसूत्रेऽपि न दोष इति चेत्-न, 'वृद्धिर्यस्याचामादिस्तद्वृद्धमि'त्यत्रापि वृद्धिपदेन प्रतिपदोक्ताया एव वृद्धिपदवृत्त्यानुपूर्वीमद्वृद्धिपदघटितशास्त्रीयविधेयताश्रयरूपायाः कारकादिशब्दघटकवृद्धेर्ग्रहणेन तत्र वृद्धसंज्ञायाश्चारितार्थ्येन शालाशब्दादौ प्रतिपदोक्तवृद्धेरभावेन वृद्धसंज्ञानापत्तेः । पूर्वोक्तलक्षणे तु

'आदेच' इत्यत्रोपदेशग्रहणादिति तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम्। अनित्या चेयं 'भुवश्च महाव्याहृतेः' इति महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः॥११३॥

---

प्रतिपदोक्तवृद्धेरभावेन सामर्थ्यात्तत्र प्रतिपदोक्तपरिभाषाया अप्रवृत्त्या दोषाभावात्। तथा च गुणो यो गुण इत्यादिव्याख्यानं प्रतिपदोक्तपरिभाषया न निर्वाह इति कथनञ्च सङ्गतमेवेति बोध्यम्।

ननु 'ओदि'तिसूत्रे भाष्ये प्रतिपदोक्तपरिभाषया अदोऽभवदित्यत्र प्रगृह्यत्ववारणमसङ्गतं स्यात्, अहोइतीत्यादौ प्रतिपदोक्तौकारस्यासम्भवेन सामर्थ्यात् तत्परिभाषाया ओत्सूत्रेऽप्रवृत्तेरेव वक्तव्यत्वात्, एवमनया हे भानो इत्यादौ 'ओतोऽणिदितिवाच्यमि' त्यस्याप्रवृत्तिप्रतिपादनपरस्तत्रत्यशेखरोऽप्यसंगतः स्यात्, हे गौरित्यादावप्यौकारस्य प्रतिपदोक्तत्वाभावेन सामर्थ्यात्तत्र तस्या अप्रवृत्तेरावश्यकत्वादिति चेत्—न, आनुपूर्व्यवच्छिन्नविधेयताश्रयाघटितत्वस्यैव वक्तव्यत्वात्। उपदेशग्रहणादिति। अयम्भावः—उपदेशग्रहणस्य फलं चेतास्तोतेति, तस्य लाक्षणिकत्वादेवात्वाप्रवृत्त्या तद्व्यर्थं सद्वर्णग्रहणे अप्रवृत्तौ ज्ञापकमिति। दूषितमिति। 'उदीचां माङ' इत्यत्रानुबन्धसहितस्य धातुत्वाभावेऽप्यात्वार्थन्तत्र धातोरित्यस्यासम्बन्धावश्यकत्वेन गोभ्यामित्यादौ प्रतिपदोक्त आत्वाभावायोपदेशग्रहणस्यावश्यकत्वेन ज्ञापकत्वासम्भवादोत्सूत्रस्थभाष्यविरोधाच्चेति बोध्यम्। ननु स्थापयतीत्यादौ चरितार्थः पुक् धेट आत्वे धापयतीत्यादौ लाक्षणिके न स्यादित्यत आह—अनित्येति। महाव्याहृतिग्रहणादिति। तद्धि भुव इत्यत्र जसन्ते अप्रवृत्त्यर्थं तस्य लाक्षणिकत्वादेवाप्रवृत्तौ तद्व्यर्थं सदनित्यत्वे ज्ञापकम्॥११३॥

नन्वेवं देङो दोधातोश्च कृतात्वस्य घुसंज्ञा न स्यात्तथा मेङ आत्वे प्रणिमातेत्यादौ 'नेर्गदनद' इति णत्वं न स्यात्, तथा गै इत्यस्यात्वे घुमास्था इतीत्वं न स्यादत आह—

गामादाग्रहणेष्वविशेषः ॥ ११४ ॥

अत्र ज्ञापकं दैपः पित्त्वम् । तद्ध्यदाविति सामान्यग्रहणार्थम्, अन्यथा लाक्षणिकत्वादेव विधौ तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन, तेन चैकदेशानुमतिद्वारा संपूर्णपरिभाषा ज्ञाप्यते । इयंच लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषालुग्विकरणपरिभाषाणां बाधिका 'दाधाघ्व' इति

---

नन्वेवमिति—प्रतिपदोक्तपरिभाषायास्सत्त्व इत्यर्थः । न स्यादिति । लाक्षणिकत्वादितिशेषः । 'अदाविति सामान्यग्रहणार्थमि'ति । 'दाधाघ्वदावि'तिसूत्रस्थदाप्पदेन दैपो ग्रहणाय दैप्शोधने इत्यत्रेत्संज्ञकः पकारः कृतः, स च दापदेन प्रतिपदोक्तदारूपस्यैव ग्रहणे निरनुबन्धकपरिभाषया निरनुबन्धकस्यैव तस्य ग्रहणे च लाक्षणिकस्य कृतात्वस्य दैप्निष्पन्नदारूपस्य सानुबन्धकस्य घुत्वाप्राप्त्या अदाप्घटकदाप्पदेनास्याग्रहणे निषेधाप्रवृत्त्या च व्यर्थ एवेति परिभाषाज्ञापकः । निषेधे सामान्यग्रहणार्थेनेति । अदाविल्यत्र दाप्दैपोर्दाप्पदेन ग्रहणार्थेनेत्यर्थः । ननु परिभाषया गामादाग्रहणेष्वविशेषेऽपि धेट आत्वे लाक्षणिकत्वाद् घुत्वानापत्तिरेव, न च गामादां ग्रहणं यत्रेति बहुव्रीहिणा दाघटितसूत्रे विशेषाभावेनादोष इति वाच्यम्, गाघटितत्वेन 'गातिस्थे'तिसूत्रे पाशब्देऽप्यविशेषापत्तेरिति चेन्—न, गा च मा च दाग्रहणञ्चेतिबहुव्रीह्युत्तरपदक[illegible]णेन गाशब्दे माशब्दे दाघटितसूत्रे

सूत्रे भाष्ये स्पष्टा । 'गातिस्था' इति सूत्रे इणादेशगाग्रहणमेवे-ष्यत इति न दोष इत्यन्यत्र विस्तरः ॥ ११४ ॥

ननु वृद्ध्यादिसंज्ञाः समुदाये स्युरत आह—

प्रत्येकं वाक्यपरिसमाप्तिः ॥ ११५ ॥

देवदत्तादयो भोज्यन्तामित्यत्र भुजिवत् ॥ ११५ ॥

नन्वेवं संयोगसंज्ञासमाससंज्ञाभ्यस्तसंज्ञा अपि प्रत्येकं स्युरत आह—

क्वचित्समुदायेऽपि ॥ ११६ ॥

गर्गाः शतं दण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भवन्तीत्यादौ दण्डनवत् । लक्ष्यानुरोधेन च व्यवस्था ॥ ११६ ॥

---

चाविशेष इत्यर्थेनादोषात् । न दोष इति—गैधातोः कृतात्वस्य गाइत्यस्य गाग्रहणेन परिभाषया ग्रहणप्रसङ्गरूपो दोषो नेत्यर्थः ॥ ११४ ॥

प्रत्येकमिति । विधेये उद्देश्यतावच्छेदकप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकधर्म्मावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वभानस्यौत्सर्गिकत्वादिति बोध्यम् ॥ ११५ ॥

समुदाये इति—उद्देश्यत्वेनाश्रीयमाणयावदारब्धसमुदायपर्य्याप्तसंख्यावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वं विधेये भासत इत्युत्सर्गादिति बोध्यम । वृद्ध्यादिसंज्ञारूपविधेये उद्देश्यतावच्छेदकीभूतात्वादिप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वम । अभ्यस्तसमाससंज्ञारूपविधेये चोद्देश्यत्वेनाश्रीयमाणद्विरुच्चारणकर्म्मीभूतखण्डद्वया-

ननु 'यू स्त्र्याख्यौ' इत्यत्र व्यक्तिपक्षे दीर्घनिर्देशादनण्त्वेन ग्राहकसूत्राप्राप्त्योदात्ताद्यन्यतमोच्चारणेऽन्यस्वरकस्य संज्ञा न स्यादत आह—

## अभेदका गुणाः ॥ ११७ ॥

असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदको न विवक्षित इत्यर्थः । अत्र च 'अस्थिदधि' इत्यादावनङादेरुदात्तस्यैवोच्चारणेन सिद्धे उदात्तग्रहणं ज्ञापकम्[1] । स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्यादिशब्दोच्चारणे विवक्षैव । 'उञः ऊँ' इत्यत्राननुनासिकएवोच्चारणीये यत्नाधिक्येनानुनासिको-

रव्यसुबन्तद्वयारब्धपचपचनीलसुघटस्वित्यादिसमुदायपर्य्याप्तद्वित्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वमितिलक्ष्यानुरोधादेव व्यवस्था बोध्या । अतएवाभ्यस्तसंज्ञासूत्रे उभे ग्रहणप्रत्याख्यानं 'सहसुपे'त्यत्र सहेतियोगविभागश्च सङ्गच्छते ॥ ११६ ॥

अभेदका गुणाः—स्वेतरगुणविशिष्टव्यावर्त्तका नेत्यर्थः । असति यत्ने इति—स्वोच्चारणातिरिक्तोदात्तादिशब्दोच्चारणादिव्यापारमन्तरेणैव गुणस्य बोधन इत्यर्थः । तत्फलितमाह—स्वरूपेणोच्चारित इति । इदमप्युदात्तग्रहणेनैव ज्ञाप्यतेऽन्यथा परिभाषाज्ञापनेऽपि चारितार्थ्यानापत्तेः । यत्नविशेषे सति विवक्षां दर्शं-

[1] ज्ञापकमिति । 'भाव्यमानेने'तिपरिभाषायां स्वगतिरिक्तत्वेन सङ्कोचात् ज्ञापितायामपि परिभाषायां नोदात्तग्रहणवैयर्थ्यम्, अतएव 'बहुवचने झल्ये-दि'त्येकारो वृक्षेभ्य इत्यादौ उदात्तः, पूर्वेभ्य इत्यादौ अनुदात्तः, चैत्रेभ्य इत्यादौ स्वरितश्च भवतीति ।

चारणाद्विवक्षा बोध्या । 'पथिमथ्यृभुक्षाम्' इत्यादौ स्थान्यनुरूपतयानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणात्तद्विवक्षा । एतदर्थमेवासति यत्न इत्युक्तम् । न चैवमस्थ्यादीनां 'नञ्विषयस्य' इत्याद्युदात्ततयान्त्यादेशस्यानङः स्थान्यनुरूपेऽनुदात्त एवोच्चारणीय उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम्, परमास्थिशब्दादावन्तोदात्त उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावात् । चतसर्याद्युदात्तनिपातनं करिष्यते, वधादेश आद्युदात्तनिपातनं करिष्यते, पदादयोऽन्तोदात्ता निपात्यन्ते । सहस्य स उदात्तो निपात्यत इत्यादिभाष्यं त्वेकश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं

---

यति—उञः ऊँ इत्यादिना । नञ्विषयस्येति—नञ्विषयस्य नपुंसकस्यादिरुदात्त इत्यर्थः । अनेनाद्याकारस्योदात्तत्वे 'अनुदात्तं पदमेकवर्जमि'त्यनेनान्तानुदात्तत्वमस्थ्यादीनामिति बोध्यम् । परमास्थीति—समासे कृते 'समासस्य' इत्यन्तोदात्त इत्यर्थः । ननु ज्ञापनोपपत्त्यर्थमष्टाध्याय्यास्त्रैस्वर्य्येण पाठ इत्यवश्यमभ्युपेयम्, अन्यथा एकश्रुत्या पाठे औत्सर्गिके क्वचिदुदात्ताद्युच्चारणं यत्नाधिक्याद्विवक्षार्थमेव भविष्यतीति ज्ञापितायामपि परिभाषायामुदात्तग्रहणस्य चारितार्थ्याभावेन ज्ञापकत्वानापत्तेः; एवञ्च चतसर्य्याद्युदात्तनिपातनं करिष्यत इत्यादिभाष्यासङ्गतिस्त्रैस्वर्य्यपाठस्यौत्सर्गिकत्वेन यत्नाधिक्याभावेन विवक्षानापत्तेरित्यत आह—चतसर्याद्युदात्तनिपातनमित्यादि । एकश्रुत्याऽष्टाध्यायीपाठ इति । एकश्रुतिः स्वरसामान्याभावः स्वरान्तरं वा ततश्च ततोऽन्यथाकरणं विवक्षार्थमिति बोध्यम् । नन्वेवं ज्ञापकपरं भाष्यं विरुणद्धी-

विवक्षार्थमित्याशयेन। त्रैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः।

परे तु निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं तद्रूपाद्यलात्तत्र तत्रोदात्तादिविवक्षा; 'तिसृचतसृ'इत्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्त उच्चारणीय आद्युदात्तोच्चारणमन्यत्र स्थान्यनुरूपे स्वर उच्चारणीये तत्तदुच्चारणं विवक्षार्थम्; संपूर्णाष्टाध्याय्याचार्य्येणैकश्रुत्या पठितेत्यत्र न मानम्; क्वचित्पदस्यैकश्रुत्यापि पाठो यथा 'दाण्डिनायना'दिसूत्र ऐक्ष्वाकेति; यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः।

विधेयाणविषये त्वप्रत्यय इति निषेधान्न गुणाभेदकत्वेन सवर्णग्रहणम्, अतएव घटवदित्यादौ मतोर्मस्य नानुनासिको वकारः, अतएव 'तद्वानासाम्' इतिसूत्रनिर्देशः, अन्यथा 'प्रत्यये भाषायामि'ति नित्यमनुनासिकः स्यात्। जातिपक्षे तु नास्योप-

---

स्यत आह—त्रैस्वर्येण पाठ इति। न मानमिति। सिद्धे वस्तुनि विकल्पायोगात्पाठे पक्षद्वयासम्भवाच्चेत्यपि बोध्यम्। कश्चन त्रैस्वर्येण पठिताऽष्टाध्यायीति वदति तन्मतमभ्युपेत्य ज्ञापकमुपन्यस्तं, कश्चिदेकश्रुत्यैव पठितेति वदति तन्मतमभ्युपेत्य निपातनपरं भाष्यमिति वा व्यवस्था बोध्या। ऐक्ष्वाकेति—'जनपदशब्दात्क्षत्रियादि'त्यञन्तस्याद्युदात्तस्य 'कोपधादि'त्यणन्तस्यान्तोदात्तस्य चेक्ष्वाकशब्दस्य स्वरभेदादेकोक्त्या तयोरुकारलोपार्थं निपातनसम्भवादुभयसंग्रहार्थमेकश्रुत्या निपातनमाश्रितं भाष्यकाररूपायान्तरत्वेन, प्रकृतपरिभाषयाप्युभयोर्ग्रहणसिद्धेः। जातिपक्षे त्विति।

योग इति बोध्यम् । यॄ इत्यादौ दीर्घमात्रवृत्ति जातिनिर्देशान्न क्षतिरित्यन्यत्र विस्तरः ॥ ११७ ॥

ननु सर्वनामानीत्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यादत आह—

बाधकान्येव निपातनानि ॥ ११८ ॥

तत्तत्कार्ये नापाप्ते, निपातनारम्भात् । 'पुराणप्रोक्तेषु' इतिनिपातितपुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वान्नेति बोध्यम् । पुराणेति पृषोदरादिः, पुरातनेति चेत्यन्ये । इयं सर्वादिसूत्रे भाष्ये स्पष्टा । अबाधकान्यपि निपातनानीति तु भाष्यविरुद्धम् ॥ ११८ ॥

---

तत्पक्षे तु स्वप्रतिपाद्यतावच्छेदकजात्यवच्छिन्नमात्रस्य ग्रहण-२ सिद्धेः । दीर्घमात्रवृत्तीति—यॄ इतिदीर्घग्रहणात् दीर्घत्वसमानाधिकरणेत्वाद्यवच्छिन्नस्य ग्रहणं न ह्रस्वस्येत्यर्थः ॥ ११७ ॥

बाधकान्येवेति—सर्वनामशब्दे णत्वाभावकरणेन पाणिनिना सर्वनामशब्दे णत्वन्नेति वचनं बोधितं, तेन 'पूर्वपदात्संज्ञायामग' इतिसूत्रं बाध्यतइति लोके शास्त्रे वा सर्वनामशब्दे णत्वाभावस्सिद्धः । ननु णत्वाभावकरणेनास्मिन् सूत्रे सर्वनामशब्दे णत्वन्नेत्येव बोध्यत इति लोके णत्वं निर्बाधमेवेति चेत्—न, तदपक्षेया सर्वनामशब्दे णत्वन्नेत्यस्यैव लाघवेन कल्पनीयत्वात् । ननु तर्हि 'पुराणे'तिनिपातनेन पुरातनशब्दस्य बाधः कस्मान्नेत्यत आह—पुराणेति । अन्य इति न निपातनमिति तदाशयः । भाष्यविरुद्धमिति-सर्वादिसूत्रस्थभाष्यविरुद्धमित्यर्थः, तत्र बाधकत्वस्यैवोक्तत्वात् । रघुनाथशब्दे णत्वाभावाय कृतणत्वेन यत्र

ननूखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात्पूर्वमभ्यासह्रस्वत्वा-प्रवृत्तौ हलादिः शेषे सवर्णदीर्घे ह्रस्वापत्तिरत आह—

पर्जन्यवल्लक्षणप्रवृत्तिः ॥ ११९ ॥

एवं च ह्रस्वस्यापि ह्रस्वत्वे कृते लक्ष्ये लक्षणस्येति न्यायेन न पुनर्ह्रस्वः । तदुक्तम् 'इको झल्' इतिसूत्रे भाष्ये 'कृतकारि खल्वपि शास्त्रं पर्ज्जन्यवदि'ति । सिद्धेऽपि ह्रस्वादिकारीत्यर्थः । न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र न मानमिति वाच्यम्, 'समो वा लोपमेके' इतिलोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिकारस्य सिद्धौ 'समः सुटि' इतिसूत्रस्यैव मानत्वात्, 'संप्रसारणाच्च'

---

संज्ञा गम्यते तत्रैव णत्वमित्यस्यावश्यं वक्तव्यत्वात्सर्वनामसंज्ञायां णत्वाप्रवृत्तिरेवेति तु न युक्तं, शास्त्रानुरोधेनैवाधुनिकसंकेतकरणस्य युक्तत्वेन कृतणत्वे एव सर्वनामशब्दे संकेतकरणस्य प्राप्तत्वेऽपि तदकरणेन णत्वघटितस्य तस्य शब्दस्यासाधुत्वे एवाचार्यतात्पर्यात्, रघुनाथादिसंज्ञाया अनादित्वेनादोषात् ॥ ११८ ॥

पर्जन्यवल्लक्षणप्रवृत्तिरिति—पर्जन्यो यथा असम्भवत्स्वकृतविशेषे अर्थात् जलपूर्णेऽपि प्रवर्त्तते तथा शास्त्रमपि असम्भवत्स्वकृतविशेषेऽपि प्रवर्त्तत इति परिभाषार्थः । शास्त्रस्य स्वोद्देश्यतावच्छेदकावच्छेदेन प्रवृत्तिस्वीकारादप्येषा सिद्धा । नच 'न हि प्रयोजनमन्तरेण कस्यचित्प्रवृत्ति'रितिन्यायेन प्रवृत्तिः प्रयोजनव्याप्येति प्रयोजनमन्तरा कथं प्रवृत्तिरिति वाच्यम्, अत्रापि लक्ष्ये लक्षणन्यायद्वारा दीर्घश्रवणरूपप्रयोजनस्य ह्रस्वप्रवृत्तौ सत्त्वेनादो

'सिचि वृद्धिः' इत्यादौ भाष्ये स्पष्टमुक्तत्वाच्च । अत्र विकार कृतो लक्ष्यभेदो नेति 'सिचि वृद्धि'रितिभाष्यात्प्रतीयत इत्यन्यत्र विस्तरः ॥ ११९ ॥

---

षात् । लोपेनेत्यस्य मकारस्येत्यादिः । विकारकृतेति । तेनोदवोढामित्यत्र 'वदव्रजे'तिवृद्धौ 'सहिवहो'रित्योत्वे ओकारभावाभावकृतलक्ष्यभेदेऽपि तल्लक्ष्यत्वमेवेति न पुनर्वृद्धिः, सर्वेषामित्यादौ सुटि कृते न सुट् । एकस्मिन् स्वीयलक्ष्ये स्वं सकृदेव प्रवर्त्तेत इति परिभाषार्थः, स्वलक्ष्यत्वं स्वीयोद्देश्यत्वेनाश्रीयमाणसमुदायत्वं तच्चोदवोढामित्यत्राप्यस्तीति तत्र सकृद्वृद्धिप्रसङ्ग इति चेत्—न, उदवहसतामिदं 'वदव्रजे'त्यस्य लक्ष्यं तदभिन्नमेवोदवोढामिति तत्र चेत्प्रवृत्तं तदभिन्ने तस्मिन् न पुनः प्रवृत्तिरित्यदोषात् । ननु भेदस्य प्रत्यक्षसिद्धत्वात् कथं तदभेद इति चेत्—न, स्वविशिष्टं स्वतो न भिन्नमित्यस्य स्वीकारात् । वैशिष्ट्यञ्च स्वाघटकत्वस्वघटकमात्रोद्देश्यकविकारातिरिक्तत्वोभयसम्बन्धेन स्वविशिष्टाघटितत्वसम्बन्धेन । स्वमुदवहसतामितिलक्ष्यं तद्विशिष्टमुदवोढामिति; तदीयौकारस्य पूर्वलक्ष्याघटकत्वेऽपि द्वितीयसम्बन्धाभावात्, वकारे द्वितीयसम्बन्धेऽप्याद्याभावात् । भवति चोदासीनोवर्ण उभयसम्बन्धेन तद्विशिष्टस्तदघटितत्वात्तदभिन्नन्तदिति न दोषः । मात्रपदनिवेशात् काण्डे इत्यस्य काण्डेतिलक्ष्यभिन्नत्वम्, एकारस्य तद्घटकोद्देश्यकविकारत्वेऽपि तद्घटकमात्रोद्देश्यकत्वाभावात् । एवञ्च काण्डविशिष्ट एकारस्तद्घटितत्वस्यैव सत्त्वात्स्वविशिष्टत्वाभावः । अतएव तत्र ह्रस्वत्ववारणायोपायान्तरकथनं ग्रन्थकाराणामुपपन्नम् । न च यून इत्यस्य युवन्रूपलक्ष्यवैशिष्ट्येन तयोरभिन्नत्वात् पुनर्यकारे संप्रसारणाप्राप्तौ 'न संप्रसारणे' इतिनिषेधो व्यर्थ इति वाच्यम्, स्वघटकोद्देश्यकप्राप्तिविशिष्टप्राप्तिविषयाघटितत्व-

ननु स्यन्द्धातोः स्यन्त्स्यतीत्यादावात्मनेपदनिमित्तत्वा-भावनिमित्तकत्वात् 'न वृद्भ्यश्चतुर्भ्यः' इतिनिषेधस्य बहिरङ्ग-त्वेनान्तरङ्गत्वादूदिल्लक्षणस्येड्विकल्पस्यापत्तिरत आह—

निषेधाश्च बलीयांसः ॥ १२० ॥

रूपद्वितीयसम्बन्धोऽपि वैशिष्ट्यनियामक इत्यदोषात्, वैशिष्ट्यं स्वभिन्नत्वस्वसमानकालिकत्वस्वनिरूपकशास्त्रनिरूपितत्वैतत्त्रित-यसम्बन्धेन द्वितीयप्राप्तेः प्रथमप्राप्तिविशिष्टत्वात्। अस्मिन् सम्ब-न्धे 'न संप्रसारण'इति निषेध एव प्रमाणम्। अतएव भवेदित्यादौ सकारद्वयस्यैकेन सूत्रेण निवृत्तिः। नन्वेवं निट्त्स्वित्यादौ निङ्ध्-सुइति 'खरि चे'ति सूत्रस्य लक्ष्यं तत्र पदसम्बन्धेन समुदायस्यैव पदत्वात् तद्धटकधकारस्य चर्त्वे कृते पुनर्डकारस्य चर्त्वं न स्यात्त-द्विशिष्टत्वस्यैव निङ्स्सु इतिसमुदायस्य सत्त्वेन तल्लक्ष्यत्वस्यैव सत्त्वादिति चेत्—न, प्राप्तिवैशिष्ट्ये समानकालिकत्वं विहाय स्वा-नुत्तरकालिकत्वस्यैव दानेन धुटः पूर्वकालिकडकारस्थानिकप्राप्तौ धकारस्थानिकप्राप्तिवैशिष्ट्येन तद्विषयडकारघटितत्वेनादोषात्। न च यासेत्यादौ टापा सहैकादेशविशिष्टस्य काण्ड इतिवत्तल्लक्ष्य-त्वाभावात्त्यदाद्यत्वापत्तिरिति वाच्यम्, 'त्यदादीनाम' इत्यत्र विधेयसाहचर्याद्दीर्घाकारान्तभिन्नस्यैव त्यदादेर्ग्रहणेनादोषात्, मात्रपदेन स्वोद्देश्यकविभक्त्यनुद्देश्यकत्वस्यैव विवक्षितत्वात्, 'न यासयो'रितिनिर्देशेनानित्यत्वस्वीकाराच्च। दीव्यतीत्यादौ तल्ल-क्ष्यत्वाभावेन पुनः श्यंस्तु न, विकरणप्रत्ययस्य महासंज्ञया प्रकृत्यर्थेनार्थवत्त्वेऽपि कर्त्रर्थत्वाभावेन तस्मिन् श्यनोऽप्राप्तेरिति दिक् ॥ ११९ ॥

ननु स्यन्देरूदिल्लक्षणविकल्पस्य 'न वृद्भ्य' इति निषेधेन परि-भाषयैव बाधे तद्बाधार्थमेव कृतस्य चतुर्ग्रहणस्य वैयर्थ्यम् 'न वृद्भ्य-

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः । चतुर्भ्य इति तु स्पष्टार्थमेव । अतएव तत्प्रत्याख्यानं भाष्योक्तं सङ्गच्छते । अतएव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः, अन्यथा मीमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात्तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां विस्तरः । अतएव 'द्वन्द्वे च' 'विभाषा जसि' इति चरितार्थम् । विध्युन्मूलनाय प्रवृत्तिरस्या बीजम् । 'न लुमता' 'क्रमेणिङ्' इत्यनयोर्भाष्ये स्पष्टैषा ॥ १२० ॥

नन्वत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिरत आह—

---

इत्यनेनैव सिद्धेरित्यत आह—चतुर्भ्य इति । अतएवेति—उपजीव्यादपि बलवत्त्वादेवेत्यर्थः । स्वसाफल्याय निषेधेनापेक्षितत्वाद्विधेर्निषेधोपजीव्यत्वमुपजीव्यापेक्षया बलवत्त्वाभावे सर्वथा विधिबाधकत्वाभावेऽपि स्वसार्थक्याय पाक्षिकविधिबाधकत्वस्यावश्यकत्वेन निषेधविषये वैकल्पिकत्वापत्तिरिति बोध्यम् । अतएव मीमांसकैरतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीत्यत्र उदिते जुहोति अनुदिते जुहोतीत्यत्र च षोडशिग्रहणस्योदये होमस्य च वैकल्पिकत्वं सिद्धान्तितम् । व्याकरणे तु बाधकत्वमेव । वस्तुतस्तु षोडशिग्रहणनिषेधस्य विधिसमानविषयकतया सर्वथा विधिबाधकत्वे विधिवैयर्थ्यापत्त्या विकल्पो युक्त एव, एवमुदिते अनुदिते च होमस्य विधानाद्युक्तमेव पक्षद्वयम् । व्याकरणे च स्वविषये निषेधेन विधेर्बाधेऽप्यन्यत्र चारितार्थ्यसम्भवान्नास्ति विकल्पावकाशः, केवलं निषेधेन विधेयस्यासाधुत्वं बोध्यते विधिना च साधुत्वमिति सिद्धे वस्तुनि विकल्पायोगादुपजीव्यत्वेऽपि सर्वथा बाध एव ॥ १२० ॥

अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥ १२१ ॥

यस्यार्थः प्रकृत्या प्रत्याय्यते सोऽपि प्रत्ययइत्यस्याप्यङ्गीकारात्तस्य प्रत्ययत्वमिति न दोषः । स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः । महासंज्ञाबलादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम् । 'सुपि स्थ' इत्यादि सूत्रेषु भाष्ये स्पष्टैषा ॥ १२१ ॥

योगविभागादिष्टसिद्धिः ॥ १२२ ॥

इष्टसिद्धिरेव, न त्वनिष्टापादनं कार्यमित्यर्थः । तत्तत्समानविधेयकद्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम् ॥ १२२ ॥

पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥ १२३ ॥

तत्र तत्रान्यतरस्यां विभाषा वेति सूत्रनिर्देशज्ञापितमिदम् ॥ १२३ ॥

ज्ञापकसिद्धं न सर्वत्र ॥ १२४ ॥

---

अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे । तथा च स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वं प्रत्ययत्वमिति बोध्यम् ॥ १२१ ॥

अनित्यत्वज्ञापनमिति । अनित्यशास्त्रस्येष्टस्थले एव प्रवृत्तेः स्वीकारात् ॥ १२२ ॥

पर्य्यायशब्द इति । लाघवात् वेति वक्तव्ये कृतस्यान्यतरस्यां विभाषाग्रहणस्य वैयर्थ्यमिति तज्ज्ञापकत्वमुक्तपरिभाषायाम् ॥ १२३ ॥

स्पष्टमेव पठितव्येऽनुमानाद्बोधनमसार्वत्रिकत्वार्थमित्यन्ये। तेन ज्ञापकसिद्धपरिभाषयाऽनिष्टं नापादनीयमिति तात्पर्यम्। भाष्येऽपि ध्वनितमेतन्ङ्याप्सूत्रादौ ज्ञापकेति न्यायस्याप्युपलक्षणम्। न्यायज्ञापकसिद्धानामपि केषांचित्कथनमन्येषामनित्यत्वबोधनायेति भावः। यथा तत्स्थानापन्ने तद्धर्मलाभ इति न्यायसिद्धं स्थानिवत्सूत्रं, ज्ञापकसिद्धं च तत्रानल्विधाविति ॥ १२४ ॥

ननु द्रोग्धाद्रोग्धा द्रोढाद्रोढेत्यादौ घत्वादीनामसिद्धत्वात्पूर्वं द्वित्व एकत्र घत्वमपरत्र ढत्वमित्यस्याप्यापत्तिरत आह—

पूर्वत्रासिद्धीयमद्वित्वे ॥ १२५ ॥

---

स्पष्टमेव पठितव्यइति। ननु शब्दोच्चारणजन्यक्लेशानुत्पत्त्याऽनुमानाद्बोधनस्यान्यथासिद्धत्वान्नोक्तार्थज्ञापकत्वमितिचेत्—न, न हि शब्दोच्चारणजनककण्ठताल्वाद्यभिघातरूपगौरवमेवादर्त्तव्यन्न ज्ञानजनकमनोव्यापाररूपगौरवमिति राजाज्ञास्तीत्युक्त्याऽनुमानाद्बोधनेऽपि क्लेशस्य सत्त्वात् ॥ १२४ ॥

घत्वादीनामिति—द्वित्वदृष्ट्या घत्वादीनामसिद्धत्वाद्द्रोह्तेत्यवस्थायां द्वित्व इत्यर्थः। पूर्वत्रासिद्धीयं त्रिपादीस्थं शास्त्रन्तत्राद्वित्व इत्युपतिष्ठत इति परिभाषार्थः। पूर्वत्रासिद्धीयमित्यत्र सप्तम्यर्थे प्रथमा, त्रिपादीस्थे पूर्वत्रासिद्धमित्यस्याधिकारात्तद्घटके पूर्वत्रेत्यस्मिन्नभेदेनाद्वित्व इत्यस्यान्वयाद्द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये त्वमसिद्धमिति पर्यवसितोऽर्थः। द्वित्वे कर्त्तव्ये पूर्वत्रासिद्धन्न प्रवर्त्तत इति तु नार्थः, द्वित्वस्याप्यसिद्धत्वानापत्त्या द्युभ्यामित्यादौ परत्वाद्द्वित्वेऽन्त्यस्यैवोत्वे पूर्वत्र वकारश्रवणापत्तेः। कृष्णर्द्धिरि-

द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थः । पूर्वत्रासिद्धमित्यधिकारसर्वं शास्त्रमस्या लिङ्गम् । यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवेयम् । कृष्णर्द्धिरित्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः । 'सर्वस्य द्वे' इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२५ ॥

ननु गोष्वश्वेषु च स्वामीत्यादिवद् गोष्वश्वानां च स्वामीत्यपि स्यात् 'स्वामीश्वर' इति सूत्रेण षष्ठीसप्तम्योर्विधानादत आह—

---

त्यादौ द्वित्वदृष्ट्याऽनया जश्त्वस्यासिद्धत्वाभावे परत्वाज्जश्त्वे द्वित्वश्चेद्दकारद्वयसहित एको धकारः, जश्त्वस्यासिद्धत्वे पूर्वं द्वित्वे पश्चाद्धस्य जश्त्वे एकदकारसहितं धकारद्वयन्तयोरुच्चारणे विशेषाभावेन नास्याः प्रवृत्तिरिति तत्रोक्तं द्विधत्वन्नोपपन्नमित्याह—यत्र चेत्यादिना । इयं वर्णद्वित्वे न प्रवर्तत इति तु न युक्तं, भाष्योदाहृते वाक्क् इत्यादौ ककारद्वित्वश्रवणानापत्तेः, चर्त्वस्यासिद्धत्वाद्गस्यैव द्वित्वे परस्यावसानचर्त्वेऽपि पूर्वत्र गश्रवणापत्तेः । 'खरि चे'ति चर्त्वेनेष्टसिद्धिस्तु न तद्दृष्ट्याऽवसानचर्त्वस्यासिद्धत्वात् । इयञ्च 'न मु ने' इत्यत्र नेति योगविभागात्सिद्धेति केचित् । ग्राहकसूत्रेऽजिति वक्तव्येऽण्ग्रहणं ज्ञापकमस्याः, तद्धि 'अनचि चे'त्यत्र यर्परेन संयन्तेत्यादौ परसवर्णनिष्पन्नानुनासिकयकारग्रहणार्थम्, एतस्या अभावे तु द्वित्वं प्रति परसवर्णस्यासिद्धत्वेन द्वित्वात्पूर्वन्तस्य दौर्लभ्येन तदन्यर्थमेव स्यादिति केचित्—तन्न, गुणाभेदकत्वेन ज्ञापितेऽपि चारितार्थ्याभावात् ॥ १२५ ॥

**एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ १२६ ॥**

यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयोऽयं न्याय इत्यन्यत्र विस्तरः । 'कृञ्चानुप्र'इतिसूत्रे भाष्ये स्पष्टेयम् ॥

ननु विव्याधेत्यादौ परत्वाद्धलादिः शेषे वस्य संप्रसारणं स्यादत आह–

**संप्रसारणं तदाश्रयं च कार्यं बलवत् ॥ १२७ ॥**

तदाश्रयं 'संप्रसारणाच्च' इति पूर्वरूपम् । वस्तुतो 'लिट्यभ्यासस्य' इति सूत्र उभयेषां ग्रहणस्योभयेषां संप्रसारणमेव यथा

एकस्या आकृतेः इति । आकृतिः श्रावणप्रत्यक्षविषयतावच्छेदको धर्म्मः । चरितः प्रयोगः–सहप्रयोग इत्यर्थः । व्याख्यानाचार्थवद्विषयेयम् । यदर्थबोधनाय पूर्वमेकःशब्द उक्तस्तदर्थबोधनायैव शब्दान्तरे प्रयोक्तव्ये सति सम्भवे पूर्वोक्तसमानश्रावणप्रत्यक्षविषयतावच्छेदकक एव प्रयोक्तव्य इति पर्यवसितोऽर्थः । अर्थवद्विषयकत्वोक्त्या सुद्ध्युपास्य इत्यादावेकत्वधर्म्मवतो धकारस्योक्तावेकत्वधर्म्मवत एव यकारस्यानया प्रयोक्तुमुचितत्वेन द्विधमेकयमित्युक्तिरसङ्गतेत्यपास्तम्, तदाह—यत्रान्याकृतीति । कृञ्चेति । तत्र हि आमन्तस्य लिडन्तत्वेनानुप्रयुज्यमाना अपि कृभ्वस्तयोऽनेन न्यायेन लिट्परा एव भविष्यन्तीति व्यर्थमत्र लिङ्ग्रहणमित्युक्तम् ॥ १२६ ॥

उभयेषां ग्रहणस्येति । वच्यादीनां ग्रह्यादीनाञ्चानुवृत्त्यैव सिद्धे कृतस्य उभयेषां ग्रहणस्येत्यर्थः । संप्रसारणमेवेति । संप्रसारणयोग्यानामिति शेषः । ननु तेन वच्यादिग्रह्यादिविषयलक्ष्या-

स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति 'लिट्यभ्यासस्ये'तिसूत्र भाष्ये स्पष्टम् । फलान्तरान्यथासिद्धिरपि तत्रैव भाष्ये स्पष्टा । 'णौ च संश्चङोः' इत्यादौ संश्चङोरित्यादिविषयसप्तमीति तत्रापि न दोष इत्यन्यत्र विस्तरः ॥ १२७ ॥

यत्तु—

**क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ १२८ ॥**

तेन 'निसमुपविभ्यो ह्वः' इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः ॥ १२८ ॥

तथा—

**औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥१२९॥**

---

णां सिद्धत्वेऽपि जुहुवतुरित्यादौ संप्रसारणपूर्वरूपे बाधित्वा परत्वादालोपापत्तिः शुशुवतुरित्यादावियङापत्तिरित्यत आह—फलान्तरेति । नित्यत्वान्तरङ्गत्वाभ्यां संप्रसारणपूर्वरूपयोरेव पूर्वं तत्र प्रवृत्त्याऽदोष इति । 'णौ च संश्चङो'रित्यादाविति । आदिना स्वपिस्यमिव्येञांयङीत्यस्य संग्रहः, तत्रापि विषयसप्तम्यभावेऽन्तरङ्गत्वाद्वृद्धित्वे उत्तरखण्डस्यैव संप्रसारणे वेवीयत इत्यसिद्ध्यापत्तेः ॥ १२७ ॥

क्वचिद्विकृतिरिति । 'निसमुपविभ्यो ह्व' इत्यत्र कृतात्वस्यैव ह्वेत्यनुकरणेन तस्यैव बोध्यतयोपह्वयते इत्यसिद्ध्यापत्तिः परिभाषाऽभावे इति भावः । सौत्रः प्रयोग इति । एकारान्तस्यैव ह्वे इत्यस्यानुकरणं सूत्रे एत्वात्वम् 'उदीचांमाङ' इत्यत्र यथा, तेन ह्वे इत्यस्यैव बोध्यतयोपह्वयत इत्यत्र स्वतः, कृतात्वे च स्थानिवद्भावेन सिद्धिरिति व्यर्थेयं परिभाषेति भावः ॥ १२८ ॥

तेन 'दादेर्धातो'रित्यत्रौपदेशिकधातोरेव ग्रहणमिति—

तन्न, तयोर्निर्मूलत्वात्, भाष्याव्यवहृतत्वाच्च, 'न च विकृतिः प्रकृतिं गृह्णाती'ति 'ग्रहिज्या' इतिसूत्रस्थभाष्येणाद्यायास्तिरस्काराच्च। 'निसमुपविभ्यो ह्व' इत्यादौ ह्वेञोऽनुकरणे सौत्रः प्रयोगः, आत्वविषय एवात्मनेपदं, प्रयोगस्थानामेवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये। अन्त्यापि तत्र तत्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्त्तिककृतश्चासंमता। 'इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति, रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं, तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते, कः? 'उपदेशो नामे'ति घसंज्ञासूत्रस्थभाष्येण प्रायोगिकासंभवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्यासंमता च। भाष्ये सानुबन्धकेत्यादि प्रकृताभिप्रायेण। 'दादे'रितिसूत्रे दादिपदस्यौपदेशिकदादित्ववति लक्षणेति न दोष इत्यन्यत्र विस्तरः ॥ १२९ ॥

यदपि नन्वजर्घा वेभिदीतीत्यादौ तत्तद्गणप्रयुक्ताविकरणा यङ्लुकि स्युः तथा यङ्लुकि वेभिदितेत्यादावेकाच् इतीण्निषेधः स्यादत आह—

श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च।

---

अन्यत्रेति—शब्देन्दुशेखर इत्यर्थः ॥ १२९ ॥

श्तिपेति—चतसृणां तृतीयानां निर्दिष्टमित्यत्रान्वयः। श्तिप-

यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥१३०॥

अनुबन्धनिर्देशो द्विधा स्वरूपेण ङित इत्यादिपदेन च; हन्ति यातिवाति, 'सनोवन्त' इतिसूत्रे भरेति, 'दोडो युडचि' 'अनुदात्तङितः' 'दिवादिभ्यः श्यन्' 'एकाच उपदेशे' इत्युदाहरणानि; द्वित्वं 'सनाद्यन्ता' इति 'भूवादय' इति च भवत्येव, गुणो यङ्लुकोरित्यादिभिर्निषेधानित्यत्वकल्पनात्; तेन भप्भावोऽप्यजर्घा इत्यादौ भवति; अतएव 'श्वीदितो' इति सूत्रे कैयटे यत्रैकाज्ग्रहणं किंचिदिति पाठः; 'एकाच उपदेशेऽनुदात्तात्' इति सूत्रे एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते, अन्यथोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति—

तदपि न, भाष्यानुक्तत्वात्, एकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्यकत्वाच्च। न च वधिः स्थान्युपदेशे एकाजेवेति वाच्यम्,

---

न्तादिशब्देनोद्दिश्य विहितं यत्कार्यं गणेन चोद्दिश्य विहितं यत्कार्यमेकाच्पदघटितसूत्रविहितञ्च यत् कार्यमेतानि पञ्चेत्यर्थः। अनित्यत्वकल्पनादिति। अन्यथा द्वित्वविधायकशास्त्रस्यैकाच्पदघटितत्वेन यङ्लुक्यप्रवृत्त्यापत्त्या अभ्यासस्यैव तत्राभावेन सूत्रस्य वैयर्थ्यापत्तेः। एकदेशानुमत्येति—स्थालीपुलाकन्यायेनेत्यर्थः। वधिव्यावृत्त्यर्थमिति—वधादेशोऽदन्तो वृद्ध्यभावायावश्यकः। स्थान्युपदेश इति—हन्त्युपदेशे इत्यर्थः। साक्षादिति। यस्येड्निषेधस्तदुपदेशे तस्यैकाच्त्वमपेक्षितं प्रत्यासत्त्येति भावः। ननु स्थान्यादेशयोरभेदाध्यवसायेन स्थान्युपदेशोऽप्यादेशोपदेश एवेत्यत

साक्षादुपदेशसंभवेनैतद्विषये स्थान्युपदेशाग्रहणात्, उपदेशत्वावच्छेदेनैकाजित्यर्थाच्च । किंचोत्तरार्थमेकाज्ग्रहणम्, अतएव जागरितवानित्यादावुपदेश उगन्तत्वमादाय 'श्र्युकः किती'तिङ्निषेधो न । तत्रोपदेश इत्यनुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधाय स्याकरे स्पष्टम् । न च भाष्ये यङ्लोपे बेभिदितेत्यादाविट्प्रवृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थे 'सनीट्प्रतिषेधो वक्तव्यः, बिभित्सती'ति दोषोपन्यासवद्यङ्लुकि दोषानुपन्यासेन तत्रेडिष्टः, यङ्लोपेत्यादि भाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम्; किंच तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम्, इड्विषये यङ्लुको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन

---

आह—उपदेशावच्छेदेनेति । न च कौमुद्युक्तरीत्याऽच इत्यनेनैवैकाच्त्वलाभादेकग्रहणघटितैकाज्ग्रहणं ज्ञापकमेवेति वाच्यम्, सूत्रे संख्याया अविवक्षणात्, बहुव्रीह्यलाभात्, लक्षणायां मानाभावाच्च । नन्ववच्छेदकावच्छेदेनान्वये अनुदात्तत्वस्याप्युपदेशत्वावच्छेदेनैव ग्रहणाद्वधादेशस्याद्युदात्तत्वनिपातनेनावधीदित्यत्र निषेधाप्रवृत्त्युपपत्तावेकाज्ग्रहणं व्यर्थमेवेत्यत आह—किंचेति । उत्तरार्थमिति—'श्र्युकः किती'त्यर्थमित्यर्थः । तत्रेति—यङ्लुकीत्यर्थः । इडिष्ट इति । तदर्थं श्तिपेति परिभाषाऽऽवश्यकीति भावः । ननु बेभिदितेति भाष्यमेव लुक्लोपोभयविषयन्तेनैव लुक्यीडिष्टत्वसिद्धौ दोषानुपन्यासेनेत्युक्तिरधिकेत्यत आह—लङ्लोपेत्यादीति । ननु परिभाषारूपोपायस्यैव मनसि वर्तमानत्वान्नोपायान्तरप्रदर्शनमिति चेत्—न, तावतापि परिभाषास्वीकारस्यैव

च तत्र दोषानुपन्यासेनादोषात् । अन्यथैकाज्ग्रहणं किमर्थमिति प्रश्नस्य उत्तरत्र जागर्त्यर्थमिह बध्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनत्वापत्तेः । न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम्, एवं च बिभित्सतीत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येवोत्तरखण्डेऽस्तित्ववत्, एतच्च 'दयतेः' इति सूत्रे भाष्ये स्पष्टम्, एवं च प्रकृतभाष्यासंगतिरिति वाच्यम्, आक्षेप आक्षिप्तस्यान्वये च मानाभावात् । अङ्गत्वं तु विशिष्ट एवेति 'एकाचो द्वे' इति सूत्रे भाष्ये स्पष्टम् । निरूपितं च तनादिशेषे शब्देन्दुशेखरे । धातुत्वं तूत्तरखण्ड एव । अतएव 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' रिति सूत्रे धातोरवयवस्यैकाच इति वैयधिकरण्येनान्वये गर्धप्सिद्धिः प्रयोजनमुक्तं भाष्ये, न तु प्रसिद्धमजर्घा इति । अजर्घा चेभिदीतीत्यादौ अमृश्यनादयस्तु 'चर्करीतं चेत्यस्यादादौ पाठेन

लाभात् । अन्यथेति—एकाज्ग्रहणस्य यङ्लुक्यप्रवृत्त्यर्थकत्वे इत्यर्थः । निरालम्बनत्वापत्तेरिति । यङ्लुक्यप्रवृत्तिरूपस्पष्टतरफलस्य सत्त्वे शङ्काफलान्तरकथनरूपसमाधानयोःकरणे बीजानापत्तेरित्यर्थः । अस्तित्ववदिति । अस्तेर्द्वित्वे परस्य भूभावे पूर्वस्य श्रवणं प्राप्नोतीति भाष्याद्यथोत्तरखण्डस्यैवास्धातुत्वं तथा सर्वत्रोत्तरखण्डस्यैव धातुत्वमित्यर्थः । प्रकृतभाष्यासङ्गतिरिति । तथाच तद्भाष्यसंलापनाय यङ्लुकोऽनभिधानकथनं व्यर्थमेवेति भावः । अङ्गत्वन्तु विशिष्ट एवेति । आगन्तुकानामग्रे निवेश इति न्यायात् प्रत्ययप्रकृतित्वं पूर्वस्यैव तदादेश्चाङ्गत्वादिति भावः । अत एवेति— उत्तरखण्डस्यैव धातुत्वादित्यर्थः, समुदायस्य धातुत्वे अजर्घा इत्यपि वैयधिकरण्येनान्वये एव सिद्ध्यतीति भावः । चर्करीतञ्चेति ।

यङ्लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति। छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः। भाषायां तु तादृशानामभाव एव। श्तिप्श्तपादिनिर्देशास्तु 'भवतेर' इत्यादिसूत्रस्थतन्निर्देशवन्नार्थसाधका इत्यन्यत्र विस्तरः॥ १३०॥

ननु जभोऽचि रधेश्च नेट्यलिटीत्येव सूत्र्यतां किं द्विरधिग्रहणेनेत्यत आह—

पदगौरवाद्योगविभागो गरीयान् ॥ १३१ ॥

प्रतिवाक्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्टमेव। परं तु भाष्यासम्मतेयम्। 'टाङसि' इति सूत्रस्यभाष्यविरुद्धा च, तत्र च नादेशेनेकारप्रत्याख्यानं योगविभागेनैव कृतमिति बहवः॥ १३१॥

अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥ १३२॥

---

इदमदादौ गणसूत्रं, चर्करीतमिति यङ्लुगन्तस्य संज्ञा यङ्लुगन्तमदादौ बोध्यमिति तदर्थः॥ १३०॥

गौरवं स्पष्टमेवेति वाक्यजन्यबोधस्याधिक्ये तज्जनकसामग्र्या अप्याधिक्येन विभिन्नप्रत्यक्षादिकं प्रति प्रतिबन्धकताया अप्याधिक्येन गरीयस्त्वं बोध्यम्। गरीयस्त्वञ्च बह्वायाससाध्यत्वम् अल्पायाससाध्येनैवोपपत्तौ बह्वायाससाध्यं सुत्यजमिति लोकसिद्धतया लोकसिद्धेयं परिभाषेति बोध्यम्॥ १३१॥

अर्द्धमात्रालाघवेनेति। हेतौ तृतीया, अर्द्धमात्रालाघवहेतुकं

'एओङ्' 'ऐऔच्'सूत्रयोर्ध्वनितैषा भाष्ये। तत्रानेकपदघटितसूत्रे प्रायेण पदलाघवविचार एव, न तु मात्रालाघवविचार इति 'ऊकालोऽच्' 'अपृक्त एकाल्' इत्यादिसूत्रेषु भाष्ये ध्वनितम्। तत्र हि सूत्रेऽल्ग्रहणहल्ग्रहणयोर्विशेषविचारे संज्ञायां हल्ग्रहणं 'ण्यक्षत्रिय'इति सूत्रेऽणिञोरिति वाच्यमिति त्रीणि पदान्यल्ग्रहणे तदेकं स्वादिलोपे हल्ग्रहणं ण्येति सूत्रेऽणिञोरिति न वाच्यमपृक्तस्येति वाच्यमिति त्रीण्येव पदानीति नास्ति लाघवकृतो विशेष इत्युक्तम्, 'अचि श्नु' इतिसूत्र इण इत्येव सिद्धे य्वोरिति संमृद्य ग्रहणान्न पूर्वेणेण्ग्रहणं, तत्र विभक्तिनिर्देशे संमृद्य ग्रहणे च सार्धास्तिस्रो मात्रा इण्ग्रहणे तिस्रो मात्रा इति लण्सूत्रे भाष्योक्तेः, तथा 'आतः श्यनि' इतिसूत्रे शितीति वक्तव्यं, तत्रायमप्यर्थः 'छित्वकृतम्' इतिसूत्रे

सुत्वं पुत्रोत्सवं तज्जन्यसुखमसदृशं मन्यन्त इत्यर्थः। ध्वनितैवेति—'अर्द्धं एकार अर्द्ध ओकारो वा नास्ति, यदि हि तौ स्यातां तावेवोपदिशेदि'ति भाष्येण लाघवेनोपदेशः सुतजनको भवतीति स्पष्टमेव लभ्यते इति बोध्यम् ॥ १३२ ॥

शितीति न कर्तव्यं भवतीति भाष्ये न केवलं मात्रालाघवं यावदयमप्यर्थ इति कैयटोक्तेः प्रायेणेति शिवम् ॥ १३२ ॥

परिभाषेन्दुशेखरः समाप्तः ॥

---

विद्वद्वृन्दसुखावहा शिवपुरे संशोध्य मुद्रापिता
सेयं स्याद्विजया जयाय सुधियां संसेविता संसदि ॥

॥ समाप्ता चेयं विजयानाम्नी व्याख्या ॥